# प्रकाशकस्य विज्ञप्तिः ।

जयपुरराज्यस्य सुप्रसिद्धाश्चिकित्सकचूडामणयो दादूपथपरिव्राजका आयुर्वेदमार्तण्डाः **श्रीलक्ष्मीरामस्वामि**महाभागा १९८१ तमविक्रमवत्सरस्य विजयदशम्यां [ १९३२ तमखिस्टवत्सरस्य अक्टूबरमासस्य सप्तदशतारिकायाम् ] निरीक्षकसंघ( ट्रस्ट )मेकं नियम्य दशसहस्राधिकलक्षानुमितमुद्राणां राजकीयसुरक्षितधनं ( गवर्नमैण्टसैक्यूरीटीज़ ), पादोनलक्षद्वयमितमुद्राणां च गृहारामादिकं तदधीनमकार्षुः । राजरक्षितधनस्य वृद्धिः ( कुसीदम् ), गृहादीनां भाटकं च प्रतिवर्षं ७००० ) सप्तसहस्रमुद्रामितं भवति । स्वामिमहाभागानामुद्देश्यानुसारमौषधालयातुरालयविद्यालयादीनां संरक्षणे, निर्धनविद्यार्थिनां वृत्त्यादिना साहाय्यसंपादने, दादूसंप्रदायस्यायुर्वेदग्रन्थानां च प्रकाशनादिष्वनेकधर्मकार्येषु विद्योन्नतिकार्येषु च सोऽयमायो व्ययति ।

आयुर्वेदद्वारैव श्रीमद्भिः स्वामिमहाभागैर्धनमिदमर्जितमित्यायुर्वेदस्यैवोन्नतिर्विशिष्याभीष्टा तेषाम् । संघाधिकृते निधि( फण्ड )धने विंशतिसहस्रमुद्राः स्वामिभिरेतदुद्देश्येन पृथङ्नियमिताः । यदस्य निधेर्वृद्धि( सूद )द्रव्येण आयुर्वेदसंबन्धिनवीनपुस्तकनिर्मातृभ्यो विद्वद्भ्यः पुरस्काररूपेण साहाय्यं दीयेत, प्राचीनार्वाचीनानां चामुद्रितानामायुर्वेदग्रन्थानां च प्रकाशनमनुष्ठीयेत । अनेनैव द्रव्येण सोऽयं ग्रन्थः [ श्रीचक्रपाणिदत्तविरचितभानुमतीव्याख्यासमेतं सुश्रुतसंहितायाः सूत्रस्थानम् ] मुद्रापयित्वा विदुषां सेवायामुपस्थाप्यते । ग्रन्थोऽयं बम्बईस्थसुप्रसिद्धवैद्यराजानामायुर्वेदमार्तण्डश्रीयुत**'वैद्य यादवजी त्रिविक्रमजी आचार्य'**महोदयानामनुग्रहेण लण्डननगरस्थ**'इण्डिया ऑफिस'** पुस्तकालयतः समवापि । ग्रन्थस्यास्य विशिष्य परिचयः स्वामिमहाभागानां प्रियतमसुहृद्भिर्भारतविख्यातै**'र्महामहोपाध्याय कविराज श्रीगणनाथसेनसरस्वती'**-महोदयैः प्रणीतगवेषणापूर्णपरमोपयोगिभूमिकाऽवलोकनात् प्राप्येत ।

श्रीमन्तो यादवजीमहोदयाः स्वामिमहाभागानामत्यन्तं प्रियाः सुहृदः । स्वामिमहाभागैः संघपत्रे ( ट्रस्टपत्रे ) तदिदं विशिष्य निर्दिष्टं ... जीवं श्रीयादवजीमहाभागानामेवानुमत्यां ग्रन्थाः ... आयुर्वेदग्रन्थोद्धारे स्वीयं समस्तमायुर्विनियुञ्जद्भिर्यत्किल ... गाति सर्वेषां विदितमेव । इह तस्य विशिष्य परिचयो दि ... रीक्षकसंघस्य मन्त्रिपदमधितिष्ठन्नहमेतस्य ग्रन्थस्य प्राप्तै ... रिश्रमाय सरुचिस्वीयामूल्यसमयविनियोगाय च कोटिशो धन्यवादानर्पयामि । श्रीमतामेवानुग्रहेणाद्य



स्वामिमहाभागैरुपकल्पितस्य निरीक्षकसंघ( ट्रस्ट )स्य सोऽयं प्रथमो ग्रन्थो वैद्यजगतः समक्षमुपस्थाप्यते । आयुर्वेदमार्मिका विद्वांसो ग्रन्थमिममाद्रियेरन्निति बहुतरमाशासे । सुदृढं च विश्वसिमि यदेवंविधानामेव प्राचीनानाममुद्रितग्रन्थानां परिचयं प्रदाय ते मामनुगृह्णीयुः । येन सोऽयं संघो ग्रन्थानिमान् प्रकाश्य आयुर्वेदसेवार्थै स्वामिमहाभागानां च सदुद्देश्यपूर्तये प्रभवेदिति

सिनेट हाउस, आगरा
ता. २८ अप्रेल १९३९

विद्वत्समाजानुचरः
**श्यामसुन्दरशर्मा**
श्रीस्वामिलक्ष्मीरामट्रस्टमन्त्री ( जयपुर ),
रजिस्ट्रार आगरा युनिवर्सिटी, **आगरा**

# संपादकस्य निवेदनम् ।

सुश्रुतसंहिताया उपदेष्टुर्भगवतो धन्वन्तरेः, निर्मातुः सुश्रुतस्य, व्याख्यातुश्चक्रपाणिदत्तस्य, प्रसंगागतानामन्यव्याख्यातॄणां, प्रतिसंस्कर्तुश्च इतिवृत्तमस्मदनुरोधादेव अस्वस्थशरीरैरपि अस्मत्परमसुहृद्भिर्**महामहोपाध्याय कविराज श्रीगणनाथसेनसरस्वती**महोदयैर्महत्या गवेषणया लिखिते ग्रन्थेनानेन सहैव मुद्रिते उपोद्घाते एव द्रष्टव्यं तज्जिज्ञासुभिः । ग्रन्थस्यास्य संशोधनार्थं सहायकतयोपगृहीतानामादर्शपुस्तकानां संशोधनकार्यस्य च विषये वाचकमहोदयानां सविधे किञ्चिन्निवेद्यते ।

भानुमतीव्याख्यायाः संशोधनार्थमादर्शपुस्तकद्वयमुपलब्धम् । तयोः प्रथमं कलकत्तावास्तव्याभ्यां स्वर्गताभ्यां **महामहोपाध्याय कविराज श्रीविजयरत्नसेन-कविराज श्रीनिशिकान्तसेनाभ्यां** संपाद्य बङ्गाक्षरैर्मुद्रापयित्वा प्रसिद्धिं नीतं निबन्धसंग्रह-भानुमत्युभयव्याख्यासमेतं सूत्रस्थानस्य प्रारम्भतश्चत्वारिंशदध्यायपर्यन्तम् । पादटिप्पण्यामस्य **मु.** ( मुद्रितपुस्तकस्थः पाठः ) इति संकेतः स्थापितः, द्वितीयं लन्डननगरस्थ**इन्डिया-ऑफिस-पुस्तकालयात्** पुण्यपत्तन( पूना )स्थभाण्डारकरप्राच्यसंशोधनमन्दिर (Bhandarkar Oriental Research Institute) द्वारा प्राप्तं संपूर्णसूत्रस्थानस्य भानुमतीव्याख्यानमात्रम् । पादटिप्पण्यामस्य **ह.** ( हस्तलिखितपुस्तकस्थः पाठः ) इति संकेतो दत्तः । सुश्रुतमूलसंशोधनार्थमादर्शपुस्तकत्रयाणां साहाय्यमवलम्बितम् । तत्र प्रथमं ताडपत्रलिखितं मूलमात्रमतिप्राचीनमस्मदाप्ततमानां **नेपालराजगुरूणां पण्डितप्रवराणां श्रीहेमराजशर्मणां** ग्रन्थसंग्रहात् प्राप्तम् । अस्य पुस्तकस्य पादटिप्पण्यां **ता.** ( ताडपत्रपुस्तकस्थः पाठः ) इति संकेतो दत्तः । द्वितीयं पूर्वं मया संपादितं निर्णयसागरयन्त्रालये मुद्रितं निबन्धसंग्रहव्याख्यया समेतम् । अस्य पुस्तकस्य पादटिप्पण्यां **ड.** ( डल्हणसंमतः पाठः ) इति संकेतः स्थापितः । तृतीयं स्वर्गवासिभिः **कविराज श्रीहाराणचन्द्रचक्रवर्ति**महोदयैः संपादितं स्वविरचितसुश्रुतार्थसंदीपनभाष्यसमेतम् । पादटिप्पण्यामस्य पुस्तकस्य **हा.** ( हाराणचन्द्रसंमतः पाठः ) इति संकेतो दत्तः । निबन्धसंग्रहव्याख्याया एतावत्पर्यन्तं यानि हस्तलिखितपुस्तकान्युपलब्धानि तानि सर्वाण्यपि समूलान्येव । ततश्च निबन्धसंग्रहव्याख्यासमेतायाः सुश्रुतसंहितायाः संशोधनावसरे डल्हणसंमतमूलपाठनिर्णये न किञ्चिदपि काठिन्यमनुभूतम् । परं चक्रपाणिदत्तविरचिताया भानुमतीव्याख्यायास्तु व्याख्यामात्रस्यैव पुस्तकं समुपलब्धम् । वर्तन्ते च सूत्रस्थान एव बहवः पाठाश्चक्रपाणिव्याख्याता डल्हणव्याख्यातपाठादतीव भिन्नाः । तेषु स्थलेषु चक्रपाणिसंमतो मूलपाठः कीदृश इति निर्णेतुमतीव दुःशकम् । परमस्माकं शुभादृष्टवशान्नेपालदेशोपलब्धे ताडपत्रपुस्तके बहुषु स्थलेषु चक्रपाणिना

भानुमत्यां व्याख्याता बहवो मूलपाठाः समुपलब्धाः ।ताननुसृत्य मूले सन्निवेशिताश्चक्रपाणिसंमताः पाठाः, पादटिप्पण्यां च दत्तो वर्तमानमुद्रितपुस्तकस्थो डल्हणसंमतः पाठः । यत्र तु ताडपत्रपुस्तकेऽपि नोपलब्धश्चक्रपाणिसंमतः पाठः तत्र पादटिप्पण्यां 'एतद्व्याख्यानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः' एतावन्मात्रमेव लिखितम् । एवं पुस्तकस्यास्य संशोधने यथामति कृतो यत्नः । तथाऽपि भ्रमप्रमादादिवशाज्जातानि स्खलनानि गुणैकपक्षपातिभिः सुधीभिः संशोधनीयानि । सफलयितव्यश्च मयायं प्रयासो ग्रन्थस्यास्य पठनपाठपर्यालोचनादिनेति

मुंबई
ता. ११-५-१९३९

भिषजां विधेयस्य
**यादवशर्मणः ।**

ओं नम आयुर्वेदाचार्येभ्यः ।

# भानुमतीटीकोद्भासितसुश्रुतसंहिताया उपोद्घातः ।

( महामहोपाध्याय कविराज श्रीगणनाथसेनसरस्वतीविरचितः )

एष खलु सुश्रुतोपोद्घातो दुर्लभनानायुर्वेदनिबन्धोद्धार-सम्पादनपटीयसामायुर्वेदमार्तण्ड इत्यन्वर्थविरुदामस्मत्परमसुहृदां त्रिविक्रमात्मजश्रीयादवाचार्याणामनुरोधाल्लिख्यतेऽस्माभिः । उच्यते चात्र स्वल्पमेव यदुक्तचरं प्रत्यक्षशारीरोपोद्घाते । किञ्च, तैरपि ऐतिहासिकविस्तरस्याधुना वर्णितत्वादवशिष्यते स्तोकमेव सुश्रुतविषयकं वक्तव्यम् । तथाऽपि यथामति किञ्चिद्विचार्यते विदुषां चित्तविनोदनाय । आशास्यते च तेषां ज्ञानामृततृषातर्पणाय चुलुकमात्रमिदमपि भविष्यति । महाधियामगस्त्योपमानां तु ज्ञानपिपासानिवृत्तये प्रभविष्यति श्रुतिस्मृतिवैद्यकादिनानाशास्त्रनिष्णातानामस्मदाप्ततमानां नेपालराजगुरुश्रीहेमराजशर्मणामपूर्वा कृतिः काश्यपसंहिताया उपोद्घातो नाम ऐतिहासिकतत्त्वामृतपारावारः ।

अथ सुश्रुतसंहिता नामेदमार्षतन्त्राम्बुधेरनर्घं रत्नं, यदायुर्वेदोपासकानां सौभाग्यविशेषादद्यापि न विलुप्तं हारीतादिसंहितावत्, न च भूम्ना कीटानुविद्धं भेलकाश्यपादिसंहितावत् । मूलं हि खल्विदमधुनाऽपि प्राचीनशल्यतन्त्रस्य, निधानं विदेहाधिपादिकृतशालाक्यतन्त्राणाम्, आकरो धन्वन्तर्युपदिष्टकायचिकित्सायाः, न्यासभूमिश्चाग्निवेशादिषड्‌ऋषिप्रणीतकायचिकित्सातन्त्रार्थानां, सारोद्धारसम्पुटं चैतत् काश्यपादिकृतकौमारभृत्यादिनानातन्त्रार्थानाम् ।

अथेदमार्षं ज्ञानविज्ञाननिधिरूपं तन्त्रं केन कदा विरचितमिति जिज्ञासायामुत्तरमुच्यते किञ्चित् । श्रूयते हि तन्त्रेऽस्मिन् शल्याङ्गप्रधानस्यायुर्वेदस्योपदेष्टा काशिराजो धन्वन्तरिः, श्रोतारश्च सुश्रुतौपधेनवौरभ्र-पौष्कलावत-भोज-वैतरणाद्या ऋषयः । तैश्च सर्वैरपि निर्ममिरे पृथक् तन्त्राणि, येषां प्रथमचतुष्टयकृतानि तन्त्राणि शल्याङ्गस्य मूलानीत्याहुः[1]। सर्वाणि च तानि तन्त्राणि प्राक् सहस्रवर्षेभ्यः सुलभान्यासन्, पुराणटीकाकारैर्बहुधा तत्पाठोद्धारदर्शनात् । तेषु च भोजतन्त्रपाठा बहुशः समुद्धृता यन्त्र-शस्त्र-शारीरादिविशेषवर्णनपराः प्रत्याययन्ति विशेषज्ञान्—यदिदं तन्त्रं चेत् पुनर्लभ्येत, महानुपकारः स्याद्भिषजामिति ।

१ "औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् । शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्दिशेत् ।" इति सुश्रुतोक्तप्राचीनपद्ये ।

अथात्र धन्वन्तरिवृत्तमपि किञ्चित् कथ्यते । तच्च पुराणेपूपलभ्यं विस्तरेण । श्रूयेते हि पुराणेषु द्वावेव धन्वन्तरी । तयोः प्रथमो धन्वन्तरिरब्जनामा समुद्रमथनोत्थितो विष्णोरंशावतारः कीर्त्यते हरिवंश-महाभारत-भागवत-विष्णु-वायु-ब्रह्माण्डाग्नेयपुराणेषु[1]। स च भागवते आयुर्वेददृगिति, अग्निपुराणे च आयुर्वेद-प्रवर्तक इति गीयते । यतश्च समुद्रमथनवृत्तान्तः कृतयुगीनस्तस्मादयमादिदेवो धन्वन्तरिरपि तथेत्यवसेयम् । ततो द्वितीयो धन्वन्तरिः काशनृपतेर्वंशे धन्वाख्यनृपतेः ( विष्णु-भागवतपुराणयोर्मतेन दीर्घतपसः ) पुत्ररूपेण प्रादुर्बभूव । स च प्रथम-धन्वन्तरिरेव द्वितीयसम्भूत्यां कृतावतारः, इति सर्वत्रोक्तं पुराणेषु । अवतरणं च नारायणस्य द्वयोर्लोकसर्गयोरभूदिति स्पष्टमुच्यते श्रीभागवतपुराणेऽपि[1]—यथा—

"धान्वन्तरं द्वादशमे त्रयोदशम एव च" इति (भागवत १ स्कन्ध०, ३ अ०)

हरिवंशादौ च श्रूयते अब्जधन्वन्तरिं प्रति विष्णुवचनं—

"द्वितीयायां तु सम्भूत्यां लोके ख्यातिं गमिष्यसि ।
अणिमादिश्च ते सिद्धिर्गर्भस्थस्य भविष्यति ॥
तेनैव त्वं शरीरेण देवत्वं प्राप्स्यसे प्रभो ।
चरुमन्त्रैर्व्रतैर्जाप्यैर्यक्ष्यन्ते त्वां द्विजातयः ॥" इति ।

धन्वन्तरिजन्मकथाऽप्येवं तत्रैव—

"द्वितीये द्वापरे प्राप्ते[2] सौनहोत्रिः स काशिराट् ।
पुत्रकामस्तपस्तेपे धन्वो दीर्घं महत्तदा ॥
❀ ❀ ❀ ❀ ❀ ❀
तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ।
काशिराजो महाराज ! सर्वरोगप्रणाशनः ॥
आयुर्वेदं भरद्वाजात् स प्राप्य सभिषक्क्रियम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥" इति

(हरिवंशे १ पर्वणि २९ अध्याये । वायु-ब्रह्माण्डपुराणेषु[3] च प्रायः स एव पाठः)

---

१ विस्तरभयादत्र तत्तत्पाठोद्धाराः विस्तरेण न कृताः । किञ्चित्तूद्धृतमिहैवाग्रे द्रष्टव्यं दिग्दर्शनाय । २ अन्यत्र च तत्रैव धन्वन्तरेरादिदेवस्य जन्मकथा द्रष्टव्या ( भागवत० ८ स्कन्ध, २ अ० )।अग्निपुराणेऽपि ( ३ अ० ) "ततो धन्वन्तरिर्विष्णुरायुर्वेदप्रवर्त्तकः" इत्युक्तम् । ३ विष्णुपुराणे तु वंशपरम्परा किञ्चिद्भिन्नैव श्रूयते, यथा—"काशस्य काशेयः काशिराजः, तस्माद् राष्ट्रः, राष्ट्रस्य दीर्घतपाः पुत्रोऽभवत्, धन्वन्तरिस्तु दीर्घतपसः पुत्रः"—इति (विष्णु० ४ अंश०, २ अ०)। श्रीभागवतपुराणेऽप्येवमेव ( भागवत० ६ स्कं०, १७ अ० ) तस्मात् राजगुरु पं० श्रीहेमराजशर्मणा दर्शिता वंशपरम्परा स्तोकेन प्रतिसंस्करणीया ।

[ अत्र च रेखाङ्कितपदैस्तस्य द्वितीयद्वापरे जन्म, भरद्वाजादायुर्वेदग्रहणम्, अष्टाङ्गवैद्यकविभाजनं चेत्युक्तमिति त्रयं विशेषादवधेयमिति सूचितम्। सुश्रुते तु "इन्द्रादहम्" इत्युक्त्या तस्य इन्द्रशिष्यत्वमुक्तं, तत् कल्पान्तरकल्पनया इन्द्रस्य परमगुरुत्वकल्पनया वा समाधेयम् ]

यस्तु दिवोदासाख्यो धन्वन्तरिः सुश्रुतोपदेष्टा श्रूयते सुश्रुतसंहितायां, स तृतीयधन्वन्तरिरिव प्रतिभाति। दृश्यते च काशवंशे धन्वन्तरिप्रपौत्रो दिवोदास-नामा नृपतिः पुराणेषु। वर्ण्यते च दिवोदासनामा शौर्यवीर्यान्वितो नृपतिः ऋग्वेदे[1] उपनिषत्सु[2] महाभारते च[3]। परं नासौ क्वचिदपि आयुर्वेदोपदेशक इति कीर्त्तितः, अन्यत्र सुश्रुतसंहितायाः। तथाऽप्ययमेव दिवोदासो भीमरथसूनुः प्रतर्दनजनकश्चेति समानस्तत्पितृपुत्रपरिचयो वेद-महाभारत-पुराणेषु। तस्मात् स एवायं कुलपरम्परागतविद्याधिकारी धन्वन्तरिरिति वंशागतधन्वन्तरि-नामधेयः सुश्रुतोपदेष्टेति केचित् कल्पयन्ति। तन्न मनोरमं, श्रुतीतिहासपुराण-विरोधात्। न चासौ 'अमरवर' इति कथमपि कीर्त्तनीयः, सुश्रुते[4] तु तथैवासौ कीर्त्तितः। अमरवरत्वं तु द्वितीयधन्वन्तरेः सङ्गच्छते—"अनेनैव शरीरेण देवत्वं प्राप्स्यसे प्रभो" इति विष्णुवरश्रवणात्[5]। तस्मात् सुश्रुतोक्तदिवोदासपदे सकारस्य शकारत्वं विधाय 'दिवो दिविष्ठदेवानां दाशः सम्प्रदानीयः'—इत्यर्थकल्पनया व्याख्येयमिदं विशेषणपदमिति समाधानं कल्पनीयम्। "अहं हि धन्वन्तरिरादि-देवो जरारुजामृत्युहरोऽमराणाम्। शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहो-पदेष्टुम्" इति सुश्रुतोक्तं धन्वन्तरिवचनं च द्वितीयधन्वन्तरेरेव मुखे शोभते, न तत्प्रपौत्रस्य दिवोदासस्य मुखे इत्यप्यत्रावधेयम्।

अथ श्रूयते[6] कश्चिदन्योऽपि धन्वन्तरिनाम विद्वान् (वैद्याचार्यः कविर्वा) विक्रमादित्यनृपतेः सभासदां नवरत्नाख्यविदुषामन्यतमः। स च भिषक्तमः स्यादिति सम्भाव्यते, यतो 'नवरत्न'कल्पनायां नानाविधानामेव सुधियां समा-वेशनमेव युक्तं प्रतिभाति। यथा—तत्र धन्वन्तरिर्वैद्यराजः, क्षपणको बौद्धभिक्षुः, अमरसिंहः शाब्दिकः, कालिदासः कवीन्द्रः, वराहमिहिरो ज्योतिषाचार्यः, वररुचिर्वैयाकरणाचार्यः—इत्यादिकल्पना किंवदन्तीमूला युक्तियुक्ता। सोऽसौ

---

१ प्रथममण्डलादौ २ कौषीतक्यादिषु। ३ अनुशासनपर्वणि। ४ सुश्रुतादौ—"अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिम्" इत्यादिसन्दर्भे। ५ हरिवंशादौ पूर्वोद्धृतपाठे। विष्णुपुराणे तस्य यज्ञभागभुक्त्वं च वर्ण्यते विष्णुवरेणैव (विष्णुपुराण० ४ अंश०, ८ अ०)। ६ काव्यसंग्रहोक्ते सुप्रसिद्धपद्ये; यथा—"धन्वन्तरि-क्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" इति।

धन्वन्तरिः सुश्रुतोपदेष्टेति न कोऽपि संशयीत। परं सोऽपि प्रायेण द्विसहस्रवर्षपुराण इति शक्यं निर्णेतुं, विक्रमादित्येन प्रवर्तितस्य संवत्कालस्याधुना १९९५ वर्षातीतत्वात्।[1]

अस्ति चापरोऽपि धन्वन्तरिर्नाम ऋषिः केषाञ्चिद् विप्राणां गोत्रप्रवर्तकः। सोऽपि वैद्यकाचार्यः इत्यनुमीयते। यतस्तद्गोत्रीया वैद्याख्यसारस्वतब्राह्मणा अद्यापि पञ्चनदेषु सिन्धुषु वङ्गेषु च दृश्यन्ते। ते च "धन्वन्तर्यप्सार-नैयध्रुव-काश्यपप्रवराः"—इत्यात्मपरिचयं ख्यापयन्तीति काश्यपान्वया एव प्रतीयन्ते। काश्यपवंशपरम्पराऽप्यनेनैव परिचयेन ज्ञायते। कश्चासौ काश्यपः काश्यपसंहिताकारो वाऽन्यो वेति न विद्मः। गवेषणीयं चेदं सूक्ष्मदृशाम्।

अथैवं धन्वन्तरिपञ्चकालोचनतः पर्यवस्यति—धन्वनृपतेः पुत्रो धन्वन्तरिरेव सुपरिज्ञातनामा सुश्रुतादीनामुपदेष्टेति। स च द्वितीयद्वापरे (द्वापरान्ते ?) प्रादुर्बभूवेति बहुपुराणोक्त्या ज्ञायते। एवं च द्वापरान्ते कलिसन्ध्यायां वा प्रवृत्ते कुरुक्षेत्रीयमहासमरे धन्वन्तरिसाम्प्रदायिका एव वैद्याः शल्योद्धरणाय न्ययुज्यन्तेति सुशकमनुमातुम्। तस्य च महायुद्धस्य पञ्चसहस्रवर्षाण्यतीतानि—इति महाभारतोक्तकालगणनया तद्वृत्तान्तप्रत्ययिनां नवीनैतिहासिकानां निर्णयेन च निश्चीयते। तस्मात् ततोऽपि (अन्यून) पञ्चशतवर्षैः पुराणमाद्यसुश्रुततन्त्रस्य निर्माणमिति स्वीकार्यम्। कलियुगस्य च प्रवृत्तस्य चत्वारिंशदधिकानि पञ्चसहस्रवर्षाणि समतीतानीति ज्यौतिषिकः सिद्धान्तः। सोऽपि कुरुक्षेत्रीयमहायुद्धस्य द्वापरान्तकालीनत्वं साधयति। भगवतः श्रीकृष्णस्य महाप्रयाणमपि तदनन्तरमेवाभूद्—इत्यपि दृढयति पूर्वोक्तम्।

अन्ये तु मिलिन्दप्रश्नादिबौद्धसाहित्यग्रन्थेषु, पाणिनिसूत्रवार्तिक-पातञ्जलमहाभाष्यादिषु चान्यूनसार्धद्विसहस्रवर्षपुराणेषु धन्वन्तरि-सुश्रुतादीनां नामोल्लेखदर्शनात् तर्कयन्ति—ततोऽपि सहस्रवर्षपुराणमाद्यं सौश्रुततन्त्रमिति।[2] तदेतद्विलोमगत्या कालान्वेषणमपि नास्मत्सिद्धान्तं विरुणद्धि।

---

१ केचित्त्वाधुनिकैतिहासिका विक्रमादित्यनृपतेः समयं खिस्तीयपञ्चमशतके स्थापयन्ति। स तु साहसाङ्कनृपतिर्द्वितीयचन्द्रगुप्तनामा पृथगेवेति सन्दिह्यते। शकारिर्हि विक्रमादित्यः, तस्य पञ्चमशतकीयत्वं न सम्भवति, शकनरपतेस्तत्पूर्वजत्वात्। २ एतद्विषयकः प्राच्यपाश्चात्यमतविचारविस्तरः पण्डितवर्यश्रीहेमराजशर्मभिः काश्यपतन्त्रोपाद्धाते विहितो द्रष्टव्यः (५९-६१ पृष्ठेषु)। यत्तु तैः कलियुगे धन्वन्तरेः समयो निरणायि, स पूर्वोक्तपुराणप्रमाणराशिविरोधीव प्रतिभाति। अथवा कलिसन्ध्यायां तद्भावित्वात् कथमपि तत्सामञ्जस्यं विधेयम्।

इतश्च "विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति"—इत्युल्लेखस्य सुश्रुतेऽनेकधादर्शनात् तत्समयनिर्णयोऽपि करणीयः। स चास्मदुक्तसिद्धान्तं द्रढयति। श्रूयते हि रामायणे योगवाशिष्ठे च विश्वामित्रो नाम ऋषिर्भगवतो रामचन्द्रस्य धनुर्विद्योपदेष्टा। स त्रेतायुगीनः, रामावतारस्य त्रेतायां प्रादुर्भावश्रवणात्। अपरश्च विश्वामित्रो हरिश्चन्द्रस्य सर्वस्वप्रतिग्रहीता महाभारतादौ कीर्त्यते, स द्वापरयुगीनः। स च सुश्रुतजनक इति श्रूयते तत्रैव। तस्माद् द्वापर-युगीन एव सुश्रुतोक्तो धन्वन्तरि-सुश्रुतसंवादः। चरकोक्त-ऋषिसभायां च श्रूयमाणो विश्वामित्रोऽपि स एव स्यात्, यतश्चरके विमानस्थाने अतीतयोः सत्यत्रेतायुगयोरेवोल्लेखः, न द्वापरयुगस्य।

श्रूयते च वैद्यकतन्त्रकारोऽपरोऽपि विश्वामित्रनामा ऋषिः, तदीयग्रन्थस्य पुराणटीकाकारैरुद्धृतत्वात्। स च पृथगेव परकालभावी चेति प्रतीयते। वस्तुतस्तु कतमो विश्वामित्रः सुश्रुतजनकः—इति किंचित् तमसाच्छन्नमेव। विश्वामित्रस्य चिरजीवित्वस्वीकारे तु सर्वमपि सम्भवति।

अथ सुश्रुतोऽपि नैको विश्वामित्र पुत्र एव। शालिहोत्रमुनेः पुत्रस्यापि सुश्रुतनाम्नोऽ[1]श्ववैद्यके श्रवणात्। अग्निपुराणे तु गवाश्वगजवैद्यकमपि धन्वन्तरिणैवोपदिष्टं सुश्रुतायेति श्रूयते। तच्चोपदिश्यते तस्मिन्नेव पुराणे, नान्यत्र।

अथ लभ्यमाना सुश्रुतसंहिता प्रतिसंस्कृतपूर्वा न वा? प्रतिसंस्कृतपूर्वा चेत् केन वा कृतस्तत्प्रतिसंस्कारः? कीदृशश्च सः? कश्च तत्प्रतिसंस्कारसमयः—इति प्रश्नचतुष्टयमनुसन्धित्सूनां चेतसि समुदेति। तस्य चोत्तरमस्माभिः प्रत्यक्षशारीरोपोद्घाते पूर्वं प्रादायि, सम्प्रति च राजगुरुश्रीहेमराजशर्मभिः सविस्तरमालोचितमेतत्। तथाऽपीदं पुनरालोच्यते स्वबुद्धिपरिष्करणाय।

पूर्वदर्शितदिशा आद्यसुश्रुतसंहितायाः अन्यूनपञ्चसहस्रवर्षतः पूर्वमारचितायाः काले काले ग्रन्थविलोपो भारतवर्षस्यान्तर्बहिःशत्रुभिः सहस्रशो गृहदाहादिहेतोस्तदानीं प्रचारालपत्वाच्च (मुद्रायन्त्राद्यभावे) बहुधा बभूवेति तु निःसंशयमेव, बहूनां प्रामाणिकग्रन्थानां विलोपदर्शनात्, केषाञ्चिद् भृशखण्डिताकारेणोपलम्भाच्च। तद्दृष्टान्ताश्च भेल-काश्यपसंहितादिष्वद्यापि सुलभाः। चरक-काश्यपसंहितयोश्च दृश्यते सुस्पष्ट उल्लेखः प्रतिसंस्कारस्य। प्रतिसंस्कारश्च—"विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्। संस्कर्त्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्"—इति स्वरूपः–इति चरके दृढबलः। तस्मात् प्रतिसंस्कर्तुर्वचनानि प्रचुराण्येव प्रतिसंस्कृततन्त्रे भवितुमर्हन्ति। "संक्षिपत्यतिविस्तरम्" इत्युक्तेश्चानेकान्यार्षवचनानि विस्तरोक्तानि परित्यक्तान्यपि स्युः। किञ्च, चरकस्य प्रतिसंस्कृतत्वं चरकेण क्वचिदपि स्वमुखेन नोक्तम्, उक्तन्तु

---

१ यथा शालिहोत्रसंहितादौ—"शालिहोत्रमृषिश्रेष्ठं सुश्रुतः परिपृच्छति। एवं पृष्ठस्तु पुत्रेण शालिहोत्रोऽभ्यभाषत"—इत्यादि।

तत्परभाविप्रतिसंस्कर्त्रा दृढबलेन। तथाच सुश्रुतप्रतिसंस्कर्त्राऽपि स्वमुखेन स्वनामोल्लेखो नाकारीति न चित्रम्। भङ्गीविशेषेण तु निर्दिष्टमेव तद्—यथा उत्तरतन्त्रारम्भे "शालाक्यतन्त्राभिहिता विदेहाधिपकीर्त्तिताः"—इत्यादिपाठेषु। श्रूयते च, तीसट[1]सूनुना चन्द्रटेन (वाग्भटपौत्रेण?) बहवोऽशुद्धपाठाः सौश्रुततन्त्रे संशोधिताः—इति। चन्द्रटश्च ख्रीस्तीयपञ्चमशतकान्ते प्रादुर्बभूव—इत्यस्माकं श्रीयादवशर्मणां च निर्णयः। वाग्भटश्च चरक-सुश्रुतयोरनार्षत्वमनार्षवचोबहुलत्वं वा स्[1]पष्टमेवाभ्यधात् "ऋषिप्रणीते प्रीतिश्चेत्" इत्यादिपद्येन[2]। सुश्रुतस्य प्रतिसंस्कृतत्वं च सर्वेऽपि पुराणटीकाकृतोऽनुमन्यन्ते। डल्लनाचार्यस्तु स्पष्टतरमाह—"प्रतिसंस्कर्त्ताऽपीह नागार्जुन एव" इति। वचनभङ्ग्या चानया ज्ञायते, एवकारेण व्यावर्त्यन्ते अन्ये प्रतिसंस्कृततया प्रसिद्धाः केचित्। चन्द्रटाचार्येण च सौश्रुतपाठशुद्धि[3]र्व्यधायि जेज्जटस्य टीकादर्शनेन,—इत्यग्रे वक्ष्यमाणं सूचयति—[2]जेज्जट-चन्द्रटाभ्यामपि सुश्रुतप्रतिसंस्कारः कृत एवेति।

अथ कोऽसौ **नागार्जुनः** सुश्रुतप्रतिसंस्कर्त्तेति प्रश्ने प्रतिब्रूमः। अनेके हि नागार्जुना[4]ः भारतेतिहासे बुद्धजन्मनोऽनन्तरं प्रादुर्बभूवुः। तेषु **'सिद्धनागार्जुन'** इत्यभिहितः 'नागार्जुनो मुनीन्द्रः शशास यो लोहशास्त्रमतिगहनम्' इति चक्रपाणिना निर्दिष्ट[5]ः कक्षपुट—लोहशास्त्र—योगशतकादिग्रन्थकारो बौद्धाचार्य एवासौ सुश्रुतप्रतिसंस्कारक इति प्रतीयते। तेनैव च सुश्रुते न केवलं प्रतिसंस्कर्त्तृसूत्राणि योजितानि, उत्तरतन्त्रं च स्वल्पावशिष्टमितरप्राचीनतन्त्रेभ्यः सारसमुच्चयं कृत्वा

---

१ तीसटाचार्यकृत**श्चिकित्साकलिका**ख्यो ग्रन्थः साम्प्रतमुपलब्धः प्रकाशितश्च स्वर्गतेन वैद्यपं० **नरेन्द्रनाथमित्रेण**। टीका चास्य तीसटपुत्रेण चन्द्रटेन विरचिता तत्रैव दृश्या। तीसटश्च वाग्भटस्य पुत्रः शिष्यो वेति प्रसिद्धिः पं० यादवशर्मणोल्लिखिता सप्रमाणं सुश्रुतोपोद्घाते (पृ० १२)। २ अरुणदत्तश्चैतद्व्याचक्षाणः 'चरक-सुश्रुतवदनार्षमपीदं गुणवत्त्वान्महद्भिर्ग्राह्यमेव' इति स्पष्टमाह। ३ एतद्विषयकं प्रमाणमग्रतो दृश्यम्। ४ दृश्यतां काश्यपसंहिताया उपोद्घाते (६४–६५ पृष्ठयोः) नागार्जुनविवरणम्। ५ चक्रदत्तस्य चिकित्सासारसंग्रहे श्रूयत एतत् पद्यम्, सन्ति च नागार्जुनाभ्रादियोगाः प्रसिद्धाः; "नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके" इत्यादिसूचितायां चक्रोक्तनागार्जुनवर्त्यां च नागार्जुनोल्लेखः।

---

1 अत्र 'अनार्षमपीदं तन्त्रं चरकसुश्रुतवत् (सुभाषित)गुणवत्त्वान्महद्भिर्ग्राह्यमेव' इत्यन्वयस्य शक्यत्वादरुणदत्तस्य वाग्भटतन्त्रस्य चरकसुश्रुतवत् सुभाषितगुणयुक्तत्वेन ग्राह्यत्वप्रतिपादनेऽभिप्रायो न तु चरकसुश्रुतयोरनार्षत्वप्रतिपादने इति **आयुर्वेदमार्तण्ड श्रीलक्ष्मीरामस्वामि**महोदयानां मतम्। **यादवशर्मा**।

2 जेज्जट-चन्द्रटाभ्यां कृतः सुश्रुतप्रतिसंस्कारः पाठसंशोधनरूपः न तु विलुप्तग्रन्थापूरणविस्तरवर्जनरूप इति चन्द्रटेनैव ग्रन्थान्ते लिखितात् "सौश्रुते चन्द्रटेनेह भिषक्तीसटसूनुना। पाठशुद्धिः कृता तन्त्रे टीकामालोक्य जैज्जटीम्" इति पद्यात् प्रतीयते। **यादवशर्मा**।

संवर्धितमिति नः प्रतीतिः । वात्स्येनापि काश्यपसंहितायामेवमेवाकारीति तेन कल्पस्थानान्ते कीर्त्यते । सिद्धनागार्जुनश्चासौ "शातवाहनस्य नृपतेः समसामयिको बोधिसत्त्वस्थानीयः महाविद्वांस्तन्त्रविद्यानिपुणो रसायनेऽपि प्रसिद्धो वैद्यकेऽपि विद्वान्"–इति निश्चीयते राजगुरुपं० श्रीहेमराजशर्मभिः । शातवाहनकालश्च बुद्धजन्मनो द्विशतवर्षोत्तर इति ऐतिहासिकाः । बुद्धजन्मनश्च प्रायः सार्धद्विसहस्रवर्षाण्यतीतानीति । तेन सुश्रुतप्रतिसंस्कर्त्तुः सिद्धनागार्जुनस्यान्यूनवर्षसहस्रद्वयं सपादं समतीतमिति सुगमः सिद्धान्तः ।

एवं चातिदीर्घेण कालेन सुश्रुतस्य पुनः पुनः प्रतिसंस्कारार्हताऽभूत्, विहितश्च काले काले प्रतिसंस्कारो विलुप्तग्रन्थापूरणविस्तरवर्जनपूर्वको बहुभिराचार्यैरित्यपि सुशकमनुमातुम् । सुश्रुतप्रतिसंस्कारश्च पुनः क्रियत एव क्वचित् क्वचिद् अधुनाऽपि ।

अथ सुश्रुतकालनिर्णयः साधनान्तरेणापि साध्यते पं० श्रीयादवशर्मभिः । सुश्रुते शस्त्रकर्मादि निखिलं कार्यं प्रशस्ततिथिकरणमुहूर्त्तनक्षत्रेषु करणीयमित्युपदेशः, तत्र प्रशस्तवारोल्लेखो न दृश्यते । रविसोमादिवारगणना तु तच्छुभाशुभविचारसहिता भारते शकाब्दारम्भकालतो वर्षसहस्रात् प्राक् प्रवृत्तेति ज्यौतिषिकानामाधुनिकानां निर्णयः । शकनरपतेरतीताब्दाश्चाधुना १८६१ मिताः । तस्मात् ततोऽपि सहस्रवर्षात् पूर्वमर्थात् प्रायेण वर्षसहस्रत्रयात् प्राग् वारगणनारम्भः । तस्मात् ततोऽपि प्राग् रचनाकालः सुश्रुतसंहितायाः—इति संभाव्यते ।

अथात्र केचिदापृच्छेरन्—वृद्धसुश्रुतनाम्ना पुरा प्रसिद्धस्य ग्रन्थस्य टीकाकारैरुद्धृतपाठस्य क्व स्थानं, कश्च वर्त्तमानसुश्रुतसंहितयाऽस्य सम्बन्धः, इति । तान् प्रतिब्रूमः-वृद्धसुश्रुतो ह्याद्यं सौश्रुततन्त्रं; यस्य बहुधाखण्डितस्य प्रतिसंस्कारं ( संक्षेपण-विस्तारणादिरूपं ) विधाय विरचिता लभ्यमाना सुश्रुतसंहिता बहुभिः प्रतिसंस्कर्त्तृभिः । अत एव वृद्धसुश्रुतोक्ताः केचित् पाठाः लभ्यन्तेऽपि, न लभ्यन्तेऽपि वर्त्तमानसुश्रुतसंहितायाम् । लभ्यमानसुश्रुतग्रन्थेऽदृष्टा बहवस्तत्पाठाष्टीकाकृतां काले लभ्यन्ते स्म । तथाहीदानीं डल्लनोक्ताः केचित् पाठाः न चक्रपाणिसम्मताः, चक्रपाणिसम्मताश्च पाठा न डल्लनसम्मताः, नेपालोपलब्धताडपत्रलिखितपुराणपुस्तकीयपाठाश्च बहुधा भिन्नाः, अन्ये च केचन पाठा जेज्जटगयदासादिभिर्गृहीतास्त्यक्ताश्च; तदेतद् ग्रन्थेऽस्मिन् प्रदर्शितं पादटीकासु[1] बहुधा परमकुशलैः पं० श्रीयादवशर्मभिः । वृद्धभोजादिविषयेऽप्ययमेव नयः कल्पनीयः । वृद्धत्वं हि न केवलं वयसा पुराणत्वं, किन्तु बृहत्त्वमपि, यथा-वृद्धवाग्भट इति प्रसिद्धस्य अष्टाङ्गसंग्रहस्य केचन पाठाः संक्षेपेण पद्यैरुक्ता अष्टाङ्गहृदये इति दिक् ।

---

१ दृश्यन्तामत्रैव ग्रन्थे—७७।७८।८१।११३।१२६।१२६।१३५।१५१।१८५।१९१।१९५।१९६।१९४।२३९।२४०।२४६।२७९।२८४।३३९।३७० पत्रेषु पादटीकाः ।

अथेह सुश्रुतव्याख्यातृणामपि परिचयो यथाज्ञानमुच्यते। तत्र दशैव (द्वादश वा) सुश्रुतटीकाकाराः प्रसिद्धनामानः[1]। यथा—(१) जेज्जटः (जैयटो वा), (२) गयदासः, (३) भास्करः (४), श्रीमाधवः (५), ब्रह्मदेवः (६), डल्लनः (७), चक्रपाणिः (८), कार्त्तिकः (कार्त्तिककुण्डो वा) (९), सुधीरः (१०), सुकीरः—इति। लक्ष्मणश्च टिप्पनीकारः क्वचित् श्रूयते। अपरा च 'गूढपदभङ्ग' नाम्नी सुश्रुतव्याख्या टिप्पनी वाऽऽसीत्, परं केन कृतेयमिति न ज्ञायते। सर्वेषां चैषां टीकाकृतां पाठाः तत्तत्परवर्त्तिभिर्व्याख्यातृभिरुद्धृताः, ततश्चैषां पूर्वपरभावित्वं सुखेनोन्नेयं भवति। तासु च टीकासु डल्लनकृतनिबन्धसंग्रहाख्या व्याख्यैव सम्पूर्णोपलभ्यते, द्वे चान्ये टीके त्वंशत एवोलब्धे, यथा—गयदासस्य टीका (न्यायचन्द्रिका) निदानस्थानस्यैव, चक्रपाणेः (भानुमती) सूत्रस्थानस्यैव। अपरास्तु टीकाः नामशेषा एवाद्यापि। अत्र च चतुर्णामेव व्याख्यातृणां परिचयो वर्ण्यते यथोपलब्धप्रमाणम्।

**(१) जेज्जटः** जैयटो वा नाम ज्ञातेषु सुश्रुतव्याख्यातृषु प्राचीनतमः, यस्य चरकव्याख्या (निरन्तरपदव्याख्यानाम) पं० श्रीयादवशर्मभिः मद्रासनगरस्थ-राजकीयग्रन्थालयादासादिता। स च वैयाकरणकेसरिणः कैयटस्य काव्यप्रकाश-कर्त्तुर्मम्मटस्य च सोदरः—इत्यस्मद्गुरुपरम्पराप्रसिद्धा किंवदन्ती। वाग्भट-तीसट-चन्द्रटवदिमेऽपि सिन्धुदेशजाः स्युरिति सम्भाव्यते। जेज्जटीया टीका च तीसटपुत्रस्य चन्द्रटस्यापि समये प्रसिद्धेति चन्द्रटेन सुश्रुतपाठशोधनादनुमीयते, तथाह्युक्तं[2]—"सौश्रुते चन्द्रटेनेह भिषक्तीसटसूनुना। पाठशुद्धिः कृता तन्त्रे टीकामालोक्य जैज्जटीम्" इति। तीसटश्च वाग्भटस्य पुत्रः शिष्यो वेति प्रसिद्धेः ख्रीस्तीयपञ्चमशतकात् षष्ठशतकाद् वा (वाग्भटकालात्) अन्यूनद्विशतवर्षप्राक्तनो जेज्जटः—इति सुवचम्। तस्मादन्यूनसार्धसहस्रवर्षपुराणो जेज्जटाचार्यः[3]। स च तीसटश्च सुश्रुतप्रतिसंस्कारकावभूतामित्यपि युज्यते वक्तुम्।

**(२) गयदासः**—गयदासाचार्यो वा नामातिप्रामाणिकः सुश्रुतव्याख्याता डल्लनस्य प्रधानोपजीव्यः। प्रत्युत तत्सम्मता एव पाठाः डल्लनेन प्रायो गृहीताः, पाठान्तराणि च भूम्ना वर्जितानि 'तन्नेच्छति गयी' इत्युक्त्या। ('गयी'ति

---

१ डल्लनटीकायाश्चादावेव श्रूयते—"तेन (डल्लनेन) श्रीजेज्जटं टीकाकारं श्रीगयदास-भास्करौ च पञ्जिकाकारौ श्रीमाधव-ब्रह्मदेवादीन् टिप्पनकारांश्चोपजीव्य आयुर्वेदशास्त्र-सुश्रुतव्याख्यानाय निबन्धसंग्रहः क्रियते"। अपरे चेहोक्ताष्टीकाकृतो डल्लन-चक्रपाणिभ्या-मुद्धृतपाठाः, निर्दिष्टाश्च विजयरक्षितेन मधुकोषटीकारम्भे। २ इदं प्रमाणमस्माभिः पं० श्रीयादवशर्मणः सुश्रुतोपोद्घातादुपलब्धम्। ३ भट्टारहरिचन्द्रादर्वाचीनो जेज्जटः, तेन स्वप्रणीतचरकटीकायां हरिचन्द्रस्य नामग्रहणादिति यादवाचार्याः।

संक्षिप्तनाम्ना च डल्लनेन तन्निर्देशः कृतः प्रायेण )। तन्मतोद्धारश्च तेन क्वचिदेकस्मिन् प्रसङ्गे षोढा सप्तधा वा व्यधायि। गयदासटीका च सम्प्रत्येवाविष्कृता साधुसम्पादिता चास्मन्मित्रैः पण्डितश्रीयादवाचार्यैः। तैरुच्यते—"गयदासो डल्हनात् प्राचीनः, बहुषु स्थलेषु तत्पाठोद्धारात्। जेज्जटाच्चार्वाचीनः, पञ्जिकायां बहुषु स्थलेषु जेज्जटमतस्य दूषितत्वात्; अतोऽनयोर्मध्यकालीनः—इत्यनुमीयते"। यतश्च दशमशतकान्तो डल्लनसमयो निरूप्यतेऽस्माभिः (अनुपदमेव), यतश्च जेज्जटो वाग्भटात् प्राक्तनः, तस्मादनयोरन्तरा ख्रिस्तीयतृतीयशतके चतुर्थशतके वा सम्बभूव गयदासः इति युज्यते कल्पयितुम्।

(३) डल्लनः—डल्लनाचार्यो वा 'डल्हण'[2]—इति वा प्रसिद्धः सुश्रुतस्य निबन्धसंग्रहाख्यटीकाकारः ख्रिस्तीयदशमशतकान्ते प्रादुर्भूतः—इत्यनुमीयते। स हि मथुरासमीपवर्त्तिनि भादानक( भदावर? )देशे भरतपालवैद्यस्य पुत्रः 'सहपाल'-नृपतिवल्लभश्चेत्यात्मानं निबन्धसंग्रहारम्भे ख्यापयति। अस्य च नृपस्य 'साहल' इत्यपरं नाम 'भादानक'नाथत्वं च ज्ञायते सुश्रुतोत्तरतन्त्रस्य षड्विंशाध्यायटीकान्ते लिखितेन पद्येन, यथा—

"सद्बुद्धेः प्रसवः पदं सुयशसः सद्वैद्यवन्द्यः श्रिया-
मावासः सुकृती क्रियासु निपुणः श्रीडल्लनाख्यो भिषक्।
श्रीभादानकनाथसाहलनृपस्यातीव यो वल्लभः
शास्त्रं तस्य निबन्धसंग्रह इति ख्यातं धरित्रीतले॥"

स चासौ सहपालनृपतिर्मथुराप्रदेशांशे कृताधिपत्यः सामन्तराज एवेति प्रतीयते, 'भादानकनाथ' इत्येतावन्मात्रनिर्देशात्। एष च नृपतिर्भारतेतिहासप्रसिद्धस्य महीपालाख्यचन्द्रशेखरनरपतेस्तत्रैव प्रदेशेऽन्यत्र च कृतराज्यस्य पूर्वज इत्यनुमीयते, यतस्तस्यैव समये ( ख्रिस्तीयैकादशशतकारम्भे ) गजनीपतिमहमूदेन बहुसहस्रसेनाधिपेन सप्तदशकृत्वो विलुण्ठिता विध्वस्ताश्च स-महामारं प्रभासपत्तन(सोमनाथ)-देहली-मथुरादिप्रदेशाः—इत्यैतिहासिको निर्णयः[3]। न च सम्प्रवृत्ते तादृशविप्लवे सम्भवति निबन्धसंग्रहवद्ग्रन्थस्य निर्माणम्। पालाख्या नृपतयश्च न केवलं वङ्गेषु किन्तु समग्रेऽप्यार्यावर्त्ते दशमैकादशशतकयोः कृतराज्या इत्यैतिहासिकाः[3]।

---

१ सुश्रुतसंहितायाः 'निर्णयसागर'मुद्रिताया द्वितीयावृत्तौ (१९३८)। २ डल्लनस्य मथुराप्रदेशवास्तव्यस्य 'डल्लन' इत्येव नाम साधीयः प्रतिभाति, तद्देशे 'डालन'नाम्नोऽद्यापि प्रचारदर्शनात्। कल्हणसगन्धि डल्हणनाम तु काश्मीरवासिनामेव भवितुमर्हति, नान्येषाम्। ३ Vide Vincent Smith's Oxford History of India, pp. 186 to 190.

इतश्च, ऐतिहासिकानां सुपरिज्ञातस्य वङ्गराज्यशासकस्य 'नयपाल'नरपतेः समये प्रादुर्भूतस्य चक्रपाणिदत्तस्योल्लेखो डल्लनेन पूर्वनिबन्धानां संग्राहकेन स्वटीकादौ अन्यत्र वा क्वचिदपि नाकारीत्यपि डल्लनस्य तत्पूर्वजत्वं सूचयति। किञ्च, सुश्रुतस्य मूलपाठाश्चक्रपाणिधृताः डल्लनपाठेभ्यो भिन्नाः एव बहुशः, न च तदुल्लेखः क्वचिदपि डल्लनेन विहितः। पक्षान्तरे अनुल्लिख्यापि नाम्ना डल्लनमतं चक्रपाणिना खण्डितमेव। यथा "अहं हि धन्वन्तरिरादिदेवः" इत्यादिप्रसिद्धपद्यस्य व्याख्याने "आदिदेवः शङ्करः" इति व्याख्यानं डल्लनमतं चक्रपाणिना 'इति केचिद्' इत्युद्धृतं दूषितञ्च (सुश्रुत० सूत्र० अ० १)। वस्तुतस्तु डल्लनमतमिह भ्रान्तमेव, आदिदेवपदस्यात्र प्रथमधन्वन्तरिवाचकत्वात्। एवं च प्रत्यक्षशारीरोपोद्घाते यदुक्तं—"डल्लनश्चक्रपाणेः सम-सामयिकः समीपकालीनो वेति" तदधुना स्तोकेन परिष्करणीयं भवति।

(४) चक्रपाणिः—चक्रपाणिदत्तो वा नाम वैद्यकाचार्यः सुश्रुतचरकयोः प्रसिद्धव्याख्याता चिकित्सासारसंग्रहादिग्रन्थप्रणेता च। स नरदत्ताख्यभिषग्वरस्य शिष्यः (चरकटीकायां तथोल्लेखात्), गौडपतिविश्वस्तवैद्यराजस्य नारायणस्य तनयः, भानुदत्तस्य च गौडाधिनाथान्तरङ्गस्यानुजः—इत्यात्मपरिचयमदात् (चक्रदत्तसंग्रहान्ते)। गौडाधिनाथश्चायमितिहासप्रसिद्धो नयपालदेवः इति शिवदाससेनः। भानुदत्तपरिचयश्च (History of Bhawal) इत्याख्ये ग्रन्थे[१] श्रीमता गोविन्दमुखोपाध्यायेन लिखिते प्रसङ्गात् प्रदत्तः; यथा—"गौडाधिनाथनयपालदेवभिषजश्चक्रदत्तस्य अनुजो भानुदत्तोऽभूत्। नयपालनृपतिश्च वङ्गविहारशासकस्य पालराजवंशप्रतिष्ठापकस्य गोपालभूपतेरेकादशपुरुषः, तस्य प्रधानसेनापतिरासीद् भानुदत्तः। तद्वंश्यत्वेनात्मपरिचयं ख्यापयन्तः केचन दरिद्रजना अद्यापि तत्र दृश्यन्ते, परं भानुदत्तस्य वंशजाः पूर्वमतिसमृद्धा भूम्यधिकारिणश्चासन्—इति (Translated from English)। चक्रदत्तप्रदत्तो "गौडाधिनाथरसवत्यधिकारपात्र-नारायणस्य तनयः सुनयोऽन्तरङ्गात्। भानोरनु प्रथितलोध्रवलीकुलीनः श्रीचक्रपाणिरिह कर्तृपदाधिकारी"—इति स्वपरिचयोऽपि पूर्वोक्तपरिचयेन संवदति। नयपालनृपतेः सिंहासनाधिरोहणसमयश्च तद्राज्यकालश्च खिस्तीयैकादशशतकस्य शेषार्धः

१ यस्तु उत्तरतन्त्रस्य ४९ अध्याये (१९ पद्यटीकायां) डल्लनेन—"पञ्चमूली महतीति चन्द्रिकाकारः, स्वल्पेति चक्रपाणिः—इति नाममात्रेणोल्लेखश्चक्रपाणेः सकृदेव, स प्रक्षिप्तवत् प्रतिभाति, यतस्तत्रैव 'पञ्चमूलीकृतां' इत्यस्यार्धद्वयं डल्लनेन व्याख्यातपूर्वम्। न च पूर्वं क्वचिदपि चक्रपाणिनामग्रहणमकृत्वा ग्रन्थशेषे नातिप्रयोजनविषये तत्प्रमाणोद्धारं कुर्यात् सकृदेव डल्लनः—इति सम्भाव्यते। वयं तु ब्रूमः, पत्रशिरस्कं टिप्पनमात्रमेतत् कस्यापि मुद्रणकाले ग्रन्थान्तः प्रविष्टम्।

( 1040 A. D. to 1070 )। तस्मात् एकादशशतकस्य शेषार्धे स्थापनीयश्चक्रपाणिकालः ।

अथ चक्रपाणिकृता ग्रन्थाः । चक्रपाणिना न केवलं सुश्रुतस्य भानुमती टीका, चरकस्य चायुर्वेददीपिका नाम व्याख्या विरचिता, प्रत्युत द्रव्यगुणविषये द्रव्यगुणसंग्रहो नाम संक्षिप्तो ग्रन्थः, चिकित्सासारसंग्रहो नाम ग्रन्थश्च चिकित्साविषयको निर्मितौ । सर्वे च चक्रपाणिकृता ग्रन्था अत्युपादेया विश्वसनीयतमाश्चेति सुविदितं विदुषाम् ।

तत्र भानुमती नाम टीका सूत्रस्थानस्यैव उपलभ्यते, इतरस्थानानां टीका चक्रपाणिना लिखिता नवेति न विद्मः, यतो ग्रन्थान्तरेषु तत्पाठा नोपलभ्यन्ते । यदि डल्लनकृतमुत्तरतन्त्रीयं चक्रपाणिमतं पूर्वोद्धृतं सत्यमेव चक्रपाणेः स्यात्तर्हि विरचितैव तेन भानुमती टीका समग्रसुश्रुतस्येत्यनुमीयते । यत्तु वनौषधिदर्पणस्य उपोद्घाते डल्लनमतं चक्रपाणिना चरकटीकारम्भे खण्डितमिति श्रीविरजाचरणकविराजेनोक्तं, तच्चिन्त्यं, मुद्रितचरकटीकायां लिङ्विधिप्रसङ्गे डल्लनस्य नामोल्लेखस्यादर्शनात् । वस्तुतस्तु चक्रपाणिधृतसौश्रुतपाठाः डल्लनधृतपाठेभ्यो बहुशो भिद्यन्ते, तथाऽप्येकेनापरस्य नामोल्लेखो न कृतः (पूर्वोक्तसन्दिग्धपाठादन्यत्र) इति चित्रमेतत् ।

अथ डल्लनचक्रपाणिकृतयोः सुश्रुतव्याख्यानयोरुत्कर्षापकर्षविचारे कृते चक्रपाणिकृता भानुमती नाम टीका पदे पदे स्वोत्कर्षं ख्यापयति दर्शयति च गम्भीरप्रवेशितामुच्चकोटिकपाण्डित्यं व्याख्यानपाटवं च चक्रपाणेः । परं विद्यार्थिजनानामुपकाराय सरलार्थता, परमतसंग्रहनिपुणता, नानाविधप्राचीनपाठप्रदर्शनपटुता चेति गुणाः डल्लनस्य सर्वथा प्रशंसार्हाः, ततश्च बालबोधोपयोगिताविशेषात् निबन्धसंग्रहटीकाया बहुलः प्रचारोऽभूदिति सम्भाव्यते । सौश्रुतानपपाठान्निरस्य युक्तियुक्तार्थपाठसंस्थापनाय तु नोभयोराग्रहः, असङ्गतार्थानामपि प्राचीनपाठानां कथमपि कौशलेन व्याख्यानात् । एतद् दृष्टान्तश्चेह प्रसङ्गतः प्रदर्श्यते—यथा सुश्रुतप्रथमाध्याये "कस्मात्, लोकस्य द्वैविध्यात्" इत्यत्र चक्रपाणिना "इति प्रकरणार्थः" इत्येतावन्मात्रवचनेन, डल्लनेन च सन्देहमप्यकुर्वता कष्टार्थता लङ्घिता, न तु व्याख्याता । वस्तुतस्त्विह "लोकस्य तद्विधेयत्वात्" इति पाठः अस्मदीयहस्तलिखितपुस्तके दृष्टः साधीयान्, अन्यथा "पुरुषः प्रधानं, तस्योपकरणमन्यत्" इति वक्ष्यमाणार्थः, "तस्मिन् क्रिया, सोऽधिष्ठानम्" इति पूर्वोक्तार्थश्च न कथमपि सङ्गच्छेत । अपरे चैवंविधा दृष्टान्ताः ग्रन्थविस्तरभिया नोदाह्रियन्ते । द्रष्टव्यास्तु ते प्रत्यक्षशारीरोपोद्घातस्य तृतीयावृत्तौ । अस्तु ।

चक्रपाणिकृते चिकित्सासारसंग्रहे चक्रपाणिनाऽतिमात्रं चिकित्सापाटवं प्रद-

र्शितमित्यत्र न सन्देहः। तेन हि तत्र न केवलमार्षी चिकित्सोपदिष्टा, प्रत्युत रस-वैद्यानां रसपर्पटीताम्रयोगलौहादिप्रयोगा अपि सम्यक्तया लोकोपकाराय वर्णिताः। न च तेन कायचिकित्साविषय एव व्याख्याताः, प्रत्युत शल्यतान्त्रिककर्माण्यपि बहुधा सम्यगुपदिष्टानि, यथा—अश्मर्यामश्मरीविपाटनं, गृध्रस्यां नाड्यन्तच्छेदनं, व्रणशोथेषु विम्लापनावसेचनोपनाहपाटनादिकर्माणि, अर्शोभगन्दरादिषु क्षाराग्निकर्मच्छेदनानि, प्लीह-यकृतोः सिराव्यधनं, लिङ्गनाशे काचस्य शलाकावेधनादि शस्त्रकर्म चेति। तेनैतज्ज्ञायते—चक्रपाणिसमयेऽपि वैद्यैर्बहुधा क्षाराग्नियन्त्रशस्त्रकर्माण्यनुष्ठीयन्ते स्मेति। अधुना वैद्यैः परित्यक्तेष्वमितेषु शल्यतान्त्रिककर्मसु, कायचिकित्सायामपि प्रधानोपजीव्यता चक्रसंग्रहस्याद्यापीति को वा नोरीकुर्यात्?।

अथ चक्रपाणिकृतो **द्रव्यगुणसंग्रहो**ऽपि परमोपादेयः स्वल्पकायो ग्रन्थश्चरक-सुश्रुतोक्तद्रव्यगुणपूर्वार्धस्य सारसंग्रहरूपः। स च "धारणस्मरणसुखः" इति तस्य कदाचिन्महती छात्रप्रियताऽभूदिति स्पष्टमुन्नीयते। शिवदासकृतटीकासहितश्चायं निबन्धो वैद्यानां परमोपकारी, एष च ग्रन्थः पूर्वं कलकत्तामहानगर्यां प्रकाशित ई. १८८२ वर्षे शिवदासटीका-वङ्गानुवादसहितः सुविशुद्धः **कविराज श्रीकालीश-चन्द्रकविरत्नैः**। स चास्मद्ग्रन्थालये रक्षितः। ततश्च पण्डित श्रीयादवशर्मभिः सम्यक् संपाद्य प्रकाशितो निर्णयसागरयन्त्रालयात् मुम्बापुर्यां ई. १९२२ वर्षे। वस्तुतस्तु पुरा राजानो धनिनश्च येषां नित्यसेव्यद्रव्याणां गुणान् पृच्छन्ति स्म, तेषामेव गुणवर्णनपरोऽयं ग्रन्थः—इति ग्रन्थकारेणैवाभ्यधायि। अधुना तु न कोऽपि तथा पृच्छति, सति वा प्रश्ने श्लोकोद्धारपूर्वमुत्तरं च न प्रदेयं भवति। तथाऽपि द्रव्यगुणशास्त्रस्य पूर्वार्धमत्रातीव कुशलतया लिखितमिति परमादरणीयोऽयं ग्रन्थः।

अपरे च केचन चक्रपाणिकृता ग्रन्था आसन्निति श्रूयते। तेष्वेकः **शब्दचन्द्रिका** नाम वैद्यकग्रन्थः नानार्थानां भेषजादिवाचकानां शब्दानां व्याख्यानपरः; अपरश्च **व्याकरणतत्त्वचन्द्रिका**ख्यो ग्रन्थः, यस्य हस्तलिखितपुस्तकमस्माभिर्यौवने दृष्टं, नतु हन्त संगृहीतम्। तत्र च नरदत्तशिष्यस्य नारायणतनयस्य चक्रपाणेः कृतिरिय-मित्युल्लेखमपश्यमिति स्मर्यते। चक्रपाणिश्च पाणिनीयव्याकरणप्रस्थाने सुनिष्णात आसीदिति चरकसुश्रुतटीकयोरालोचनेन स्वच्छमनुमीयते, तेन बहुधा पाणिनीय-प्रमाणोद्धारदर्शनात्।

अस्ति चान्यदपि किञ्चित् चक्रपाणिकृतं 'मनोरमाखण्डनं' नाम स्वल्पकायं पुस्तकं पुरा काश्यां मुद्रितं, तदस्मद्ग्रन्थसंग्रहालये वर्त्तते। भट्टोजिदीक्षितस्य 'मनोरमा'कारस्य परकालभावित्वादपर एवायमर्वाचीनश्चक्रपाणिर्नासौ चक्रपाणिदत्तः।

चक्रपाणिदत्तश्च वङ्गीयवैद्याख्यब्राह्मणोऽन्यजातीयो वेति कैश्चित् सन्दिह्यते। परं चिकित्सासारसंग्रहान्ते दृष्टेन—"भट्टत्रयत्रिपथवेदविदा जनेन दत्तः पतेत् सपदि

मूर्धनि तस्य शापः"—इति वचनेनानुमीयते—वेदवेदाङ्गेषु सुनिष्णातेन तेन स्वयं दास्यमानस्य शापस्य भयमुद्घोषितं ग्रन्थार्थचौरेभ्यः । शापदाता च स्वयमेवासौ विप्रवरः स्यादिति सम्भाव्यते । जनश्रुतिश्च तस्य वैद्याख्यविप्रत्वमाह । श्रुतिस्मृति-व्याकरणादिनिपुणत्वं च तस्य टीकायामुपलभ्यमानं तदेवानुमानं द्रढयति ।

मुद्रापणं च सुश्रुतसंहितायाः कदा कैश्च कृतमित्यपि स्मरणार्हं नाम । तत्रोच्यते—प्रथममुद्रापणमस्य[1] कलकत्तामहानगर्यां वर्षशतकात् पूर्वं सद्यःप्रतिष्ठितसंस्कृत-महाविद्यालयस्य आयुर्वेदाध्यापकेन पं० **मधुसूदनगुप्तेन**[2]कारि । ततो निबन्ध-संग्रहसंयुतोऽयं ग्रन्थः पञ्चाशद्वर्षतः प्राक् **कविराजश्रीअविनाशचन्द्रशर्मणा** ततोऽनन्तरं पं० **जीवानन्दविद्यासागरेण** यथामति संशोध्य प्रकाशितः । तदनन्तरं क्रमेण—मुम्बय्यादिनगरेषु मुद्रापितोऽसौ ग्रन्थः । भानुमतीटीकालङ्कृतं सुश्रुतस्य सूत्रस्थानं ( आरम्भतश्चत्वारिंशदध्यायपर्यन्तं ) च कलकत्तानगरादेव प्रायश्चत्वारिंशद्वर्षतः प्राक् **महामहोपाध्यायकविराजश्रीविजयरत्नसेन-निशिकान्तसेनाभ्यां** सम्पाद्य प्राकाश्यत । अधुना विगतपञ्चदशवर्षेषु क्रमात् प्रकाशिताः सुमनोहरास्तिस्र आवृत्तयः सुश्रुतसंहिताया मुम्बईस्थनिर्णयसागरमुद्रणालयात् मित्रवर्य पं० **श्रीयादवाचार्यशर्मभिः** शर्मणे वैद्यलोकस्य । ते च चिरायायुर्वेद-प्रतिसंस्कारकर्मणि व्यापृताः सुखतमदीर्घायुषो विजयन्तां संमेधन्तां च धी-धृति-स्मृति-विद्यावैभवा धार्मिका भिषग्वराः—इत्याशास्ते

कलकत्तामहानगर्यां
सं० १८९६,
वैशाखपौर्णिमायाम्

सुधियां विधेयः
सेनोपाह्वो **गणनाथशर्मा**

---

१ प्रथममुद्रापितोऽयं ग्रन्थः अस्मदीयग्रन्थालयेऽद्यापि वर्त्तते, स च ई० १८३६ वर्षे मुद्रितः । २ स एव हि प्रथमं ई० १९३५ संख्ये वर्षे नवस्थापिते "मेडिकल कालेज आफ् बेंगाल ( Medical College of Bengal )—इत्याख्ये विद्यालये शवव्यवच्छेदं कृतवान्, तदा च तदुत्साहवर्धनाय कलकत्तास्थफोर्टविलियमदुर्गतः तोपध्वनिरभूत् ।

# भानुमतीव्याख्यायां प्रमाणतयोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तृणां च नामानि ।

चरकः ४–६, ५–४ इत्यादौ ।
पाणिनीयाष्टाध्यायी १०–१३ इत्यादौ ।
भोजः १०–२१, ५४–५ इत्यादौ ।
वाचस्पतिमिश्रः १५–२१ इत्यत्र ।
भालुकितन्त्रं ५४–६,७१–१२ इत्यादौ ।
दृढबलः ५७–२२ इत्यत्र ।
काश्यपीयतन्त्रं ५७–२६,९०–५ इत्यादौ ।
भट्टारहरिचन्द्रः ६०–७ इत्यत्र ।
कपिलबलः ६०–३,६०–९,८५–१९ इत्यादौ ।
विश्वामित्रः ८३–१८ इत्यत्र ।
निघण्टुः ८३–२६ इत्यत्र ।
हारीतः १०३–९,२२०–१९ इत्यादौ ।
वैतरणः १४१–५ इत्यत्र ।
निमित्तशास्त्रं २०८–५ इत्यत्र ।
क्षारपाणिः २१८–२ इत्यत्र ।
भेलः २४७–२६ इत्यत्र ।
जतूकर्णः ३११–२३ इत्यत्र ।

---

॥ श्रीः ॥

# शुद्धिपत्रम्

| पंक्तौ | पृष्ठे | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५ | १० | गोचोऽसंख्या° | गोध्यचोऽसंख्या° |
| ३ | ११ | व्यज्यते | वज्यते |
| १८ | १७ | पुष्णो | पूष्णो |
| २५ | २१ | यथाभूता | यथाभूताः |
| २१ | ४२ | अध्ययनस्यानु | अध्ययनमनु |
| १७ | ८९ | अन्यव्याख्यानं | व्याख्यानान्तरं |
| १८ | १५९ | सौक्ष्मा° | सौक्ष्म्या° |
| १७ | १६२ | इतरेष्वर्तुष्वपि | इतरेष्वृतुष्वपि |
| १४ | १६६ | स्थानसंश्रयमेदे | स्थानसंश्रयभेदे |
| १९ | १६६ | मज्जाशुक्र° | मज्जशुक्र° |
| १९ | १६९ | अष्टामेव | अष्टावेव |
| १३ | १७२ | कलायोकसंनिभः | कलायोदकसंनिभः |
| २० | १७९ | दौर्हृदं | दौहृदं |
| २१ | १७९ | दौर्हृदापचारः | दौहृदापचारः |
| २५ | १८० | मेदान्तर° | भेदान्तर° |
| २९ | १८९ | कीर्तिमित्यर्थ | कीर्तिमत्यर्थ |
| ६ | १९१ | परिगृहीत्वा | परिगृह्य |
| १४ | २२० | बहिर्निगमनं | बहिर्निर्गमनं |
| ७ | २३४ | नारि | नारी |
| १० | २६७ | बलाबलत्वेऽपि | बलाबलत्वे अपि |
| ७ | ३०८ | चौण्ड° | चौण्ड्य° |
| १९ | ३५२ | नातिशील° | नातिशीतल° |
| २७ | ३७६ | भूतभूतगुणेन | भूतगुणेन |

॥ श्रीः ॥

# सुश्रुतसंहिताया विषयानुक्रमः ।

## सूत्रस्थानम् १


| विषयाः | पृष्ठम् |
|---|---|
| १–२ वेदोत्पत्त्यध्यायोपक्रमः ... ... ... ... ... | १ |
| ३ औपधेनवादीनामायुर्वेदाध्ययनार्थं धन्वन्तरिसमीपगमनम् ... | ८ |
| ४ धन्वन्तरिकृतमौपधेनवादीनां स्वागतम् ... ... ... | ९ |
| ५ आयुर्वेदस्याथर्ववेदोपाङ्गत्वम्, आयुर्वेदस्य शल्यादीन्यष्टावङ्गानि । ... ... ... ... ... ... ... | ९ |
| ६–७ अष्टानामङ्गानां संक्षेपतो लक्षणानि ... ... ... ... | ११–१२ |
| ८–९ शल्यज्ञानं प्रधानीकृत्य समग्रायुर्वेदोपदेशार्थमौपधेनवादिभिः कृता प्रार्थना ... ... ... ... ... ... | १२ |
| १०–११ औपधेनवादिभिः सुश्रुताय प्रश्नाधिकारप्रदानम् ... ... | १२ |
| १२ सुश्रुतं प्रत्यायुर्वेदप्रयोजनकथनम् ... ... ... ... | १३ |
| १३ आयुर्वेदनिरुक्तिः ... ... ... ... ... ... | १३ |
| १४ शल्यतन्त्रस्य प्रत्यक्षादिप्रमाणाविरुद्धत्वम् ... ... ... | १४ |
| १५ शल्याङ्गस्याद्यत्वे हेतुः... ... ... ... ... ... | १५ |
| १६ शल्याङ्गस्य वरत्वे हेतुः ... ... ... ... ... | १६ |
| १७ अस्य शास्त्रस्य प्रशस्यं रूपम् ... ... ... ... ... | १६ |
| १८ आयुर्वेदस्य क्रमागतिः ( गुरुपरम्परा ) ... ... ... | १७ |
| १९ धन्वन्तरेरात्मरूपम् ... ... ... ... ... ... | १७ |
| २० शल्याधिष्ठानभूतपुरुषनिरूपणम् ... ... ... ... | १७ |
| २१ व्याधीनां सामान्यं लक्षणम् ... ... ... ... ... | १९ |
| २२ व्याधीनां चत्वारो भेदाः ... ... ... ... ... | २० |
| २३ ( १ ) आगन्तुव्याधयः ... ... ... ... ... | २० |
| ( २ ) शारीरव्याधयः ... ... ... ... ... | २० |
| ( ३ ) मानसव्याधयः ... ... ... ... ... | २३ |
| ( ४ ) स्वाभाविकव्याधयः ... ... ... ... ... | २३ |
| २४ व्याध्याश्रयकथनम् ... ... ... ... ... ... | २४ |
| २५ व्याधिनिग्रहहेतवः ... ... ... ... ... ... | २४ |
| २६ संशोधनादिष्वाहारस्य प्राधान्यवर्णनम्, औषधीनां स्थावरजङ्गमभेदेन द्वैविध्यवर्णनं च ... ... ... ... | २४ |

विषयाः पृष्ठम्


२७ चतुर्विधाः स्थावरौषध्यः ... ... ... ... ... २५
२८ चतुर्विधा जङ्गमौषध्यः ... ... ... ... ... २५
२९ औषधीनां चिकित्सोपयोग्यवयववर्णनम् ... ... ... २६
३० पार्थिवा औषध्यः ... ... ... ... ... ...
३१ कलाकृतौषधनिरूपणम् ... ... ... ... ...
३२ कालकृतौषधप्रयोजनम् ... ... ... ... ...
३३ पूर्वोक्तचतुर्विधौषधस्य शारीरविकारप्रकोपप्रशमकत्वम् । ... २७
३४–३५ आगन्तुकानामाश्रयभेदेन चिकित्सा ... ... ... ... २८
३६ उक्तचतुष्टयोपसंहारः ... ... ... ... ... ... २९
३७ प्रथमाध्यायोक्तार्थस्य चिकित्सितबीजत्वकथनम् ... ... ३०
३८ एतत्तन्त्रान्तर्गतस्थानाध्यायसंख्यानिरूपणम् ... ... ... ३१
३९ सुश्रुततन्त्राध्ययनफलम् ... ... ... ... ... ३१


## द्वितीयोऽध्यायः २


१–२ शिष्योपनयनीयाध्यायोपक्रमः ... ... ... ... ३२
३ उपनयनयोग्यपुरुषपरीक्षा ... ... ... ... ... ३२
४ आयुर्वेददीक्षाविधिः, आयुर्वेदाध्ययनाधिकारिणः ... ... ३३
५ शिष्यस्य कर्तव्यनिरूपणम् ... ... ... ... ... ३४
६ शिष्यविषये गुरोः प्रवृत्तिनियमः ... ... ... ... ३४
७ विद्याग्रहणान्ते चिकित्साकाले कर्तव्यम् ... ... ... ३४
८–९ आयुर्वेदानध्ययनकालाः ... ... ... ... ... ३४


## तृतीयोऽध्यायः ३


१–२ अध्ययनसम्प्रदानीयाध्यायोपक्रमः ... ... ... ... ३५
३ प्रतिस्थानमध्यायसंख्या ... ... ... ... ... ३५
४–११ सूत्रस्थानाध्यायनामानि ... ... ... ... ... ३५–३६
१२ सूत्रस्थाननिर्वचनम् ... ... ... ... ... ... ३६
१३–१४ निदानस्थानाध्यायनामानि ... ... ... ... ... ३६
१४ निदानस्थाननिरुक्तिः ... ... ... ... ... ... ३६
१५–१७ शारीरस्थानाध्यायनामानि ... ... ... ... ... ३६
१८–२५ चिकित्सास्थानाध्यायनामानि ... ... ... ... ... ३६
२६ चिकित्सास्थाननिरुक्तिः ... ... ... ... ... ... ३७
२७–२८ कल्पस्थानाध्यायनामानि ... ... ... ... ... ३७
... ... ... ... ... ३७

| विषयाः | पृष्ठम् |
| --- | --- |
| २८ कल्पस्थाननिरुक्तिः ... ... ... ... ... ... | ३७ |
| २९ पञ्चस्थानकतन्त्रोपसंहारः ... ... ... ... ... | ३७ |
| ३० उत्तरतन्त्राद्याध्यायस्य औपद्रविकनामकरणे हेतुः ... ... | ३८ |
| ३१–३४ शालाक्यतन्त्राध्यायनामानि ... ... ... ... ... | ३८ |
| ३५–३७ कौमारतन्त्राध्यायनामानि ... ... ... ... ... | ३८ |
| ३८–४० कायचिकित्साध्यायनामानि ... ... ... ... ... | ३९ |
| ४१ भूतविद्याध्यायनामानि ... ... ... ... ... | ३९ |
| ४२ तन्त्रभूषणाध्यायनामानि ... ... ... ... ... | ३९ |
| ४३ उत्तरतन्त्रनिर्वचनम् ... ... ... ... ... ... | ३९ |
| ४४ उत्तरतन्त्रस्य बह्वर्थसंग्राहकत्वम् ... ... ... ... | ३९ |
| ४५ तन्त्रस्यास्याष्टाङ्गत्वम् ... ... ... ... ... ... | ३९ |
| ४६ तन्त्रोपसंहारः ... ... ... ... ... | ३९ |
| ४७ एतदुपासितुर्भिषजो राजार्हत्वम् ... ... ... ... | ३९ |
| ४८ केवलशास्त्रज्ञदोषः ... ... ... ... ... ... | ४० |
| ४९ केवलकर्मज्ञदोषः ... ... ... ... ... ... | ४० |
| ५० निदर्शनेनोभयोरज्ञत्वप्रतिपादनम् ... ... ... ... | ४० |
| ५१ अमृतकल्पस्याप्यज्ञोपहितस्य विषवद्बाधकत्वम् ... ... | ४० |
| ५२ एकदेशज्ञयोरपि कर्मानभिज्ञनिन्दा ... ... ... ... | ४० |
| ५३ उभयज्ञस्य प्रशंसा ... ... ... ... ... ... | ४० |
| ५४–५५ एतच्छास्त्राध्ययनाध्यापनयोः प्रशंसा... ... ... ... | ४०–४१ |
| ५६ शास्त्रान्तगतस्य शिष्यस्य गुणाः ... ... ... ... | ४१ |

## चतुर्थोऽध्यायः ४

| | |
| --- | --- |
| १–२ प्रभाषणीयाध्यायोपक्रमः ... ... ... ... ... | ४२ |
| ३–४ प्रभाषणस्य प्रयोजनम् ... ... ... ... ... | ४२ |
| ५ एतच्छास्त्रव्याख्यानावश्यकता ... ... ... ... | ४२–४३ |
| ६–७ अन्यशास्त्रोपपन्नविषयाणां विज्ञानोपायः ... ... ... | ४३–४४ |
| ८ गुरुमुखाच्छ्रुतायुर्वेदा एव वैद्यशब्दाधिकारिणः ... ... | ४४ |
| ९ औपधेनवादीनि समानतन्त्राणि ... ... ... ... | ४४ |

## पञ्चमोऽध्यायः ५

| | |
| --- | --- |
| १–२ अग्रोपहरणीयाध्यायोपक्रमः ... ... ... ... ... | ४४ |
| ३ चिकित्साकर्मणस्त्रैविध्यम् ... ... ... ... ... | ४५ |

| विषयाः | पृष्ठम् |
|---|---|
| ४ शस्त्रकर्मणः प्राधान्यमुपदेशश्च ... ... ... ... | ४५ |
| ५ शस्त्रक्रियाया अष्टौ भेदाः ... ... ... ... | ४५ |
| ६ शस्त्रक्रियायामुपहरणीयान्युपकरणानि ... ... ... | ४५–४६ |
| ७ प्रशस्ततिथ्यादौ शस्त्रक्रियोपदेशः ... ... ... ... | ४६ |
| ८ वैद्यकृतव्रणगुणाः ... ... ... ... | ४६ |
| ९ एकेन व्रणेनाशुद्धावन्येऽपि व्रणाः कार्याः ... ... ... | ४६ |
| १० शस्त्रकर्मणि प्रशस्ता व्रणाकृतयः ... ... ... ... | ४७ |
| ११ शस्त्रोपयोक्तुर्वैद्यस्य गुणाः ... ... ... ... | ४७ |
| १२ गत्यादिभेदेन व्रणोपदेशः ... ... ... ... | |
| १३ तिर्यक्छेदप्रसवः, उक्तस्थानादन्यत्र तिर्यक्छेदे व्यापत्तयः ... | ४७ |
| १४ मूढगर्भादिष्वभुक्तवतः क्रिया कार्या ... ... ... ... | ४७ |
| १५ शस्त्रक्रियोत्तरमुपचारविधिः ... ... ... ... | ४८ |
| १६ वेदनारक्षोघ्नानि व्रणधूपनवस्तूनि ... ... ... ... | ४८ |
| १७–३१ व्रणिनां रक्षाकर्म ... ... ... ... ... ... ... | ४८ |
| ३२ कृतरक्षस्य व्रणिनः कर्तव्यम् ... ... ... ... ... | ४८–४९ |
| ३३ व्रणे बन्धमोक्षणकालविचारः ... ... ... ... ... | ५० |
| ३४ द्वितीयदिवसमोक्षे दोषः ... ... ... ... ... ... | ५० |
| ३५ व्रणिनः कषायलेपनबन्धनाहारविधिः ... ... ... | ५० |
| ३६ अशुद्धे व्रणे रोपणचिकित्सानिषेधः ... ... ... ... | ५० |
| ३७ शुद्धे रोपणविधिः, रूढेऽप्यजीर्णादिवर्जनम् ... ... ... | ५० |
| ३८ कालविशेषेण व्रणे बन्धमोक्षणविचारः ... ... ... | ५० |
| ३९ अतिपातिषु रोगेषु व्यभिचारः ... ... ... ... | ५१ |
| ४० शस्त्रजनितव्रणवेदनायां घृतसेकः ... ... ... ... | ५१ |


## षष्ठोऽध्यायः ६


| विषयाः | पृष्ठम् |
|---|---|
| १–२ ऋतुचर्याध्यायोपक्रमः ... ... ... ... ... | ५१ |
| ३ कालस्वरूपम् ... ... ... ... ... ... ... | ५२ |
| ४–५ सोपाधेः कालस्योपयुक्तं रूपम् ... ... ... ... | ५३ |
| ६ निमेषादिर्मासान्तः कालविभागः ... ... ... ... | ५४ |
| ७ दक्षिणोत्तरभेदेनायनविभागः ... ... ... ... | ५४ |
| ८ प्रजापालने चन्द्रसूर्यवायूनां कारणत्वम् ... ... ... | ५६ |
| ९ संवत्सरयुगवर्णनम् ... ... ... ... ... ... ... | ५६ |

| | विषयाः | पृष्ठम् |
|---|---|---|
| १० | दोषचयादिप्रयोजनः प्रावृडादिऋतुविभागः ... ... ... | ५७ |
| ११ | वर्षादिषु पित्तादीनां चयप्रकोपौ कथं भवतः ... ... ... | ५८ |
| १२ | प्रकुपितानां दोषाणां शुद्ध्युपदेशः ... ... ... ... | ५९ |
| १३ | वातादीनां प्राकृत उपशमः कदा भवति ... ... ... | ६० |
| १४ | सांवत्सरिकविधेर्दिनेऽप्यतिदेशः ... ... ... ... | ६० |
| १५ | अव्यापन्नानामृतूनां सहेतुकं कार्यान्तरम् ... ... ... | ६० |
| १६ | ऋतुव्यापदः सहेतुकाः ... ... ... ... ... | ६१ |
| १७ | अपरमपि जनसाधारणरोगकारणम् ... ... ... ... | ६१ |
| १८ | ऋतुव्यापदादिकृतानां गदानां चिकित्सा ... ... ... | ६१ |
| १९–३४ | अव्यापन्नानामृतूनां लक्षणम् ... ... ... ... ... | ६२–६३ |
| ३५ | संक्षेपेण ऋतुव्यापत्कथनम् ... ... ... ... ... | ६३ |
| ३६ | वसन्ताद्यृतुपरत्वेन दोषहरणव्यवस्था ... ... ... ... | ६३ |


## सप्तमोऽध्यायः ७


| | | |
|---|---|---|
| १–२ | यन्त्रविध्यध्यायोपक्रमः ... ... ... ... ... | ६४ |
| ३ | यन्त्राणां यथास्थूलं संख्यानियमः ... ... ... ... | ६४ |
| ४ | यन्त्राणां विषयो लक्षणं च ... ... ... ... ... | ६४ |
| ५ | यन्त्राणां षट् प्रकाराः ... ... ... ... ... ... | ६४ |
| ६ | तेषामवान्तरभेदाः ... ... ... ... ... ... | ६५ |
| ७ | यन्त्रप्रकृतिद्रव्यम् ... ... ... ... ... ... | ६५ |
| ८–९ | प्रसिद्धानां यन्त्राणां सारूप्यादाकृतिनिर्देशः ... ... ... | ६५ |
| १० | स्वस्तिकयन्त्राणां नामस्वरूपकर्माणि ... ... ... ... | ६५ |
| ११ | संदंशयन्त्राणां ,, ... ... ... ... | ६५ |
| १२ | तालयन्त्राणां ,, ... ... ... ... | ६६ |
| १३ | नाडीयन्त्राणां ,, ... ... ... ... | ६६ |
| १४ | शलाकायन्त्राणां ,, ... ... ... ... | ६६ |
| १५–१६ | उपयन्त्राणां ,, ... ... ... ... | ६७ |
| १७ | यन्त्रकर्माणि ... ... ... ... ... ... ... | ६८ |
| १८ | यन्त्रकर्मणामसंख्येयत्वदर्शनम् ... ... ... ... | ६८ |
| १९ | यन्त्रदोषाः ... ... ... ... ... ... ... | ६८ |
| २० | प्रशस्तयन्त्रम् ... ... ... ... ... ... ... | ६८ |
| २१ | यन्त्राणां विषयभेदः ... ... ... ... ... ... | ६९ |
| २२ | कङ्कमुखस्य यन्त्रेषु प्राधान्यम् ... ... ... ... ... | ६९ |

| विषयाः | पृष्ठम् |
|---|---|

## अष्टमोऽध्यायः ८


१–२ शस्त्रावचारणीयाध्यायोपक्रमः ... ... ... ... ६९
३ विंशतिः शस्त्राणि ... ... ... ... ... ... ६९
४ मण्डलाग्रादीनामष्टविधे कर्मणि विषयभेदः ... ... ... ६९
५ शस्त्रकर्मणि शस्त्रग्रहणविधिः ... ... ... ... ... ७०
६ संक्षेपेण शस्त्राकृतिनिदर्शनं, तेषां प्रमाणानि ... ... ७०–७१
७ शस्त्रगुणसम्पत् ... ... ... ... ... ... ७२
८ शस्त्राणां धारा यादृशी कार्या ... ... ... ... ... ७२
९ शस्त्रदोषाः ... ... ... ... ... ... ... ७३
१० शस्त्राणां त्रिविधपायनानिरूपणम् ... ... ... ... ७३
११ सुधाराकारिका शिला, धारासंस्थापनार्थं फलकम् ... ... ७३
१२ संस्कृतशस्त्रस्य कर्मयोजनायोग्यावस्था ... ... ... ७३
१३ अनुशस्त्राणि ... ... ... ... ... ... ... ७३
१४–१६ अनुशस्त्रविषयः ... ... ... ... ... ... ७३–७४
१७ शस्त्राणां गुणसम्पत्कारणम् ... ... ... ... ... ७४
१८ शस्त्रकर्मसिद्ध्यै शस्त्रपरिचयोऽवश्यं कार्यः ... ... ... ७४


## नवमोऽध्यायः ९


१–२ योग्यासूत्रीयाध्यायोपक्रमः ... ... ... ... ... ७४
३ योग्याकरणावश्यकता, छेद्यादियोग्याप्रदर्शनम् ... ... ७५
४–५ अनुक्तेष्वपि योग्यार्हेषु योग्या प्रयोक्तव्या ... ... ... ७६


## दशमोऽध्यायः १०


१–२ विशिखानुप्रवेशनीयाध्यायोपक्रमः ... ... ... ... ७६
३ कथंभूतस्य वैद्यस्य विशिखानुप्रवेशनाधिकारः ... ... ७६
४ दैवसम्पत्तिसहितो रोगाणां विज्ञानोपायः ... ... ... ७७
५ दर्शनस्पर्शनप्रश्नै रोगविज्ञानम् ... ... ... ... ७८
६–७ अयथादृष्ट्या विकाराश्चिकित्सकं मोहेयुः ... ... ... ७९
८ साध्ययाप्यासाध्येषु कर्तव्यम् ... ... ... ... ७९
९ साध्या अपि व्याधयः केषाञ्चिद्दुश्चिकित्स्याः ... ... ... ७९
१० वैद्यस्यान्तःपुरचारिणो विशेषपरिहर्तव्यानि ... ... ... ८०


## एकादशोऽध्यायः ११


१–२ क्षारपाकविध्यध्यायोपक्रमः ... ... ... ... ... ८०

| विषयाः | पृष्ठम् |
|---|---|
| ३ शस्त्रानुशस्त्रेभ्योऽपि क्षारस्य सहेतुका स्तुतिः ... ... | ८० |
| ४ क्षारस्य निरुक्तिद्वयं गुणाः कर्माणि च ... ... ... | ८१ |
| ५ क्षारस्य द्वैविध्यम् ... ... ... ... ... ... | ८२ |
| ६ प्रतिसारणीयस्य विषयः ... ... ... ... ... | ८२ |
| ७ पानीयक्षारविषयः, क्षारायोग्याः ... ... ... ... | ८२ |
| ८ पानीयक्षारपाकविधिः ... ... ... ... ... | ८२ |
| ९ प्रतिसारणीयक्षारनिर्माणविधिः, पाक्यसंज्ञतीक्ष्णक्षारनिर्माण-विधिश्च ... ... ... ... ... ... ... | ८२–८३ |
| १० व्याधिबलाबलमपेक्ष्य क्षारो योज्यः ... ... ... ... | ८३ |
| ११ हीनशक्तिके क्षारे बलकरणाय क्षारोदकावापः ... ... | ८५ |
| १२ क्षारगुणाः ... ... ... ... ... ... ... | ८६ |
| १३ क्षारदोषाः ... ... ... ... ... ... ... | ८६ |
| १४ क्षारप्रतिसारणविधिः ... ... ... ... ... | ८६ |
| १५ क्षारस्य सम्यग्दग्धलक्षणम् ... ... ... ... ... | ८६ |
| १६–१७ सम्यग्दग्धे पश्चात्कर्म ... ... ... ... ... | ८६ |
| १८ क्षारकृतव्रणरोपणोपायः ... ... ... ... ... | ८७ |
| १९–२१ अम्लेन क्षारशान्तौ युक्तिः ... ... ... ... ... | ८७ |
| २२ क्षारस्य सम्यग्दग्धहीनदग्धातिदग्धलक्षणानि ... ... | ८७ |
| २३ क्षारदग्धव्रणचिकित्सा ... ... ... ... ... | ८७ |
| २४ द्विविधस्यापि क्षारस्य प्रतिषेधविषयः, प्रदेशविशेषे क्षारनिषेधश्च | ८७–८८ |
| २५ क्षारस्यावस्थाविशेषान्निषेधः ... ... ... ... ... | ८८ |
| २६ सम्यक्प्रयुक्तक्षारस्य महागुणत्वम् ... ... ... ... | ८८ |


## द्वादशोऽध्यायः १२


| | |
|---|---|
| १–२ अग्निकर्मविध्यध्यायोपक्रमः ... ... ... ... ... | ८८ |
| ३ अग्निकर्ममाहात्म्यम् ... ... ... ... ... ... | ८८ |
| ४ अभ्यवचारणोपकरणानि ... ... ... ... ... | ८९ |
| ५ अभ्यवचारणस्य कालः सापवादः ... ... ... ... | ८९ |
| ६ सर्वाग्निकर्माङ्गविधिः ... ... ... ... ... ... | ८९ |
| ७ अग्निकर्मण्यैकीयमतम् ... ... ... ... ... | ९० |
| ८ त्वगादिषु कर्मणि कृते सम्यग्दग्धलक्षणानि ... ... ... | ९० |
| ९ शरीरप्रदेशेषु रोगभेदादभ्यवचारणविधिः, अग्निकर्मविषयाश्च | ९० |

| विषयाः | पृष्ठम् |
|---|---|
| १० आकारभेदेन दहनभेदाः ... ... ... ... ... | ९० |
| ११ अग्निकर्मप्रवृत्तिनिवृत्तिविषयविवेचनोपायः ... ... ... | ९० |
| १२ सम्यग्दग्धचिकित्सा ... ... ... ... ... ... | ९१ |
| १३ अग्निदाहानर्हाः ... ... ... ... ... ... | ९१ |
| १४ स्नेहदग्धलक्षणम् ... ... ... ... ... ... | ९१ |
| १६ अग्निदग्धस्य चत्वारो भेदाः ... ... ... ... ... | ९१ |
| १६-१७ सर्वाग्निदग्धेषु चिकित्सार्थं विशिष्टदूष्यदोषयोर्दुष्टिकथनम् ... | ९२ |
| १८-२० प्लुष्टदग्धस्य चिकित्सा ... ... ... ... ... ... | ९२ |
| २१ दुर्दग्धस्य चिकित्सा ... ... ... ... ... ... | ९२ |
| २२-२३ सम्यग्दग्धे चिकित्सा ... ... ... ... ... ... | ९२ |
| २४-२५ अतिदग्धे चिकित्सा ... ... ... ... ... ... | ९२-९३ |
| २६-२७ सर्वेष्वग्निदग्धेषु रोपणार्थं घृतम् ... ... ... ... | ९३ |
| २८-३६ धूमोपहतलक्षणं चिकित्सा च ... ... ... ... | ९४ |
| ३७-३८ उष्णवातातपविद्युद्भिर्दग्धस्य चिकित्सा ... ... ... | ९४ |


## त्रयोदशोऽध्यायः १३


| | |
|---|---|
| १-२ जलौकोऽवचारणीयाध्यायोपक्रमः ... ... ... ... | ९४ |
| ३ जलौकाविषयः ... ... ... ... ... ... | ९५ |
| ४ जलौकाप्रसंगेन शृङ्गस्यालाब्वाश्च विषयकथनम् ... ... | ९५ |
| ५-७ वातादिदुष्टे शृङ्गाद्यवचारणम् ... ... ... ... ... | ९५ |
| ८ शृङ्गादिना रक्तावसेचनप्रकारः ... ... ... ... | ९५ |
| ९ जलौकःशब्दनिर्वचनम् ... ... ... ... ... | ९६ |
| १० जलौकसां संख्यादर्शनम् ... ... ... ... ... | ९६ |
| ११ सविषा जलौकसः ... ... ... ... ... | ९६ |
| १२ निर्विषा जलौकसः ... ... ... ... ... | ९६ |
| १३ निर्विषाणां प्रशस्तक्षेत्राणि ... ... ... ... | ९७ |
| १४-१५ जलौकसां क्षेत्रभेदेन सविषनिर्विषत्वम् ... ... ... | ९७ |
| १६ जलौकसां ग्रहणोपायः, जलौकसां पोषणम् ... ... ... | ९७ |
| १७ अपोषणीया जलौकसः ... ... ... ... | ९७ |
| १८ जलौकोऽवचारणं, रोगाधिष्ठाने तासां ग्रहणलक्षणं, जलौकसां विशुद्धरक्तादाने ज्ञानोपायः, पतितायां जलौकसो रक्तापहरणविधिः ... ... ... ... ... | ९७-९८ |

| विषयाः | पृष्ठम् |
|---|---|
| १४९–१५१ मातुलुङ्गगुणाः ... ... ... ... ... ... | ३५९ |
| १५२–१५४ आम्रगुणाः ... ... ... ... ... ... ... | ३५९–३६० |
| १५५ आम्रातकलकुचगुणाः ... ... ... ... ... | ३६० |
| १५६–१६२ करमर्द-प्रियाल-भव्य-पारावत-तिन्तिडीक-कोशाम्र- ... अम्लीका-नारङ्ग-जम्बीर-ऐरावत-दन्तशठगुणाः ... ... | ३६० |
| १६३ कषायरसप्रायफलानि ... ... ... ... ... | ३६१ |
| १६४ कषायरसप्रायफलानां सामान्यगुणाः ... ... ... | ३६१ |
| १६५–१७६ क्षीरवृक्षफल-जाम्बवफल-राजादन-तोदन-तिन्दुक-बाकुल-धान्वन-गाङ्गेरुक-अश्मन्तक-फल्गु-परूषक-पौष्कर-बिल्व-बिम्बीफलानां गुणाः ... ... ... ... ... | ३६१ |
| १७७ तालादीनि मधुरफलानि ... ... ... ... ... | ३६२ |
| १७८ तेषां सामान्यगुणाः... ... ... ... ... ... | ३६२ |
| १७९–१८१ ताल-नारिकेल-पनसगुणाः ... ... ... ... | ३६२ |
| १८२ द्राक्षादीनि मधुरफलानि ... ... ... ... ... | ३६२ |
| १८३–१८६ द्राक्षा-काश्मर्य-खर्जूर-मधूकगुणाः ... ... ... ... | ३६२ |
| १८७ वातामादीनि मधुरफलानि ... ... ... ... | ३६३ |
| १८८ तेषां सामान्यगुणाः ... ... ... ... ... | ३६३ |
| १८९ लवलीफलगुणाः ... ... ... ... ... ... | ३६३ |
| १९० वसिरादीनां गुणाः ... ... ... ... ... ... | ३६३ |
| १९१–१९३ ऐरावत-दन्तशठ-टङ्क-ऐङ्गुद-शमीफल-श्लेष्मातकगुणाः ... | ३६३ |
| १९४–१९५ करीराक्षिक-पीलु-तृणशून्यफलगुणाः ... ... ... | ३६३ |
| १९६ आरुष्कर-तौवरकफलगुणाः ... ... ... ... | ३६३ |
| १९७ करञ्ज-किंशुक-निम्बफलगुणाः ... ... ... ... | ३६३ |
| १९८ विडङ्गफलगुणाः ... ... ... ... ... ... | ३६३ |
| १९९ हरीतकीफलगुणाः ... ... ... ... ... ... | ३६३ |
| २०० बिभीतकफलगुणाः ... ... ... ... ... | ३६३ |
| २०१ पूगफलगुणाः ... ... ... ... ... ... | |
| २०२–२०४ जातीकोश-कर्पूर-जातीकटुकफल-कङ्कोल-लवङ्ग-लताकस्तूरिकागुणाः ... ... ... ... ... ... ... | ३६४ |
| २०५–२०८ प्रियाल-बिभीतकोलामलक-बीजपूरक-शम्याक-कोशाम्रमज्जगुणाः ... ... ... ... ... ... ... | ३६४ |
| २०९ परिपक्वफलानां गुणवत्त्वम् ... ... ... ... | ३६५ |
| २१० त्याज्यफलानि ... ... ... ... ... ... | ३६५ |

विषयाः पृष्ठम्

## अथ शाकवर्गः

२११ कूष्माण्डादीनि फलशाकानि ... ... ... ... ३६५
२१२ कूष्माण्डादीनां सामान्यगुणाः ... ... ... ... ३६५
२१३–२१५ कूष्माण्डकालिन्दालाबूनां गुणाः ... ... ... ... ३६५
२१६ त्रपुसादीनि फलशाकानि ... ... ... ... ... ३६५
२१७ त्रपुसादीनां सामान्यगुणाः ... ... ... ... ... ३६५
२१८–२१९ त्रपुसैर्वारुक-र्कारुकगुणाः ... ... ... ... ... ३६५
२२० शीर्णवृन्तगुणाः ... ... ... ... ... ... ३६६
२२१ पिप्पल्यादीनि कटुफलशाकानि ... ... ... ... ३६६
२२२ पिप्पल्यादीनां सामान्यगुणाः ... ... ... ... ३६६
२२३ पिप्पलीगुणाः ... ... ... ... ... ... ३६६
२२४–२२५ मरिचस्यार्द्रशुष्कभेदेन गुणाः ... ... ... ... ३६६
२२६–२२७ शुण्ठीगुणाः ... ... ... ... ... ... ... ३६६
२२८ हिङ्गुगुणाः ... ... ... ... ... ... ... ३६६
२२९–२३० जीरकद्वयकारव्युपकुञ्जिकागुणाः ... ... ... ... ३६६
२३१–२३२ (क) कुस्तुम्बरीगुणाः ... ... ... ... ... ३६६
२३२ (ख) जम्बीरगुणाः ... ... ... ... ... ... ३६६
२३३–२३७ सुरस-सुमुख-अर्जक-भूस्तृण-कासमर्दक-शिग्रु-मधुशिग्रुगुणाः ३६७
२३८ सार्षपशाक-गाण्डीर-वेगनामगुणाः ... ... ... ... ३६७
२३९ चित्रक-तिलपर्णी-वर्षाभूशाकगुणाः ... ... ... ... ३६७
२४०–२४३ मूलकस्यावस्थाभेदेन गुणाः ... ... ... ... ... ३६७
२४४–२४५ रसोनगुणाः ... ... ... ... ... ... ... ३६७
२४६–२४७ पलाण्डुगुणाः ... ... ... ... ... ... ३६७
२४८ कलायशाकगुणाः ... ... ... ... ... ... ३६७
२४९ कषायमधुरशाकानि ... ... ... ... ... ३६८
२५० तेषां सामान्यगुणाः ... ... ... ... ... ... ३६८
२५१–२५२ चञ्चु-जीवन्ती-वृक्षादनी-फञ्जीगुणाः ... ... ... ३६८
२५३ क्षीरवृक्षोत्पलादीनां गुणाः ... ... ... ... ... ३६८
२५४ पुनर्नवादिशाकानि ... ... ... ... ... ... ३६८
२५५ पुनर्नवादीनां सामान्यगुणाः ... ... ... ... ३६८
२५६ तण्डुलीयादिशाकानि ... ... ... ... ... ३६८
२५७ तेषां सामान्यगुणाः ... ... ... ... ... ३६८

विषयाः — पृष्ठम्

२५८–२६१ तण्डुलीय-उपोदिका-वास्तुक-चिल्ली-पालङ्की-अश्वबलागुणाः ... ३६९
२६२ मण्डूकपर्ण्यादितिक्तशाकवर्गः ... ... ... ... ३६९
२६३ तेषां सामान्यगुणाः ... ... ... ... ... ३६९
२६४–२७१ मण्डूकपर्णी-गोजिह्वा-सुनिषण्णक-अवल्गुज सतीन-काक-माची-बृहती-पटोल-वार्ताक-कर्कोटक-कारवेल्लक-अटरूषक-वेत्राग्र-गुडूची-निम्ब-पर्पट-किराततिक्त-वरुण-प्रपुन्नाडशाक-गुणाः ... ... ... ... ... ... ... ३६९–३७०
२७२ कालशाककौसुम्भगुणाः ... ... ... ... ... ३७०
२७३ नालिकाशाकगुणाः, चाङ्गेरीगुणाश्च ... ... ... ३७०
२७४ लोणिकादीनि शाकानि ... ... ... ... ... ३७०
२७५ एषां सामान्यगुणाः ... ... ... ... ... ३७०
२७६ कुन्तलिका-कुण्टिका-राजक्षवक-शटीशाकानां गुणाः ... ३७१
२७७ हरिमन्थ-कलायशाकगुणाः ... ... ... ... ३७१
२७८ पूतिकरञ्जगुणाः ... ... ... ... ... ... ३७१
२७९–२८० ताम्बूलपत्रगुणाः ... ... ... ... ... ... ३७१


## अथ पुष्पवर्गः


२८१ कोविदारादिपुष्पशाकानि ... ... ... ... ... ३७१
२८२ आगस्त्यपुष्पगुणाः ... ... ... ... ... ... ३७१
२८३ करीरकुसुमानां गुणाः ... ... ... ... ... ३७१
२८४ रक्तवृक्ष-निम्ब-मुष्कक-अर्क-असनकुटजपुष्पगुणाः ... ३७१
२८५ पद्मपुष्पादीनां गुणाः ... ... ... ... ... ३७१
२८६ सिन्धुवार-मालती-मल्लिकापुष्पगुणाः ... ... ... ३७२
२८७ बकुल-पाटल-नागकेशर-कुङ्कुमपुष्पगुणाः ... ... ३७२
२८८–२८९ चम्पक-किंशुक-कुरण्टक-गुणाः ... ... ... ... ३७२
२९० मधुशिग्रुकरीरगुणाः, क्षवकाद्युद्भिदशाकानि ... ... ३७२
२९१–२९२ क्षवक-वेणुकरीरगुणाः ... ... ... ... ... ३७२
२९३ आधारविशेषेणोद्भिदानां गुणविशेषः ... ... ... ३७२
२९४ शुष्कशाकविशेषगुणाः ... ... ... ... ... ३७२
२९५ वटक-सिण्डाकीगुणाः ... ... ... ... ... ३७२
२९६ शाकसामान्यगुणाः, शाकेषु पुष्पपत्रफलनालकन्दानामुत्तरोत्तरगुरुत्वं च ... ... ... ... ... ... ३७३
२९७ वर्जनीयं शाकम् ... ... ... ... ... ... ३७३

विषयाः पृष्ठम्

अथ कन्दवर्गः

२९८ विदार्यादिकन्दशाकानि ... ... ... ... ... ३७३
२९९ तेषां सामान्यगुणाः ... ... ... ... ... ... ३७३
३०० विदारीकन्दगुणाः ... ... ... ... ... ... ३७३
३०१–३०२ शतावरीगुणाः ... ... ... ... ... ... ३७३
३०३–३०४ बिस-शृङ्गाटक-कसेरुक-पिण्डालुक-सुरेन्द्रकन्दगुणाः ... ३७३–३७४
३०५ वेण्वङ्कुरगुणाः ... ... ... ... ... ... ३७४
३०६ शल-सूरण-माणकगुणाः ... ... ... ... ... ३७४
३०७ माणकसूरणयोर्विशेषगुणाः ... ... ... ... ३७४
३०८–३०९ कुमुदोत्पलपद्मवराहकन्दानां गुणाः ... ... ... ३७४
३१०–३११ ताल-नारिकेल-खर्जूरप्रभृतिमस्तकमज्जगुणाः ... ... ३७४
३१२ वर्ज्याः कन्दाः ... ... ... ... ... ... ३७४

अथ लवणवर्गः

३१३ सैन्धवादिलवणानां सामान्यगुणाः ... ... ... ... ३७४
३१४–३२० सैन्धव-सामुद्र-विड-सौवर्चल-रोमक-औद्भिद-गुटिकालवण-गुणाः ... ... ... ... ... ... ... ३७५
३२१ ऊषर-वालुकैल-शैलमूलाकरोद्भूतलवणगुणाः ... ... ३७५
३२२–३२६ यवक्षार-स्वर्जिका-ऊषरक्षार-टङ्कणादिगुणाः... ... ...
३२७–३३१ सुवर्ण-रूप्य-ताम्र-त्रपु-सीस-मुक्ता-विद्रुम-वज्र-वैदूर्य-स्फटिका-दिगुणाः... ... ... ... ... ... ... ३७६
३३२ अनुक्तद्रव्यगुणातिदेशार्थोऽनुमानविधिः ... ... ... ३७६
३३३–३४० धान्यादिवर्गे स्ववर्गे च प्रधानानां निर्देशः ... ... ... ३७६–३७७

अथ कृतान्नवर्गः

३४१ लाजमण्डगुणाः ... ... ... ... ... ... ३७७
३४२ पेयागुणाः ... ... ... ... ... ... ... ३७८
३४३ विलेपीगुणाः ... ... ... ... ... ... ३७८
३४४ शाकादियुक्तविलेपीगुणाः ... ... ... ... ... ३७८
३४५ मण्डादीनां लक्षणम् ... ... ... ... ... ३७८
३४६ पायसकृसरयोर्गुणाः ... ... ... ... ... ३७८
३४७ ओदनगुणाः ... ... ... ... ... ... ३७८
३४८ भृष्टतण्डुलौदनगुणाः ... ... ... ... ... ३७८
३४९ ओदनस्य स्नेहमांसकन्दादियोगे विशेषगुणाः ... ... ३७८
३५० सूपगुणाः ... ... ... ... ... ... ... ३७९

| विषयाः | पृष्ठम् |
|---|---|
| ३५१ शाकगुणाः | ३७९ |
| ३५२–३५३ मांसगुणाः | ३७९ |
| ३५४ (क) प्रदिग्धमांसगुणः | ३७९ |
| ३५५ परिशुष्कमांसगुणाः | ३७९ |
| ३५६ अङ्गारपक्कमांसगुणाः | ३७९ |
| ३५७ शूल्यमांसगुणाः | ३७९ |
| ३५८–३५९ तैलघृतसाधितमांसगुणाः | ३७९ |
| ३६०–३६२ मांसकृतरसगुणाः | ३८० |
| ३६३ सोरावगुणाः | ३८० |
| ३६४ उद्धृतरसमांसगुणाः | ३८० |
| ३६५ खानिष्कगुणाः | ३८० |
| ३६६ वेसवारगुणाः | ३८० |
| ३६७ मुद्गयूषगुणाः | ३८१ |
| ३६८ रागखाडवगुणाः | ३८१ |
| ३६९ मसूरादिपञ्चमूलयूषगुणाः | ३८१ |
| ३७० पञ्चकयूषस्य मृद्वीकादियोगेन गुणविशेषः | ३८१ |
| ३७१ पटोलनिम्बयूषगुणाः | ३८१ |
| ३७२–३७३ मूलकयूष-कुलत्थयूषयोर्गुणाः | ३८१ |
| ३७४ दाडिमामलकयूषगुणाः | ३८१ |
| ३७५ मुद्गामलकयूषगुणाः | ३८१ |
| ३७६ यवकोलकुलत्थयूषसर्वधान्यकृतयूषगुणाः | ३८१ |
| ३७७–३७८ खडकाम्बलिकदाडिमाम्लदध्यम्लतक्राम्लयूषगुणाः | ३८१ |
| ३७९ खड-खडयवागू-खाडव-पानकानि | ३८१ |
| ३८०–३८१ कृताकृतयूषपरिभाषा, कृताकृतयोश्च गुरुलाघवम् | ३८२ |
| ३८२–३८३ शुष्कशाकविशेषाणां कृतान्नानां गुणाः | ३८२ |
| ३८४ राग-खाडवगुणाः | ३८२ |
| ३८५ रसाला-सगुडदधिगुणाः | ३८२ |
| ३८६–३८८ द्रव्यान्तरसंयुक्तस्य मन्थस्य लक्षणं गुणाश्च | ३८२–३८३ |
| ३८९–३९२ पानकविशेषाणां गुणविशेषाः | ३८३ |

## अथ भक्ष्यवर्गः

| | |
|---|---|
| ३९३ (क) भक्ष्यनिर्देशः | ३८३ |
| ३९३ (ख) क्षीरकृतभक्ष्यगुणाः | ३८३ |

| विषयाः | | पृष्ठम् |
|---|---|---|
| ३९४ | घृतपूरगुणाः ... ... ... ... ... ... | ३८३ |
| ३९५ | गुडकृतभक्ष्यगुणाः ... ... ... ... ... ... | ३८३ |
| ३९६ | मधुमस्तक-संयाव-पूप-मोदकगुणाः... ... ... ... | ३८३ |
| ३९७ | षट्टकगुणाः ... ... ... ... ... ... | ३८३ |
| ३९८ | विष्यन्दगुणाः ... ... ... ... ... ... | ३८४ |
| ३९९ | समिताकृतफेनकादिगुणाः ... ... ... ... ... | ३८४ |
| ४०० | मुद्गादिवेसवारगर्भभक्ष्यगुणाः ... ... ... ... | ३८४ |
| ४०१ | पालल-शष्कुली-पैष्टिकभक्ष्यगुणाः ... ... ... | ३८४ |
| ४०२-४०३ | मुद्गादिवैदलकृतभक्ष्यगुणाः ... ... ... ... | ३८४ |
| ४०४ | माषकृतभक्ष्यगुणाः, कूर्चिकाकृतभक्ष्यगुणाश्च ... ... | ३८४ |
| ४०५ | अङ्कुरितमुद्गादिकृतभक्ष्यगुणाः ... ... ... ... | ३८४ |
| ४०६-४०७ | घृततैलपक्वभक्ष्ययोर्गुणाः ... ... ... ... ... | ३८५ |
| ४०८ | संयोगविशेषेण भक्ष्याणां गुणविशेषाः ... ... ... | ३८५ |
| ४०९ | कपालाङ्गारपक्वानां गुणविशेषाः ... ... ... ... | ३८५ |
| ४१० | किलाटादिभक्ष्यगुणाः, कुल्माषगुणाश्च ... ... ... | ३८५ |
| ४११ | वाट्यधानोल्लुम्बगुणाः ... ... ... ... ... | ३८५ |
| ४१२-४१३ | सक्तुगुणाः ... ... ... ... ... ... ... | ३८५ |
| ४१४ | लाजगुणाः ... ... ... ... ... ... ... | ३८५ |
| ४१५ | लाजसक्तुगुणाः ... ... ... ... ... ... | ३८५ |
| ४१६ | पृथुकगुणाः ... ... ... ... ... ... | ३८५ |
| ४१७ | धान्यपिष्टगुणाः, नवपुराणभेदेन तण्डुलगुणाः ... ... | ३८५ |
| ४१८ | उक्तानुक्तभक्ष्यगुणावधारणम् ... ... ... ... | ३८६ |
| ४१९-४२१ | कृतान्नतयोक्तानां खडादीनां संक्षेपेण गुणविवेचनम् ... | ३८६ |
| ४२२-४२३ | अनुपानविचारः ... ... ... ... ... ... | ३८६ |
| ४२४-४२६ | अनुपानद्रव्याणां संग्रहः, अनुपानेषु जलस्य श्रेष्ठत्वम् ... | ३८७ |
| ४२७-४३५ | उष्णोदकाद्यनुपानविस्तरः ... ... ... ... ... | ३८७ |
| ४३६-४३७ | पूर्वोक्तानां शाल्यादिवर्गाणां पृथक्पृथगनुपानानि ... | ३८८ |
| ४३८ | आन्तरिक्षतोयानुपानगुणाः ... ... ... ... | ३८८ |
| ४३९ | यथोक्तानुपानगुणाः ... ... ... ... ... ... | ३८९ |
| ४४०-४४१ | अनुपानस्य प्रशस्तगुणाः ... ... ... ... ... | ३८९ |
| ४४२ | अनुपानाभावे दोषाः ... ... ... ... ... | ३८९ |
| ४४३ | भोजनादिमध्यान्तोपयुक्तानुपानगुणाः ... ... ... | ३८९ |

| विषयाः | पृष्ठम् |
|---|---|
| ४४४ अनुपानानर्हाः ... ... ... ... ... ... | ३८९ |
| ४४५-४४६ पीतानुपानेन वर्ज्यानि ... ... ... ... ... | ३८९ |
| ४४७ गुरुलाघवचिन्ता स्वभावसंस्कारमात्राद्यपेक्षते ... ... | ३८९ |
| ४४८ गुरुलाघवचिन्तार्हाः पुरुषाः ... ... ... ... | ३८९ |
| ४४९ येषु गुरुलाघवचिन्ता नावश्यं कार्या ... ... ... | ३८९ |
| **अथाहारविधिः** | |
| ४५० महानसविचारः... ... ... ... ... ... | ३८९ |
| ४५१ सुसंस्कृतस्यान्नस्य स्थानम् ... ... ... ... ... | ३९० |
| ४५२ आहारदूषकविषनाशनम् ... ... ... ... ... | ३९० |
| ४५३-४६१ भोजनस्योपकल्पना ... ... ... ... ... | ३९० |
| ४६२ भोजनस्थानम् ... ... ... ... ... ... | ३९० |
| ४६३ कीदृगशनं हितकरम् ... ... ... ... ... | ३९० |
| ४६४-४६६ कालभेदेनाप्याहारविधिः ... ... ... ... ... | ३९०-३९१ |
| ४६७ आमलकस्य सर्वथोपयोगः ... ... ... ... ... | ३९१ |
| ४६८ मृणालादीनां गुरुत्वेन भोजनात् पूर्वमुपदेशः ... ... | ३९१ |
| ४६९ कथं भुञ्जीतेति प्रकारकथनम् ... ... ... ... | ३९१ |
| ४७०-४७१ कालादिभोजनानां फलम् ... ... ... ... ... | ३९१ |
| ४७२-४७४ ऋतुभेदेन भोजनकालः ... ... ... ... ... | ३९२ |
| ४७५-४७७ अकालभोजनदोषाः ... ... ... ... ... ... | ३९२ |
| ४७८ हीनमात्रातिमात्रभोजनदोषाः ... ... ... ... | ३९२ |
| ४७९ कीदृगन्नं सेवितव्यम् ... ... ... ... ... | ३९२ |
| ४८०-४८१ वर्जनीयान्नकथनम् ... ... ... ... ... | ३९३ |
| ४८२ यथोत्तरं स्वादुतरं सेव्यम् ... ... ... ... ... | ३९३ |
| ४८३-४८४ भोजने गण्डूषकरणगुणाः ... ... ... ... ... | ३९३ |
| ४८५ स्वाद्वन्नगुणाः ... ... ... ... ... ... | ३९३ |
| ४८६ स्वाद्वन्नस्य लक्षणं, भोजने उदकपानविधिश्च ... ... | ३९३ |
| ४८७ दन्तान्तरगतान्नशोधनप्रकारः ... ... ... ... | ३९३ |
| ४८८ जरणजीर्णकालयोर्दोषविशेषप्रकोपः ... ... ... | ३९३ |
| ४८९-४९० भुक्ते श्लेष्मणः प्रतीकारः ... ... ... ... ... | ३९३ |
| ४९१ भोजनोत्तरं कर्तव्यम् ... ... ... ... ... | ३९४ |
| ४९२ भुक्तान्नस्थैर्यार्थं मनःप्रियशब्दादिविषयसेवनम् ... ... | ३९४ |

| विषयाः | पृष्ठम् |
|---|---|
| ४९३ भोजनानन्तरं सेवितजुगुप्सितशब्दादिदोषाः ... ... | ३९४ |
| ४९४–४९५ भोजनोत्तरं वर्ज्यानि ... ... ... ... ... | ३९४ |
| ४९६ रसानामतिमात्राशने दोषाः, मन्देऽग्नौ द्विर्भोजननिषेधश्च | ३९४ |
| ४९७ मन्देऽग्नौ प्रवराश्यनिषेधः ... ... ... ... | ३९४ |
| ४९८ पिष्टान्ननिषेधः, चतुर्णां लेह्यपेयादीनां यथोत्तरं गुरुत्वम् ... | ३९५ |
| ४९९ लघूनां गुरूणां च मात्राविचारः ... ... ... ... | ३९५ |
| ५०० विशुष्कस्य द्रवाढ्यस्य भक्षणे दोषाभावः, शुष्कान्नसेवनदोषश्च | ३९५ |
| ५०१ अन्नविदाहहेतुः ... ... ... ... ... ... | ३९५ |
| ५०२ शुष्कविरुद्धविष्टम्भिनामग्निव्यापादकत्वम् ... ... ... | ३९५ |
| ५०३ अजीर्णभेदाः ... ... ... ... ... ... | ३९५ |
| ५०४–५०५ अजीर्णहेतवः ... ... ... ... ... ... | ३९५ |
| ५०६–५०७ अजीर्णानां लक्षणम् ... ... ... ... ... | ३९५ |
| ५०८ अजीर्णस्य बहुव्याधिकरत्वम् ... ... ... ... | ३९५ |
| ५०९–५११ अजीर्णानां चिकित्सा ... ... ... ... ... | ३९५ |
| ५१२–५१३ समशन-विषमाशनाध्यशनलक्षणम् ... ... ... | ३९५ |
| ५१४ विदग्धाजीर्णस्य चिकित्सा ... ... ... ... ... | ३९६ |
| ५१५ आमाशयगतान्नविदाहस्य चिकित्सा ... ... ... | ३९६ |
| ५१६ रसशेषाजीर्णसंशमनम् ... ... ... ... ... | ३९६ |
| ५१७ अजीर्णेऽपि बुभुक्षा विनाशकरी ... ... ... ... | ३९६ |
| ५१८–५२९ उष्णादिर्विंशतिगुणानां कर्माणि ... ... ... ... | ३९६ |
| ५३० आहारगुणकथनम् ... ... ... ... ... ... | ३९७ |
| ५३१ आहारावस्थापाकाद्दोषाणां प्रकोपलक्षणम् ... ... ... | ३९७ |
| ५३२ रसादेवान्येषामपि धातूनामुत्पत्तिः ... ... ... | ३९७ |
| ५३३ धातुभ्यः क्रमशो मलोत्पत्तिवर्णनम् ... ... ... | ३९७ |
| ५३४–५३५ अजीर्णे भोजनविचारः ... ... ... ... ... | ३९७ |
| ५३६ एतत्पठनफलम् ... ... ... ... ... ... | ३९८ |


**समाप्तमिदं सूत्रस्थानम् ॥**

श्रीचक्रपाणिदत्तकृतया
भानुमतीव्याख्यया समुल्लसिता

# सुश्रुतसंहिता

## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

नमो गणेशाय ॥

गुणत्रयविभेदेन मूर्तित्रयमुपेयुषे ।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥ १ ॥

सरस्वत्यै नमो यस्याः प्रसादात् पुण्यकर्मभिः ।
[1]बुद्धिदर्पणसंक्रान्तं जगदध्यक्षमीक्ष्यते ॥ २ ॥

ब्रह्मदक्षाश्विदेवेशधन्वन्तरिमुखान् गुरून् ।
जगच्छक्तिं गणाधीशं चक्रपाणिर्नमस्यति ॥ ३ ॥

असद्बोधतमश्छन्नसौश्रुताम्भोजबोधिका ।
वासरश्रीरिवारब्धा टीका भानुमती मया ॥ ४ ॥

**अथातो वेदोत्पत्तिनामाध्यायं व्याख्यास्यामः ॥ १ ॥**
**[2]यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

इह धर्मार्थकाममोक्षपरिपन्थिरोगोपशमाय ब्रह्मप्रभृतिभिः कृतायुर्वेदतन्त्रेष्वतिविस्तरत्वेन संप्रति वर्तमानाल्प[3]दुर्मेधसां पुरुषाणां न सम्यगर्थाधिगमः; तदनधिगमाच्च [4]तद्विहितानुनुष्ठानात् तथैवोपप्लवो रुजामिति मन्वानः परमकारुणिको विश्वामित्रसुतः सुश्रुतोऽल्पायुर्मेधसामपि [5]सुखोपलभ्यार्थं शल्यप्रधानमायुर्वेदतन्त्रं प्रणेतुमारब्धवान् । तस्मिंश्च सूत्र-निदान-शारीर-चिकित्सित-कल्पस्थानभेदात् पञ्चस्थानात्मके अर्थवशादागतोत्तरतन्त्रसहितेऽभिधातव्ये संक्षेपेण निखिलतन्त्रप्रधानार्थाभिधायकतया सूत्रस्थानमग्रे वक्तव्यम् । उक्तं हि—"सूत्रणात् सूचनाच्चैव सरणाच्चार्थसंततेः" ( सू. अ. ३ ) इत्यादि । सूत्रस्थानेऽपि तन्त्र[6]बीजभूतपुरुषव्याध्यौषधक्रियाकालरूपचतुर्वर्गाभिधायकतया वेदोत्पत्त्यध्याये

१ 'यदारोपणसंक्रान्तं' इति हस्तलिखितपुस्तके पाठः । २ 'यथोवाच भगवान् धन्वन्तरिः' इति ताडपत्रपुस्तके न पठ्यते । ३ 'वर्तमानाल्पायुर्मेधसां' इति मुद्रितपुस्तके पाठः । ४ 'तद्विहितार्थाननुष्ठाने' इति मु. । ५ 'सुखोपलम्भार्थं' इति मु. । ६ 'तन्त्राङ्गभूत०' इति ह. ।

वक्तव्ये आयुर्वेदप्रवृत्त्यङ्गप्रामाण्योपपादकं[1]मायुर्वेदोत्पत्तिप्रकरणमभिधातुमुद्यतः सभ्यजन[2]-प्रवृत्तिहेत्वभिधेयप्रयोजनसंबन्धसूचकं श्रोतृबुद्धिसमाधानाय प्रकृतार्थव्याख्यानप्रतिज्ञापरं सूत्रं निवेशितवान्—अथातो वेदोत्पत्तिनामाध्यायं व्याख्यास्याम इति । यतो निरभिधेये[3] कचटतपादौ साभिधेये वा निष्प्रयोजने काकदन्तपरीक्षादौ प्रेक्षावतां प्रवृत्तिर्नोपलभ्यते, तेनादावभिधेयप्रयोजने अभिधातव्ये । उच्यते हि—"अभिधेयफलज्ञानविरहस्तिमितोद्यमाः । श्रोतुमल्पमपि ग्रन्थं नाद्रियन्ते हि साधवः" इति । अभिधेयवत्त्वं प्रयोजनवत्त्वं चातो ग्रन्थस्य वक्तव्यमिति अभिधेयवत्त्वप्रयोजनवत्त्वनिर्वाहार्थं चाभिधेयशास्त्रयोरभिधानाभिधेयलक्षणः संबन्धः, प्रयोजनशास्त्रयोश्च साध्यसाधनभावलक्षणोऽभिधातव्यः । तत्रेह आयुरभिधेयं, यद्वक्ष्यति—"आयुरस्मिन् विद्यते" इति । अत्र निरुक्तौ ज्ञानार्थता विदेरायुःप्रतिपादनद्वारेणैव भवति । चरकेऽप्युक्तं—"हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते"—( च. सू. अ. १ ) इति । प्रयोजनं च व्याधितव्याध्युपरमः, स्वस्थस्य स्वास्थ्यरक्षणं च । यद्वक्ष्यति—"इहायुर्वेदप्रयोजनं व्याधितस्य व्याधिपरिमोक्षः स्वस्थस्य स्वास्थ्यरक्षणं च"–इति । इदमपि न केवलं प्रयोजनं, परं तु प्रयोजनमायुर्वेदस्य धर्मार्थकाममोक्षाः; आयुर्वेदाहितस्वास्थ्यो हि पुरुषो धर्मार्थकाममोक्षान् साधयितुमलम् । उक्तं हि चरके—"धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्" ( च. सू. अ. १ ) इति । एते चाभिधेयप्रयोजनसंबन्धा वेदोत्पत्तिशब्देन सूचिताः । वेदशब्दोऽयं यजुर्वेदादिसाधर्म्येण यजुर्वेदादिवत् प्रामाण्योपदर्शनार्थमुपात्तः, स(तं)च पदार्थतन्त्रयुक्त्या उत्तरत्र तन्त्रयुक्त्यध्याये ग्रन्थकार एव दर्शयिष्यति । आयुर्वेदशब्दश्च यथा प्रकृताभिधेयादि दर्शयति तथाऽत्र 'आयुरस्मिन् विद्यते' इत्यादिनिरुक्तिद्वयेन स्फुटमेव । नन्वादौ प्रयोजनाभिधानं विप्रलम्भकसंसारमोचकादिशास्त्रेषु विसंवाददर्शनान्न प्रवृत्त्यङ्गं, तत् किं तस्योपदर्शनेन; अथाप्तप्रयोजनाभिधानमेव तत् कुतोऽयथार्थत्वसम्भावनेति चेन्न, शास्त्रप्रवृत्तौ सत्यां तदभिहितार्थसंवादाच्छास्त्रकर्तुराप्तत्वमवधारणीयम्, आप्तत्वावधृतौ तु तदभिहितप्रयोजनवत्तावधारणात् प्रवृत्तिरिति इतरेतराश्रयत्वं भवति । अथ यद्येवं मन्यसे, मा भवतु प्रयोजनवत्तावधारणम्, अनुरूपप्रयोजनवत्तासंदेह एव प्रवर्तको भविष्यति; कृष्यादावपि प्रवृत्तिः सस्याय अर्थसंदेहादेव, अन्तरावग्रहादेरपि सम्भाव्यमानत्वात् । नन्वेवमसत्यपि प्रयोजनाभिधाने सप्रयोजननिष्प्रयोजनशास्त्रदर्शनाच्छास्त्रत्वमेव प्रयोजनवत्तासंदेहोपदर्शकमस्तु, तथाऽप्यलं प्रयोजनाभिधानेन । मैवं; नहि सामान्येन प्रयोजनसंदेहः प्रयोजनविशेषार्थिनं तथा प्रवर्तयति यथाऽभिप्रेतप्रयोजनविशेषविषयः संदेहः, अभिप्रेतविशेषविषयश्च संदेहो न विशेषविषयस्मरणमन्तरा भवति । अतो ये तावदनवधृतसुश्रुतप्रामाण्यास्तेषामारोग्यादिसाधकमेतच्छास्त्रं न वेत्येवमाकारात्मकसंदेहविशेषोत्पादनार्थं प्रयोजनविशेषाभिधानं, ये पुनः परमर्षेः सुश्रुतस्यान्यत एवावधृतप्रामाण्यास्तेषां तदभिहितप्रयोजन-

---

१ '°प्रामाण्योपदर्शकं' इति मु. । २ 'श्रोतृजन°' इति मु. । ३ 'निरभिधेये सप्रयोजने' इति मु. ।

वत्तावधारणेनैव प्रवृत्तिरिति युक्तं प्रयोजनाभिधानम् । प्रयोजनाभिधायिवाक्ये तु स्वल्पप्रयाससाध्ये प्रयोजनसामान्यसंदेहाद्विषयप्राकट्याद्वा प्रवृत्तिरुपपन्ना, तदेवं यदुच्यते—'प्रयोजनाभिधायिवाक्ये तु प्रवृत्तौ प्रयोजनमभिधातव्यं, तथा चानवस्थेति' तन्निरस्तं भवति। नन्वस्मिञ्छास्त्रे रुजादिकरप्राणहराणां व्याधीनां भूतानामनागतानां च प्रशमनमेतच्छास्त्रोक्तचतुष्पादसंपत्तिसाध्यतया प्रयोजनमुक्तं, तच्चानुपपन्नं; यतश्चतुष्पादसंपत्तावपि केचिद्रोगपीडिता दृश्यन्ते तथा म्रियमाणाश्च, तथा चतुष्पादविहीना अपि केचिद्रोगमुक्ता जीवन्तश्च दृश्यन्ते; ततश्चैतच्छास्त्रोक्तचतुष्पादसंपन्नभेषजस्यारोग्येण सममन्वयव्यतिरेकव्यभिचारदर्शनान्नैतत् कारणमारोग्ये । एवं च यत्रापि चतुष्पादसंपत्तौ रोगनिवृत्तिर्दृश्यते तत्राप्यन्वयव्यतिरेकावधृतसामर्थ्यमदृष्टमेव कारणम् । दृष्टं तु तत्र यदृच्छागतमेव, अदृष्टबलाकृष्टं वा । तदनुयायिभेषजोपदेशकत्वान्निष्प्रयोजनमिदं शास्त्रम् । अत्रोच्यते—भेषजं तावदाहाराचाररूपं यस्य दोषस्य विकारस्य वा विपरीतं, तदसति विरोधके तं शमयतीति दृष्टम् । यथा—कटुकेन श्लेष्मक्षयः, अग्निना शीतप्रशमनम्, आहारेण क्षुदपगमः, पानीयपानेन पिपासापगमः; एवमादि सामान्येन वृद्धिः, विपरीतेन च ह्रास इति दृश्यते । न चात्रापि दृष्टेनैवोपपद्यमानेऽदृष्टमेव कारणमिति कल्पना युक्ता; यतो दृष्टेनानुपपद्यमाने कार्ये कारणमदृष्टं कल्प्यते । दृष्टपराभवेन तु सर्वत्रादृष्टकल्पनं प्रामाणिकमेव, यतो यदेवादृष्टं कारणत्वेनाभिमतं तद्दृष्टयागादिजन्यं, तद्वदेव भेषजं दृष्टरूपं तावत् क्वचिदस्तीत्येवं स्वीकर्तव्यम् । यत्र तु विनाऽपि भेषजं व्याधिविगमः, तत्राप्यबुद्धिकारिताहाराचारादेव भेषजात्तदुपरमः, बलवता वा कर्मणा तत्कालनियतेन व्याध्युपरमः । यदुच्यते—चतुष्पादसंपत्तावपि न व्याध्युपरमः; तन्न, यत्र हि व्याध्युपरमे चतुष्पादसम्पत्तिरप्यपार्थका भवति, तत्रावश्यं वैद्यस्य सम्यग्ज्ञानशालिता नास्ति; यतो रोगिणोऽसाध्यरोगता, तेन तस्याज्ञानता। ननु रोगिशरीरादिगताऽरिष्टाद्यसाध्यतालिङ्गाज्ञानं वैद्यस्य दोषो भवतु, यत्र तु समीचीनान्तरादिप्रवृत्तावसिद्धौ सत्यामसाध्यताज्ञानं तत्र कथं प्रथमप्रवृत्तौ वैद्यस्याज्ञानतामुपस्थापयति, यदुक्तं—"यथाशास्त्रं च निर्णीतो यथाव्याधि चिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः" इति । तत्रापि बलवत्कर्मजनितासाध्ये व्याधावसाध्यलिङ्गानि भूतान्येव प्रथमं सूक्ष्मतया यदि न ज्ञातानि तदुत्तरकालं च यत्तस्य ज्ञापकमस्ति तदेतल्लक्षणमाचार्येण दर्शितम् । न ह्यसाध्ये साध्यलिङ्गानि भवन्ति, साध्ये वाऽसाध्यलिङ्गानि; तदुक्तं चरके-"न ह्यलं ज्ञानवान् भिषङ्मुमूर्षुमातुरमुपस्थातुम्" ( च. सू. अ. १० ) इति । हन्त, अदृष्टेन दृष्टमभिभूय मृत्युर्जन्यते रोगो वा दुःखदः; एवं तावत् क्वचित् सम्मतं सर्वोत्पत्तिमतां चादृष्टं कारणमिति सिद्धान्तः । तेन कर्मैव कारणं जीविते मरणे वा आरोग्ये वा रोगे वा; यदुच्यते—"नाकाले म्रियते कश्चिद्विद्धः शरशतैरपि । कालप्राप्तस्य कौन्तेय वज्रायन्ते तृणान्यपि" इति । अत्रोच्यते—आहाराचारप्रायश्चित्तस्वस्त्ययनादिपुरुषकारात्त्वैहिकफलं दृष्टम्, अदृष्टं च प्रायो जन्मान्तरकृतं शुभाशुभं शरीरादिनिर्वर्तकं; तदेतद्वितयमपि कारणं दृष्टसामर्थ्यात् । तत्र यदा दृष्टमाहारादिशुभमुपचितम्, अदृष्टं च धर्मरूपं शुभमुपचितं भवति, तदा युगनियतवर्षशतरूपस्यायुषः सुखयुक्तस्य च

निष्पत्तिः । यदा तु दैवपुरुषकारयोः शुभमध्यमयोरन्योन्यानुगुणयोर्योगस्तदा मध्यं मध्यमसुखं युगनियतादल्पं भवति । यदा तु हीनयोर्योगः, तदा हि हीनमसुखमायुर्भवति । एवं यदा दैवमशुभं पुरुषकारश्चाशुभस्तदाऽत्यल्पं दुःखबहुलं चायुर्भवति । एवमशुभदैवपुरुषकारयोर्मध्यमतायां हीनतायां वा उदाहरणमूह्यम् । एवं यदा दैवं शुभमुत्तमं, पुरुषकारस्तु मध्यो हीनो वा भवति, तदाऽपि फलविशेष ऊह्यः । अत्रार्थे **चरकः**—"इहाग्निवेशभूतानामायुर्युक्तिमपेक्षते । दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् ॥ दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदैहिकम् । स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः । दृष्टं हि त्रिविधं कर्म हीनं मध्यममुत्तमम् ॥ तयोरुदारयोर्युक्तिर्दीर्घस्य च सुखस्य च । नियतस्यायुषो हेतुर्विपरीतस्य चेतरा ॥ मध्यमा मध्यमस्योक्ता विशेषं शृणु चापरम् ॥" इति ( च. वि. स्था. अ. ३ ) । अत्र पौर्वदैहिकमिति प्रायेण जन्मान्तरकृतस्यैव इह जन्मनि पाकादुक्तमेतत् । जन्मान्तरकृतं तु यागब्रह्मवधादि प्रायो जन्मान्तर एव फलति । नियतस्येति युगनियतस्य । यदा तु दैवपुरुषकारयोर्विरोधस्तदा दुर्बलं दैवं पुरुषकारेण बलवता हन्यते, बलवता दैवेन दुर्बलः पुरुषकारो हन्यते । एतदेव[2] च दैवेन पुरुष[3]कारविरोधं दृष्ट्वा केचित् कर्मवादिनो दैवनियतमेवायुरादिकं वदन्ति, व्यर्थं च पुरुषकारं दैवयुक्तिव्यपाश्रयाहाराचाररूपमिति वदन्ति । तदुक्तं **चरके** "दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते । दैवेन चेतरत् कर्म वि[4]शिष्टेनोपहन्यते ॥ दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः" ( च. वि. अ. ३ ) इति । बलवतोस्तु दैवपुरुषकारयोर्विरोधिनोर्युगपदुपस्थानं नास्त्येव, विरोधिनां सुखदुःखादीनां यौगपद्येनानुपलम्भादेव । बलवत्ता तु दैवाख्यकर्मणो धर्माधर्मरूपस्य कालविपाकनियमाद्भवति; विपर्यये त्वबलवत्त्वं पुरुषकारबाधनीयत्वं च भवति । यदाह **चरकः**—"कर्म किंचित्क्वचित् काले विपाकनियतं महत् । किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते" ( च. वि. अ. ३ ) इति । अत्र त्रिविधो नि[5]यमः, एकविधश्चानियमः, एवं पक्षचतुष्टयमपि भवति; यथा—इदं कर्म यदि पच्येत तदा तस्मिन्नेव काले पच्येत नान्यत्रेति कालनियमः; यथा—इदं कर्म यत्र क्वचित्काले पच्येतैव, न पच्येतेति न, इति विपाकनियमः । एतौ पक्षौ पुरु[6]षसाध्यरूपतया शास्त्रविषयौ, पाक्षिकस्य नियमस्यासत्त्वात् । तथा, इदं कर्म अस्मिन्नेव काले पच्येतैवेति कालविपाकनियमः; अयमविषयः शास्त्रस्य, पुरुषकारानपेक्षत्वात् । तथेदं कर्म कुत्रचित्काले प्रत्ययं दृष्टमासाद्य पच्येत, यदि वा न पच्येत; तद[7]पि च प्रायश्चित्तादिप्रतिहतत्[8]वादेव कालविपाकानियमः सर्वथा शास्त्रविषयः । अत्र पक्षचतुष्टये केचिद्वदन्ति— "किंचिन्न कालनियतं" इति वदता चरकेण कालानियमरूपो दर्शितः, विपाकानियमस्तु न दर्शितः; कर्मणां विपाकानियमो नास्ति, यदुच्यते—"नाभुक्तं क्षीयते कर्म कल्पकोटिश-

१ 'आहाराचारयोः' इति ह. । २ 'अत एव' इति मु. । ३ 'पुरुषकारं पराभूतं' इति मु. । ४ 'बलिष्ठेन' इति ह. । ५ 'विषयः' इति ह. । ६ 'पुरुषकारबाध्यतया' इति मु. । ७ 'न पच्येदपि च' इति ह. । ८ '°पराभूतत्वादेव' इति चरकटिप्पण्यां पाठः ।

तैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्''—इति । किंतु, प्रायश्चित्तानामप्यदत्तफलकर्मक्षयोपदेशात्, तथा ''ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन'' ( गीता अ. ४ ) इति ज्ञानाग्निना च कर्मक्षयोपदेशाद्विपाकानियमपक्षोऽपि संभवत्येव । तथा च ''न हि कर्म महत् किंचित् फलं यस्य न भुज्यते'' ( च. शा. अ. १ ) इति वदता **चरकेणापि** महतः कर्मणः प्रायश्चित्ताबाधनीयस्य विपाकनियमोऽपि दर्शितो भवति । अलमतिसूक्ष्मगतिकर्मविचारेण; शास्त्रस्यारोग्यसाधनाहाराचाररूपपुरुषकारोपदेशकत्वेन प्रयोजनवत्त्वमित्येवं व्यवस्थितं भवेत् । अथेत्यादौ 'अथ'शब्दो ब्रह्मादिप्रणीततन्त्रेष्वतिविस्तरत्वादिना अर्थानवधारणाद् रोगोपप्लवस्य तथाऽभीष्टदेवतानमस्कारस्यानन्तर्ये प्रयुक्तोऽपि स्वरूपेण मङ्गलं भवति, उदकाहरणार्थमुपनीयमानोदकुम्भदर्शनमिव[1] प्रस्थितानां; ग्रन्थादौ तु मङ्गलसेवानिरस्तान्तरायाणां[2] ग्रन्थकर्तृश्रोतॄणामविघ्नेनेष्टलाभो भवतीति युक्तं मङ्गलोपादानम् । अथशब्दस्य मङ्गलत्वे स्मृतिः—''ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन[3] माङ्गलिकावुभौ ॥'' इति । शास्त्रान्तरे च मङ्गलत्वेन दृष्टोऽयमथशब्दः; यथा—''अथ शब्दानुशासनम्'' ( पा. म. भा. अ. १ आ. १ ), ''अथातो धर्मं व्याख्यास्यामः''—( वै. द. अ. १, आ. १ ) इत्यादौ । ग्रन्थादावभीष्टदेवतानमस्कारः शिष्टाचारपरंपरापरिप्राप्तः परमशिष्टेन सुश्रुतेन कृत एव । व्याख्यानान्तरायभयात्तथा ग्रन्थानिवेशितस्यापि नमस्कारस्य प्रत्यवायापहत्वाच्च ग्रन्थानिवेशनम् । यत्तु शिष्यप्रश्नानन्तर्यार्थत्वमथशब्दस्य वर्ण्यते, तन्नार्हति; न हि श्रोतॄन्[4] पुरो व्यवस्थाप्य शास्त्रं क्रियते, श्रोतृबुद्धिस्थीकारमात्रेण तु शास्त्रकरणमुचितम् । 'अतः'शब्दोऽधिकारप्रागवध्युपदर्शकः, अत ऊर्ध्वं यदुपदेक्ष्यामो वेदोत्पत्तिसंज्ञं तदिति; यदि वा, अतःशब्दो हेतौ; येन ब्रह्मादिप्रणीतायुर्वेदतन्त्राणामुक्तेन न्यायेनोत्सन्नत्वमिव[5], अतो वेदोत्पत्तिमध्यायं व्याख्यास्यामः । वेदस्यायुर्वेदस्य उत्पत्तिरागतिः, उत्पत्तिशब्दश्चागतिमात्रेऽपि वर्तते; यथा—कुतस्ते धनोत्पत्तिः ? आगतिरित्यर्थः । वेदोत्पत्तिर्वक्तव्यतया यत्राध्यायेऽस्ति यस्य वा इति मत्वर्थे छः । ''मतौ छः सूक्तसाम्नोः'' ( पा. अ. ५।२।५९ ) इत्यनुवर्तमाने ''अध्यायानुवाकयोर्लुक्'' ( पा. अ. ५।२।६० ) इति उत्पन्नस्य छस्य लुक् । ततोऽध्यायेन सह सामानाधिकरण्यादध्यायव्याख्याने प्रतिज्ञा लभ्यते । यदा तु, अकृततन्त्रव्याख्यानप्रतिज्ञस्य तदेकदेशाध्यायप्रतिज्ञाऽजनकायमानेति तन्त्रव्याख्यानप्रतिज्ञाऽप्यस्मिन् वाक्ये दर्शनीया, तदा 'वेदस्यायुर्वेदस्य उत्पत्तिर्यस्मिन् ग्रन्थे स वेदोत्पत्तिः ग्रन्थरूपः, तं व्याख्यास्यामः' इति योजनीयम् । अध्याय इति अधिपूर्वादिङः ''इङश्च'' ( पा. अ. ३।३।२१ ) इति घञा साध्यते, तेन 'अधीयत इत्यध्यायः' । न चानया व्युत्पत्त्या प्रकरणस्थानादिष्वध्यायशब्दप्रसङ्गः, यतो योगरूढेयं संज्ञा प्रकरणसमूह एव वेदोत्पत्त्यादिलक्षणे पङ्कजशब्दवद्वर्तते, न योगमात्रेण वर्तते । उक्तं हि **चरके**—''निरुक्तं तन्त्रणात्तन्त्रं स्थानमर्थप्रतिष्ठया । अधिकृत्यार्थमध्याय-

---

१ 'उदकाहरणायोपनीयमान°' इति मु. । २ 'मङ्गलसरणनिरस्तान्तरायाणां' इति पा० । ३ 'तस्मात्' इति मु. । ४ 'श्रोतृजनम्' इति मु. । ५ '°सम्बन्धत्वमिव' इति मु. ।

नामसंज्ञा प्रतिष्ठिता" (च. सू. अ. ३०) इति । तन्त्रणादिति हेतु-लिङ्ग-चिकित्साप्रतिपादनादिति; अत्र नामसंज्ञा योगरूढा संज्ञा । यदि वा करणाधिकरणयोरर्थयोः "अध्यायन्यायोद्यावसंहाराश्च" (पा. अ. ३।३।११२) इति सूत्रनिपातनाध्यायपदसिद्धिः । तेन, आधीयतेऽस्मिन्ननेन वाऽर्थविशेष इत्यध्यायः । क्वचिदध्यायशब्दोऽयं योगमात्रेणापि वर्तते, अतस्तस्य प्रकरणादिष्वतिप्रवृत्तिनिषेधार्थं वेदोत्पत्तिर्नामेति पठन्ति; तेन नामशब्देन संज्ञावाचिना वेदोत्पत्तिशब्दः प्रकरणसमूह एव नियम्यते । व्याख्यास्याम इति विपूर्वादाङ्पूर्वाच्च ख्यातेर्लृटा साध्यम्, चक्षिङस्तु प्रयोगेऽनिच्छतोऽपि व्याख्यातुः कर्तृफलेन[1] संबन्धादात्मनेपदं स्यात् । 'वि' इति विशेषे; विशेषाश्च व्याख्यानगताः समासव्यासादयः, तथा व्याधितचिकित्सास्वस्थस्वास्थ्यरक्षणाद् द्वैविध्यं वा विशब्दार्थः । दृष्टश्च विशब्दो वैविध्ये । यथा–विभववान् महानाकाश इति विविधो भवो विभवः देशभवः सर्वमूर्तैः संयोगः, कार्यभवः सर्वत्र शब्दोत्पादः[2] । आङयं क्रियायोगे । ये तु मर्यादायामभिविधौ वा आङः प्रयोगं मन्यन्ते तेषामभिप्रायं न विद्मः । यतो मर्यादायामभिविधौ[3] चाङः प्रातिपदिकेन योगः स्यात् । यथा—'आसमुद्रक्षितीशः, 'आपाटलीपुत्राद्वृष्टो देवः'; इहापि च तथा । क्रियायोगविरहे[3] "उपसर्गाः क्रियायोगे" इति नियमादाङ उपसर्गत्वं न स्यात् । तथा चानुपसर्गेणाङा व्यवधानाद् वेरुपसर्गस्य प्रयोगो न स्यात्, येनाव्यवहितः सजातीयव्यवहितो वा धातोरुपसर्गो भवति । व्याङोरुभयोरपि चानुपसर्गत्वे तदर्थानुगुणाश्रुतभूरिप्रातिपदिककल्पनागौरवप्रसङ्गः[4] स्यात् । तस्मात् श्रुतप्रत्यासन्नक्रियायोगित्वमेवाङो न्याय्यम् । मर्यादाभिव्याप्तिलभ्यश्चार्थः प्रकारवाचि'वि'शब्दलभ्य एव । अत्र केचित् षट्पदत्वमस्य सूत्रस्य वदन्ति । अथातो वेदोत्पत्तिनामाध्यायं व्याख्यास्याम इति नामशब्दपाठादष्टसंख्याया मङ्गलत्वेनात्राप्यष्टपदत्वमेव व्याख्यातुं युक्तम् । यथा भट्टारहरिचन्द्रेण दीर्घञ्जीवितीयेऽध्यायेऽष्टपदत्वमुक्तम् । अथ, अतः, वेदोत्पत्तिनामेति तद्धितार्थमेकं पदम्, अधि, आयं, वि, आ, ख्यास्याम इति अष्टपदत्वम् । तत्र वर्णो वर्णसमूहो वा पदम्, पदसमुदायविशेषः सूत्रम् । यदुच्यते—"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः" इति । सूत्रवाक्यसमूहः प्रकरणम् । प्रकरणसमूहोऽध्यायः । अध्यायसमूहः स्थानम् । स्थानसमूहस्तन्त्रम् । तत्र, अथेत्यादि सूत्रं कस्य भवति ? चतुर्विधं हि शास्त्रे सूत्रम् । "अहं हि धन्वन्तरिः" इत्यादि गुरुसूत्रम् । "वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः[5]" (नि. अ. १) इत्यादि शिष्यसूत्रम् । "प्रतिरसं पाकः" (सू. अ. ४०) इत्याद्येकीयसूत्रम् । "सुश्रुतप्रभृतय ऊचुः" इत्यादि प्रतिसंस्कर्तृसूत्रम् । अपरे त्विह प्रतिसंस्कर्तृश्रुतिर्नास्तीति कृत्वा प्रतिसंस्कर्तृसूत्रं नास्ति, तेन

---

१ 'कर्तुः फलेन' ह. । २ 'विभवः सर्वमूर्तैः संयोगः' इत्येव पठ्यते हस्तलिखितपुस्तके । ३ 'प्रयोगमिच्छन्ति, तन्मते आङः प्रातिपदिकेन योगः स्यात्, तथा सति' इति ह. । ४ 'तत्संबन्धोचितभूरिप्रातिपदिककल्पनागौरवप्रसङ्गः स्यात्' इति चरकव्याख्यायां पाठः । ५ 'भूपते !' इति ह. ।

ग्रन्थकर्तृसूत्रं चतुर्थं वदन्ति । सुश्रुतस्यैव च गुरुपृच्छासूत्रं शिष्यसूत्रमुच्यते । अन्ये तु सुश्रुतसूत्रं ग्रन्थकर्तृसूत्रमिति व्यवस्थापयन्ति । तत्र प्रथममथेत्यादि सूत्रं गुरोरेव, शिष्यस्य सुश्रुतस्य व्याख्यानानधिकारात्; द्वितीयं तु 'यथोवाच' इत्यादिसूत्रं प्रतिसंस्कर्तुः, अत एव च उवाचेत्युपपन्नं; सौश्रुतसूत्रे लस्य लिड्विधिरनुपपन्नः, धन्वन्तर्युपदेशस्य सुश्रुतं प्रत्यपरोक्षत्वात् । अत्र ब्रूमः—न हि जात्या गुरुत्वमस्ति, सुश्रुतो हि धन्वन्तरिं प्रति शिष्यो[1]ऽपि बुद्धिस्थीकृतान्[2] शिष्यान् प्रति गुरुरपि भवति । यत्तु[3] पुनर्द्वितीयसूत्रस्य प्रतिसंस्कर्तृसूत्रतया उवाचेति[4] लिड्विधिरुपपाद्यते, अत्र विचार्य— किमिदं द्वितीयसूत्रं पूर्ववाक्यैकवाक्यतापन्नं न वा? यद्येकवाक्यतापन्नं तदा 'तथा व्याख्यास्यामो यथोवाच भगवान् धन्वन्तरिः' इति योजनीयं, तथा च व्याख्यास्याम इति क्रियया एकवाक्यतापन्नमुवाचेति पदमभिन्नकर्तृकं भवितुमर्हति, तथा च कुतो लिड्विधिः । अथ नैकवाक्यतापन्नं तदा गौरश्वः पुरुषो हस्तीत्यादिवन्नार्थसंगतिः । किंच यत्र प्रतिसंस्कर्तृश्रुतिरपि नास्ति जतूकर्णे, तत्र कथं "नानाश्रुतिपरिपूर्णकर्णो जतूकर्ण उवाच" इत्यादौ लिड्विधिः । तस्मात् सुश्रुत एव ग्रन्थकारत्वेन सूत्राणां प्रणेता । स तु क्वचित् किंचिदर्थं स्तोतुं निन्दितुं वाऽऽख्यायिकारूपं पुराकल्पं दर्शयन् किमपि सूत्रं गुरूक्तार्थानुवादरूपतया लिखति, प्रतिसंस्कर्ता तु तं ग्रन्थं पूरयति तथा[5]ऽन्यग्रन्थकर्तृतयैव । लिड्विधिस्तु भूतानद्यतनमात्र एव छन्दोविहितो भाषायामपि भवतीति वर्णनीयम्, अन्यथा जतूकर्णादावुवाचेति न स्यात् । अपि च **हरिवंशे** धन्योपाख्याने नारदवचने— 'मामुवाच' तथा 'अहमुवाच' इति न स्यात् । यथा—"स मामुवाचाम्बुचरः कूर्मो मानुषदेहधृक्", तथा "स्वयंभूवचनात् सोऽहं वेदान् वै समुपस्थितः । उवाच चैनांश्चतुरः" ( ह. वि. प. अ. ११० ) इति । यतश्चैतद् ग्रन्थकर्तुः सुश्रुतस्यैव सूत्रं; तेन, 'अध्याप्याश्च भवन्तो वत्साः' इत्यस्यानन्तरमेतद् गुरुसूत्रम् 'अथातः' इत्यादि बोद्धव्यम्; किं वा, 'इह खल्वायुर्वेदप्रयोजनं' इत्यस्यादौ । 'स उवाच-एवमस्तु' इत्यस्यानन्तरम् 'अथातः' इत्यादि गुरुप्रतिज्ञासूत्रमिति यद्वर्ण्यते, तन्निरस्तम् । किं च, यदि तत्स्थानगतमेतत् सूत्रं तदा इह किमिति पठ्यते तत्र च न पठ्यते; किं च तत्स्थाननिवेशेऽस्य सूत्रस्य वेदोत्पत्तिरस्मिन्नस्तीति कृत्वा अध्यायनिरुक्तिर्न स्यात्, वेदोत्पत्तेः प्रागुक्तत्वेन वक्ष्यमाणे ग्रन्थे चासंभवात् । नन्वायुर्वेदोपदेशकत्वं तदर्थज्ञाने सति युक्तं, तदर्थश्च द्रव्याद्यशेषज्ञानाधीनो नान्वयव्यतिरेकाभ्यां वर्षसहस्रैरपि ज्ञातुं शक्यः, नापि प्रत्यक्षविषयः, सर्वज्ञश्च सुश्रुतो न भवति, तत् कथमस्यायुर्वेदार्थव्याख्याने प्रामाण्यमित्याशङ्कां निराचिकीर्षुर्गुरुप्रकाशितमर्थं प्रकाशयाम इति दर्शयन्नाह—यथोवाच भगवान् धन्वन्तरिरिति । जगदर्थसाधनाद् धनुर्धर्मः, तस्यान्तो व्याध्यकालमृत्युसंपादकोऽधर्मः, तस्यारिर्व्याध्यकालमृत्युनिवर्तनद्वारा, शकन्ध्वादिपाठात् पररूपत्वम् । तथा 'धनुः शल्यं, तस्यान्तमीयर्ति गच्छतीति धन्वन्तरिः' इति निरुक्तिविपररूपत्वम् ।

---

१ 'अपि'शब्दो मुद्रितपुस्तके नास्ति । २ 'स्वबुद्धिस्थिरीकृतान्' इति मु. । ३ 'यत्' इति मु. । ४ 'भूताद्यतनपरोक्षे' इति मु. । ५ 'तदा' मु. ।

धितः साधुत्वम् । भगोऽस्यास्तीति भगवान् । "ऐश्वर्यस्य समस्तस्य माहात्म्य-यशसोः श्रियः । कामस्याथ प्रयत्नस्य षण्णां भग इतीङ्गना" इति; तथा "उत्पत्तिकारणं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स ज्ञेयो भगवानिति"; एवंभूतं भगयुक्तत्वं च धन्वन्तरेरमरवरत्वेन ब्रह्मादिगुरुपरंपरागतायुर्वेदार्थज्ञानप्रकर्षेण च बोद्धव्यम्। यस्मादेवंभूतधन्वन्तरिणा व्याख्यातमर्थमहं व्याख्यास्यामि तदप्रामाण्याशङ्का नास्तीति गुरूक्तार्थानुवादरूपतया स्वकीयतन्त्रस्य शिष्यप्रवृत्त्यङ्गं प्रामाण्यं दर्शयति । उवाचेत्यत्र तु यथा लिङ्गुत्पत्तिस्तथा दर्शितवान् ॥ १ ॥ २ ॥

**अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं( शं ) धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीरगोपुररक्षितसुश्रुतप्रभृतय[1] ऊचुः—भगवन्! शारीरमानसागन्तुभिर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीडा भवति, तेषां सुखैषिणां रोगोपशमार्थमात्मनश्च प्राणयात्रार्थं प्रजाहितहेतोरायुर्वेदं[2] श्रोतुमिच्छाम इहोपदिश्यमानम्, अत्रायत्तमैहिकमामुष्मिकं च श्रेयः; तद्भगवन्तमुपपन्नाः[3] स्मः शिष्यत्वेनेति ॥ ३ ॥**

प्रथमोपदर्शितामायुर्वेदोत्पत्तिमायुर्वेदाविप्लुतागमोपदर्शनार्थमाह—अथ खल्वित्यादि । अथशब्द आनन्तर्ये, अधिकारे वा; तेन रोगोत्पादानन्तरं रोगाधिकारे वेत्यर्थः । खलुशब्दः प्रकारे । काशिर्वाराणसी, तद्वासिनां राजा काशिराजः । तेषामनेकत्वे विशेषणमाह—दिवोदास(श)मिति । दास(श)शब्दो "दास(श)गोघ्नौ संप्रदाने"—इति संप्रदाने निपातितः । दिवितिशब्देनात्र[4] तात्स्थ्याद्देवा अभिधीयन्ते । दिवो दास(श) इति वक्तव्ये षष्ठीतत्पुरुषे षष्ठ्या अलुक्, तेन देवानामपि संप्रदानविषय इत्यर्थः । राज्यव्यासंगाद्याकुलचित्तत्वनिरासार्थमुक्तम्—आश्रमस्थमिति; तेन राज्यं परित्यज्य वानप्रस्थाश्रमगतमित्यर्थः[5] । भगवन्तमिति पूर्वं व्याकृतमेव । अमरवरमिति अमरश्रेष्ठम् । ऋषिगणपरिवृतमिति देवर्षि-राजर्षि-ब्रह्मर्षिगणैः परिवृतम् । एवंभूतर्षिपरिवृतत्वं त्वमरवरत्वेनैवोपपन्नम् । ऋषिगणपरिवृतत्वेन शुद्धसत्त्वर्षिगणसेवितायुर्वेदागमोऽविप्लुतो भवतीति दर्शयति । धन्वन्तरेर्विशुद्धज्ञानस्य[6] काशिराजपुरुषविग्रहसंभवत्वेन कदाचिद्विशुद्धज्ञानान्तरायः स्यादिति अमरवरत्वादिविशेषणम्; तथा गुरोर्यथार्था स्तुतिरपि च पुण्यहेतुरिति कृतम् । प्रभृतिग्रहणाद्भोजादयो गृह्यन्ते । औपधेनवादिभिः सर्वैरेव गुरुरभ्यर्थित[7] इति सर्वेषामुपादानं, तेन बहुभिः श्रोतव्यमित्येतदपि सूचितम् । अत्र यद्यपि सुश्रुत एव ग्रन्थकर्तृतया

---

१ '०भोजसुश्रुतप्रभृतयः' इति ता. । २ 'प्रजाहितहेतोः' इति ताडपत्रपुस्तके न पठ्यते । ३ 'उपसन्नाः' इति ता. । ४ 'दिवः द्युशब्देनात्र तत्स्था देवता अभिधीयन्ते' इति सु. । ५ '०परिगतं' इति सु. । ६ 'विशुद्धशीलस्य' इति ह. । ७ 'अर्थित' इति सु. ।

प्रश्नाधिकारित्वेन च प्रधानं, तथाऽपि गतमानतया पश्चादात्मानं निवेशितवान् । किमूचुरित्याह—भगवन्नित्यादि यावच्छिष्यत्वेनेति । मानसागन्तुकरोगाभ्यां प्राधान्यादिह पूर्वं शारीरव्याध्युपादानं; शरीरद्वारेण मानसव्याध्युपलम्भात् तदनु मानसविधानं; तदनु आगन्तोः, शरीरमनोऽधिष्ठानात् । वेदना दुःखं, तेन नानाप्रकारेण संबन्धोऽभिघातः, तेनोपद्रुतान् वियोजितोचितवाङ्मनःकायचेष्टान् । विक्रोशत इति आर्तनादं रुदतः । सनाथानपीति स्वामिपित्रादिसंभवेन सनाथान्; तेषां च व्याधिमोक्षे असमर्थत्वादनाथवदिति कृतम् । पीडा चौपधेनवादीनां महात्मनां परदुःखप्रहाणेच्छायां सत्यां तत्प्रशमाशक्तत्वादेव भवति । एषामिति मानवानाम् । सुखैषिणामिति तेषामेव रोगोपशमद्वारेण सुखैषिणां; किंवा रोगोपशमरूपसुखैषिणाम् । यदुक्तं **चरके**—"सुखसंज्ञकमारोग्यं विकारो दुःखमेव च" ( च. सू. अ. ९ ) इति । आत्मनश्च प्राणयात्रार्थमिति औपधेनवादीनां तदर्थानुष्ठानानुत्पन्नरोगतया स्वास्थ्यपरिपालनं, स्वाभाविकव्याधिप्रतीकाररसायनाभ्यां जीवितस्य परितः प्रत्यवायहेतुतः पालनार्थं प्राणानां जीवितस्य यात्रा पालनं प्राणयात्रा; एतेन व्याधिपरिमोक्षः स्वास्थ्यरक्षणं[1] चायुर्वेदप्रयोजनमुक्तम् । प्रत्यासन्नं प्रयोजनं दर्शयित्वा परमायुर्वेदप्रयोजनमाह—अत्रायत्तमित्यादि । ऐहिकं श्रेयः कामार्थौ, आमुत्रिकं[2] पारलौकिकं धर्ममोक्षौ, अत्रायत्तमिति आयुर्वेदजनितनीरोगतया साध्यमानत्वेन । तदिति हेतौ । उपपन्नाः स्मः शिष्यत्वेनेति तथैव विद्याश्रवणाधिकारात् ॥ ३ ॥

**तानुवाच भगवान्—स्वागतं वः, सर्वे एवामीमांस्या अध्याप्याश्च भवन्तो वत्साः ॥ ४ ॥**

स्वागतमिति आगमने कल्याणप्रश्नः । अध्याप्या इत्यध्याप्यगुणशुश्रूषा-श्रवण-ग्रहण-धारणोहयुक्तत्वेन । वत्सा इति अनुकम्पाविशेषादध्ययनोचितवयःसंपत्तेश्च ॥ ४ ॥

**इह खल्वायुर्वेदोऽष्टाङ्ग उपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः, ततोऽल्पायुष्ट्वमल्पमेधस्त्वं चालोक्य नराणां भूयोऽष्टधा प्रणीतवान् । तद्यथा—शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रं, वाजीकरणतन्त्रमिति ॥ ५ ॥**

अथ शिष्येषु मध्ये कदाचित् कोऽपि विशेषमपेक्षत इत्यायुर्वेदमङ्गभेदेन दर्शयन्नाह—इह खल्वित्यादि । इहेति धन्वन्तरिरात्मानं निर्दिशति । मय्येवाष्टाङ्गायुर्वेदो ज्ञातत्वात्; किंवा इह खल्विति वाक्यालङ्कारे । अष्टौ शल्यादीन्यङ्गान्यस्येति अष्टाङ्गः । शल्याद्यष्टाङ्गानामष्टमहावाक्यरूपाणां पुनरेकवाक्यतया संपूर्णायुर्वेदाभिधायकं महावाक्यवच्चातिमहावाक्यम्, अष्टावङ्गान्यस्येत्यन्यपदार्थवाच्यमस्त्येवेति । तेनाष्टानामङ्गानां

१ 'स्वस्थरक्षणं' इति मु. । २ 'आमुस्मिकं' इति मु. । ३ 'नाम यदुपाङ्गमथर्ववेदस्योक्तं' इति ता. । ४ 'ज्ञातत्वेनोक्तः' इति ह. । ५ 'संपूर्णायुर्वेदाभिधायि' इति मु. ।

समाहारोऽष्टाङ्ग इति नार्हति; अत्र हि पक्षे स्त्रीप्रत्ययव्यावृत्तिः पुंलिङ्गतानिर्देशश्च कष्टसाध्यः। समुदायिभ्योऽन्यः समुदायोऽनन्यो वेति पक्षद्वयं तीर्थिक[1]दर्शने बौद्धदर्शने च समानं, परं तीर्थिकदर्शने अनारब्धकार्याणामपि समुदायिनां वनमित्यादिप्रत्यये व्यवहारे च बहुत्वं संख्यानिमित्तं, बौद्धानां तु अनादिवासनाबलप्रतीयमानोऽलीक एकताध्यवसायः। यदुच्यते—"बुद्ध्यैकं भिद्यते वस्तु भिन्नं चैकत्वमृच्छति । बुद्ध्यवस्था विभज्यन्ते ता ह्यर्थस्य विधायिकाः" इति । उपाङ्गमिति, अथर्वैकदेशमूलत्वात्; यदुक्तं—"नवधा अथर्वाणो वेदो वाकोवाक्यमितिहासः पञ्च पुराणानि वैद्यकम्" इति । अनुत्पाद्यैव प्रजा इति वचनेनाङ्गीकृतप्रजापालनहेतुतामायुर्वेदस्य दर्शयति । शतसहस्रमिति लक्षम् । श्लोकोऽनुष्टुप्छन्दसा गायत्रीच्छन्दसा वा । ब्रह्मण आयुर्वेदकरणं प्रजापति[2]मुपदेष्टुम् । अल्पायुष्ट्वमल्पमेधस्त्वं चालोक्येति धर्मह्रासात्, कालान्तरभा[3]वि वा अल्पायुष्ट्वाद्यालोक्य । अष्टधेति वक्ष्यमाणशल्याद्यष्टप्रकारेण; अल्पायुष्ट्वाल्पमेधस्त्वेऽपि कश्चित् किंचिदपि ज्ञास्यति; ततो व्यवहारसिद्धिरिति भावः । तद्यथेत्युपदर्शने । शल्यमिति—'शल' हिंसायामित्यस्माच्चौरादिकणिजन्तात् 'एरच्' (पा. अ. ३।३।५६) इति अच् । 'शलनं शलः' इति विवक्षायां, "तस्य निमित्तं संयोगोत्पातौ" (पा. अ. ५।१।३८) इत्यनुवर्तमाने "गोचोऽसंख्यापरिमाणाश्वादेर्यत्" (पा. अ. ५।१।३९) इति द्व्यच्त्वाद् यत् । तेन शल्यं हिंसोचितसंबन्धः, तदाहरणार्थं तन्त्रमपि शल्यं, वक्ष्यमाणप्राधान्यात् प्रथममुक्तम् । तदनु शस्त्रकर्मसामान्यात् प्रधानशिरोविषयत्वाच्छालाक्यम् । शलाका पटलवेधनी, तस्याः कर्म शालाक्यं; ब्राह्मणादित्वात् ष्यञ्, तत्प्रधानं तन्त्रं शालाक्यम् । प्राधान्यं च तस्य प्रधानचक्षुर्विषयतया । एवमन्यत्रापि प्राधान्याद् व्यपदेशः । तदनु बहुविषयतया शेषाङ्गप्राधान्याच्च कायचिकित्सा; कायस्याग्नेश्चिकित्सा । तदुक्तं भोजे—"जाठरः प्राणिनामग्निः 'काय' इत्यभिधीयते । यस्तं चिकित्सेत् सीदन्तं स वै कायचिकित्सकः"—इति । शारीरचिकित्सानन्तरं मनोऽधिष्ठानरोगशमकतया भूतविद्या, विद्याग्रहणेन च देवाद्यष्टभूतानां दुर्विज्ञेयानां ज्ञानमेव प्रधानमिति दर्शयति; किंच देवानां ज्ञानं स्वरूपतस्तथा प्रकोपहेतुतस्तथा प्रशान्तिहेतुतश्चेति कृत्वाऽर्थसंग्रहः । तदनु कौमारभृत्यं, भूतविशेषपूतनादिचिकित्साया वक्ष्यमाणत्वात् । कुमाराणां भृतिर्धारणं पोषणं च, तस्येदमिति कौमारभृत्यम् । 'तस्येदम्'[4] (पा. अ. ४।३।१२०) इत्यण् । कुमारस्याज्ञानेन विषसंभवविविधविकारसंभवात् तदनु अगदतन्त्रं, विष-गर-वैरोधिक-रोगो गदः, तत्प्रतिषेधकत्वात् अगदः, तत्प्रतिपादकतन्त्रमगदतन्त्रम् । एषु चागद-रसायन-वाजीकरणेषु तन्त्रतयाऽनतिप्रसिद्धेषु तन्त्रशब्दप्रयोगः शल्यादितुल्यताप्रतिपादनार्थं; शल्यादिषु तु प्रसिद्धत्वादेव तन्त्रशब्दो न कृतः । तदनुगतविशेषत्वात् सर्वशल्यादिप्रत्यनीकत्वाच्च तदनन्तरं रसायनतन्त्रम् । रसादीनां प्रशस्तानामयनं लाभोपायो रसायनम् । तदुक्तं

---

१ बौद्धेतरदर्शने इत्यर्थः । २ 'प्रजापतये उपदेशार्थम्' इति मु. । ३ 'कालान्तराविर्भावाद्वा' इति मु. । ४ 'तस्येदमित्यण' इति मु. पुस्तके नास्ति ।

चरके—"लाभोपायो हि शस्तानां रसादीनां रसायनम्" (च. चि. अ. १ पा. १)। पारिशेष्याद्वाजीकरणतन्त्रम्। अवाजिनं वाजीकुर्वन्ति येन तद्वाजीकरणम्। 'अन्येषामपि दृश्यते' (पा. अ. ६।३।१३७) इति दीर्घत्वम्। येन वाऽत्यर्थं स्त्रीषु व्यज्यते तद्वाजीकरणम्। तदुक्तं चरके-"येन नारीषु सामर्थ्यं वाजिवल्लभते नरः। व्रजेच्चाप्यधिकं येन वाजीकरणमेव तत्" (च. चि. अ. २, पा. ४) इति ॥ ५ ॥

**अथास्य प्रत्येकाङ्गलक्षणसमासः—तत्र, शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिवालनखपूयास्रावदुष्टव्रणान्तर्गर्भशल्योद्धरणार्थं षष्ठ्या विधानैः, यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च; शालाक्यं नामोर्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थं; कायचिकित्सा नाम सर्वाङ्गसंश्रितानां[1] व्याधीनां ज्वररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहातिसारादीनामुपशमनार्थं; भूतविद्या नाम देवा[2]सुरगन्धर्वयक्षरक्षःपितृपिशाचना[3]गग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थं; कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थिनां च व्याधीनामुपशमनार्थम्; अगदतन्त्रं नाम सर्पकीटलूतामूषकादिदष्टविषव्यञ्जनार्थं विविधवि[4]षसंयोगोपशमनार्थं च; रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरणं रोगापहरणसमर्थं च; वाजीकरणतन्त्रं नामाल्पदुष्टक्षीणशु[5]क्ररेतसामाप्यायनप्रसादोपचयजनननिमित्तं प्रहर्षणजननार्थं च ॥ ६ ॥**

शल्याङ्गविशेषाञ् ज्ञातुं प्रतिलक्षणं संक्षेपेणाह—अथास्येत्यादि। एकमेकमङ्गं प्रति लक्षणानां समासः संक्षेपः प्रत्येकाङ्गलक्षणसमासः। तृ[6]णादीनां, तथा दुष्टव्रणस्य, तथाऽन्तर्गत(र्भशल्य)स्य उद्धरणार्थमिति प्रत्येकमुद्धरणशब्दः संबध्यते। दुष्टव्रणस्यान्तस्तृणाद्याहरणार्थमित्यन्ये। षष्ठ्या विधानैरिति द्विव्रणीयोक्तैरपतर्पणाद्यै रक्षाविधानान्तैः; इत्थंभूतलक्षणे तृतीया। जत्रु ग्रीवामूलं, जत्रुण ऊर्ध्वमूर्ध्वजत्रु। घ्राणादीत्यादिग्रहणाच्छिरःकपालादिग्रहणम्। उत्तरतन्त्रे प्रतिपादितक्रमप्राप्त्या ज्वरानन्तरमतीसारः पठितः, तस्यान्ते पाठोऽतिसारस्य सर्वाङ्गीणदोषारब्धत्वात्, अ[7]न्येषामपि तन्मध्यपाठेन सर्वाङ्गीणदोषारब्धत्वप्रतिपादनाव्यतिक्रमं वदन्ति। शान्तिकर्म बलिहरणादिना ग्रहाणां देवादीनामुपशमो यस्तदर्थं; यदि वा ग्र[8]हणं ग्रहो देवानामावेशस्तदुपशमार्थम्। दुष्टस्तन्यग्रहसमुत्थितानामिति दुष्टस्तन्येन

---

१ 'सर्वशरीरावस्थितानां व्याधीनामुपशमकरणार्थं ज्वरशोफगुल्मरक्तपित्तोन्मादापस्मारप्रमेहातीसारादीनां च' इति ता.। २ 'देवदानव°' इति ता.। ३ '°विनायकनागग्रहोपसृष्टचेतसां' इति ता.। ४ '°विषवेगोपशमनार्थं' इति ता.। ५ 'शुक्राप्यायन°' इति ता.। ६ 'तृणादीनां शल्यान्तानां' इति मु.। ७ 'अन्ये तु तस्यान्ते पाठेन' इति पा०। ८ 'ग्रहणाद्' इति मु.।

दुष्टग्रहेण च जातानाम् । विषव्यञ्जनार्थमिति विषव्यञ्जनं विषप्रकाशनं, तदर्थम् । वयःस्थापनं प्रशस्ततरुणवयःस्थापननं; यदुच्यते—"अस्य प्रयोगाद्वर्षशतमजरं च वयस्तिष्ठति" (च. चि. अ. १, पा. २) इत्यादि । अनियतायुषि युगनियतादधिकस्यायुषः करणम् आयुःकरणम् । अल्पशुक्रं प्रकृत्यैव यदल्पशुक्रं, तस्याप्यायनाय; दुष्टं दोषतः, तस्य प्रसादाय; क्षीणं स्वमानात् प्राकृतात्, तस्योपचयाय; शुष्कमत्यल्पत्वाच्छुष्कमिव, तस्य जननाय; इति विभागः । यदि वाऽल्परेतसो बाला असंपूर्णधातुत्वात्, क्षीणशुक्राः मध्या निमित्ततः क्षीणशुक्राः, शुष्करेतसो वृद्धाः, एषामाप्यायनोपचयजननानि यथासंख्यं; प्रसादस्तु दुष्टरेतसः सर्वावस्थासु । प्रहर्षणजननार्थमिति प्रायः सुस्थस्य । वाजीकरणं च त्रिविधमुच्यते । यदुक्तं—"शुक्रस्रुतिकरं किंचित् किंचिच्छुक्रविवर्धनम् । स्रुतिवृद्धिकरं किंचित्त्रिविधं वृष्यमुच्यते"—इति । तत्र स्रुतिकरं स्त्रीस्पर्शादि, वृद्धिकरं क्षीरादि, स्रुतिवृद्धिकरं माषादि ॥ ६ ॥

**एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते; अत्र कस्मै किं वर्ण्यतामिति ॥७॥**

एवमित्यादि । अत्रेति प्रदर्शितभेदाङ्गतन्त्रेषु । यद्यपि च शारीरमानसेत्यादिना शिष्यैः सामान्येनायुर्वेदः प्रार्थितस्तथाऽपि सुखमचिरेण प्रतिसत्त्वमेकैकाङ्गतन्त्रग्रहणे कदाचिदेतेऽर्थिन इति मत्वा गुरोः प्रश्नः—कस्मै किं वर्ण्यतामिति ॥ ७ ॥

**त ऊचुः—सर्वेषामेवास्माकं शल्यज्ञानं मूलं कृत्वोपदिशतु भगवानिति ॥ ८ ॥**

**स उवाचैवमस्त्विति ॥ ९ ॥**

शिष्याणामुत्तरं—सर्वेषामित्यादि । सामान्येनायुर्वेदं प्रार्थ्यापि संप्रति शल्यप्रार्थनं यत्किंचिदाबाधकरं तत् सर्वं शल्यमिति कृत्वा शल्यविज्ञानेनैवाशेषवाच्यार्थज्ञानसिद्धेः; यदुच्यते—"यत्किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम् । व्याप्तान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा" इति । तथा चोत्तरतन्त्रे शालाक्यादितन्त्रवाच्यमभिधास्यति । 'शल्यज्ञानं मूलं कृत्वा' इत्यत्र क्वचित् 'शल्यज्ञानमलङ्कृत्य' इति पठ्यते । अलङ्कृत्येति शालाक्यादितन्त्रेणालङ्कृत्येत्यर्थः ॥ ८ ॥ ९ ॥

**त ऊचुर्भूयोऽपि भगवन्तम्—अस्माकमेकमतीनां मतमभिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति, अस्मै चोपदिश्यमानं वयमप्युपधारयिष्यामः ॥ १० ॥**

**स उवाचैवमस्त्विति ॥ ११ ॥**

संप्रति ग्रन्थकारः सुश्रुतः शिष्यप्रवृत्त्यर्थमात्मनः प्रकर्षं भङ्ग्यन्तरेण प्रतिपादयन्, तथा गुरुप्रश्नोत्तराधिकारे औपधेनवादिबहुशिष्यप्रश्नसंबोधनेन ग्रन्थविस्तरतां निराचि-

१ 'उच्यतां' इति डल्हणसंमतः पाठः ।

कीर्षुरात्मन एव गुरुप्रश्नाधिकारवृत्तान्तं दर्शयति—त ऊचुर्भूयोऽपीत्यादि । एवंप्रायं च सब्रह्मचारिषु ग्रन्थकृता प्राधान्यं तथ्यमतथ्यं वा दर्शितमेव । यदुक्तं **चरके**—"बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः । तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत्" (च. सू. अ. १) इति । एवं चौपधेनवादितन्त्रेषु गुरुपृ[1]च्छकत्वमौपधेनवादीनामुपपन्नम् । एकमतीनामिति एकजातीनाम् ॥ १० ॥ ११ ॥

**वत्स सुश्रुत ! इह खल्वायुर्वेदप्रयोजनं—व्याध्युपसृष्टानां व्याधिपरिमोक्षः, स्वस्थस्य रक्षणं च ॥ १२ ॥**

एवं स्थिते प्रश्नाधिकारिणं सुश्रुतं संबोध्याह—वत्स सुश्रुतेत्यादि । यद्यपि रोगोपशमार्थमिति वदता आयुर्वेदप्रयोजनमुद्दिष्टमेव, तथाऽप्युपदर्शितमेव प्रयोजनं मुख्यमायुर्वेदप्रयोजनमिति दार्ढ्यार्थं दर्शयति—इहायुर्वेदप्रयोजनमित्यादि (इहेति रोगस्वस्थाधिकारप्रवृत्तायुर्वेदे, व्याधिमोक्षः स्वस्थरक्षणं च; अन्यत्र तु नैष्ठिकचिकित्सायां शारीरवक्तव्यायां मोक्षः प्र[2]योजनम्) इह तु सामान्येनायुर्वेदप्रयोजनमेव प्रयोजनमिति कृत्वा सामान्येनायुर्वेदप्रयोजनाभिधानं; व्याधिमोक्षादिफलमपि पुरुषप्रयोजनकत्वात् प्रयोजनमुच्य[3]ते । स्वास्थ्यरक्षणं स्वस्थत्वे व्यवस्थापनम् । केचिद्ग्रन्थक[4]राश्चकाराद् याप्ययापनमायुरुत्कर्षश्च प्रयोजनमिति वदन्ति । किंतु आयुर्जननं स्वास्थ्यरक्षणविशेष एव, याप्ययापनं त्वधिकव्याधिपरिमोक्ष एव, अनागताधिकव्याधिरक्षणतया आभिमानिकस्वास्थ्यरक्षणमेव वातादिप्रकृतीनामिव स्वास्थ्यरक्षणमाहुः; यदुक्तं **चरके** वातादिप्रकृतीन् सदातुरानभिधाय—"विपरीतगुणस्तेषां स्वास्थ्यवृत्तौ विधिर्हितः" (च. सू. अ. ७) इति ॥१२॥

**'आयुरस्मिन् विद्यते', अनेन वाऽऽयुर्विन्दन्ति, इत्यायुर्वेदः ॥ १३ ॥**

उक्तं प्रयोजनं शास्त्रेण संबद्धं निरुक्त्या दर्शयन्नाह—आयुरस्मिन्नित्यादि । आयुः शरीरेन्द्रियसत्त्वात्मसंयोगः, तच्च सोपाधिकमिहाभिप्रेतम् । यदुक्तं **चरके**—"हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते" (च. सू. अ. १) इति । एवंभूतमायुरस्मिञ्छास्त्रे ज्ञानसाधनीभूते ज्ञायत इत्यायुर्वेदः; एवं ज्ञानार्थविदिपक्षे निर्वचनम् । "यस्य च भावेन भावलक्षणम्" (पा. अ. २।३।३८) इति सप्तमी, केचित् "निमित्तात् कर्मसंयोगे" (का. वा.) इति सप्तमीं वर्णयन्ति, यथा—'चर्मणि द्वीपिनं हन्ति' इत्यादौ, तत्तु नातिसंगतं पश्यामः । सत्तार्थविदिपक्षेऽप्यायुरस्मिन् प्रतिपाद्यतयाऽस्तीत्यर्थः । विचारार्थविदिपक्षे आयुरस्मिन् हिताहितरूपतया विचार्यते । एवं निरुक्तित्रयेणाप्यायुर्वेदाभिधेयेनायुषा सममभिधानाभिधेयलक्षणः संबन्ध उक्तः; आयुर्वाऽनेन विन्दतीत्यनेन प्रयोजनशास्त्रयोर्जन्यजनकलक्षणः संबन्ध

---

१ 'गुरौ प्रश्नकर्तृत्वं' इति मु. । २ अयं पाठो मुद्रितपुस्तके नोपलभ्यते । ३—उच्यते इत्यस्याग्रे—"तस्मात्तदपि प्रयोजनं पुरुषस्येत्यर्थः"—इति मु.पुस्तकेऽधिकः पाठः । ४ 'ग्रन्थकारा' इति मु. पुस्तके नास्ति ।

उक्तः । विन्दतीति लभ्यते । आयुर्लाभश्च शास्त्राद्धेयोपादेयज्ञानजननद्वारा हेयोपादेयहानोपादानकरणाद्भवति । **चरके** तु ज्ञानार्थ एव विदिरुक्तः, आयुर्लाभस्यापि ज्ञानसाध्यतया । यदुक्तं—"हिताहिततः सुखासुखतः प्रमाणाप्रमाणतश्च तदायुर्वेदयतीत्यायुर्वेदः, यतश्चायुष्यान्यनायुष्याणि च द्रव्यगुणकर्माणि वेदयति ततोऽप्ययमायुर्वेदः" (च. सू. अ. ३० ) इति ॥ १३ ॥

**तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमानमुपधारय ॥ १४ ॥**

प्रकृतमाह—तस्याङ्गेत्यादि । अङ्गवरत्वमग्रे प्रदर्श्यते । आगमयति बोधयति सूक्ष्मविप्रकृष्टानर्थानित्यागमः । अनेनाप्तवचनं निर्दोषवाक्यं लक्ष्यते, निर्दोषता च वेदस्यापौरुषेयत्वादेव; किंवा न्यायमतानुसारेण निर्दोषपुरुषकृतत्वादेव । एवमन्यदपि मनुष्यवाक्यादि यन्निर्दोषपुरुषप्रणीतं तदाप्तवचनम् । यदुक्तं **चरके**—"आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् । सत्यं वक्ष्यन्ति ते कस्मान्नीरजस्तमसो मृषा (च. सू. अ. ११ )" इति । प्रतिगतमक्षं प्रत्यक्षम् । अनेन च साक्षात्कारवत् प्रमाजनकं प्रत्यक्षमिति लक्ष्यते । अत्र लिङ्गलिङ्गिसंबन्धग्रहणात् पश्चाद् व्याप्तिस्मरणवल्लिङ्गपरामर्षरूपं ज्ञानमनुमानम् । अनेन च कारणात् कार्यानुमानं, तथा कार्यात् कारणानुमानं, तथा कार्यकारणभूतात् स्वभावसंबन्धाद्वा व्याप्यव्यापकानुमानं यथाक्रमं पूर्ववत्, शेषवत्, सामान्यतो दृष्टं च संगृहीतम् । उप समीपे आगमाहितसादृश्यज्ञानसंस्कारस्य मानं ज्ञानमुपमानम् । अनेन च 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्' (न्या. द. अ. १, आ. १, सू. ६ ) इत्युपमानलक्षणं गमयति । यथा मुद्गस्तम्बस्तथा[2] मुद्गपर्णीति आगमाहितसंस्कारस्य मुद्गस्तम्बसदृशे वस्तुनि सादृश्यं पश्यतोऽयमसौ मुद्गपर्णीशब्दवाच्य इति संज्ञासंज्ञिसंबन्धप्रतीतिरुपमानफलम् । भट्टमते[3] सादृश्यज्ञानं वा उपमानफलम् । अत्र चागमस्य शास्त्रे प्राधान्यात् प्रथममागमः कृतः, तदनु प्रमाणानां मूलत्वात् प्रत्यक्षं, तदनु तत्पूर्वकत्वादनुमानं, तदनु अवशिष्टत्वादुपमानम् । एतैः प्रमाणैरविरुद्धमबाधितमुच्यमानमुपदिश्यमानमुपधारय । आगमादीनि च यान्यत्रोपजीव्यत्वादिना बलवन्ति तान्येव बाधकत्वेन संभाव्यानि । आगमविरुद्ध उपदेशो यथा—'ब्राह्मणेन सुरा पेया' इति । "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथैवान्या न पेया ब्रह्मवादिभिः" इति वेदमूलस्मृतिरूपागमबाधितोऽयम् । प्रत्यक्षविरुद्ध उपदेशो यथा—शून्यमिदं गोघटादि, प्रत्यक्षमेव ह्यशून्यं प्रतिभाति गोघटादि । अनुमानविरुद्ध उपदेशो यथा—सावयवाः परमाणवः । अयं ह्युपदेशः परमाणुग्राहकानुमानेन निरवयवपरमाणुबोधकेन बाध्यते । उपमानबाधित उपदेशो यथा—उपमानप्रतीतमुद्गपर्णीस्तम्बस्य नायं मुद्गपर्णीशब्दवाच्यो मुद्गपर्णीस्तम्ब इत्युपदेशः । नन्वेतच्छास्त्रोपदेशस्यागम-

---

१ 'प्रत्यक्षागमानुमानोपमानैः' इति ड. । २ 'मुद्गः' इति मु. । ३ 'भट्टनये' मु. । ४ 'प्रत्यक्षमूलकत्वात्' इति मु. ।

विरोधोऽस्ति; तथा ह्यागमे श्रूयते 'मा हिंस्यात् सर्वाभूतानि' इति। इह तु रोगिवृत्ते स्वस्थवृत्ते च तत्र तत्र मांसोपदेशाद्धिंसा विधीयते । अथ मतं-मांसं विहितमत्र, तच्च[1] स्वयं मृतस्य ग्राह्यं; तन्न, स्वयंमृतादीनां निषेधात् । तथा हि—"शुष्कपूतिव्याधितविषदिग्धविद्धसर्पहतजीर्णकृशबालानामसात्म्यचारिणां च मांसं नाददीत" ( सू. अ. ४६ ) इति वचनात्, तथा मांसविधौ च प्रत्यग्रमांसवचनाद्धिंसाऽनुमतैवात्र । तथेहोक्त'ब्रह्मचर्यमहिंसा च' ( चि. अ. २८ )इतिवचनादपि हिंसा विरुद्धा। अत्रैके वदन्ति—हिंसानिषेधवाक्यं यथा वेदे—"अग्नीषोमीयं पशुमालभेत" इत्यादौ विहितहिंसां परित्यज्यान्यत्र निषिद्धत्वेनाधर्महेतुस्तथेहापि वेदैकदेशरूपे स्वस्थातुरहितत्वेन विहितमांसार्थंक्रियमाणहिंसाव्यतिरेकेण हिंसा दोषवती व्यवस्थाप्येति न विरोधः। किं तु नायमायुर्वेदः सर्वथा धर्मार्थसाधनं विधत्ते, येन वेद इवेह विहितत्वादेव धर्मसाधनम्, एतन्निषिद्धत्वादेव वा अपथ्याचरणादीनामधर्महेतुत्वं; किं तु आरोग्यसाधनमिह विधीयते। तद्यद्यधर्मफलमपि भवति, तथाऽपि भूरिश्रेयश्चतुवर्गमूलारोग्यसाधकतयेहोपादेयमेव । उच्यते हि—"भूयसां श्रेयसामर्थेऽल्पीयसां पापानामारम्भो न दोषाय" इति। अथवा विहितत्वादायुर्वेदस्य सर्वथा वेदरूपतया तद्विधिवाक्यानां[2] धर्मोपदेशकत्वम् । तथाऽपि नात्र हिंसा विधीयते, सद्यस्कादिगुणवन्मांसभक्षणं हि रागत एव प्रवृत्तम्। तच्चारोग्यसाधनतया विधीयते। कामाद्यलब्धो ह्यर्थो विधिविषयः। न हि 'श्येनेनाभिचरन् यजेत' इत्यत्र रागलब्धेऽप्यभिचारे विधिविषयता धर्महेतुत्वं भवति । तथा स्वयमकृतायामपि हिंसायां व्याधेः स्वनृत्त्यै कृतहिंसोपकृतमांसेनापि भक्षणमुपपद्यते । तस्मादत्र हिंसायां भूरिश्रेयःसाधकारोग्यहेतुतया उपदेशो नागमविरुद्धः । अनया दिशा अभक्ष्यमांसादिभक्षणोपदेशोऽपि समाधेयः। सांख्येऽपि क्रतूपकाराऽपि हिंसा स्वयमधर्महेतुः, हिंसोपकृतस्तु क्रतुरभीष्टस्वर्गादिफलः, यदुक्तं **वाचस्पतिमिश्रैः** "हिंसा[3] हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति" ( सांख्यतत्त्वकौमुदी का. २ ) को विरोधः ॥ १४ ॥

**एतद्ध्यङ्गं प्रथमं, प्रागभिघातव्रणसंरोहा[4]द्यज्ञशिरःप्रधानसन्धानाच्च । श्रूयते हि यथा—"रुद्रेण यज्ञस्य शिरश्छिन्नमिति, ततो देवा अश्विनावभिगम्योचुः—भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः, भवद्भ्यां यज्ञस्य शिरः सन्धातव्यमिति। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरः सन्धितम्" इति ॥ १५ ॥**

शल्यस्याद्यत्वे हेतुमाह—एतद्धीत्यादि। हिशब्दोऽवधारणे। प्रागिति शारीरव्या[5]धिभ्यः प्राक्। अभिघातजो व्रणो अभिघातव्रणः, तस्य संरोहः शल्येन कृत इत्यर्थः । श्रूयते

१ 'अथ मांसं विहितं यत्र तत्र च' इति मु.। २ 'तन्निषेधवाक्यानां' इति ह.। ३ 'भविष्यति हिंसा प्रत्यवायहेतुः' इति मु.। ४ '°व्रणसंरोहणकरणात्, यज्ञशिरःप्रधानसंधानाच्च; श्रूयते हि 'पुरा रुद्रेण यज्ञस्य शिरश्छिन्नमश्विभ्यां पुनः सन्धितमिति' इति ता.। ५ 'व्याधेः' इति मु.।

हि "देवासुरसंग्रामे देवा असुरैरभिहता विक्षताङ्गा ब्रह्माणमुपगताः, ब्रह्मणा तु शल्योपदेशेन कृतव्रणसंरोहाः संपादिताः" इति । उपपत्त्यन्तरमाह—यज्ञशिर इत्यादि । अत्रापि प्रागिति संबध्यते । यज्ञशिर एव प्रधानं यज्ञशिरःप्रधानम् । अत्रैवैतिह्यमाह—श्रूयते हीत्यादि । सन्धिरितो जात इति तारकादित्वादितच्; एवं चाभ्यिभ्यां हेतुभ्यां सन्धितमिति योजना ॥ १५ ॥

**अष्टानापि चायुर्वेदतन्त्राणामेतदेवाधिकमभिमतम्, आशुक्रियाकरणाद्यन्त्रशस्त्रक्षाराग्निप्रणिधानात् सर्वतन्त्रसामान्याच्च ॥ १६ ॥**

शल्यस्य वरत्वे हेतुमाह—अष्टानामपीत्यादि । वरत्वसाधकमाशुक्रियाकारित्वमेवास्य कुत इत्याह—यन्त्रादिप्रणिधानात् । यन्त्रादिप्रणिधानं चाश्वेव क्रियते । यदुच्यते—"सकृदेवोपहरेच्छस्त्रमाशु च" ( सू. अ. ५ ) इति । तच्चाप्याश्वेव रोगोपशमलक्षणां क्रियां करोति, तेनास्य चिरेण व्याधिप्रशमलक्षणक्रियाकारिषु कायचिकित्सादिषु मध्ये युक्तं वरत्वम् । हेत्वन्तरमाह—सर्वतन्त्रसामान्याच्चेति । सर्वतन्त्रसामान्यं सर्वशालाक्यादितन्त्रविषयव्यापकत्वम् । यदुक्तं—"यत्किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम् । व्याप्तान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा"—इति । एतच्च शालाक्यादिषु नास्तीति शल्यस्य वरत्वे हेतुः । ये तु 'अधिकक्रियाकरणात्' इति पठन्ति, तन्मतेऽपि यन्त्रादिप्रणिधानात् सर्वतन्त्रसामान्यादधिकक्रियाकारित्वं ज्ञेयम् ॥ १६ ॥

**तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरं चेति ॥ १७ ॥**

शिष्याणां प्रवृत्त्यर्थं प्रोत्साहनाय च शास्त्रस्य प्रशस्तं रूपमाह—तदिदमित्यादि । शाश्वतं नित्यत्वात् । पुण्यं पुण्यहेतुत्वात् । स्वर्ग्यं स्वर्गहेतुत्वात् । वृत्तिकरं शरीरयात्राया वृत्तेर्वर्तनस्य च कारकत्वात् । नित्यत्वं चायुर्वेदस्यापरापरसन्तानयोगात्, न तु वाक्यरूपस्य ऋग्वेदादिवत् कूटनित्यत्वम् । वेदवन्नित्यत्वे हि पौरुषेयश्रुतिर्न स्यात् । यथा–स्वयंभूः कृतवानायुर्वेदं, सुश्रुतः कृतवानित्यादि । **चरकेऽपि** प्रवाहनित्यत्वमेवायुर्वेदस्यार्थरूपस्य तदर्थप्रतिपादकतया ग्रन्थरूपस्य चोक्तम् । तदुक्तं—"सोऽयमायुर्वेदो नित्यः, अनादित्वात् स्वभावसंसिद्धलक्षणत्वाद्, भावस्वभावनित्यत्वाच्च" ( च. सू. अ. ३० ) इति । अनादित्वादिति सन्तानानादित्वादुक्तं, सुश्रुतादिकृतत्वेऽपि चास्य सुश्रुतादितन्त्ररूपायुर्वेदस्य परमाप्तब्रह्मोपलब्धायुर्वेदार्थस्याविप्लुतगुरुपरम्परागतस्य प्रतिपादकतया प्रामाण्यं; ब्रह्मणश्चायुर्वेदार्थबोधः सर्वतोऽव्याहतज्ञानतया स्मरणरूपः । यदुक्तं **चरके**—"बुबुधे यं पितामहः" ( च. सू. अ. १ ) इति । बोधश्च ब्रह्मणः स्मरणमेव; तच्च नित्यार्थवद्वेदवाक्यस्मरणात् ( वा तदर्थस्मरणम् । तद्वाक्यानपेक्षस्य वा स्मरणे कथावशात् स्मरणम् )। सर्वं च

---

१ 'विकृष्टाङ्गा' इति **मु.** । २ 'एतदेवाधिकमाशु॰' इति **ता.** । ३ '॰कारित्वमस्य' इति **मु.** । ४ 'चास्य' इति **मु.** । ५ 'नित्यार्थवेदवाक्यस्मरणात्' इति **मु.** । ६ अयं पाठो मुद्रितपुस्तके नास्ति ।

परमाप्तवाक्यमूलतया मन्वादिप्रणीतस्मृतिवाक्यवत् सुश्रुतादितन्त्राणां प्रामाण्यं, नित्यत्वं च प्रवाहनित्यत्वात् । तदेवं तन्त्रस्य कृतत्वादिशब्दा ग्रन्थरूपे तन्त्रे मुख्या एव ॥ १७ ॥

**ब्रह्मा[१] प्रोवाच ततः प्रजापतिरधिजगे, तस्मादश्विनौ, अश्विभ्यामिन्द्रः, इन्द्रादहं, मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः ॥ १८ ॥**

ब्रह्मा प्रोवाचेति प्रशब्द आदिकर्मणि । प्रजापतिर्दक्षः । इन्द्रादहमिति इन्द्रस्यासंक्रामितविद्यत्वेन शिष्यार्थितया तत आयुर्वेदग्रहणं धन्वन्तरेः । उच्यते हि—"सम्यग्गुरुमुखादधीत्य यो न प्रयच्छत्यन्तेवासिभ्यः स खलु ऋणी गुरुजनस्य महदेनो विन्दति" इति । प्रदेयमिति प्रथममिह मर्त्ये देयम् ॥ १८ ॥

**भवति चात्र—**

**अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् ॥**
**शल्याङ्गमङ्गैरपरैरुपेतं[२] प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥ १९ ॥**

प्रवृत्तौ शिष्यान् प्रोत्साहयितुमात्मरूपमाह—अहं हीत्यादि । त्रिविधा देवाः—आदिदेवा ब्रह्मादयः, कर्मदेवा इन्द्रादयः, प्रजननदेवा[३] बुधकार्तिकेयादयः । अतो विशेषणम्—आदिदेव इति । आदिदेवत्वेन शङ्करत्वं केचिद्वदन्ति; शङ्करत्वेन च सर्वज्ञतायां सिद्धायामपीन्द्रादायुर्वेदश्रवणं गुरुपूर्वक्रमपालनार्थमिति वदन्ति । किं तु सर्वज्ञत्वे तु ब्रह्मवदायुर्वेदोपदेशे नितरामुपादेयता स्यादिति मन्यामहे । जरादिहरत्वममृतदानेन धन्वन्तरिणा कृतं; रुजा च देवानामासीदेव; यदुच्यते—"खालित्यं गरुडध्वजस्य शिरसि, स्वावित्रणं ब्रह्मणो, घोरं चापि जलोदरं च वरुणस्येन्दोस्तथैव क्षयः । पुष्णो दन्तगता रुजः, सुरपतेर्नेत्रामया दारुणा, लिङ्गार्तिर्भुवनेश्वरस्य, धनदस्याभूच्च पानात्ययः" इति । गां भुवं, प्राप्तोऽस्मि अवतीर्णोऽस्मि, काशिराजरूपेणेत्यर्थः; भूयः पुनः, पूर्वं जरादिहरणाय स्वर्गं प्राप्तः, गामिह लोके ॥ १९ ॥

**तत्रास्मिञ्छास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया, सोऽधिष्ठानं; कस्मात्? लोकस्य द्वैविध्यात्; लोको हि द्विविधः स्थावरो जङ्गमश्च; द्विविधात्मक एवाग्नेयः सौम्यश्च, तद्भूयस्त्वात्; पञ्चात्मको वा; तत्र चतुर्विधो भूतग्रामः—संस्वेदजजरायुजाण्डजोद्भिज्जसंज्ञः; तत्र पुरुषः प्रधानं, तस्योपकरणमन्यत्; तस्मात् पुरुषोऽधिष्ठानम् ॥ २० ॥**

संप्रति शल्यवक्तव्यपुरुषादिचतुष्टये प्रधानमुपकर्तव्यमाश्रयपुरुषमाह—तत्रास्मिन्नित्यादि । तत्रेति पूर्वोदितशल्यप्रत्यवमर्शकम् । अस्मिन्निति क्रियाधिकरणतया बुद्धिस्थीकारात् पुरोवर्तितानिर्देशः, एतेन चिकित्साधिकारादस्मिन् वक्तव्ये शल्ये यथावक्ष्यमाणः

---

१ 'तद्ब्रह्मोवाच' इति ता. । २ 'शल्यं महच्छास्त्रवरं गृहीत्वा' इति ता. । ३ 'प्रयोजनदेवा' इति मु. ।

पुरुषः, मोक्षाधिकारे तु शारीरे वक्तव्यः पञ्चविंशतितमरूपश्च भविष्यतीति । पञ्च च तानि महाभूतानि चेति पञ्चमहाभूतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि । शरीरमस्यास्तीति शरीरी । अनेन शरीरसंबन्धयोगश्चात्मा गृह्यते; अन्यथा लघ्वक्षरत्वेन 'आत्मा' इति कृतं स्यात् । शरीरसंबन्धयोग्यत्वं[१] चात्मनोऽनादिकर्म, परं शरीरसंबन्धो[२] मनःसंबन्धादेव । तदुक्तं **चरके**—"गतिप्रवृत्त्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म ।" (च. शा. अ. २) इति; तथा—"भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्" (च. शा. अ. २) इति । समवायः पञ्चमहाभूतशरीरिणां पच्यमानकर्मसंपादितः कर्मफलभोगयोग्यः संबन्धविशेषः, शरीररूपश्च पञ्चमहाभूतशरीरिमेलकरूपः । एतादृशमेव संबन्धविशेषं दर्शयितुमन्यशरीररूपं च पञ्चमहाभूतशरीरिसंयोगसाधारणं संयोगशब्दं परित्यज्य समवायशब्दो यथोक्तसंबन्धविशेषगमको दर्शितः । पुरुषशब्देन चेह सामान्येन प्राणिवाचिनाऽपि प्रकरणान्मनुष्यरूप एव पुरुष उच्यते । यतो 'मानवानभिसमीक्ष्य' इत्यादिना, तथा 'तस्योपकरणमन्यत्' इत्यादिना नरजातिरेवात्र पुरुषोऽ[३]धिकृतः । सामान्यशब्दोऽपि प्रकरणाद्विशेषेऽपि वर्तत एव । यथा—ब्राह्मणान् भोजयेदिति वचनेन प्रकरणादामन्त्रितब्राह्मणेष्वेव ब्राह्मणशब्दो वर्तते । 'उच्यते'शब्देन च पञ्चविंशतितत्त्व(म)रूपं पुरुषं, तथा चेतनमात्रं पुरुषं मोक्षा[४]द्यर्थविचारणीयं परित्यज्य व्याध्यधिकरणं चिकित्साविषयं च यथोक्तं पुरुषं ग्राहयति । उक्तं हि **चरके**—"चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः" (च. शा. अ. १) इति । पञ्चविंशतितत्त्वरूपं च पुरुषं शारीरे दर्शयिष्यति; तदेवं चरकोक्तपुरुषलक्षणेन समं तुल्यार्थता भवति । यदुक्तं तत्र—"सत्त्वमात्मा शरीरं च त्रयमेतत् त्रिदण्डवत् । लोकस्तिष्ठति संयोगात् तत्र सर्वं प्रतिष्ठितम्" (च. सू. अ. १) इति । तत्र ह्यात्मग्रहणेन मनसोऽग्रहणात् सत्त्वशब्देन मनो गृहीतम्, इह तु शरीरिशब्देन समनस्क आत्मा गृह्यत इति तुल्यार्थता । 'शरीरं पुरुषः' इति क्वचित् पाठः । तत्रापि यथोक्तसमवाय एव शरीरमिति वाच्यम् । समवाय(शब्द)श्च यद्यपि संबन्धवचनस्तथाऽपि संबन्धिपरतन्त्रत्वात्[५] संबन्धस्य संबन्धिन एवात्र समवेताः पुरुषशब्देनोक्ताः[६] । न चैवं व्याख्याने मृतशरीरेऽपि पुरुषशब्दप्रसक्तिः, तत्र हि व्यापकत्वेनात्मनः सद्भावेऽपि शरीरिशब्दोपात्तमनःसंबन्धाभावात् । इन्द्रियाणां च भौतिकेन्द्रियपक्षे पञ्चमहाभूतग्रहणेन ग्रहणम्, आहङ्कारिकेन्द्रियपक्षे तु शरीरिग्रहणेन ग्रहणं वाच्यम् । कस्मादेवंभूत एवात्र पुरुष उच्यते ? न पुनश्चेतनाधातुमात्ररूपः प्राणिमात्ररूपो वेत्याह—तस्मिन् क्रियेति । क्रिया व्याधिहरा स्वास्थ्यपालनरूपा च तस्मिन् पुरुषे । कुतः पुनस्तस्मिन्नेव क्रिया ? न पुनर्हस्त्यश्वादावपि प्राणिमात्रे ? इत्याशङ्कायां हेतुगर्भं विशेषणमाह—सोऽधिष्ठानमिति । स एव नरजातिः पुरुषो यस्मादिहायुर्वेदविधेयचिकित्सारूपायाः क्रियायाः, तथा क्रियासंपाद्यफलस्यारोग्यादेरधिष्ठानमाश्रयो न तु गजादिः; तस्मात्तस्मिन्नेव क्रिया ।

---

१ '°योगत्वं' इति **मु.** । २ 'परंपरोपसंबन्धः' इति **ह.** । ३ 'पुरुषशब्देन' इति **ह.** । ४ 'मोक्षाद्यनुविचारणीयं' इति **मु.** । ५ '°परत्वात्' इति **मु.** । ६ 'ग्राह्याः' इति **मु.** ।

अथ कथं गजादयो वृक्षादयोऽपि नास्याधिष्ठानमित्याशङ्का, ततः प्रश्नः—कस्मादिति। तदत्र प्रधानत्वेन नर एवाधिकारीति दर्शयन्नाह—लोकस्य द्वैविध्यादित्यादि। लोकद्वैविध्ये नरव्यतिरिक्तस्य स्थावरजङ्गमस्य यस्मान्नरोपकरणत्वं, नरस्तूपकार्यः, तस्मान्नर एव प्रधानत्वादधिष्ठानमिति प्रकरणार्थः। प्रधाननरविवेचनार्थमुक्तं द्वैविध्यं विभजते—स्थावरो जङ्गमश्च। स्थावरः स्थितिशीलो वृक्षादिः, जङ्गमो गमनशक्तो नरकरितुरगादिः। द्विविधताविवरणप्रस्तावाच्चिकित्सोपयुक्तं प्रकारान्तरेण द्वैविध्यमाह—द्विविधात्मक एवाग्नेयः सौम्यश्च। द्विविधः अग्नीषोमरूप आत्मा स्वभावो यस्य स तथा; अग्निभूताधिदैवतस्वभाव आग्नेयः, सोमभूताधिदैवतस्वभावः सौम्यः। यद्यपि सर्वं द्रव्यं सौम्यमाग्नेयं च पाञ्चभौतिकमिति कृत्वा पञ्चभूतारब्धं सर्वं, तथाऽपि वस्तुस्वाभाव्यात् प्रायः क्वचिदग्निगुणस्यौष्ण्यस्याधिक्यं भवति, क्वचित् सोमगुणस्य शैत्यस्याधिक्यं भवतीत्याह—तद्भूयस्त्वादिति। अत एवोत्पत्तावपि "सौम्यं शुक्रमार्तवमाग्नेयम्" (शा. अ. ३) इत्यभिधास्यति। पृथिव्यादिगुणोत्कर्षतया पञ्चात्मकत्वमपि भवतीत्याह—पञ्चात्मको वेति। प्रत्येकभूतगुणाधिक्यं च भूमिप्रविभागीयाध्याये वर्णनीयम्। जङ्गमप्रभेदं वर्णयितुं जङ्गमप्रकारानाह—तत्रेत्यादि। भूतग्रामः प्राणिसमूहः। आदौ संस्वेदजपाठ ऊष्मणो जरायुजादावपि कारणत्वात्; तदनु जरायुजाभिधानं, प्राधान्यात्; तदनु अण्डजाभिधानम्, उद्भिज्जेभ्यो बहूपयोगात्। केचित् "ब्रह्मणोऽपि संस्वेदजादिक्रमेण प्रजासृष्टिरित्ययमेव क्रम उक्तः"। जरायुजाः नरादयः, संस्वेदजाः अण्डजाः पक्षिप्रभृतयः[1], उद्भिज्जा भेकादयः। एवं प्रपञ्चिते लोके नरस्य प्रधानत्वेनाह—तस्योपकरणमन्यदिति। अन्यत् पश्वादि वृक्षादि चेह शास्त्रे नरोपकरणतया प्रतिपादनीयं, पुरुषश्चोपकार्य एव; तथा जङ्गमेभ्यः क्षीर-नख-रोम-चर्म-मूत्र-वसा-मांसादि नरोपकरणतया वक्तव्यं, वृक्षादयश्चाहारौषधादिना विनियोज्याः। यद्यपि पश्वादिवृक्षाद्युपकारकत्वं पुरुषस्य पानीयदानादिना, तत् स्वोपकारार्थैवेति न तदुपकरणता पुरुषस्य। अपिच नर एव धर्मार्थकाममोक्षसाधकतया उपदेशानुष्ठानक्षमतया च विशेषेणोपकारविषयमधिकरोति, नरोपकारेणैव पश्वाद्युपकारो भवति। येन पश्वादयो जन्मान्तरमासाद्य मनुष्यतां यास्यन्त्येव। वृक्षास्तु चेतनावन्तोऽपि तमश्छन्नज्ञानतया शास्त्रोपदेशाविषया एव। यदुच्यते—"वृक्षगुल्मं बहुविधं विविधास्तृणजातयः। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः॥ एतदन्ताश्च गतयो ब्रह्माद्याः परिकीर्तिताः" (मनुस्मृति. अ. १) इति। सोऽधिष्ठानमिति प्रतिज्ञातमर्थमितरलोकोपकरणीयतया व्यवस्थापितं निगमनेन पुनर्दर्शयति—तस्मात् पुरुषोऽधिष्ठानमिति; निगमनत्वादेव न पुनरुक्तिः॥ २०॥

**तद्दुःखसंयोगा व्याधय इत्युच्यन्ते॥ २१॥**

संप्रत्यधिष्ठाने ज्ञाते निवर्त्यो व्याधिर्ज्ञेय इति तल्लक्षणमाह—तद्दुःखसंयोगा व्याधय इति। एवं यद्यपि व्याधिज्ञानाधीना चिकित्सेति प्रथमं व्याधिलक्षणमधिकरोति, तथाऽप्या-

१ 'मशकादयः' इति ह.।

अयं पुरुषं विना व्याधिरपि न संभवतीति प्रथमं पुरुषोऽभिहित इति साधु कृतम्। तदिति निर्दिष्टपुरुषप्रत्यवमर्शकं, दुःखं प्रतिकूलवेदनीयमात्मगुणः, तदर्थं संयोगो येषां ते तथा; किंवा संयोगशब्दः करणापादानाधिकरणार्थे घञा साध्यः; अनेनापि येन हेतुना, यतो वा, यस्मिन् वा सति, दुःखं संयुज्यते स व्याधिः । संयोगशब्देन सम्यग्योग-वाचिना यथोक्तपुरुषसंमूर्च्छनविशेषो लभ्यते, तेन दुःखार्थं भुज्यमानानां[3] शीतातपादीनां शरीरे संमूर्च्छनविशेषाभावान्न व्याधित्वम् । अनेन लक्षणेन चरके "विकारो धातुवैषम्यं" (च. सू. अ. ९) इत्यनेनोक्तस्य वातादिवैषम्यप्रपञ्चस्य दुःखजनकस्य मानसस्य च कामादेस्तथा प्रनष्टशल्यादीनां तथा स्वाभाविकानां क्षुज्जरादीनां दुःखाय संप्रयुज्यमा-नानां सुव्यक्तं लक्षणं भवति । चरकोक्तलक्षणेन तु मानसादीनां कष्टसृष्ट्या ग्रहणं, मानसा-नामग्रहणमेव वा, शारीरलक्षणस्यैव तत्रोक्तत्वात् । न्यच्छ-व्यङ्ग-तिलकालकादयस्त्विह विकृ-तिरूपतया ज्ञापिता[3] दुःखहेतवो भवन्ति, स्वल्पकण्ड्वादिकारका वेत्येतल्लक्षणयुक्ता इति नाव्याप्तिर्लक्षणस्य । ये तु दुःखस्यैव संयोगा व्याधय इति लक्षणार्थं वदन्ति, तन्मते ज्वरादीनां प्रसिद्धं व्याधित्वं परास्तं स्यात् । तथा व्याधिदुःखयोरेकत्वे वक्ष्यमाणं "तच्च दुःखं सप्तविधे व्याधावुपनिपतति" ( सू. अ. २४ ) इति परास्तं स्यात् । दुर्दुष्टं खं स्रोतः दुःखं दुष्टस्रोतः, तन्निमित्तकः संयोगो येषां ते व्याधयः; तदुक्तं—"कुपितानां हि दोषाणां शरीरे परिधावताम् । यत्र सङ्गः खवैगुण्याद् व्याधिस्तत्रोपजायते"—(सू. अ. २४) इति तु पक्षो मानसव्याध्यग्राहकत्वान्नोद्भाव्यते[4] ॥ २१ ॥

**ते चतुर्विधाः—आगन्तवः, शारीराः, मानसाः, स्वाभाविकाश्चेति २२**

व्याधीनां सामान्येन लक्षितानां विभागमाह—ते चतुर्विधा इति । तत्राप्यागन्तूनां प्रागभिधानं प्राग्भावित्वात् पूर्वमुक्तादेव । आगन्तुकारणजा आगन्तवः । तदनन्तरं शारीरा बहुत्वादेवोक्ताः । तदनु मानसाः स्वाभाविकापेक्षया चिकित्सातारतम्यविषयतयोक्ताः । कर्माहिताः पुरुषस्वभावादेव हेत्वन्तरनिरपेक्षत्वाज्जायमानाः स्वाभाविकाः । एतच्चातुर्वि-ध्योपदर्शनं भिन्नचिकित्सितत्वादिना ज्ञेयम् । तथा हि—आगन्तौ क्षतोष्मप्रशमनार्थं मधुस-र्पिर्दानादि ज्ञेयं, शारीरेषु दोषापेक्षिणी प्रायश्चिकित्सा, मानसेषु ज्ञानविज्ञानादिरूपा, स्वाभाविकेष्वाहारादिरूपा रसायनादिरूपा च ॥ २२ ॥

**तेषामागन्तवोऽभिघातनिमित्ताः ( ॥ १ ॥ );**

उद्दिष्टे चातुर्विध्ये आगन्तून् विवृणोति—तेषामित्यादि । अभिहननमभिघातः शस्त्र-भूत-विषाग्नि-संप्रहारादिभिर्ज्ञेयः । यदुक्तं चरके—"ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः ॥ नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति" ( च. सू. अ. ७ ) इति ॥ ( १ ) ॥

**शारीरास्त्वन्नमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः ( ॥ २ ॥ );**

---

१ 'संपद्यते' इति ह. । २ 'युज्यमानानां' इति मु. । ३ 'ख्या(ख्या)पिताः' इति मु. । ४ '°त्वादिदुष्टत्वान्नोद्भाव्यते' इति मु. ।

शारीराणां व्यवहितं प्रत्यासन्नं च कारणं, तत्र बाह्यं कारणमाह—शारीरास्त्वन्न-मूला इति । अन्नशब्देनेह रोगकारणप्रस्तावाद्विषममन्नं योग्यत्वाद्ग्राह्यम् । अन्नवैषम्यं च वक्ष्यमाणद्वादशाशनप्रविचारवैषम्येण । मूलशब्दः प्रधानकारणवचनः, यथा 'प्राणिनां पुनर्मूलमाहारः' इत्यत्र; तेन द्वादशाशनप्रविचारविषमान्नप्रधानकारणका इत्यर्थः । प्राधान्यं तु विषमान्नस्य भूरिशारीररोगकारणतया; ततश्चाप्रधानरोगकारणान्तरमपि सूचितं भवति । तेन यदुक्तं चरके—"कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च । द्वयाश्र-याणां व्याधीनां त्रिविधो हेतुसंग्रहः" ( च. सू. अ. १) इति; तथाऽत्रैव "शारीराणां विकाराणामेष वर्गश्चतुर्विधः । प्रकोपे प्रशमे चैव हेतुरुक्तश्चिकित्सकैः" इति; तत्सर्वं सूच-नात् संगृहीतं भवति । अन्ये तु विषमान्नविशेषणतया विषमान्नसाहचर्याद्विषमकाला-दिसंग्रहणं व्याख्यानयन्ति; तच्च नातिस्फुटम् । अन्नमूला इत्यनेन शारीररोगोत्पत्तौ प्राधान्यख्यापनार्थमुक्तेनाव्याप्तिं मन्यमानः प्रत्यासन्नहेतुकथनेन सर्वशारीररोगव्यापकल-क्षणान्तरं दर्शयन्नाह—वात-पित्त-कफ-शोणित-सन्निपातवैषम्यनिमित्ता इति । अत्र प्रथमं वात उक्तः, आशु भूरिविकारकर्तृत्वादिना प्राधान्यात्; तदनु पित्तं, श्लेष्मापेक्षया भूरिविकारकर्तृत्वादिना प्राधान्यात्तथाऽऽशुकारित्वाच्च; शोणितमन्ते कृतं, तस्य मतभे-देनादोषत्वात् । तथा हि शोणितं स्वातन्त्र्येणादूषकत्वात् प्रकृत्यनारम्भकत्वाच्च पर-मार्थतो न दोषः; तथाऽपि शल्यतन्त्रेऽस्मिन् व्रणः प्रधानं, व्रणेषु मध्ये भूरिदाहवेदनादि-विकारहेतुतया व्रणपाके च स्वयमपि पाकप्रयोजकत्वादिना प्राधान्येन दृष्टत्वाद्दोषवदुपचा-राद्दोषतयोक्तम् । यदुक्तं—"कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य । पचत्यतः शोणितमेष पाको मतोऽपरेषां विदुषां द्वितीयः" ॥ ( सू. अ. १७ ) इति । अत एव व्रणप्रश्नेऽप्युक्तं "तदेभिरेव दोषैः शोणितचतुर्थैः शरीरमिदं धार्यते" ( सू. अ. २१ ) इति । यत्र त्वेषा विवक्षा नास्ति तत्र कायचिकित्सावच्छोणितं निरस्य त्रय एव दोषा उच्यन्ते । तदुक्तं—"सर्वेषामेव व्याधीनां वातपित्तश्लेष्माण एव मूलं, तल्लिङ्गत्वात्" ( सू. अ. २४ ) इत्यादि । एषां संनिपतनं मेलकः सन्निपातः द्वाभ्यां त्रिभिश्चतुर्भिर्वा । एषां पञ्चानां वैषम्यं क्षयेण वृद्ध्या वा क्षयवृद्धिभ्यां वा ज्ञेयम् । संनि-पातवैषम्यं तु यद्यपि वाताद्यवयववैषम्येणैव लब्धं, यतो यथाभूता प्रत्येकं वातादयो विकृ-तास्तथाभूता एव ते मेलकेऽपि; यदुक्तं चरके—"निदाने पूर्वमुद्दिष्टा या पृथग्द्वन्द्वजा-कृतिः । संसर्गसंनिपातानां तया चोक्तं स्वलक्षणम्" ( च. चि. अ. ३ ) इति । अत्रापि चोक्तम्—"सर्वजे सर्वलिङ्गानि" ( उ. तं. अ. ३९ ) इति । तथाऽपि नायं सिद्धान्तः यत् संयुज्यमानलक्षणयुक्त एव परं संयोगो भवति, किंतु क्वचित् संयोगमहिम्नैव संयु-ज्यमानधर्मातिरिक्तं कार्यं भवति । यथा मधु-घृतसंयोगे मारकत्वं, यदुक्तं चरके—"सं-योगस्तु द्वयोर्बहूनां वा द्रव्याणां संहतीभावः, स विशेषमारभते, यं नैकैकशो द्रव्याणि;

---

१ 'चये कोपे शमे चैव' इति पा. । २ 'भूरिविकारोत्पादात्' इति मु. । ३ 'त्रिविधा प्रोक्ता या पृथग्द्वन्द्वजज्वराकृतिः' इति पा० ।

यथा—मधु-सर्पिषोः" ( च. वि. अ. १ ) इत्यादि । तथा पुनरुक्तमवयवप्रभावानुमानेन समुदायप्रभावानुमानमभिधाय "नत्वेवं खलु सर्वत्र; नहि विकृतिविषमसमवेतानां नानात्मकानां परम्परेण चोपहतानामन्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसातुं शक्यम् । तथायुक्ते हि समुदाये समुदायप्रभावतत्त्वमेवोपलभ्य ततो द्रव्यविकारप्रभावतत्त्वं व्यवस्येत्"—( च. वि. अ. १ ) इति । विकृत्या कारणबलाहितया विषमः प्रकृत्यननुगुणः समवायो विकृतिविषमसमवायः, प्रकृत्या संयुज्यमानानां स्वभावेन समोऽनुगुणः समवायः प्रकृतिसमसमवायः; एतत् पक्षद्वयं संसर्गाद्यारब्धे व्याधौ भवति, तेनात्र विकृतिविषमसमवायरूपं वैषम्यं ग्रहीतुं संनिपातग्रहणं कृतम् । तथा हि सुश्रुते—"सर्वलिङ्गं तु" इत्यतिदेशं कृत्वा पुनर्विकृतिविषमसमवायारब्धज्वरलक्षणार्थमुक्तं यद् "विशेषं चात्र मे शृणु । नात्युष्णशीतः" (उ. तं. अ. ३९) इत्यादि; तथा चरकेऽपि "निदाने पूर्वमुद्दिष्टा" इत्युक्त्वाऽपि पुनरुक्तं यत्–"संनिपातज्वरस्योर्ध्वमतो वक्ष्यामि लक्षणम् । क्षणे दाहः क्षणे शीतं" ( च. चि. अ. ३ ) इत्यादिना विकृतिविषमसमवायारब्धज्वरलक्षणम् । ननु वातादयः परस्परं विरुद्धगुणाः, "विरुद्धगुणसंनिपाते तु भूयसाऽल्पमवजीयते" ( च. वि. अ. १ ) इति वचनं, तेन वायुना रूक्षविशदगुणेन स्निग्धगुरुपिच्छलगुणः कफो हन्तव्यः, एवं पित्तेनोष्णादिगुणेन शीतादिगुणः कफो वायुर्वा हन्तव्यः, एवं दोषाणां संनिपात एव न संभवति, कुतस्तस्य कार्यं व्याधिरिति । मैवं, विरोधिभावानां कार्योन्नयनेऽन्यत्र दृष्टत्वान्नादृष्टमाकल्पयितुं पार्यते, यतोऽन्यत्र तोयदहनयोर्विरोध उपलब्धः, तत् किं पाञ्चभौतिकद्रव्यारम्भेऽपि तयोर्विरोधात् पाञ्चभौतिकं द्रव्यं न भवति? तोयाग्निगुणातिरेकत्वादम्लो रसो न भवति? तस्मादुपलब्धत्वाद्दोषमेलकस्य तज्जन्यस्य च संसर्गादिजन्यव्याधिरूपस्य स्वभावे पर्यनुयोगो न युक्तः । "विरुद्धगुणसंनिपाते हि भूयसाऽल्पमवजीयते" इति वचनं वस्तुस्वभावोपपादितविषयव्यतिरेकेण चरितार्थम् । वस्तुस्वभावस्तु उत्सर्गापवादन्यायाद्बाधको भवत्येव । यथा—त्रिदोषकरद्रव्यगता गुणा दोषानसमान् कुर्वते परं, न तु दोषविरुद्धगुणत्वेन दोषहरणं कुर्वते, त्रिदोषकर्तृत्वप्रभावात् । तथाऽऽमलकेऽम्लत्वं वातं हन्ति, माधुर्यशैत्ये पित्तं घ्नतः, श्लेष्माणं च कषायतिक्तत्वे; न त्वम्लं पित्तं जनयति, कषायशैत्यादिपराभूतं वा वातं जनयतीत्यादि । यदुक्तं—"हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः । कफं कषायतिक्तत्वात् फलेभ्योऽप्यधिकं तु तत्" ( सू. अ. ४६ ) इति । तस्माद्दोषाणां विरुद्धगुणत्वेऽपि स्वभावोऽयं—यत्-न परस्परमुपघ्नन्तीति दृष्टत्वादेवावधार्यते । एवंभूतस्वभावत्वे तु दोषाणामदृष्टमेव कारणं, प्राणिनां दुःखजनकाधर्मेण हि ते विरोधेन निवेशिताः, अतः संसर्गादिजन्यव्याधयः प्राणिनः पीडयन्ति । यदुक्तं दृढबलसंस्कारे—"विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहजसात्म्यत्वाद्घोरं विषमहीनिव" (च. चि. अ. २६) इति । सहजं स्वाभाविकं दैवकृतम्, अनेन च व्याख्यानेन "यथा दोषाः सहजत्वेन सहोत्पन्नत्वेनान्योन्यं नोपघ्नन्ति तथा रसरक्तादीनपि सहजातान् नोपहन्युः" इत्यादि यदुच्यते कैश्चित्

तदनभ्युपगमादेव निरस्तम् । दोषाः परस्परं नोपघ्नन्ति–इति वचनं प्रायोऽनुपघातपरं, तेन क्वचिदुपघातोऽपि भवतीत्येके; यथा–अभिवृद्धेन वायुना दुर्बलस्य श्लेष्मणः क्षयः, तथा अश्मर्यां वातेन सोष्मणा कफस्यैव दुःशोषणादश्मरी भवतीति । तथा चरके–"कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि संततम् । निष्प्रत्यनीकं कुरुते" ( च. चि. अ. ३ ) इति वचनात् प्राकृतानां वातादीनामविरोधो विरोधश्चोक्तः । तथा रसविमाने दोषाणामपि विकृतिविषमसमवायारब्धानामुक्तं यत् "परस्परेणोपहतानां" ( च. वि. अ. १ ) इत्यादि, तदेवं क्वचिद्विरोधेऽपि भूयोऽविरोधात् संसर्गसंनिपातसंभवो व्यवस्थित एव । ननु चरके वातादीनां वैषम्यमेव व्याधिः "विकारो धातुवैषम्यम्" ( च. सू. अ. ९ ) इत्यनेनोक्तः, इह तु वातादिवैषम्यनिमित्तव्याधिर्वैषम्यकारणक उच्यते, तत् कथं न विरोधः ?। ब्रूमः—इहाद्यं धातुवैषम्यमव्यपदेश्यं सूक्ष्मतया परित्यज्य तत आरब्धाश्वयादिरूपधातुवैषम्यविशेषाः सर्व एव व्याधयो गृह्यन्ते; आद्यं तु धातुवैषम्यमल्पत्वात् प्रतीकारत्वराया अविषयतया चोपेक्षितम् । चरकेण धातुसाम्यरूपारोग्यव्यतिरिक्तसर्वावस्थाव्याप्त्यर्थं सूक्ष्मदृष्टितया तल्लक्षणमुक्तं, तेन चरकेऽपि प्रदेशान्तरे रोगव्यवहाराय धातुवैषम्यज एव व्याधिरुक्तः । यथा–"स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे" ( च. सू. अ. १९ ) इत्यादिना । दोषाणां स्वमानक्षीणतारूपे तु वैषम्ये दोषलिङ्गहानिर्दोषवैषम्यकार्यतया व्यवस्थाप्या, यदुक्तं—"क्षीणा जहति लिङ्गं स्वं" ( च. सू. अ. १७ ) इति । द्विविधं हि दोषाणां लिङ्गं—स्वभावरूपं तथा कार्यभूतं; तत्र दोषक्षयात् कार्यरूपलिङ्गक्षये कारणत्वं व्यक्तमेव, दोषस्वभावरूपलिङ्गक्षये तु दोषक्षयस्य कारणत्वं सूक्ष्मं गवेषणीयमल्पत्वादुपेक्षणीयं वा ॥ ( २ ) ॥

**मानसास्तु क्रोध[1]शोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति (॥ ३ ॥);**

संप्रति मानसानाह—मानसास्त्वित्यादि । क्रोधो द्वेषभेदः, येन प्रज्वलितमिवात्मानं मन्यते; शोकः पुत्रादेरभीष्टस्य निष्प्रत्याशवियोगचिन्तनं; भयं पीडाहेतावशक्यपरिहारताज्ञानं; हर्षः सुखचिन्तनं; विषादोऽनुष्ठेये आत्मनोऽशक्तताज्ञानम्; ईर्ष्या समविभागनीयद्रव्ये पराभिनिवेशप्रतिषेधेच्छा; अक्षीयप्रमाणवस्तुपरित्यागेच्छा (?) असूया, यथा—अवर्जनीयादुदपानात् 'मा उदकं पिब' इति; दैन्यं निरुपकरणतया आत्मनि निन्दितः प्रत्ययः; परगुणभूत्वपिधानेच्छा मात्सर्यं; कामिनीविषया प्रार्थना कामः; लोभो विषयेषु पुनः पुनः प्रार्थना; आदिग्रहणात् मानमदादीनां ग्रहणम् । इच्छाद्वेषभेदैर्भवन्तीति इच्छाभेदाः शोक-हर्ष-दैन्य-लोभादयः, द्वेषभेदाः क्रोधेर्ष्याऽसूया-मदादयः । एते च मानसास्तदात्वेन स्थित्वा च दुःखजनकत्वाद् व्याधयः, हर्षादयो हि न तदात्वेन दुःखहेतवः (॥ ३ ॥)

**स्वाभाविकास्तु क्षुत्पिपासाजरामृत्युनिद्राप्रकृ( भृ )तयः (॥ ४ ॥) २३**

---

१ 'क्रोधशोकदैन्यकामविषादेर्ष्यासूयामात्सर्यलोभादय इच्छाद्वेषनिमित्ताः' इति ता. ।

स्वाभाविका इत्यादि। सुखदुःखभाजककर्मारब्धशरीरस्वभावादेव भूताः । तथा हि क्षुत्-पिपासा-निद्राः शरीरस्थित्यर्थमेव कर्मणा कृताः; न हि क्षुत्-पिपासान्तरेणाहारपाने, आहारपाको वा निद्रां विना भवति; जरा तु कर्माधेययुगनियतमृत्युपूर्वतनकार्यं; मृत्युशब्देन चेह मृत्युप्रत्यासन्ना मर्मभेदादयो भण्यन्ते, त एव हि दुःखजनकत्वेन व्याधिरूपा भवन्ति ॥ २३ ॥

**त एते मनःशरीराधिष्ठानाः ॥ २४ ॥**

मनः शरीराधिष्ठाना इति मनोऽधिष्ठानाः कामादयः, शरीराधिष्ठाना अर्बुदादयः, मनःशरीराधिष्ठाना अपस्मारादयः । तत्र मानसः प्रथमं मनः पीडयति, पश्चाच्छरीरम्; एवं शारीरोऽपि प्रथमं शरीरे भूतः पश्चान्मनः पीडयति । यदुक्तं चरके ज्वरमधिकृत्य, "शारीरो जायते पूर्वं देहे, मनसि मानसः" ( च. चि. अ. ३ ) इति । पुरुषलक्षणेनात्मनः शरीरेषु गृहीतेष्वात्मा निर्विकारतया व्याध्यधिष्ठानं नोक्तः । यदुक्तं चरके— "निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः । चैतन्ये कारणं, नित्यो द्रष्टा पश्यति हि क्रियाः" ( च. सू. अ. १ ) इति ॥ २४ ॥

**तेषां संशोधनसंशमनाहाराचाराः सम्यक्प्रयुक्ता निग्रहहेतवः ॥२५॥**

व्याधीनां सूत्रं हित्वा तेषां चिकित्सासूत्रमाह—तेषामित्यादि । दोषं व्याधिं च शोधयति बहिर्निःसारयतीति शोधनम्; एतद् द्विविधं—बहिःशोधनम्, अन्तःशोधनं च । अन्तःशोधनं वमन-विरेचनादि, बहिःशोधनं शस्त्र-क्षाराभ्युद्वर्तनादि । संशम्यते व्याधिरनेनेति संशमनं, तदपि बाह्यमालेपन-परिषेकाभ्यङ्गादि, आभ्यन्तरं पाचन-लेखन-बृंहण-रसायनादि । यदुक्तं—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते—" इति । आह्रियत इत्याहारोऽशितपीतलीढखादितभेदवान्; व्याधिप्रशमनं प्रति प्रधानकारणतया पृथक् पाठः । उच्यते हि—"विनाऽपि भेषजैर्व्याधिः पथ्यादेव निवर्तते" इति । आचरणम् आचारः काय-वाङ्मनःकर्म; कायिकं कर्म गमनव्यवायनृत्यादि, वाचिकं पाठगीतादि, मानसं चिन्ताध्यानादि; एतदपि व्याधिनिग्रहकारणं, संशोधन-संशमनादेतदपि पृथगेवान्तःपरिमार्जनबहिःपरिमार्जनभेषजाहाराचारतया व्यवह्रियमाणतया आहारादपि पृथक् पठितम् । सम्यक्प्रयुक्ता इति देशकालादीन् समीक्ष्यानुगुणतया युक्ताः । किंवा आह्रियत इत्याहारः सर्वमभ्यङ्गादि व्यवायव्यायामादि च गृह्यते, तयोः प्रत्येकं विशेषणं संशोधनं संशमनं चेति; संशोधनसंशमनत्वं चाहाराचारयोर्यथोक्तं यथायोग्यतया योजनीयम् । स्वास्थ्यवृत्तिकरोऽपि ह्याहारो यदि व्याधिप्रशमे व्याप्रियते तदा शमन एव भवति ॥ २५ ॥

**प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च । स षट्सु रसेष्वायत्तः; रसाः पुनर्द्रव्याश्रयाः; द्रव्याणि पुनरोषधयः । तास्तु द्विविधाः— स्थावरा जङ्गमाश्च ॥ २६ ॥**

इदानीमुक्तसंशोधनादौ स्थावरादिभेदेनौषधद्रव्यं निर्देष्टुमाहारमेव तावत् प्राधान्यख्याप-

नार्थमाह—प्राणिनामित्यादि । आहारप्राधान्यख्यापनं वा स्थावरादिद्रव्यमौषधरूपं व्याकरिष्यति । मूलमिति प्रधानकारणं, प्रधानत्वं हि शुक्रशोणितसंयोगात् प्रभृत्याहारस्य प्राणिकारणत्वात्; साधारण्येन प्राणिनामिति वचनं सर्वप्राणिमूलतयाऽप्याहारस्य प्राधान्यख्यापनार्थम् । प्राणिमूलत्वेनैव प्राणिगतबलादिहेतुत्वे लब्धे पुनस्तद्वचनमुपादेयबलादिमूलतया विशेषोपादेयतोपदर्शनार्थम् । बलं व्यायामादिक्रियानुमेया शक्तिः; वर्णः प्रशस्तो गौरादिरेव; रसादीनां धातूनां यत् परं सारं हृदि स्थितं तदोजः, बलौजसोरेवं भेदेऽपि धातुमलक्षयवृद्धिविज्ञानीये यद् वक्ष्यति—"तद् बलं तदेवौजः" ( सू. अ. १५ ) इति, तस्यार्थस्तत्रैव दर्शनीयः । स षट्सु रसेष्वायत्त इत्यनेन वीर्याद्यपेक्षत्वेऽपि रसप्रधानतामाहारस्य दर्शयति । अत एव "एकरसाहारः कर्शनीयानां, सर्वरसाभ्यवहारो बलकराणाम्" ( च. सू. अ. २५ ), तथा "पूर्वं मधुरमश्नीयात्" ( सू. अ. ४६ ) इत्यादिना रसद्वारा भूय आहारोपदेशः । रसाः पुनर्द्रव्याश्रयिण इति रसप्रसङ्गेन संशोधनोक्तं कर्मवद्द्रव्यं निर्देष्टुमुक्तम् । द्रव्याणि पुनरौषधय इति प्राधान्येन रसाधारतयोपयुज्यमानानि द्रव्याण्यौषधयः । तेन शुद्धानां वातादिभूतानामिहाग्रहणं, जलस्य त्वाहारग्रहणेनैव ग्रहणमिति व्याख्यानयन्ति । औषधिशब्देन चेह स्थावरजङ्गमवत् पार्थिवानामपि ग्रहणम् । तदुक्तं चरके—"पुनस्तत्त्रिविधं ज्ञेयं जाङ्गमौद्भिदपार्थिवम्—" ( च. सू. अ. १ ) इति । तथाऽत्रापि "लोको हि द्विविधः स्थावरो जङ्गमश्च" इति निर्देशेनैव लोकविवृत्यर्थं पार्थिवोऽपि वक्तव्यः । तथाऽपि तास्तु द्विविधा इत्यनेन कषायादिभूरिकल्पनोपयोग्यतयाऽवयवभेदेन चोपयोज्यतया स्थावरजङ्गमरूपा उक्ताः, पार्थिवानामतद्वत्कर्मकारित्वेनाग्रहणम् । एतद्विविधावयवविवरणान्ते च विशिष्टौषधित्वादेव पार्थिवा उक्ताः ॥ २६ ॥

**तासां स्थावराश्चतुर्विधाः—वनस्पतयो, वृक्षा, वीरुध, ओषधय इति । तासु, अपुष्पाः फलवन्तो वनस्पतयः; पुष्पफलवन्तो वृक्षाः; प्रतानवत्यो[२] वीरुधः; फलपाकनिष्ठा ओषधय इति ॥ २७ ॥**

पुष्पं विना फलवत्यो वनस्पतय उदुम्बरादयः । पुष्पादुत्पन्नफला वृक्षा आम्रादयः । प्रतानो लतासंस्थानः, तद्वत्यो वल्लीप्रभृतयो वीरुधः । फलस्य पाकोद्भूतनाशाः शाल्यादयः, पाकनाशाः क्षवकादयः । एता वनस्पत्यादिसंज्ञा आगमसिद्धाः प्रतिपाद्यन्ते, उक्तं हि हारीतेऽपि—"फली वनस्पतिर्ज्ञेयो, वृक्षाः पुष्पफलोपगाः । ओषध्यः फलपाकान्ता, लता गुल्माश्च वीरुधः" इति ॥ २७ ॥

**जङ्गमाः खल्वपि चतुर्विधाः—जरायुजाण्डजस्वेदजोद्भिज्जाः । तत्र पशुमनुष्यव्यालादयो जरायुजाः, खगसर्पसरीसृपप्रभृतयोऽण्डजाः, कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः, इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः ॥२८॥**

जङ्गमभेदानाह—जरायुजेत्यादि । पूर्वोक्तसंस्वेदजादीनां जरायुजादिक्रमेण कथनं

---

१ 'पृथगुक्ताः' इति पाठश्चेत् साधु । २ 'प्रतानवत्यः स्तम्बिन्यश्च' इति डल्हणसंमतः पाठः ।

जरायुजादीनां जातावप्रतिनियमं सूचयति । तथाहि—पक्षिषु जतुकादयश्च जरायुजाः, सर्पेष्वहिपताका जरायुजा, पिपीलिकाः काश्चित् संस्वेदजाः काश्चिदण्डजा इत्यादि । अत्र पशूनामग्रेऽभिधानं भेषजप्रस्तावे प्राधान्यात् । व्याला हिंस्रपशवो व्याघ्रादयः, किंवा सर्पविशेषोऽहिपताका व्यालः ॥ २८ ॥

**तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्यासस्वरसादयः[1] प्रयोजनवन्तः; जङ्गमेभ्यश्चर्मनखरोमरुधिरादयः ॥ २९ ॥**

स्थावरावयवग्रहणे आदिग्रहणात्तैल-क्षार-कण्टकादयो गृह्यन्ते । जङ्गमेभ्य इत्यादावादिग्रहणाद् वसाऽस्थि-खुरादयः ॥ २९ ॥

**पार्थिवाः[2] सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः ॥ ३० ॥**

संप्रति यथोक्तात् संबन्धात् पार्थिवानाह—पार्थिवा इत्यादि । पार्थिवा इह स्थावरजङ्गमभेदं राशिद्वयं परित्यज्य पृथ्वीविकारा उच्यन्ते । सुवर्णं यद्यप्यन्यशास्त्रे आग्नेयमुक्तं, तथाऽपीह गुरुत्वकाठिन्याभ्यां पार्थिवमेवोच्यते । आदिग्रहणाल्लोहमलसिकतासुधादीनां ग्रहणम् ॥ ३० ॥

**कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहिमाभ्रसंप्लवादयः, कालविशेषास्तु निमेषकाष्ठाकलामुहूर्ताहोरात्रपक्षमासर्त्वयनादयः संवत्सरविशेषाः[3] ॥ ३१ ॥**

संप्रति स्थावरादिवद् व्याधिशमकतया व्याधिकारणतया च प्रवातादयो वक्तव्याः, ते च प्रायः कालकृता एव भवन्तीति कालकृतास्त्वित्यादिना प्राह । परमार्थतस्त्वकालकृताश्च पुरुषप्रयत्नकृतव्यजनादिनाऽपि प्रवातादयो भवन्ति । अत्र च प्रवातेन वातः, उष्णेन तेजः, वर्षेण जलं गृह्यते, तमसा ज्योत्स्नया चाकाशमपि गृह्यते । यदुच्यते–"आलोकतमसी व्योम" इति । तदेवमगृहीतजलानलानिलाकाशरूपं भूतचतुष्टयं कालकार्यं संगृहीतम् । हिमसंप्लवस्तुषारतोयम्, अभ्रसंप्लवो दुर्दिनम्; आदिग्रहणात् करकानिपातादयो गृह्यन्ते । प्रवातादिप्रयोजनं च "प्रवातं वर्जयेत्" (च. सू. अ. २५) "निवातमागारमाश्रयेत्" ( च. वि. अ. ७ ) तथा "शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्" ( सू. अ. ३५ ) इत्यादिग्रन्थेषु सुव्यक्तमेव । कालकृतास्त्वित्यत्र कालं प्रतिपादयितुमुपाध्यवच्छिनानेव कालभेदानाह—कालविशेषा इत्यादि । निरुपाधिस्तु कालो नेहोपयुक्त इति न दर्शितः । कालविशेषा इति उपाधिभिन्नकालविशेषाः, ते च निमेषादयः, निमेषादिप्रयोजनं च कालप्रकरणे प्रतिपाद्यमिति नेह विवृतम् ॥ ३१ ॥

**त एते स्वभावत एव दोषाणां संचयप्रकोपप्रशमप्रतीकारहेतवो भवन्ति प्रयोजनवन्तश्च ॥ ३२ ॥**

---

१ '°क्षीरनिर्याससारस्नेहस्वरसाः' इति ता. । २ 'पार्थिवास्तु सुवर्णरजतादयः' इति ता. । ३ '°मासर्त्वयनसंवत्सरयुगविशेषाः' इति ता. ।

कालविशेषाणामुद्दिष्टानां प्रयोजनमाह—त एते स्वभावत एवेत्यादि। स्वीयो भावोऽसाधारणशीतोष्णवर्षादिलक्षणः, ततो दोषाणां संचयादिहेतवो भवन्ति। दोषशब्देन चेह तत्कार्या विकारा ग्राह्याः; यतो दोषा एव हि तत्तदवस्थागता विकाराः। तत्र पित्तस्य वर्षासु चयः, शरदि प्रकोपो, हेमन्ते प्रशम इत्यादि ऋतुचर्योक्तम्। ऋतुवदहोरात्रेऽपि दोषचयादयो भवन्ति। प्रकोपशब्देन प्रकोपप्रसरस्थानसंश्रयादयोऽपि वक्तव्याः। प्रकृष्टः कोपः प्रकोपः, स च प्रसरादिसाधारणः। प्रशमशब्देन चेह कालकृत एव पुरुषप्रयत्ननिरपेक्षः प्रशम उच्यते; यथा हेमन्ते पित्तप्रशमः, ग्रीष्मे कफप्रशमः, इत्यादि ज्ञेयम्। प्रतीकारहेतव इत्यनेन तु पुरुषेण क्रियमाणे प्रतीकारे कालस्यानुगुणतया हेतुभावो दर्श्यते; यथा—वर्षासु बस्तिः, शरदि विरेचनं, वसन्ते वमनं; पूर्वाह्णे विरेचनं, ज्वरे सप्ताहादनन्तरमौषधदानमित्याद्यनुसरणीयम्। प्रयोजनवन्तश्च भवन्तीत्यनेन तु भेषजाद्युपकारकत्वेन प्रयोजनवत्तां दर्शयति। यथा—"लाजोत्पलोशीरकुचन्दनानि[१] दत्त्वा प्रवाते निशि वासयेच्च" (उ. त. अ. ४८) इति। यथा—"स खल्वाप्यो रस एकैकस्मिन् धातौ त्रीणि त्रीणि कलासहस्राण्यवतिष्ठते" (सू. अ. १४) इति। यथा—"स्नेहं मात्रासहस्रं तु धारयेत्"; तथा—"अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति" (चि. अ. ३७) इति बहुशास्त्रगतमूह्यम्॥ ३२॥

भवन्ति चात्र श्लोकाः—

**शारीराणां विकाराणामेष वर्गश्चतुर्विधः।**
**प्रकोपे प्रशमे चैव हेतुरुक्तश्चिकित्सकैः॥ ३३॥**

इदानीं सुखग्रहणार्थं दुर्बोधतानिरासार्थं चाधिकार्थं च बहुश्लोकेनाभिधातुं प्रवृत्तः श्लोकाभिधानमेव ब्रूते—भवन्ति चात्र श्लोका इति। अस्मिन्नर्थे उक्ते तदनुसङ्गादनुक्तेऽपि चार्थे इति श्लोका भवन्तीत्यर्थः। एतच्च परापरतन्त्रेषु क्रियमाणतया शिष्यबुद्धिसमाधानफलतया च क्रियते। श्लोकाभिधानफलं चरके यथा—"गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते। तद् व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गृह्यते[२]" (च. नि. अ. ८) इति। शारीरादिविकारा उक्तलक्षणाः। एष वर्गश्चतुर्विध इति स्थावर-जङ्गम-पार्थिव-कालकृतरूपः। कालो वर्षादिरूपो यत् पित्तचयादि करोति तदपि कालकृतवर्षशीतोष्णादिसहाय एव करोति, तेन कालकृतेनैव कालकार्यावरोधः। प्रकोप इत्युत्पादः, अस्ति हि प्रकोपशब्द उत्पादे; यदुक्तमन्नपाने—"कोपनं कफवातानां दुर्नाम्नां चाविकं दधि" (सू. अ. ४५); तथा चरकेऽप्युक्तं—"पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम्" (च. चि. अ. १४) इति; तथा "कुसुम्भतैलमुष्णं तु विपाके कटुकं गुरु। विदाहि च विशेषेण सर्वरोगप्रकोपणम्" (च. सू. अ. २७) इति। यदा तु प्रकोपशब्देनेह दोषावस्थाविशेष उच्यते, तदा

---

१ 'लाजाजलोशीरकुचन्दनानि' इति मुद्रितपुस्तके टिप्पण्यां पाठान्तरम्। २ 'गर्ह्यते' इति पा०।

विकाराणामित्यनेन दोषाणामित्यर्थ उन्नेयः । तथा पुनः प्रशमे इत्यनेनाशक्ययोजनायां विकारा एव वेद्याः; अन्यथा हि चतुर्वर्गस्य विकारप्रशमकत्वं न लभ्यते। किंच यदि प्रकोपशब्देन प्रसरादयः कथमपि लभ्यन्ते, तदा चयहेतुता चतुर्वर्गस्य नोक्ता स्यात्, तथा दोषेषु स्वमानक्षीणेषु विकारकारिषु प्रकोपशब्दो न वर्तते। (१अत्र कश्चिदपि प्रयोगो भवतीति कृत्वा चयं परित्यज्य प्रकोप इति कृतम् । उच्यते हि—"न केवलं चयं प्राप्य दोषाः कुप्यन्ति देहिनाम् । अन्यथाऽपि प्रकुप्यन्ति हेतुबाहुल्यतो बलात्" इति । तथा बलवद्विग्रहाद्वायुः, क्रोधात् पित्तं, तथा विषाद्दोषसंचयं विनाऽपि दोषप्रकोपो भवति । संचयः प्रकोपश्च ऋतुचर्योक्त एव परं भवतीति वदन्ति । एतच्च यथाऽस्माभिर्व्याख्यातमनारतं, तथा किंचिच्चयप्रकोपोदाहरणेषु सूक्ष्मतया २वक्तुं पार्यते । चयप्रत्याख्यानेन वा तत्र प्रकोपोऽपि प्रत्याख्यातुं शक्यते । येन तत्र प्रसरावस्थ एव दोषो बलवद्विग्रहादौ भूतः, नच दोषचयस्वभावैककारणकः, अन्यथाऽपि स्तोकस्तोकं सेव्यमानहेतुना उपचयरूपस्य चयस्य दुर्निवारत्वात् । व्रणप्रश्ने तु 'प्राक् संचयहेतुरुक्तः' ( सू. अ. २१ ) इत्यभिधानमुक्तसंचयोदाहरणार्थवादित्वादेवोपपन्नम् ) । ततश्च तद्धेतुता न स्यादिति कथंचिद्देशकालबलाबलं कृत्वाऽपि तदभिधाने कल्पनागौरवं स्यादिति प्रकोपशब्द उत्पादार्थ एव न्याय्यः । अत्र च भेषजाभिधानप्रस्तावे स्थावरादीनां विकारहेतुताभिधानं प्रस्तावागतत्वादुच्यते; तथा हि 'एवमेतत् पुरुषो व्याधिः' इत्यादौ भेषजत्वेनैवैनमर्थं संग्रहीष्यति । तथा चागन्तूनां मानसानां च प्रशमहेतुमेव परमभिधास्यति । अत्र प्रशमेचेत्यनेन याप्ययापनं याप्यव्याधावधिकदोषप्रशमनेन३ स्वास्थ्यरक्षणं चानागतरोगप्रशमनेन लभ्यते । एतच्चोक्तचतुर्वर्गस्योक्तपथ्यरूपतया विकारशामकत्वमपथ्यरूपतया च विकारजनकत्वं दर्शयति, न तु कृत्स्नं विकारस्य जनकं प्रशमकं च संगृह्णाति । तेन स्वतन्त्राणां शब्द-स्पर्श-रूप-रस-गन्धार्थानां तथा ४कायवाङ्मनःकर्मणां च विकारजनकशमकानां ग्रहणमिति न दोषः । तत्संग्रहणपक्षेऽपि स्थावरादिनाहारग्रहणादाहारसहचरितस्यापि ग्रहणम५र्थसत्वं (?); तेन शब्दादीनां कर्मणां च ग्रहणमित्येके । अन्ये त्वेतद्दोषपरिहारार्थमाहारः, तथाऽऽचारः, तथा पार्थिवः, तथा कालः, इति वर्गचतुष्टयार्थं कृत्वाऽऽचारेण कायवाङ्मनःशब्दादिग्रहणं वदन्ति ॥ ३३ ॥

**आगन्तवस्तु ये रोगास्ते द्विधा निपतन्ति हि ॥**
**मनस्यन्ये शरीरेऽन्ये तेषां तु द्विविधा क्रिया ॥ ३४ ॥**
**शरीरपतितानां तु शारीरवदुपक्रमः ॥**
**मानसानां तु शब्दादिरिष्टो वर्गः सुखावहः ॥ ३५ ॥**

आगन्तूनां भेषजदर्शनार्थं विभागमाह—आगन्तव इत्यादि । मनसि भौतिकोन्मादा-

---

१ 'अत्र कश्चित्' इत्यादि 'एवोपपन्नम्' इत्यन्तः पाठो मुद्रितपुस्तके टिप्पण्यां लिखितः । २ 'बोद्धुं' इति पा० । ३ 'अधिकविकारप्रशमनेन' इति मु. । ४ 'कायात्मनः संयोगस्य कर्मणां च' इति ह. । ५ '°मप्रागल्भ्यम्' इति मु. ।

दयः, शरीरे अभिघातव्रणादयः। शारीरवदुपक्रम इति स्थावरादिरेव क्षतोष्मप्रतिषेध-कल्पनादिना कर्तव्यः । मानसानां त्वित्यत्र मानसशब्देन मानसत्वेनोक्ताः क्रोधादयोऽपि ग्राह्याः; एतेन मानसस्यापि कीर्तितस्य भेषजमुक्तं भवति । स्वाभाविकानां तु शारीरत्वाच्छारीरचिकित्सैव प्रोक्ता भवतीति तेषां न पुनः पृथग्भेषजविषयतया निर्देशः । शब्दादिरिति शब्द-स्पर्श-रूप-रस-गन्धाः। स चेष्टशब्दादिर्भेषजम्, अनिष्टस्य शब्दादेर्मानसव्याधिजनकत्वात्। मानसानां त्विति तु शब्दो भिन्नक्रमार्थः समुच्चयार्थश्च; तेन ज्ञानविज्ञानादीनां च मानसव्याधिहराणां ग्रहणम्। यदुक्तं—"प्रशाम्यत्यौषधैः पूर्वो दैवयुक्तिव्यपाश्रयैः । मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः" ( च. सू. अ. १ ) इति । यदि वा शब्दादिरित्यत्रादिशब्देन प्रकारवाचिना इष्टशब्दवन्मानसविकारप्रशमकप्रकाराः स्पर्शादयो ज्ञानविज्ञानादयश्च गृह्यन्ते ॥ ३४ ॥ ३५ ॥

**एवमेतत् पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातं भवति। तत्र पुरुषग्रहणात् तत्संभवद्रव्यसमूहो भूतादिरुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांसास्थिसिरास्नायुप्रभृतयः, व्याधिग्रहणाद्वात-पित्त-कफ-शोणित-संनिपात-वैषम्यनिमित्ताः सर्व एव व्याधयो व्याख्याताः, औषधग्रहणाद्द्रव्य-रस-गुण-वीर्य-विपाकानामादेशः, क्रियाग्रहणात् स्नेहादीनि च्छेद्यादीनि च कर्माणि व्याख्यातानि, कालग्रहणात् सर्वक्रियाकालानामादेशः ॥ ३६ ॥**

इदानीं तत्रास्मिन् पञ्चमहाभूतेत्यादिग्रन्थोक्तमर्थं संगृह्णाति-एवमित्यादि । पञ्चमहाभूतेत्यादिना पुरुषः, तद्दुःखेत्यादिना व्याधिः, तेषां संशोधनसंशमनेत्यादिना औषधं, कालविशेषास्त्वित्यादिना क्रियाकाल उक्तः; अपरे तु कालकृता इत्यादिना क्रियाकालं वदन्ति । क्रियाणां स्वेदवमनादीनां तथा छेद्यादीनां च प्रवृत्ति-निवृत्त्युपदर्शनकालः क्रियाकालः; एवं च क्रियाविशेषेऽपि कालः क्रियार्थमुपादीयमानतया क्रियां प्रति प्रधानं भवति, क्रियैव तु विधेयतया प्रधानं भवति; एतेन यदुच्यते—"कालयोगे क्रियाविशेषणत्वेनाप्राधान्यं स्यात्; 'तस्मिन् क्रिया' इति वचनाच्च क्रिया प्रधानीभूता, तस्मात् क्रिया औषधेन विशेषणीया, पुनः क्रियया च कालो विशेषणीयः" इति तन्निरस्तं भवति, कल्पनागौरवात् । संप्रति, एतच्चतुष्टयप्रपञ्चेन सकलतन्त्रार्थव्यापकतया बीजमिति वक्तव्यम्, अतः पुरुषादीनां यथा निखिलतन्त्रार्थव्यापकत्वं तदाह—तत्र पुरुषग्रहणादित्यादि । संभवत्यस्मात् पञ्चमहाभूतादिरूपश्चिकित्सापुरुष इति संभवः, स एव द्रव्यसमूहः, तस्य विशेषणं—भूतादिरिति । भूतानि आदीनि येषां तानि शुक्रशोणितादीनि गृह्यन्ते । अन्ये तु 'भूतानामादिर्भूतादिः' इति कृत्वा प्रकृत्यादीनि पञ्चतन्मात्रान्तानि ग्राहयन्ति । यदुच्यते—"प्रकृतेर्महानुत्पद्यते, महतोऽहङ्कारः, स च त्रिविधः-वैकारिको भूतादिस्तैजसश्च । तत्र वैकारिकात्तैजससहायादेकादशेन्द्रियाणि भवन्ति, भूतादेस्तु तैजससहायात्

---

१ '°सन्निपातागन्तुस्वभावनिमित्ताः' इति ता. ।

पञ्च शब्दतन्मात्रादीनि भवन्ति । तेभ्यस्तन्मात्रेभ्यः पञ्च खादीनि शब्दादिगुणानि महाभूतानि भवन्ति ।" ( शा. अ. १ ) इति । शुक्रशोणितादीनां च तत्संभवद्रव्यसमूह-शब्देन ग्रहणम्, आत्मनः पञ्चमहाभूतानां च पुरुषग्रहणेन मुख्यमेव ग्रहणम्, एवं सर्वग्रहणं भवत्येव; परन्तु शास्त्रकारेण शारीरे स्वयमेव भूतादिशब्दार्थः शुक्रादिविषय एव व्यवस्थापितः, यतो "भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते" ( शा. अ. १ ) इत्युक्त्वा, भूतेभ्यः परं नास्तीत्येतदर्थेऽयं ग्रन्थो हेतुतया चोपात्तः—"यतोऽभिहितं तत्संभवद्रव्यसमूहो भूतादिरुक्तः" ( शा. अ. १ ) इति । अत्र यदि भूतादिशब्दः प्रकृत्यादिभूतादपि परं ग्राहयति तदा कथं भूतेभ्यस्तु परं चिन्ता नास्तीति प्रतिपादनहेतुतां भजन्ते, तस्माद् यद्यपि योगिना नैष्ठिकचिन्तायां चिकित्सायां प्रकृत्याद्यपि चिन्तनीयं भवत्यपि, तथाऽपि शास्त्रकारेणैव एवं व्याख्यातत्वान्न प्रकृत्यादिग्रहणमिह भूतादि-शब्दार्थः । अङ्गं वक्षःप्रभृतिः[1], प्रत्यङ्गं पाण्यादि, तद्विकल्पा अङ्गुलिप्रभृतयः । त्वगादिषु प्रभृतिग्रहणेन स्रोतोधमन्यादीनां ग्रहणम् । सर्वे एवेति चतुर्विधा अपि व्याधयः । औषधग्रहणेन निर्दिष्टानां संशोधनादीनां स्थावरादीनां[2] ग्रहणं तावन्मुख्यमेव, साक्षादनु-क्तानां द्रव्य-रस-गुण-वीर्य-विपाकानामप्यादेशः । द्रव्यग्रहणेन द्रव्यशक्तेरचिन्त्यवीर्यशब्द-वाच्याया ग्रहणम् । गुणशब्देन वीर्यव्यतिरिक्तानां गुणानां संयोगप्रभृतीनां ग्रहणम् । केचित्तु गुणशब्दं न पठन्त्येव, तन्मते वीर्यादिकार्यतया श्रेष्ठगुणकार्यग्रहणम् । वीर्यं शीतमुष्णं च, यदि वा शीतोष्णाद्यष्टविधम् । विपाक इह मधुर-कटुरूपतया द्विविधः । उच्यते हि—"तद्द्रव्यमात्मना किञ्चित् किञ्चिद्वीर्येण सेवितम् । किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा" ( सू. अ. ४० ) इति । क्रियाग्रहणादिति क्रियाकालशब्दोपात्तात् क्रियाग्रहणात् । स्नेहादीनीत्यादिशब्दात् स्वेदन-विरेचनादीनां ग्रहणम् । तथा छेद्यादीनी-त्यादिशब्दाद् भेद्यादीनां ग्रहणम् । अत्र च शल्यतन्त्रतया यद्यपि छेद्यादिक्रिया प्रधाना, तथाऽपि च्छेद्यादिक्रियाणामपि स्नेहादिक्रियापूर्वकतया स्नेहादिक्रियायाः प्रथममभिधानम् । यदुच्यते—"उपवेश्य यन्त्रयित्वा घृताभ्यक्तं गुदं" (चि. अ. ६) इत्यादि । कालग्रहणात् क्रियाकालावरोध इति स्नेहादिक्रियाङ्गतया; "प्रतप्तकनकनिकरपीतलोहिते सवितरि स्नेहं पिबेत्" ( चि. अ. ३१ ); "सर्वस्नेहान् जीर्णान्ने प्रयुञ्जीत" इत्यादिना विहितक्रियाकाला-वरोधः । यस्तु कालः स्वरूपेण सौम्यगुणातिरिक्तत्वादिना चयादि करोति स भेषजग्रहण-गृहीतः परम् ॥ ३६ ॥

**भवति चात्र—**

**बीजं चिकित्सितस्यैतत् समासेन प्रकीर्तितम् ॥**
**सविंशमध्यायशतमस्य व्याख्या भविष्यति ॥ ३७ ॥**

इदानीमेतदुक्तं चतुष्टयं शल्यचिकित्सितपरसुश्रुततन्त्राभिधेयार्थस्य प्रसवहेतुतया बीज-मेव भवतीति दर्शयन्नाह—बीजमित्यादि । बीजं यथा तरोः प्रसवहेतुः, तथैव चिकित्सित-

---

१ 'अङ्गं धात्वादि' इति ह. । २ 'स्थावरादीनां' इति मु. पु. नास्ति ।

चतुष्टयस्य तन्त्राभिधेयस्य बीजं; चिकित्सितशब्देन चिकित्सारूपतया[1] कृत्स्न एव तन्त्रार्थोऽभिधीयते । विंशत्यध्यायकृतः स्तोमो विंशः । 'तटस्तोम' इति उणादितटप्रत्ययान्तः । यथा—विंशः स्तोमः, त्रिंशः स्तोमः । तेन विंशेनाध्यायसमूहेन सहितं सविंशम्; अध्यायशतमपि वेदोत्पत्त्याद्यध्यायशतम् । ये तु सहितं विंशमिति कृत्वोत्तरतन्त्रसहितं विंशमध्यायशतं व्याख्यानयन्ति; किंवा सलवणा यवागूरितिवदूनविंशमध्यायशतमिति व्याख्यानयन्ति, ऊनविंशशततां च वेदोत्पत्तिमध्यायं गतत्वादव्याख्येयमिति परित्यज्य वर्णयन्ति, तन्मते अध्ययनदानिके 'वेदोत्पत्तिः शिष्यनयः' इत्याद्यारभ्य 'सविंशमध्यायशतं पञ्चसु स्थानेषु विभक्तं भवति' इति, तथा "सविंशमध्यायशतमेतदुक्तं विभागशः" इति च विरुध्यते सूत्रस्य विवरणादिना विशेषेणाख्या व्याख्या । तत्र यद्यपि वेदोत्पत्त्यध्यायेनार्थचतुष्टयस्य सूत्रणं भूतमेव तथाऽपि वक्ष्यमाणाध्यायैः सह मिलित्वैव संपूर्णा व्याख्या भविष्यतीत्यनेन निर्दिष्टम् ॥ ३७ ॥

**तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्र-निदान-शारीर-चिकित्सित-कल्पेष्वर्थवशाद्विभज्योत्तरे तन्त्रे शेषानर्थान् वक्ष्यामः ॥३८॥**

यत् सविंशमध्यायशतमस्य व्याख्या भविष्यतीति तच्चाध्यायशतं सविंशं पञ्चसु स्थानेषु । अर्थवशादिति अर्थगत्या योऽध्यायो यत्र श्लोकस्थानादौ वक्तुमधिकरोति तत्रैव विभज्य, इति योजना । अथ किमेतावानेव तन्त्रार्थः ? तथा सति उत्तरतन्त्रवक्ष्यमाणार्थानभिधानान्न्यूनता स्यादित्याह—उत्तरे तन्त्रे शेषानर्थानिति । अत्राप्यर्थवशाद्विभज्य व्याख्यास्याम इति योजना । अत्रार्थवशता "यत् किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम्" इति कृत्वा शालाक्याद्यर्थावगमनम् । यद्वक्ष्यति—"अधिकृत्य कृतं यस्मात्तन्त्रमेतदुपद्रवान्" ( उ. सं. अ. १ ) इत्यादि । अत्र विभज्येति शालाक्यादिषु विभज्य ॥ ३८ ॥

**भवति चात्र—स्वयम्भुवा प्रोक्तमिदं सनातनं**
**पठेद्धि यः काशिपतिप्रकाशितम् ।**
**स पुण्यकर्मा भुवि पूजितो नृपै-**
**रसुक्षये शक्रसलोकतां व्रजेत् ॥ ३९ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने प्रथमोऽध्यायः ॥ १ ॥**

इदानीं परमाप्तप्रणीतायुर्वेदाध्ययनफलं शिष्यप्रोत्साहकमाह—स्वयम्भुवेत्यादि । स्वयम्भूर्ब्रह्मा । पठेदिति विशिष्टार्थानुसंधानतः पठेत् । पुण्यकर्मा इति पुण्यहेतुविशिष्टपाठकर्मा । पूजितो नृपैरिति व्याधिविमोक्षकतया धनसंमानादिना पूजितः, एतदैहिकं फलम्; असुक्षये प्राणविगमे शक्रसलोकतां शक्रसमानलोकतां व्रजेत्, एतच्च पारलौकिकं फलम् । यदा 'शक्रसुलोकतां' इति पाठस्तदा शक्रपूजितलोकतामित्यर्थः ॥ ३९ ॥

इति श्रीचक्रपाणिदत्तकृतायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने प्रथमोऽध्यायः ॥ १ ॥

---

१ 'चिकित्सापरतया' इति मु. ।

## द्वितीयोऽध्यायः ।

**अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये 'पठेत्तु' इत्यादिना पाठ उक्तः । स चोपनीतस्यैव युक्त इत्युपनयनार्थं शिष्योपनयनीयोऽभिधीयते–अथात इत्यादि । उपनयनं दीक्षा, तदधिकृत्य कृतोऽध्याय उपनयनीयः । पूर्ववच्छप्रत्ययः । ब्राह्मणादयो यद्यपि वेदपाठार्थं पूर्वमुपनीता एव, तथाऽपि यथा त्रयीपाठसमाप्तौ व्रतविशेषं कृत्वाऽथर्ववेदाध्ययनं, तथा आयुर्वेदाध्ययनेऽपि पुनर्दीक्षाविशेषस्तथेहोपनयनं बोद्धव्यम् ॥ १ ॥ २ ॥

**ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्यशौचार्थित्वविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहं च भिषक् शिष्यमुपनयेत् । स हि गुणवान्, तस्मै देयम् । अतो विपरीतगुणं नोपनयेत् । शूद्रमपि गुणवन्तमनुपनीतमध्यापयेदित्येके ॥ ३ ॥**

उपनयनयोग्यं पुरुषमाह—ब्राह्मणेत्यादि । अन्वयोऽत्रायुर्वेदाध्यायिकुलं; वय इति प्रथममध्यममेवाध्ययनोचितत्वात्; शीलं नैसर्गिकं वृत्तं, तच्चेह प्रशस्तमुचितमार्गप्रवृत्तिस्वरूपं गृह्यते; शौर्यं दुर्गेषु[2] विषमेषु गम्यं; शौचं स्नानादि बाह्यमान्तरं च मनःशुद्धिः; अर्थित्वं प्रकृते शास्त्रे ज्ञेयं[3]; विनय इन्द्रियजयः; शक्तिरिह शास्त्रग्रहणलक्षणा शक्तिर्ज्ञेया; बलं व्यायामादिक्षमं ज्ञेयं, ततो हि गुरुसेवापाठादौ च क्षमो भवति; मेधा धारणावती बुद्धिः; धृतिर्नियमात्मिका बुद्धिः; स्मृतिः अतीतार्थस्मरणं; प्रतिपत्तिरुपदिष्टार्थावबोध इति ज्ञेयः । तनुशब्दो जिह्वादिभिस्त्रिभिः, प्रसन्नशब्दश्च चित्तादिभिस्त्रिभिः संबध्यते । चेष्टा कायव्यापार इति । तनुजिह्वादयो वर्णोच्चारणादिसमर्थतयोपादेयाः, तनुजिह्वादयः सच्छिष्यलक्षणं वा । एते च गुणाः स्वरूपकथनेनैवाध्ययनोपकारकाः प्रतिभान्तीति न पुनरध्ययनानुगुणतया व्याकृताः[4] । तस्मै देयमित्यनेनैवान्यस्यानुपनेयतायामर्थलब्धायामपि पुनः 'ततो विपरीतगुणं नोपनयेत्' इति वचनं विपरीतगुणस्य शास्त्राभ्यासायोग्यतया सर्वथानुपनेयतादर्शनार्थम् । तेन यथोक्तगुणेषु एकद्विगुणाभावेऽप्युपनेयता सूचिता भवति । शूद्रमपीत्यादि ग्रन्थमनार्षं मन्यन्ते, तत्रान्तरेषु शूद्रानधिकारदर्शनात् । यदुक्तं चरके—"स चाध्येतव्यो ब्राह्मण-राजन्य-वैश्यैः" ( च. सू. अ. ३० ) इति, भालुकिनाऽप्युक्तं—"वेदोपवेदत्वान्न कथञ्चिच्छूद्रैरध्येतव्यम्" इति वर्णत्रयाध्येयता दर्शिता भवति । किं तु सच्छूद्रस्य वैश्यविध्यतिदेशात्; यथा—"नमस्कारेण मन्त्रेण पञ्चयज्ञान्[5] समापयेदिति"

---

१ ताडपत्रपुस्तकेऽप्येष एव पाठ उपलभ्यते । २ 'दुर्ज्ञेयेष्वविषादगम्यम्' इति मु. टिप्पण्याम् । ३ 'अर्थित्वं प्रकृते शास्त्रे ज्ञेयम्' एष पाठो मु. पु. नास्ति । ४ 'व्याहृताः' इति मु. । ५ 'पञ्चयज्ञान्न हापयेत्' इति मु. ।

पठनात् पञ्चयज्ञाधिकारः सच्छूद्रस्य, तथाऽऽयुर्वेदेऽपि शिष्टाचारपरम्परापरिप्राप्तः सच्छूद्रस्याधिकार इत्यन्ये। तत्रान्तरेषु तु शूद्रानधिकारः सामान्येन शूद्राधिकारप्रतिषेधपरो न वैश्यवच्छूद्राधिकारं निषेधयति, तथा हारीतेऽप्युक्तम्—"अकुलीनं त्यजेत् शिष्यं" इत्यादौ "वियोनिं म्लेच्छजातिं च" इति पुनर्म्लेच्छनिषेधात् सच्छूद्रस्य प्रसक्तिरर्थादुक्तैव; अन्यथा शूद्रमात्रानधिकारे म्लेच्छस्य प्रसक्तिरेव नास्ति, ततः कुतस्तन्निषेधः?॥ ३॥

**उपनयनीयस्तु ब्राह्मणः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन, दर्भैः संस्तीर्य, रत्नपुष्पलाजभक्तैर्देवताः पूजयित्वा विप्रान् भिषजश्च, तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्राह्मणं स्थापयित्वाऽग्निमुपसमाधाय, खदिरपलाशदेवदारुबिल्वानां समिद्भिश्चतुर्णां वा क्षीरिवृक्षाणां ( न्यग्रोधोदुम्बराश्वत्थमधूकानां ) दधिमधुघृताक्ताभिर्दार्वीहौमिकेन विधिना सप्रणवाभिर्महाव्याहृतिभिः स्रुवेणाज्याहुतीर्जुहुयात्, ततः प्रतिदैवतमृषींश्च स्वाहाकारं कुर्यात्, शिष्यमपि कारयेत्। ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्तुमर्हति, राजन्यो द्वयस्य, वैश्यो वैश्यस्यैवेति॥ ४॥**

उपनीयस्त्वित्यादौ ब्राह्मण इति वचनं ब्राह्मणादिषु ब्राह्मणस्य श्रेष्ठत्वात्, तेन क्षत्रियादावपि वक्ष्यमाणो विधिर्ज्ञेयः। प्रशस्तता तिथ्यादीनां ज्योतिःशास्त्रेऽध्ययनं प्रति विहितत्वेन, तथा अध्येतृपुरुषापेक्षया नक्षत्रादिशुद्ध्या ज्ञेया। मुहूर्ताः शिवभुजगादयः। प्रशस्ता दिक् उत्तरा पूर्वा च। स्थण्डिलो वेदिका। दार्वीहौमिको विधिर्याज्ञिकप्रसिद्धः। शिष्यं च स्वाहाकारं कारयेदिति शिष्यं च होमं कारयेत्। देवता ब्रह्मादयः, ऋषयो धन्वन्तरिप्रभृतयः। ब्राह्मणस्त्रयाणामित्याद्यनार्षं वदन्ति, यतो याजनं ब्राह्मणस्यैव कर्म न क्षत्रियादेः। ब्राह्मण एवोपनेता, तदधिकृतत्वात्; उपनीतस्तु क्षत्रियादिरध्यापको नोपाध्याय इति न दोषः॥ ४॥

**ततोऽग्निं त्रिः परिणीयाग्निसाक्षिकं शिष्यं ब्रूयात्—कामक्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायशस्यानि हित्वा, नीचनखरोम्णा शुचिना कषायवाससा सत्यव्रतब्रह्मचर्याभिवादनतत्परेणावश्यं भवितव्यं, मदनुमतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहितेषु वर्तितव्यम्; अतोऽन्यथा ते वर्तमानस्याधर्मो भवति, अफला च विद्या, न च प्राकाश्यं प्राप्नोति॥ ५॥**

ततोऽग्निमित्यादि। परिणीयेति प्रदक्षिणीकृत्य। मोहोऽज्ञानं मिथ्याज्ञानं वा, आत्मनि विशेषैसद्गुणारोपणादुत्कृष्टताप्रत्ययो मानः, अशक्तेऽप्यात्मनि शक्तत्वप्रत्ययोऽहङ्कारः।

१ 'अङ्गहीनं' इति मु.। २ 'गोचर्ममात्रं स्थण्डिलं' इति ता.। ३ 'उपनीतस्य तु क्षत्रियादेः' इति मु.। ४ 'आत्मनि सदसद्गुणाध्यारोपणादुत्कृष्टप्रत्ययो मानः' इति मु.।

कामादि व्याहतं बहुस्पष्टं च। नीचनखत्वादि तथैवागमेषु विद्याग्रहणोपदेशात्। प्राकाश्यम्–आयुर्वेदार्थप्रकाशकत्वं; किंवा ख्यातिः ॥ ५ ॥

**अहं वा त्वयि सम्यग्वर्तमाने यद्यन्यथादर्शी स्यामेनोभाग्भवेयमफलविद्यश्च ॥ ६ ॥**

शिष्येऽपि स्वप्रवृत्तिं नियमयन्नाह—अहं वेत्यादि। अन्यथादर्शी गुणवति शिष्ये दोषदर्शी। एनोभाक् पापभाक् ॥ ६ ॥

**द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभैषजैः प्रतिकर्तव्यम्, एवं साधु भवति; व्याधशाकुनिकपतितपापकारिणां च न प्रतिकर्तव्यम्, एवं विद्या प्रकाशते मित्रयशोधर्मार्थकामांश्च प्राप्नोति ॥ ७ ॥**

द्विजगुर्वित्यादिना विद्याग्रहणान्ते चिकित्साकाले कर्तव्यं नियमयति। व्याधः पशुवधाजीवः, शाकुनिकः पक्षिवधवृत्तिः, पतितो महापातकी, पापकर्ता उपपातकी। प्रकाशत इति धर्मप्रभावात् स्वयं प्रकाशते। कारुणिकत्वे सत्यपि महाऽधर्मफलतया व्याधादयो न प्रतिकर्तव्याः, व्याधादिचिकित्सको हि तत्क्रियमाणाधर्मफलं लभते; किं च तान् प्रति निषिद्धत्वादेव चिकित्सायाः करणेऽधर्मो भवति। मित्रादिलाभो यथाविहितकरणात् लोकसंमत्या धर्मोत्पादाच्च ॥ ७ ॥

**भवतश्चात्र—**

**कृष्णेऽष्टमी तन्निधनेऽहनी द्वे शुक्लाद्वयेऽप्येवमहर्द्विसन्ध्यम्।**
**अकालविद्युत्स्तनयित्नुघोषे स्वतन्त्रराष्ट्रक्षितिपव्यथासु ॥ ८ ॥**
**श्मशानयानायतनाहवेषु[1] महोत्सवौत्पातिकदर्शनेषु।**
**नाध्येयमन्येषु च येषु विप्रा नाधीयते नाशुचिना च नित्यम् ॥ ९ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने शिष्योपनयनीयो नाम द्वितीयोऽध्यायः ॥ २ ॥**

उपनीतेन शास्त्रमध्येयं, यस्मिन् काले तदनध्ययनं तं कालज्ञानेन[2] दर्शयन्नाह—कृष्ण इत्यादि। कृष्णे कृष्णपक्षे। तन्निधन[3] एव अहनी द्वे इति प्रत्यासन्नत्वाच्चतुर्दशीप्रतिपदौ; किंवा तन्निधने द्वे अहनी इत्यनेन चतुर्दशी अमावास्या च गृह्यते, प्रतिपन्निषेधस्तु 'येषु विप्रानाधीयते' इत्यनेन लभ्यते। कृष्णपक्षविधिं शुक्लेऽप्यतिदिशति—शुक्लाद्वयेऽप्येवमिति। अत्रापि गर्हितत्वात् कृष्णपक्षस्य प्रथमोपादानम्। अह्नो निशया समं सन्ध्याद्वयम्–अहर्द्विसन्ध्यम्[4], एतेन मध्याह्ने सन्ध्यां व्युदस्यति। अकालविद्युता पौषादि-

१ हाराणचन्द्रस्तु 'श्मशानयानाद्यतनाहवेषु' इति पठति, व्याख्यानयति च "अद्यभवोऽद्यतनः आहवो युद्धं यज्ञो वा यत्र नगरे ग्रामे वा तेषु" इति। २ 'कालवर्जनेन' इति मु.। ३ 'तन्निधन इति कृष्णपक्षान्ते अमावस्यायां, तथा अहनी द्वे' इति मु.। ४ 'अहर्निशम्' इति ह.।

मासचतुष्टये वर्षं लक्षयति । अकालस्तनयित्नुघोषः सन्ध्यामेघध्वनिः । तन्त्रं बलं, राष्ट्रं मण्डलं, क्षितिपो राजा, एषां स्वकीयानां व्यथासु नाध्येयम् । यानं हस्त्यादि, आयतनं वधस्थानं, आहवः संग्रामः । महोत्सवः शक्रध्वजोत्थानादि, उत्पाताश्चौत्पातिका भूकम्पादयः । येषु विप्रा नाधीयत इत्यनेन सूतकाष्टकादीनां ग्रहणं; यद्यपि येषु विप्रा नाधीयत इत्यनेन सर्वं लभ्यते, तथाऽपि शास्त्रस्यानध्यायकथने न्यूनतापरिहारार्थमनध्यायकथनं; सर्वाकथनं तु विस्तरभयात् । अनध्यायाध्ययनेन च विद्या तत्फलानधिगमा भवति, अन्यो विशेषः शास्त्रान्तरप्रसिद्धो ज्ञेयः ॥ ८ ॥ ९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां शिष्योपनयनीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

**अथातोऽध्ययनसंप्रदानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

उपनीतेन शास्त्रमध्येतव्यमिति तदनन्तरमध्ययनसंप्रदानीयः ॥ १ ॥ २ ॥

**प्रागभिहितं सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्रस्थानमध्यायाः षट्चत्वारिंशत्, षोडश निदानानि, दश शारीराणि, चत्वारिंशच्चिकित्सितानि, अष्टौ कल्पाः, तदुत्तरं षट्षष्टिः ॥ ३ ॥**

अध्ययनस्याध्येतव्यशास्त्रक्रमाधीनत्वादध्येतव्यशास्त्रार्थक्रमे वक्तव्ये सूत्रितं मूलक्रममनुवदति—प्रागित्यादि । सूत्रस्थानादिष्वध्यायसंख्यां नियमयति—तत्रेत्यादिना ।

**वेदोत्पत्तिः शिष्यनयस्तथाऽध्ययनदानिकः ॥**
**प्रभाषणाग्रहरणावृतुचर्याऽथ यान्त्रिकः ॥ ४ ॥**
**शस्त्रावचारणं योग्या विशिखा क्षारकल्पनम् ॥**
**अग्निकर्म जलौकाख्यो ह्यध्यायो रक्तवर्णनम् ॥ ५ ॥**
**दोषधातुमलाद्यानां विज्ञानाध्याय एव च ॥**
**कर्णव्यधामपक्वैषावालेपो व्रण्युपासनम् ॥ ६ ॥**
**हिताहितो व्रणप्रश्नो व्रणास्रावश्च यः पृथक् ॥**
**कृत्याकृत्यविधिर्व्याधिसमुद्देशीय एव च ॥ ७ ॥**
**विनिश्चयः शस्त्रविधौ प्रनष्टज्ञानिकस्तथा ॥**
**शल्योद्धृतिर्व्रणज्ञानं दूतस्वप्ननिदर्शनम् ॥ ८ ॥**
**पञ्चेन्द्रियं तथा छायास्वभावाद्वैकृतं तथा ॥**
**वारणो युक्तसेनीय आतुरक्रमभूमिकौ ॥ ९ ॥**
**मिश्रकाख्यो द्रव्यगणः संशुद्धौ शमने च यः ॥**
**द्रव्यादीनां च विज्ञानं विशेषो द्रव्यगोऽपरः ॥ १० ॥**

**रसज्ञानं वमनार्थमध्यायो रेचनाय च ॥**
**द्रवद्रव्यविधिस्तद्वदन्नपानविधिस्तथा ॥ ११ ॥**
**सूचनात् सूत्रणाच्चैव स्मरणाच्चार्थसन्ततेः ॥**
**षट्चत्वारिंशदध्यायं सूत्रस्थानं प्रचक्षते ॥ १२ ॥**

वेदोत्पत्तिरित्यादिना सूत्रस्थानाध्यायानाह । एषां चाध्यायानां संबन्ध इह दुरधिगमत्वान्नोच्यते; प्रत्यध्यायमेवाध्यायार्थप्रतीत्या सुखज्ञानतया संबन्धो व्याकरणीयः । एकत्रैवाध्यायसंग्रहणेन सुखं शास्त्रार्थस्मरणं भवतीत्यध्यायसंग्रहकरणं शास्त्रेष्वन्येष्वपि चरकादिषु कृतम् । सूत्रस्थाननिरुक्तिमाह—सूचनादित्यादि । सूचनमेकदेशेनोक्तेनानुक्तग्रहणं, यथा—स्थावरेभ्यश्च स्वरसाद्याः प्रयोजनवन्त इत्यत्राद्यशब्देन कण्टकभस्मादयः सूच्यन्ते । सूत्रणं संक्षेपेण सर्वार्थाभिधानं, यथा "तद्दुःखसंयोगा व्याधयः" (सू. अ. १) इति, अनेन लक्षणेन सर्वव्याध्यभिधानम् । स्मरणं प्रतीतार्थादर्थगतिलभ्यमानं, यथा—"औषधग्रहणाद् द्रव्य-रस-वीर्य-विपाकानामादेशः" (सू. अ. १) इति । अत्र हि औषधं रसादीन् प्रत्याख्याय न भवतीति रसादिलाभः । षट्चत्वारिंशदध्यायमिति पूर्वोक्तनियमनम्[2] ॥ ४–१२ ॥

**वातव्याधिकमर्शांसि साश्मरिश्च भगन्दरः ॥**
**कुष्ठमेहोदरं मूढो विद्रधिः परिसर्पणम् ॥ १३ ॥**
**ग्रन्थिवृद्धिक्षुद्रशूकभग्नाश्च मुखरोगिकम् ॥**
**हेतुलक्षणनिर्देशान्निदानानीति षोडश ॥ १४ ॥**

हेतुलक्षणनिर्देशादिति अत्र हेतुग्रहणेन बाह्यरूक्षाद्यान्तरवातादिहेतुग्रहणं, लक्षणशब्देन पूर्वरूपरूपोपशयसंप्राप्तयो[3]ऽभिधीयन्ते । यद्यपि हेतुरपि व्याधिपरीक्षायां लिङ्गं भवति, तथाऽपि तस्य व्याधिगमकत्वाद्विशिष्टं व्याधिजनकत्वमप्यस्तीति पृथक् पाठः । निःपूर्वाद्दिशेः पृषोदरादित्वान्निदानसिद्धिरित्येके, निर्देशादित्यर्थकथनमात्रमित्यन्ये, 'निदीयते निश्चीयते व्याधिरनेनेति निदानम्' इति निरुक्तिर्भवति ॥ १३ ॥ १४ ॥

**भूतचिन्ता रजःशुद्धिर्गर्भावक्रान्तिरेव च ॥**
**व्याकरणं च गर्भस्य शरीरस्य च यत् स्मृतम् ॥ १५ ॥**
**प्रत्येकं मर्मनिर्देशः सिरावर्णनमेव च ॥**
**सिराव्यधो धमनीनां गर्भिण्या व्याकृतिस्तथा ॥ १६ ॥**
**निर्दिष्टानि दशैतानि शारीराणि महर्षिणा ॥**
**विज्ञानार्थं शरीरस्य भिषजां योगिनामपि ॥ १७ ॥**

शारीराणीतिपदेनैव शरीरप्रतिपादकतया भूतानीति शारीराणि । अत एवोक्तं—विज्ञानार्थं शरीरस्येति । भिषजां शरीरज्ञानं विशुद्धशुक्रार्तवजन्यतया मर्मधमन्यादिविभागेनो-

---

१ '°दध्यायाः' इति पा० । २ '°निगमनम्' इति मु. । ३ '°संप्राप्तीनां व्याधिलिङ्गानां ग्रहणम्' इति मु.।

पयुक्तं, योगिनामपीत्यनेनाव्यक्तजन्यतादिरूपेण ज्ञानं मोक्षोपयुक्तत्वादुपकारि योगिनाम्; एतच्चानुषङ्गप्रयोजनं शास्त्रस्य बहुविषयतया प्राशस्त्योपदर्शनार्थम् ॥ १५-१७ ॥

द्विव्रणीयो व्रणः सद्यो भग्नानां वातरोगिकम् ॥
महावातिकमर्शांसि साश्मरिश्च भगन्दरः ॥ १८ ॥
कुष्ठानां महतां चापि मैहिकं पैडिकं तथा ॥
मधुमेहचिकित्सा च तथा चोदरिणामपि ॥ १९ ॥
मूढगर्भचिकित्सा च विद्रधीनां विसर्पिणाम् ॥
ग्रन्थिवृद्ध्युपदंशानां तथा च क्षुद्ररोगिणाम् ॥ २० ॥
शूकदोषचिकित्सा च तथा च मुखरोगिणाम् ॥
शोफस्यानागतानां च निषेधो मिश्रकं तथा ॥ २१ ॥
वाजीकरं च यत् क्षीणे सर्वाबाधशमोऽपि च ॥
मेधायुष्करणं चापि स्वभावव्याधिवारणम् ॥ २२ ॥
निवृत्तसंतापकरं कीर्तितं च रसायनम् ॥
स्नेहोपयौगिकः स्वेदो वमने सविरेचने ॥ २३ ॥
तयोर्व्यापच्चिकित्सा च नेत्रबस्तिविभागिकः ॥
नेत्रबस्तिविपत्सिद्धिस्तथा चोत्तरबस्तिकः ॥ २४ ॥
निरूहक्रमसंज्ञश्च तथैवातुरसंज्ञकः ॥
धूमनस्यविधिश्चान्त्य[1]श्चत्वारिंशदिति स्मृताः ॥ २५ ॥
प्रायश्चित्तं प्रशमनं चिकित्सा शान्तिकर्म च ॥
पर्यायास्तस्य निर्देशाच्चिकित्सास्थानमुच्यते ॥ २६ ॥

चिकित्सितस्य व्यवहारार्थं पर्यायानाह—प्रायश्चित्तमित्यादि । प्रायश्चित्तवद् व्याधिशमकत्वात्; प्रायश्चित्तं हि व्याध्यारम्भकाधर्मक्षयाद् व्याधिप्रशमं करोति, एवं चिकित्सितमपि दैवयुक्तिव्यपाश्रयं हेतुव्याधिविपरीतत्वाद् व्याधिप्रशमं करोति । तस्य निर्देशादिति चिकित्सितस्य निर्देशात् ॥ १८-२६ ॥

अन्नस्य रक्षा विज्ञानं स्थावरस्येतरस्य च ॥
सर्पदष्टविषज्ञानं तस्यैव च चिकित्सितम् ॥ २७ ॥
दुन्दुभेर्मूषिकाणां च कीटानां कल्प एव च ॥
अष्टौ कल्पाः समाख्याता विषभेषजकल्पनात् ॥ २८ ॥

विषभेषजकल्पनादित्यनेनात्र विषभेषजकल्पनायामेव कल्पशब्दः समयसिद्ध इति दर्शयति; न तु यथा चरके वमन-विरेचन-भेषजकल्पनायां कल्पशब्दः ॥ २७ ॥ २८ ॥

सविंशमध्यायशतमेवमेतदुदीरितम् ॥

---

१ '०श्चाद्य०' इति ड. ।

पञ्चस्थानकं तन्त्रमुपसंहरति—सविंशमित्यादि । सविंशशब्दार्थस्तु प्रथमाध्याय एव व्याकृतः ॥

अतः परं स्वनाम्नैव तन्त्रमुत्तरमुच्यते ॥ २९ ॥
अधिकृत्य कृतं यस्मात्तन्त्रमेतदुपद्रवान् ॥
औपद्रविक इत्येष तस्याग्र्यत्वान्निरुच्यते ॥ ३० ॥
सन्धौ वर्त्मनि शुक्ले च कृष्णे सर्वत्र दृष्टिषु ॥
संविज्ञानार्थमध्याया गदानां तु प्रति प्रति ॥ ३१ ॥
चिकित्साप्रविभागीयो वाताभिष्यन्दवारणः ।
पैत्तस्य श्लैष्मिकस्यापि रौधिरस्य तथैव च ॥ ३२ ॥
लेख्यभेद्यनिषेधौ च छेद्यानां वर्त्मदृष्टिषु ॥
क्रियाकल्पोऽभिघातश्च कर्णोत्थास्तच्चिकित्सितम् ॥ ३३ ॥
घ्राणोत्थानां च विज्ञानं तद्वदप्रतिषेधनम् ॥
प्रतिश्यायनिषेधश्च शिरोगदविवेचनम् ॥ ३४ ॥
चिकित्सा तद्गदानां च शालाक्यं तन्त्रमुच्यते ॥

क्रमागतमुत्तरतन्त्रमाह—अतः परमित्यादि । स्वनाम्नैवेति स्व-स्वनाम्ना शालाक्यतन्त्र-कुमारतन्त्रमित्यादिनाम्ना वक्तव्यमित्यर्थः; अन्ये तु स्वनाम्ना इत्युत्तरतन्त्रमिति नाम्नेति व्याख्यानयन्ति । संप्रत्युत्तरतन्त्रप्रथमाध्यायस्य औपद्रविकस्य निरुक्त्या शल्य[1]स्योत्तर-तन्त्रे संबन्धं दर्शयन्नाह—अधिकृत्येत्यादि । उपद्रवानिति व्रणोपद्रवानुत्तरतन्त्रप्रति-पाद्यान् रोगान् । तस्याग्र्यत्वादिति उत्तरतन्त्रप्रधानत्वात् । प्राधान्यं च शल्यतन्त्राभिधेय-व्रणप्रयोजकोपद्रवविवेच[2]कत्वात् । अयं चोपद्रवशमकतया उत्तरतन्त्रसंबन्धो विद्य[3]मान-तया दर्शितो भवति, नान्य[4]तन्त्रसंबन्धं निषेधयति । तेन "यत् किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम्" इत्यादिवक्ष्यमाणोत्तरतन्त्रसंबन्धो न विरुध्यते ॥ २९–३४ ॥

नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम् ॥ ३५ ॥
अपस्मारशकुन्योश्च रेवत्याश्च पुनः पृथक् ॥
पूतनायास्तथाऽन्धायाः शीतपूतनमण्डिका ॥ ३६ ॥
नैगमेषचिकित्सा च ग्रहोत्पत्तिः सयोनिजा ॥
कुमारतन्त्रमित्येतच्छारीरेषु च कीर्तितम् ॥ ३७ ॥

तथाऽन्धाया इत्यन्धपूतनायाः । शारीरेषु च कीर्तितमिति कुमारतन्त्राभिधेयं गर्भाव-क्रान्ति-प्रतिमासविधि-जातकर्मादि बहु शारीरस्थाने कीर्तितम् ॥ ३५–३७ ॥

---

१ 'शल्ये उत्तरतन्त्रसंवधं' इति मु. । २ '°विषयकत्वात्' इति मु. । ३ 'विषयतया' इति मु. । ४ 'नानेनान्यमुत्तरतन्त्रसंवन्धं' इति मु. ।

ज्वरातिसारशोषाणां गुल्महृद्रोगिणामपि ॥
पाण्डूनां रक्तपित्तस्य मूर्च्छायाः पानजाश्च ये ॥ ३८ ॥
तृष्णायाश्छर्दिहिक्कानां निषेधः श्वासकासयोः ॥
स्वरभेदचिकित्सा च कृम्युदावर्तिनोः पृथक् ॥ ३९ ॥
विसूचिकारोचकयोर्मूत्राघातविकृच्छ्रयोः ॥
इति कायचिकित्सायाः शेषमत्र प्रकीर्तितम् ॥ ४० ॥

कायचिकित्सायाः शेषमित्यनेन कुष्ठमेहादिकायचिकित्साविषयः शल्यविषयतया कीर्तितश्चिकित्सिते इति दर्शयति ॥ ३८–४० ॥

अमानुषनिषेधश्च तथाऽऽपस्मारिकोऽपरः ॥
उन्मादप्रतिषेधश्च भूतविद्या निरुच्यते ॥ ४१ ॥
रसभेदाः स्वस्थवृत्तं युक्तयस्तान्त्रिकाश्च याः ॥
दोषभेदा इति ज्ञेया अध्यायास्तन्त्रभूषणाः ॥ ४२ ॥

तन्त्रभूषणा इति सर्वतन्त्रानुगतत्वं दर्शयति ॥ ४१ ॥ ४२ ॥

श्रेष्ठत्वादुत्तरं ह्येतत्तन्त्रमाहुर्महर्षयः ॥
बह्वर्थसंग्रहाच्छ्रेष्ठमुत्तरं वाऽपि पश्चिमम् ॥ ४३ ॥

उत्तरतन्त्रनिरुक्तौ श्रेष्ठत्वादुत्तरमिति श्रेष्ठवाचित्वादुत्तरशब्दस्येत्यर्थः । श्रेष्ठत्वे एव हेतुः—बह्वर्थसंग्रहाच्छ्रेष्ठमिति । उत्तरं वाऽपि पश्चिममिति पश्चादभिधीयमानम् ॥ ४३ ॥

शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या ॥
भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते ॥ ४४ ॥
वाजीकरं चिकित्सासु रसायनविधिस्तथा ॥
विषतन्त्रं पुनः कल्पाः शल्यज्ञानं समन्ततः ॥ ४५ ॥

बह्वर्थसंग्राहकत्वमेवोत्तरतन्त्रस्याह—शालाक्यमित्यादि । अथापराङ्गानामनुक्तत्वात् कथमष्टाङ्गमिदं तन्त्रमित्याह—वाजीकरमित्यादि । शल्यज्ञानं समन्तत इति पञ्चस्वपि स्थानेषु; किंवा कृत्स्ने एव तन्त्रे शल्यज्ञानं, यदुक्तं "यत् किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम् । व्याप्तान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा ॥" इति ॥ ४४ ॥ ४५ ॥

इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम् ॥
विधिनाऽधीत्य युञ्जाना भवन्ति प्राणदा भुवि ॥ ४६ ॥

विधिनेति पदं युञ्जाना इत्यनेन च संबध्यते । तेन विधिनेति कर्मदर्शनानन्तरं विधिवयोजनं च दर्शयति ॥ ४६ ॥

**एतद्ध्यवश्यमध्येयम्, अधीत्य च कर्माण्यवश्यमुपासितव्यम्, उभयज्ञो हि भिषग् राजार्हो भवति ॥ ४७ ॥**

एतदेव स्फोरयति—एतद्धीत्यादि ॥ ४७ ॥

---

१ 'सर्वतन्त्रार्थगतत्वं' इति मु. । २ 'अन्नाष्टाङ्गानां' इति पा० ।

भवन्ति चात्र—

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥ ४८ ॥

केवलशास्त्रज्ञदोषमाह—यस्त्वित्यादि ॥ ४८ ॥

यस्तु कर्मसु निष्णातो धाष्ट्याच्छास्त्रबहिष्कृतः ॥
स सत्सु पूजां नाप्नोति वधं चर्च्छति राजतः ॥ ४९ ॥

केवलकर्मज्ञदोषमाह—यस्तु कर्मस्वित्यादि । धार्ष्ट्यादिति वैद्यसांनिध्यदृष्टकर्मतादिजनितप्रागल्भ्यात् । वधं चर्च्छति राजत इति एवंभूतवैद्यस्य लोककण्टकस्य व्याघ्रादेरिव राज्ञा वधः कर्तव्य इत्यर्थः ॥ ४९ ॥

उभावेतावनिपुणावसमर्थौ स्वकर्मणि ॥
अर्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ ५० ॥

अज्ञवैद्यावुभौ निदर्शनेन दर्शयति—उभावित्यादि । उभावेताविति अनिपुणौ[1] द्वाविति समर्थनीयौ । किंवा एतौ सर्वतो ज्ञाने अनिपुणौ, आङ्पूर्वादिनः क्तिनि रूपम् । अर्धवेदधराविति शास्त्रज्ञान-कर्मज्ञानरूपत्वादायुर्वेदस्य एकैकज्ञानादर्धवेदधरौ । पुनरेताविति परितो गतौ ॥ ५० ॥

ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः ॥
भवन्त्यज्ञैरुपहृतास्तस्मादेतौ विवर्जयेत् ॥ ५१ ॥

अमृतकल्पमप्यज्ञोपहितं विषवद्बाधकं भवतीति दर्शयन्नाह—ओषध्य इत्यादि । शस्त्रादिदृष्टान्तत्रयं कस्यचित् किंचित् प्रसिद्धं भविष्यतीति कृत्वा; किंवा शस्त्रवन्मर्मच्छेदं कृत्वा किंचिन्मारयति, किंचिद्वज्रवज्झटिति मारयति, किंचिद्विषवत् संज्ञानाशं कृत्वा मारयतीति दर्शयति । अज्ञैरिति शास्त्रकर्मानभिज्ञैः ॥ ५१ ॥

छेद्यादिष्वनभिज्ञो यः स्नेहादिषु च कर्मसु ॥
स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः ॥ ५२ ॥
यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने ॥
आहवे कर्म निर्वोढुं द्विचक्रः स्यन्दनो यथा ॥ ५३ ॥

एकदेशेऽपि कर्मानभिज्ञनिन्दामाह—छेद्यादिष्वित्यादि । छेद्यादि शस्त्राग्निक्षारादि कर्म । स्नेहादि स्नेह-स्वेद-वमन-विरेचनादिकर्म । यस्तूभयज्ञ इति शास्त्रज्ञः कर्मज्ञश्चोच्यते,

१ 'अपूपौ द्वाविंशतिवत् समर्थनीयौ (?)' इति ह. ।

द्वयोरपि पार्श्वयोश्च द्विचक्रः; तेन चतुश्चक्रः प्रसिद्धः स्यन्दनो भवति । किंवा 'छेद्यादिष्वनभिज्ञा ये' इत्यादि ( बहुवचनान्तः ) पाठः ॥ ५२ ॥ ५३ ॥

**अथ वत्स ! तदेतदध्येयं यथा तथोपधारय मया प्रोच्यमानम्-अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा, ते च पदपादश्लोका भूयः क्रमेणानुसंधेयाः, एवमेकैकशो घटयेदात्मना चानुपठेत्; अद्रुतमविलम्बितमविशङ्कितमननुनासिकं सुव्यक्ताक्षरमपीडितवर्णमक्षिभ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेत् । न चान्तरेण कश्चिद्व्रजेत् तयोरधीयानयोः ॥ ५४ ॥**

संप्रति प्रकृतमाह—अथ वत्सेत्यादि । वत्स इति प्रकृतशिष्यसुश्रुतसंबोधनम्, अथेत्युपनयनस्य तथा त्रिःकर्तव्यस्यानन्तर्ये । शुचित्वाद्यदृष्टद्वारा दृष्टेन वाऽध्ययनोपकारि व्यक्तमेव । उपस्थितायेति विधिवत् समीपस्थिताय । यथाशक्तीति हीनशक्तये पदं, मध्यमशक्तये पादम्, उत्तमशक्तये श्लोकमुपदिशेत् । पादशब्देन च श्लोकपाद उच्यते । यत्र तु युक्तकग्रन्थस्तत्रापि[2] श्लोकपादपरिमाणो ग्रन्थो ज्ञेयः । एवं श्लोकशब्दोऽपि प्रायो द्वात्रिंशदक्षरमात्रवाक्यं ग्राहयति । क्रमेणानुसंधेया इति स्तोकं स्तोकं गृहीतं पुनरेकीकृत्य पठनीयम् । घटयन्निति शिष्यं घटयितुं योजयन् । अद्रुतमिति द्रुतं सन्निकृष्टवर्णं, तद्विपरीतम् । अविलम्बितं नातिविलम्बितम् । अशङ्कितमित्यनेनाभयोच्चारणं गद्गदादिदोषवत्पाठनिरासार्थम् । अननुनासिकमिति ङञणनमादीननुनासिकांस्त्यक्त्वा ज्ञेयम् । अपीडितमिति प्रयत्ने ताल्वादिकरणैरपीडितम् । अक्षिभ्रुवाभिनयो गुरुसमक्षमतिनिन्दितत्वान्न कार्यः । सुसंस्कृतमिति अनुस्वारविसर्जनीयादिसहितं शास्त्रं पठेत् । न चेत्यादिना पठतोर्गुरुशिष्ययोर्मध्ये कस्यचिद्गमनमधर्मवशादन्तरायकरं निषेधयति ॥ ५४ ॥

**भवतश्चात्र—**

**शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्जितः ॥**
**पठन्नेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ॥ ५५ ॥**
**वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्मनैपुणे ॥**
**तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः ॥ ५६ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थानेऽध्ययनसंप्रदानीयो नाम तृतीयोऽध्यायः ॥ ३ ॥**

---

१ 'किंवा छेद्यादिष्वनभिज्ञ इत्यनेन छेद्यादिशस्त्रकर्मानभिज्ञ उच्यते । यस्तूभयज्ञ इत्यनेन छेद्यादिषु तथा स्नेहादिषु शास्त्रकर्मज्ञो वैद्यावुच्येते' इति मुद्रितपुस्तके पाठः । 'स्नेहादिष्वनभिज्ञो यश्छेद्यादिषु' इति ड. । २ 'गद्यकग्रन्थः' इति चेत् साधु ।

शास्त्रान्तगमनहेतून् गुणानाह—शुचिरित्यादि । गुरुपरत्वाद्गुरुः प्रसन्नो यत्नेनाध्यापयति । तन्द्रा इन्द्रियसंमोहः । वाक्सौष्ठवं सम्यग्वाक्यप्रतिपादकत्वम् । अर्थविज्ञानं वाक्यार्थतत्त्वज्ञानम् । प्रागल्भ्यात् कृच्छ्रानपि रोगान् साधयितुं सोत्साहो भवति । कर्मनैपुण्यं स्नेहादिकर्माभिज्ञत्वम् । तदभ्यास इति कर्माभ्यासे । एतच्च कर्मनैपुण्यहेतुतयोपात्तं; किंवा कर्मनैपुण्यं कर्मसम्यक्प्रयोगः, तदभ्यासस्तु कर्मनैपुण्यस्थैर्यार्थम् । सिद्धाविति साध्यसाधने, एतेन कृत्स्नसाध्यावरोधः; सिद्धौ वा फलरूपायाम्; इयमेव यत्नायत्तसाधनचिकित्सासमीचीनत्वे यतनं कारयति । चकारौ परस्परसमुच्चये ॥ ५५ ॥ ५६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थानेऽध्ययनसंप्रदानीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

**अथातः प्रभाषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायेऽध्ययनान्तगोऽर्थविज्ञाने यतेतेत्युक्तम्, अतोऽधीतशास्त्रस्यार्थविज्ञानार्थं प्रभाषणीयोऽभिधीयते । प्रकृष्टं भाषणं प्रभाषणम्, अर्थतो ग्रहणं श्रुतस्येत्यर्थः ॥ १ ॥ २ ॥

**अधिगतमप्यध्ययनमनुभाषितमर्थतः[२] खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति ॥ ३ ॥**

**भवति चात्र—**

**यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य ।**
**एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति ॥ ४ ॥**

अधिगतमिति पाठेन गृहीतम् । अधीयत इत्यध्ययनं शास्त्रम् । अननुभाषितमर्थत इति अध्ययनस्यानु पश्चादर्थतो भाषितं पठितमनुभाषितं, तद्विपर्ययेणाननुभाषितम्; अनुशब्देन वाऽध्ययनपूर्वकमेवार्थग्रहणं[३] दर्शयति । खरस्येत्यनेन सर्वथानुपयोगमध्ययनमात्रस्य दर्शयति । खरस्य हि चन्दनं सर्वथानुपकारकम् ॥ ३ ॥ ४ ॥

**तस्मात् सविंशमध्यायशतमनुपदपादश्लोकमनुवर्णयितव्यमनुश्रोतव्यं च; कस्मात्? सूक्ष्मा हि द्रव्यरसगुणवीर्यविपाकदोषधातुमलाशयमर्मसिरास्नायुसन्ध्यस्थिगर्भसंभवद्रव्यसमूहविभागास्तथा[४] प्रनष्टशल्योद्धरणव्रणविनिश्चयभग्नविकल्पाः साध्ययाप्यप्रत्याख्येयता च विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुलबुद्धे-**

---

१ 'यत्नायत्तचिकित्सासत्त्वे' इति ह. । २ 'अप्रभाषितं' इति पा० । ३ 'अनुग्रहणं' इति ह. । ४ '०संन्ध्यस्थिविभागाः' इति ता. ।

**रपि बुद्धिमाकुलीकुर्युः किं पुनरल्पबुद्धेः, तस्मादवश्यमनुपदपादश्लोकमनुवर्णयितव्यमनुश्रोतव्यं च ॥ ५ ॥**

तस्मादित्यादि । अत्र सविंशमित्यत्र सहितं विंशमिति व्याख्या घटते, सशब्देनोत्तरतन्त्रग्रहणार्थम् । अनुपदेत्यादिना पदार्थप्रतिसंधानेन वाक्यार्थमागन्तुं व्याख्यातोऽध्येयमिति पिण्डार्थः । अनुपदपादश्लोकमित्यनुशब्दो वीप्सार्थः कर्मप्रवचनीयः, ततो द्वितीया; तेन पदं पादं श्लोकमनुवर्णनीयमित्यर्थः । विदितपदपदार्थ एवात्राधिकारी शिष्यः, स च स्वयमेवार्थं ज्ञास्यतीत्याशङ्कायां कस्मादिति प्रश्नः; उत्तरं—सूक्ष्मा हीत्यादि । सूक्ष्मा इति प्रत्येकं द्रव्यादिविभागा इत्यनेन संबध्यते । द्रव्यस्य पाञ्चभौतिकस्य एकैकभूतोत्कर्षादिविभागाः सूक्ष्माः; रसाः षण्मधुरादयः, तेषां व्यस्तसमस्तानां त्रिषष्टिभेदादयो विभागाः; गुणा गुरुलघुत्वादयः, तेषां न्यूनाधिकत्वादयो विभागाः; वीर्यं द्विविधं शीतमुष्णं च, यदि वाऽष्टविधं शीतोष्ण-विशद-पिच्छिल-स्निग्ध-रूक्ष-मृदु-तीक्ष्णरूपं, तस्य विभागा उत्कर्षापकर्षादयः; विपाकौ मधुरकटू, तयोरपि बलवत्त्वाबलवत्त्वादयो विभागाः; प्रभावस्तु तन्त्रान्तरसंमतः, अत्रापि द्रव्यशक्तिगृहीतोऽचिन्त्यवीर्यग्रहणगृहीतो वा; दोषा वातादयः, तद्भेदा त्रिषष्टिप्रकाराः; धातवो रसादयः, मला मूत्र-पुरीष-खमल-स्वेद-नखादयः, एषां दुष्टादुष्टादयो विभागाः; आशयाः सप्त, गर्भाशयोऽष्टमः, सप्तोत्तरं मर्मशतं, सप्त सिराशतानि, नव स्नायुशतानि, सन्धयो दशोत्तरे द्वे शते, अस्थिशतानि त्रीणि, एषामेत एव विभागा दुष्टत्वादयः; गर्भः संभवति यस्मात् तस्य पुनः पञ्चभूतशुक्रशोणितादेर्द्रव्यसमूहस्य विभागाः सूक्ष्मा इत्यर्थः । तथा प्रनष्टं शल्यमष्टासु त्वगादिव्रणवस्तुषु तथा धमनीस्रोतोऽस्थिविवरादिषु, उद्धरणमपि प्रनष्टशल्यस्य अनवबद्धस्य पञ्चदशभिः स्वभावादिभिर्हेतुभिः, मध्येमांसावबद्धस्य तु प्रतिलोमानुलोमभेदेन द्वौ विकल्पौ; व्रणनिश्चयो वातादिभेदेन स्तम्भादिभेदेन; भग्नं सन्धिमुक्तं षड्विधविकल्परूपं, द्वादशविकल्परूपं काण्डविभग्नम् । साध्यतादयः सूक्ष्माः सुखसाध्यकृच्छ्रसाध्यासाध्यत्वादिना । एवमादय इत्यत्रादिशब्दः प्रकारवाची, तेनाष्टविधच्छेद्यादिभेदग्रहणम् । अनुचिन्त्यमाना इति गुरुश्रुतादपि पश्चाच्चिन्त्यमानाः तत्तद्देशकालादिसहकारिविरोधाविरोधेन प्रवृत्त्यर्थं चिन्त्यमानाः । विशुद्धबहुविषयबुद्धेरपि निसर्गदुर्बोधतया बुद्धिमाकुलयन्ति, अश्रुतशास्त्रत्वेन स्वल्पबुद्धेर्नितरां बुद्धिमाकुलयन्तीति । प्रकरणार्थमुपसंहरति—तस्मादित्यादि ॥ ५ ॥

**अन्यशास्त्रोपपन्नानां[1] चार्थानामिहोपनीतानामर्थवशात्तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यं, कस्मात्? न ह्येकस्मिन् शास्त्रे शक्यः सर्वशास्त्राणामवरोधः कर्तुम् ॥ ६ ॥**

ननु श्रवणेऽप्यस्य शास्त्रस्य व्याकरणसांख्यादिव्युत्पादितार्थस्य सूत्रमात्रेणात्रोक्तत्वात् कथं सम्यगर्थावगम इत्याह—अन्यशास्त्रेत्यादि । अन्यशास्त्रविषयस्य इहाप्रस्तुतस्याभिधाने हेतुमाह—अर्थवशादिति । अर्थवशात् प्रयोजनवशादित्यर्थः । तत्र व्याकरणविषयार्थ इह

१ 'अन्यशास्त्रविषयोपपन्नानां' इति ता. ।

दोषस्वभावज्ञानाय उक्तः, यथा—'वा' गतिगन्धनयोः, 'तप' संतापे, 'श्लिष' आलिङ्गने; एभ्यो धातुभ्यः कृद्विहितैः प्रत्ययैर्वात-पित्त-श्लेष्माण इत्यादि; तथा शोणितवर्णनीयेऽर्थव-शादधिकधातूत्पादप्रतिषेधार्थं सांख्यदर्शनार्थं उक्तः, यथा—"सतां भावानामभिव्यक्तिः" (सू. अ. १४) इति; तथा सर्वकालकर्मनिषेधार्थं ज्यौतिषशास्त्रार्थं उक्तः, यथा—"प्रश-स्तेषु तिथिकरणेषु" (सू. अ. ५) इत्यादि। तद्विद्येभ्य इति व्याकरणाद्यभिज्ञेभ्यः। ननु तेऽप्यर्था इह कस्माद्विस्तरेण सुखज्ञानार्थं नोच्यन्ते-इत्याशङ्क्य कस्मादिति पृष्ट्वाऽऽह—नहीत्यादि। शास्त्रार्थविस्तरताभयान्न शक्य इति तात्पर्यम् ॥ ६ ॥

**भवन्ति चात्र—**

**एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ॥**
**तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥ ७ ॥**

एकमित्यादौ शास्त्रनिश्चयमिति शास्त्रार्थनिश्चयम्। शास्त्रमित्यादौ गुरोरेव श्रोतव्यं न स्वयं पुस्तकमादाय चिन्तनीयमित्याह ॥ ७ ॥

**शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ॥**
**यः कर्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥ ८ ॥**

शास्त्रं[3] गुरुमुखाच्छ्रुत्वैवोपास्यमित्याह—शास्त्रं गुरुमुखोद्गीर्णमित्यादि। उपास्य चासकृदिति शास्त्रार्थं कर्म वा पुनः पुनरुपास्य। अन्ये तु तस्कराश्चौर्यवृत्तयः; उपेत्य वित्तहरणात्तथा जीवितहरणाच्च चौरा इव राज्ञो वध्याः ॥ ८ ॥

**औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् ॥**
**शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्दिशेत् ॥ ९ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने प्रभाषणीयो**
**नाम चतुर्थोऽध्यायः ॥ ४ ॥**

संप्रति स्वशास्त्रमिथ्याज्ञाननिरासाय यानि तन्त्राण्युपास्यानि तान्याह—औपधेनव-मित्यादि। एषां मूलत्वेन परस्पराविसंवादेन संदेहज्ञानव्युदासः कर्तव्य इति भावः ॥ ९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां
सूत्रस्थाने चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

**अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये शास्त्रं गुरुमुखोद्गीर्णमित्यादिना शास्त्रमभ्यस्य कर्म कर्तव्यं, तच्च कर्म कर्मो-पकरणानि प्रायउपयुक्तान्यग्रे संपाद्य कर्तव्यम्; अतः कर्मणामग्रे उपकरणान्युपपाद्यानि

---

१ 'अधिकधातूत्पादप्रतिपादनप्रतिषेधार्थं' इति ह.। २ 'व्याकरणादिविज्ञः' इति मु.।
३ 'शास्त्रार्थमेवानुसंधेयं शास्त्रं गुरुमुखाच्छ्रुत्वैवोपासितव्यमित्याह' इति ह.।

प्रतिपादयितुमग्रोपहरणीय उच्यते । कर्मणामग्रे उपहरणं येषां यन्त्र-शस्त्रादीनां तानि अग्रोपहरणानि, तान्यधिकृत्य कृतोऽध्यायः अग्रोपहरणीयः ॥ १ ॥ २ ॥

**त्रिविधं कर्म—पूर्वकर्म, प्रधानकर्म, पश्चात्कर्मेति; तद्व्याधिं प्रत्युपदेक्ष्यामः ॥ ३ ॥**

कर्माज्ञाने सति तदग्रोपहरणाज्ञानात् सामान्यतो यावत्संभावि कर्माह—त्रिविधं कर्मेत्यादि । अत्र प्रधानत्वेन [१]वक्तव्यव्रणविषये पूर्वकर्म लङ्घनादि विरेकान्तं, प्रधानकर्म पाटनशोधनादिकं, बलवर्णाग्निजननं पूर्वकृतकर्मनिर्वाहार्थं पश्चात्कर्म । तदुक्तं कैश्चित्—"लङ्घनादि विरेकान्तं पूर्वकर्म व्रणस्य तु । पाटनं रोपणं यच्च प्रधानं कर्म तत् स्मृतम् ॥ बलवर्णाग्निकार्यं तु पश्चात्कर्म समादिशेत् ॥" इति । किं तु व्रणशोथप्रशमाय क्रियमाणं लङ्घनादि प्रधानकर्मैव, तस्यामवस्थायां प्रधानकर्मोपकारकं पूर्वकर्म भवति; यथा वमनादौ स्नेहस्वेदादि दोषविलयनादिकर्तृतया प्रधानवमनादिकर्मोपकारकं भवति; यथा पेयादिं शोधनकृतकार्यनिर्वाहकतया पश्चात्कर्म भवति । व्रणे तु पाटने प्रधानकर्मणि कर्तव्ये पाचनं पाटनोपकारितया पूर्वकर्मेति युक्तं; वचनं हि—"तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते" इति । एवमन्यदपि प्रधानकर्मोपकारकं पूर्वकर्मोदाहार्यम् । तत् त्रिविधं कर्मोत्तरं बहु वक्तव्यत्वान्नेह वक्तव्यमित्याह—तद्व्याधिमित्यादि । प्रतिशब्दो वीप्सावृत्तिः, तेन व्याधिं प्रति प्रतीत्यर्थः, कर्मप्रवचनीयत्वाद्द्वितीया ॥ ३ ॥

**[२]अस्मिंस्तु शास्त्रे शस्त्रकर्मप्राधान्याच्[३]छस्त्रकर्मैव तावत् पूर्वमुपदेक्ष्यामस्तत्सम्भारांश्च ॥ ४ ॥**

इह कर्मविशेषानुदाहरणेऽपि शस्त्रकर्मण एवाग्रोपहर्तव्यानि यथोपदर्शनीयानि भवन्ति, तदाह—अस्मिन्नित्यादि ॥ ४ ॥

**तच्च शस्त्रकर्माष्टविधं; तद्यथा—छेद्यं, भेद्यं, लेख्यं, वेध्यम्, एष्यम्, आहार्यं, विस्राव्यं, सीव्यमिति ॥ ५ ॥**

अग्रोपहरणोपकर्तव्यं शस्त्रकर्मैव भेदयन्नाह—तच्चेत्यादि । छेद्यादिशब्दा भाव एव कृत्यान्ताश्छेदादिवाचकाः, किंवा छेद्यादिविषयोपन्यासश्छेदादीनां सुखावबोधाय; तेनार्शःप्रभृतिच्छेद्ये कर्मणि छेदरूपं विषयशब्देन विषयलक्षणतयोच्यते । एवं भेद्यादिषु व्याख्येयम् । छेद्यं निःशेषतोऽर्शःप्रभृति, भेद्यं बृहन्मुखेन विद्रध्यादि, वेध्यमल्पमुखेन सिरोदरादि । एषणाहरणयोरपि हिंसाहेतुतया शस्त्रकर्मात्मकता; षड्विधत्वं परमार्थतः शस्त्रकर्मणो भवति ॥ ५ ॥

**अतोऽन्यतमं कर्म चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि भवन्ति, तद्यथा—यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबूजाम्बवौ-**

---

१ 'उपहरणविषये' इति ह. । २ 'अस्य तु शास्त्रस्य' इति ता. । ३ 'पूर्वं शस्त्रसं भारानेवोपदेक्ष्यामः' इति ता. ।

**ष्ठपिचुप्रोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि, परिकर्मिणश्च स्निग्धाः स्थिरा बलवन्तः ॥६॥**

पिचुः तूलः, प्रो(प्लो)तः कर्पटः, तर्पणं जलप्लुताः शक्तवः, एते चासहपिपासादौ दानायोपहर्तव्याः, कषायो व्रणक्षालनार्थः क्वाथः, आदिशब्दात् कवलिकाशरावादयः। परिकर्मिण इति सर्वकर्मकर्तारः; स्निग्धत्वमातुरे प्रधानगुणत्वात् प्रथममुक्तं, स्थिरा अचञ्चलमनसः ॥६॥

**ततः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्चयित्वा, कृतबलिमङ्गलस्वस्तिवाचनं लघुभुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य, यन्त्रयित्वा, प्रत्यङ्मुखो वैद्यो मर्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्, अनुलोमं शस्त्रं निदध्यादापूयदर्शनात्, सकृदेवापहरेच्छस्त्रमाशु च; महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तम् ॥ ७ ॥**

ततः प्रशस्तेष्वित्यादौ प्रशस्त एव तिथ्यादौ कृतं कर्म सिध्यत्यविघ्नेनेति दर्शयति। भुक्तवतो बलवत्तया शस्त्रवेदनासहत्वादुक्तं—भुक्तवन्तमिति। प्राच्या दिशः प्रशस्तत्वात् प्राङ्मुखमिति। शस्त्रपातपीडाचलनेनान्यत्र शस्त्राघातशङ्कानिरासार्थं यन्त्रयित्वेति। प्रतिलोमं रोमोपघातात् शस्त्रकुण्ठता तीव्रा च रुक् सम्भवति, अत उक्तम्—अनुलोममिति। आपूयदर्शनादित्यनेन पूय[१]प्राप्तौ दूरं शस्त्रप्रणिधानं निषेधयति। सकृदिति एकवारमेव। आशु चेति आश्वेव न चिरं, चकार एवकारश्च समुच्चये। शस्त्रपदप्रसारणं नियमयन्नाह—महत्स्वपीत्यादि। द्व्यङ्गुलमिति द्व्यङ्गुलायतम्, एवं त्र्यङ्गुलमिति। द्व्यङ्गुलं त्र्यङ्गुलं वा अतिमहादेशे गम्भीरपाके च। गम्भीरताप्रमाणं च पूयदर्शनादित्यनेनैव दर्शितम्; अन्ये तु गाम्भीर्य एव द्व्यङ्गुलत्वादि वर्णयन्ति ॥ ७ ॥

**तत्रायतो विशालः समः सुविभक्तो निराश्रय इति व्रणगुणाः ॥ ८ ॥**

वैद्यकृतव्रणगुणानाह—तत्रेत्यादि। आयतो दीर्घः, विशालो विस्तीर्णः, समो निम्नोन्नतरहितः, सुविभक्तो हीनातिरिक्तत्वदोषरहितः। अत्र पक्षे एवंभूतशस्त्रपदयोग्यतया व्रणशोथाकृतिलाभः। किंवा तत्रायतेत्यादि व्रणशोथविशेषणम्; तत्र पक्षे सम इति समपाकः, सुविभक्त उत्सङ्गादिरहितः, आयतत्वं विशालत्वं च पूर्ववदेव। अत्र पक्षे शोथापेक्षया वैद्येन व्रणकरणाद् व्रणाकृतिलाभः। व्रणगुणा इति व्रणे कर्तव्ये शोथगुणाः। [२]यदि वा शोथोऽपि व्रणहेतुतया व्रण उच्यते ॥ ८ ॥

**एकेन वा व्रणेनाशुध्यमाने [३]नान्तरा बुद्ध्याऽवेक्ष्यापरान् व्रणान् कुर्यात् ॥ ९ ॥**

---

१ 'पूयप्राप्त्युत्तरं' इति **मु.**। २ 'अत्र' इति **मु.**। ३ 'नान्तरेति समीपे हि कृतो व्रणोऽपार्थको भवतीति मध्यनिकटार्थयोर्निकटार्थस्यैवान्तराशब्दस्य नञर्थनशब्देन समासान्मध्ये दूरे वेत्यर्थः' इति **हाराणचन्द्रः**।

एकेन व्रणेन वैद्यकृतेन व्रणाशुद्धौ व्रणान्तरकरणमाह—एकेन वेत्यादि । यावद्भिर्व्रणैः पूयशोधनं भवति तावन्तो व्रणा आलोक्य कर्तव्या इत्यर्थः ॥ ९ ॥

भवतश्चात्र—

**आयतश्च विशालश्च सुविभक्तो निराश्रयः ॥**
**प्राप्तकालकृतश्चापि व्रणः कर्मणि शस्यते ॥ १० ॥**

पूर्वोक्तमर्थं श्लोकेनाह—आयतश्चेत्यादि । निराश्रय इति मर्मसिराद्याश्रयरहितः । यदा 'निराशयः' इति पाठस्तदा निरुत्सङ्ग इत्यर्थः । प्राप्तकालकृत इति उचितकालोपक्रान्तः; प्राप्तकाले पाककाले कृतः नातिक्रान्त इत्यर्थः । तथा ज्ञात्वा बुद्ध्या अबालवृद्धयोः शस्त्राग्निसाध्यः, शीतेऽग्निसाध्यो व्रणः, इत्यादि प्राप्तकालत्वेन ज्ञेयम् ॥ १० ॥

**शौर्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू ॥**
**असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥ ११ ॥**

कर्मणां गुणवद्वैद्याधीनत्वाद्वैद्यगुणानाह—शौर्यमित्यादि । शौर्यादाशु क्रिया निःशेषा[1] च भवति । आशुक्रियया रोगिणः क्लेशो न भवति । शस्त्रतैक्ष्ण्यादाशुक्रिया, रुजा च न भवति । शस्त्रतैक्ष्ण्यं तु शस्त्रगुणोऽपि वैद्यगुणत्वेनोक्तम् । असंमोहः सर्वत्र कर्तव्ये अज्ञाननिवृत्त्या सम्यग्ज्ञानम् ॥ ११ ॥

भवति चात्र—

**यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च ॥**
**तत्र तत्र व्रणं कुर्याद्यथा दोषो न तिष्ठति ॥ १२ ॥**

एकेन वेत्यादिनोक्तं बहुव्रणविषयमाह—यतो यत इत्यादि । उत्सङ्गो निम्नप्रदेशः । दोषोऽत्र पूयं, पूयाश्रया वातादयो वा ॥ १२ ॥

**तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टककक्षाकुक्षिवङ्क्षणेषु तिर्यक्छेद उक्तः[2]; अन्यथा तु सिरास्नायुच्छेदनादतिमात्रं वेदना, चिराद्व्रणसंरोहो, मांसकन्दीप्रादुर्भावश्चेति ॥ १३ ॥**

"हीनातिरिक्तं तिर्यक् च" ( सू. अ. २५ ) इत्यादिना तिर्यक्छेदप्रतिषेधात् प्रदेशविशेषे तिर्यक्छेदप्रसवमाह—भ्रूगण्डेत्यादि । विपर्यये दोषमाह—अन्यथेत्यादि । अत्र भ्रूगण्डादौ तिर्यगेव सिरादयः सन्ति, तेनान्यथाच्छेदे सिरादिच्छेदादेते दोषा भवन्ति । मांसकन्दीप्रादुर्भावः कन्दवन्मांसाङ्कुरसम्भवः ॥ १३ ॥

**मूढगर्भोदराशोंऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म कुर्वीत ॥१४॥**

---

१ 'निःशेषं' इति मु. । २ अस्याग्रे 'चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत् । अर्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान्' इति श्लोकः केषुचित्पुस्तकेषु पठ्यते, परं डल्हणचक्रपाणिभ्यामव्याख्यातत्वादेतदर्थानुवादिना वाग्भटेनाप्यपठितत्वाच्चानार्षोऽयमिति प्रतिभाति ।

भुक्तवतः कर्मोपदिष्टं; तस्य रोगविशेषेष्वपवादमाह—मूढगर्भेत्यादि । एष्वन्नपूर्णकोष्ठतया यन्त्रदानपीडनादिना कष्टं मरणं वा भवति । अर्शोविकारे[1] तु अनिलप्रशमनार्थं "स्निग्धमन्नं द्रवप्रायं भुक्तवन्तं" ( चि. अ. ४ ) इति वचनं तथा भोजनं दर्शयतीति न विरोधः । मुखरोगे तु घृणादिनाऽऽहारप्रत्यागमनात् कर्मविरोधः ॥ १४ ॥

**ततः शस्त्रमवचार्य, शीताभिरद्भिरातुरमाश्वास्य,[2] समन्तात् परिपीड्याङ्गुल्या, व्रणं परिमृज्य, प्रक्षाल्य कषायेण, प्रो(प्लो)तेनोदकमादाय, तिलकल्कमधुसर्पिःप्रगाढामौषधयुक्तां[3] नातिस्निग्धां नातिरूक्षां वर्तिं प्रणिदध्यात्; ततः कल्केनाच्छाद्य, घनां कवलिकां दत्त्वा, वस्त्रपट्टेन बध्नीयात्; वेदनारक्षोघ्नैर्धूपैर्धूपयेत्, रक्षोघ्नैश्च मन्त्रै रक्षां कुर्वीत ॥ १५ ॥**

शीताभिरद्भिराश्वास्य प्राणरक्षार्थम् । समन्तात् पीडनं दोषनिर्गमनार्थम् । परिमृज्येति समीकरणार्थम् । कषायेणेति सद्योव्रणहितकषायेण, अन्ये तु शोधनकषायेणेति वदन्ति । वर्तिं प्रणिदध्यादिति व्रणाशये गतावुत्सङ्गे च विकेशिकासंज्ञां व्रणास्रावार्थं तिलकल्कादियुक्तां पटवर्तिं दत्त्वा । कल्केनेति सद्योव्रणहितकल्केनेति, अपरे शोधनकल्केनेति वदन्ति । कवलयति औषधद्रव्यमिति कवलिका, पलाशोदुम्बरिकादीनां भग्नोक्तानां त्वक्पत्रादिकृता । बध्नीयादिति व्रणदोषोचितकोषादिबन्धेन व्रणालेपबन्धविधिनिर्दिष्टेन योजयेत् । वेदनारक्षोघ्नैरित्यनेन वेदनारक्षोहननमेव धूपप्रयोजनं मुख्यं, मक्षिकादिप्रतिषेधादि च गौणं प्रयोजनं धूपस्य दर्शयति ॥ १५ ॥

**ततो गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रविमिश्रैराज्ययुक्तैर्धूपयेत्; आज्यशेषेण चास्य प्राणान् समालभेत ॥ १६ ॥**

वेदनारक्षोघ्नान्निदर्शयति—ततो गुग्गुल्वित्यादि । आज्यशेषेणेति धूपोपयुक्तशेषघृतेन । प्राणानिति तदाधारतया हृदयं लक्षयति ॥ १६ ॥

**उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म कुर्यात्; तद्वक्ष्यामः—॥ १७ ॥**

**कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च ॥**
**रक्षाकर्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥ १८ ॥**
**नागाः पिशाचा गन्धर्वाः पितरो[4] यक्षराक्षसाः ॥**
**अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥ १९ ॥**
**पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः ॥**
**दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः ॥ २० ॥**

---

१ '°अर्शोऽधिकारे' इति मु. । २ 'अद्भिः परिषिच्यातुरमाश्वास्य' इति ता. । ३ 'तिलकल्कमधुसर्पिःप्रगाढां वर्तिं प्रणिधाय पत्रेणाच्छाद्य कवलिकां दत्त्वा बन्धेनोपपादयेत्' इति ता. । ४ 'यक्षा रक्षांस्यथ ग्रहाः' इति ता. ।

पान्तु त्वां मुनयो ब्राह्म्या दिव्या राजर्षयस्तथा ॥
पर्वताश्चैव नद्यश्च सर्वाः सर्वे च सागराः ॥ २१ ॥
अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च ॥
सोमो व्यानमपानं ते पर्जन्यः परिरक्षतु ॥ २२ ॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः ॥
बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा ॥ २३ ॥
कामांस्ते पान्तु गन्धर्वाः सत्त्वमिन्द्रोऽभिरक्षतु ॥
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥ २४ ॥
चक्षुः सूर्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः ॥
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ॥ २५ ॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ॥
आकाशं खानि ते पान्तु देहं तव वसुन्धरा ॥ २६ ॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ॥
पौरुषं पुरुषश्रेष्ठो ब्रह्माऽऽत्मानं ध्रुवो भ्रुवौ ॥ २७ ॥
एता देहे विशेषेण तव नित्या हि देवताः ॥
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ॥ २८ ॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्वताम् ॥
( स्वस्ति ते चन्द्रसूर्यौ च स्वस्ति नारदपर्वतौ ॥ )
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ॥ २९ ॥
पितामहकृता रक्षा स्वस्त्यायुर्वर्धतां तव ॥
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ॥ ३० ॥
इति स्वाहा ॥
एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः ॥
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥ ३१ ॥

व्रणे शोणितपूयादिसंभवात् प्रसक्तरक्षोभयपरिहारार्थं रक्षाकर्म निर्दिशन्नाह—उदकुम्भाच्चेत्यादि । उदकुम्भादिति मङ्गलार्थोपात्तोदकुम्भात् । प्रोक्षयन्निति वक्ष्यमाणमन्त्रैः कृत्यानामित्यादिभिर्दीर्घमायुरवाप्नुहीत्यन्तैः ॥ १७—३१ ॥

ततः कृतरक्षमातुरमागारं प्रवेश्य, आचारिकमादिशेत् ॥ ३२ ॥

ततः कृतरक्षमित्यादि । आचारिकमादिशेदिति एवमाहाराचारौ कर्तव्यावित्युपदिशेत् । आचारशब्देन चरतेर्गतिभक्षणार्थत्वादाहारोऽपि लब्धः । तेन व्रणितोपासनीयवक्ष्यमाण आचारः सर्वो गृह्यते ॥ ३२ ॥

---

१ 'दिशन्तु च निरामयम्' इति ता. ।

**ततस्तृतीयेऽहनि विमुच्यैवमेव बध्नीयाद्वस्त्रपट्टेन; न चैनं त्वरमाणोऽपरेद्युर्मोक्षयेत् ॥ ३३ ॥**

ततस्तृतीयेऽहनीत्यादावेवमेवेति सद्योव्रणोक्तकषायादिना पूर्ववद्बन्धनम्; अपरेऽत्रापि शोधनकषायादिनेति वदन्ति ॥ ३३ ॥

**द्वितीयदिवसपरिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति, तीव्ररुजश्च भवति ॥ ३४ ॥**

द्वितीयदिवसमोक्षे दोषमाह—द्वितीयेत्यादि । विग्रथितो[1] ग्रन्थिरूपः सम्यगनङ्कुरित इति यावत् ॥ ३४ ॥

**अत ऊर्ध्वं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात् ॥ ३५ ॥**

अत ऊर्ध्वमिति तृतीयदिवसादूर्ध्वम् । वातादयो दोषाः, कालो हेमन्तादिः, बलमुत्तमादिभेदभिन्नम् । अत्र शारीरेऽपि व्रणे शस्त्रेण कृतं पाटनमित्यागन्तुत्वमप्यस्तीति कृत्वा त्र्यहं सद्योव्रणवत् कषायादिप्रयोगं वदन्ति; तदूर्ध्वं तु शारीरव्रणवदेव कषायादिप्रयोगः । यत्तु "कषायमधुराः शीताः क्रियाः स्निग्धाश्च योजयेत् । सद्योव्रणानां सप्ताहं पश्चात् पूर्वोक्तमाचरेत्" (चि. अ. २) इति विधानं, तत् खड्गादिजनितसद्योव्रणविषयमेव, नेह शस्त्रकृतपाटनमात्रे भवितुमर्हति । ये तु प्रथमत एव शोधनकषायेण क्षालनं शोधनकल्कदानं च वदन्ति, तैर्वैद्यकृतपाटनेऽप्यस्य यथोक्तवर्तिर्व्रणशोधनार्थं दीयते, तथा कषायकल्कदानमपि शोध्यत्वाद्व्रणस्य शोधनं वदन्ति; सद्योव्रणहितकषायकल्कौ हि सन्धानरोपणकारकौ, न चात्र शुद्धे व्रणे सन्धानं रोपणं वा मुख्यतयोक्तमिति । ऊर्ध्वमित्यनेन तु दोषकालाद्यपेक्षं कषायाद्युच्यते; प्रथमं सामान्येन शोधनं कृतमिति विशेषः ॥ ३५ ॥

**न चैनं त्वरमाणः सान्तर्दोषं रोपयेत्; स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति ॥ ३६ ॥**

अशुद्धे व्रणे रोपणप्रयोगं निषेधयन्नाह—न चैनमित्यादि ॥ ३६ ॥

**भवन्ति चात्र—**

**तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद्व्रणम् ॥**
**रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥**
**हर्षं क्रोधं भयं चापि यावत् स्थैर्योपसंभवात् ॥ ३७ ॥**
**हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत् ॥**
**त्र्यहाद् द्व्यहाच्छरद्ग्रीष्मवर्षास्वपि च बुद्धिमान् ॥ ३८ ॥**

तस्मादित्यादौ अन्तःशुद्धिर्वातादिवेदनाविगमात्, बहिःशुद्धिः रक्त[2]स्रावादिशुद्ध्या ।

---

१ 'द्वितीयदिवसे तु विग्रथितो' इति मु. । २ 'वर्णरसादिशुद्ध्या' इति मु. ।

रूढेऽप्यजीर्णादिवर्जनं पुनरागमनभयात् । आदिग्रहणाद्व्यादिग्रहणमुक्तम् । तृतीयदिनमोक्षं हेमन्तादिषु व्यवस्थापयन् निषिद्धं च द्वितीयदिनमोक्षं ग्रीष्मादिषु दर्शयन्नाह— हेमन्ते शिशिरे चैवेत्यादि । हेमन्तादिषु शीतत्वेन पैत्तिक[1]व्रणस्य द्व्यहेऽपि मोक्षणं भवतीति चकारेण सूच्यते; तथा ग्रीष्मादौ पैत्तिकस्य शीघ्रतरमपि मोक्षो भवतीति च वर्षादिष्वपि चेति चकारेण दर्श्यते । तेन पैत्तिकं व्रणं शरदि ग्रीष्मे द्विरह्नो बध्नीयादित्यप्यविरुद्धं भवति । अत्र 'हेमन्ते च वसन्ते च प्रावृट्काले च मोक्षयेत्' इत्याद्यपि पाठः, तं च प्रावृट्कालस्याषाढश्रावणरूपस्योष्णतया न हेमन्तादिवत् त्र्यहबन्धनविषयत्वमिति नानुमन्यन्ते ॥ ३७ ॥ ३८ ॥

**अतिपातिषु रोगेषु नेच्छे[2]द्विधिमिमं भिषक् ।**
**प्रदीप्तागारवच्छीघ्रं तत्र कुर्यात् प्रतिक्रियाम् ॥ ३९ ॥**

संप्रत्युपहर्तव्यं संपाद्य कर्म कर्तव्यं, तथा त्र्यहादिमोक्षः कर्तव्यः, इत्यादिकमुक्तं विधिमतिपातिषु रोगेषु व्यभिचारयन्नाह—अतिपातिष्वित्यादि । अतिपातिषु आशुकारिषु । तेनाशुकारिषु अकृताग्रोपहरणस्यापि कर्म कर्तव्यं, बन्धनं मोक्षणं चालोक्य शीघ्रतरं कर्तव्यमिति प्रदीप्तागारदृष्टान्तेन दर्शयति ॥ ३९ ॥

**या वेदना शस्त्रनिपातजाता तीव्रा शरीरं प्रदुनोति जन्तोः ॥**
**घृतेन सा शान्तिमुपैति सिक्ता कोष्णेन यष्टीमधुकान्वितेन ॥ ४० ॥**

**इति सुश्रुतसंहितायां सूत्रस्थानेऽग्रोपहरणीयो नाम**
**पञ्चमोऽध्यायः ॥ ५ ॥**

अतिपातिरोगेषु त्वरादिनिर्देशप्रस्तावेन त्वरया तात्कालिकीं वेदनां चिकित्सितुमाह— या वेदनेत्यादि । प्रदुनोति उपतापयति । 'प्रतनोति' इति पाठपक्षे व्याप्नोतीत्यर्थः । अत्र वातपित्तवेदनायां स्नेहात् कोष्णत्वाच्च वायुर्माधुर्याच्च पित्तं प्रशाम्यतीति ॥ ४० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां
सूत्रस्थानेऽग्रोपहरणीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

**अथात ऋतुचर्यमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये हेमन्तादय ऋतव उक्ताः, ते च स्वरूपतो नोक्ताः, अतस्तदुदाहरणोपोद्घातेन ऋतुचर्याध्यायारम्भः । चर्या चरणम्, ऋतुषु ऋतूनां वा चर्या ऋतुचर्या; तदधिकृत्य

---

१ 'पैत्तिकव्रणस्य पाकभयं नास्ति, तेन त्र्यहान्मोक्षः; ग्रीष्मादिषूष्णतया पाकभयमस्तीति द्व्यहान्मोक्षाभिधानम् । एतच्च व्रणमपेक्ष्य मोक्षणं, तेन हेमन्तादौ पैत्तिकस्य द्व्यहान्मोक्षणं भवतीति चकारेण सूच्यते' इति मु. । २ 'नेक्षेतेमं विधिं' ता. ।

कृतोऽध्यायः ऋतुचर्यः, तम्; उत्पन्नच्छप्रत्ययस्य पूर्ववल्लुक्। किंवा ऋतुचर्यार्थोऽध्यायः ऋतुचर्य उच्यते, तादर्थ्यात्; यथा ओदनार्थे तण्डुले ओदनशब्दः, ओदनं पचतीति प्रयोगात्। यदा तु 'ऋतुचर्यम्' इति पाठस्तदा "गदमदचरयम" (पा. अ. ३।१।१००) इत्यादिना यत्; चर्यशब्दश्चरणीयाहारविहारार्थः। यदा 'ऋतूनां चर्या' इति निरुक्तिः, तदा ऋतूनां रसाद्युत्पादकत्वं चर्यादिकारकवत्त्वं च चर्याशब्दार्थः। यदा तु 'ऋतुषु चर्या' इत्यर्थो दृष्टः, तदा 'वर्षा-हेमन्त-ग्रीष्मेषु संचितानां शरद्वसन्तप्रावृट्सु प्रकुपितानां निर्हरणं कर्तव्यम्' इत्यादि चर्याशब्दार्थः। ऋतुचर्याप्रसङ्गेन चापरार्थप्रतिपादनमिह ज्ञेयम् ॥१॥२॥

**कालो हि नाम स्वयम्भूरनादिमध्यनिधनः। अत्र रसव्यापत्संपत्ती जीवितमरणे च मनुष्याणामायत्ते। स सूक्ष्मामपि कलां कलीयत इति कालः, सं[1]कालयति कलयति वा भूतानीति कालः ॥ ३ ॥**

अथ, ऋत्वादिव्यवहारस्य कालाधीनत्वात् कालस्वरूपमाह—कालो हीत्यादि। हिशब्द उपदर्शने। नामेति प्रसिद्धौ। भवनं भूः सत्ता, स[2]त्कारणादेव भूरस्येति स्वयंभूः, नित्य इत्यर्थः। यतः स्वयंभूरत एवानादिमध्यनिधन इति योज्यम्। निधनमन्तः। स्वयंभूत्वेनैव नित्यत्वे लब्धे अनादित्वादिकथनं लोकप्रसिद्धमनित्यवैधर्म्यं दर्शयितुम्। कालं वैद्यकोपयुक्तेनोपाधि-संबन्धकृतेन धर्मेण निदर्शयन्नाह—अत्रेत्यादि। व्यापदप्रशस्ताऽप्यल्पतरत्वात् पूर्वमुक्ता। रसग्रहणेनात्र र[3]सवद्द्रव्यं निर्देष्टव्यं तदितरगुणांश्च लक्षयति। मनुष्याणामिति अत्राधिकृतत्वान्निर्देशः, तेन पश्वादीनामपि जीवनमरणे कालाधीने ज्ञेये। अत्र च कालसम्यग्योगेन रससंपत्, जीवितं च; कालायोगादिना तु रसव्यापत्, मरणं चेति विभागः; तेनैकरूपात् कालात् कथं विरुद्ध ( कार्यद्वयसंभव ) इति नोद्भावनीयम्। यत्तु वैशेषिकमते 'सर्वोत्पत्तिमतां निमित्त[4]कारणं कालः' इति कृत्वा निरुपाधेरेव कालस्य रसव्यापत्त्यादौ कारणत्वं, तद्वैद्यके निरुपयोगमेव, प्रवृत्तिनिवृत्त्यनुपयुक्तत्वात्। कालस्य निरुक्त्या स्वरूपं दर्शयन्नाह—स सूक्ष्मामपीत्यादि। कलीयत इति संख्यायते कलादिभागः, तेन सूक्ष्ममपि निमेषादिकं व्याप्य कालः संख्यायते, निमेषादेरपि कालविशेषत्वेन लोके प्रसिद्धत्वादित्यर्थः। कलीयत इति 'कल' संख्याने इति चुरादिण्यन्तात् कर्मणि लकारे "णेरनिटि" (पा. अ. ६।४।५१) इत्यत्र व्यवस्थितविभाषानुवृत्तेर्णिचो लोपाभावः, "अकृत्सार्वधातुकयोः" ( पा. अ. ७।४।२५ ) इति दीर्घत्वम्। किंवा 'न लीयते' इति पाठः, तदा सूक्ष्ममपि निमेषादिविभागं न लीयते न तिरोभवति सर्वं निमेषादि व्याप्नोतीत्यर्थः। एत[5]च्चार्थकथनम्। किंवा पृषोदरादित्वात् तन्निरुक्तौ कालशब्दः साध्यः। निरुक्त्यन्तराभ्यां सर्वभूतोत्पत्तिविनाशे हेतुत्वमाह—संकालयति कलयति वेति। संहरणात् संकालयति; कलयत्युत्पादयति, संख्यानस्योत्पादे सति भावादुत्[6]पादार्थता ॥ ३ ॥

---

१ 'संकलयति कालयति वा' इति ड.। २ 'सत्कारणाधीना स्वत एव' इति मु.। ३ 'रसद्वारा द्रव्यं' इति ह.। ४ 'कारणं' इति मु.। ५ 'एतच्चार्थकथनम्' इति मु. पु. नास्ति। ६ 'तदुत्पादार्थता' इति मु.।

**तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगप्रविभागं करोति ॥ ४ ॥**

संप्रति निरुपाधेः कालस्येहानुपयुक्तत्वात् सोपाधिं कालं व्याकर्तुमुद्यतः सोपाधेः कालस्योपयुक्तं रूपमाह—तस्य संवत्सरात्मन इत्यादि । यद्यपि औपाधिककालस्य निमेषादयोऽपि भेदाः सन्त्युपयुक्ताश्च, तथाऽपि ते परस्परविलक्षणाः, अतो न तैः सकलौपाधिककालनिर्देशः कर्तुं शक्यः, वर्षस्तु पुनरावृत्त्याऽपि तादृग्वर्ष एव भवति, अत उक्तं—संवत्सरात्मन इति । यत्तु पञ्चवर्षे युगे संवत्सरपरिवत्सरादिभेदकथनं, तन्नेह शास्त्रे प्राय उपयोगीति नादृतमत्र, तन्त्रान्तरव्याकृतत्वात्; ते पञ्चयुगमित्यादिना मनागुपयोगाद्युगव्याकरणं[1] भविष्यतीति न विरोधः । कालस्य च यद्यपि चन्द्रगत्यादयोऽपि नानाप्रकारा भेदकाः सन्ति, तथाऽप्यादित्यगतिरेव शीतोष्णादिभेदमापादयतीति निमेषादिषु कालभेदिकासंमतिरित्याह—भगवानित्यादि । यद्यपि च निमेषादौ निमेषोन्मेषादि कालावच्छेदकं, तथाऽपि निमेषादेः शीतोष्णादिविशेषानाधायकत्वात् सूर्यगतेस्तु शीतोष्णादिविशेषाधायकत्वान्निमेषादिक्रियावद्धि(च्छि)न्ना सूर्यगतिरेव निमेषादिकालावच्छेदिका ज्ञेया, तेन सुष्ठूक्तं—भगवानादित्यो गतिविशेषेण निमेषादिप्रविभागं करोतीति । निमेषादयोऽग्रे वक्ष्यमाणाः । गतिविशेषेणेति राश्याद्यवस्थानरूपगतिविशेषेण[2] । एते हि चरतो दिवाकरस्य गतिविशेषाः सूक्ष्मा अपि शीतोष्णादिविशेषात् परस्परं विशेषा भवन्ति ॥ ४ ॥

**तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः[3], पञ्चदशाक्षिनिमेषाः काष्ठा, त्रिंशत्काष्ठाः कला, विंशतिकलो मुहूर्तः कलादशभागश्च, त्रिंशन्मुहूर्तमहोरात्रं, पञ्चदशाहोरात्राणि पक्षः, स च द्विविधः—शुक्लः कृष्णश्च, तौ मासः ॥ ५ ॥**

तत्रेत्यादि । लघ्वक्षरोच्चारणमात्रो निमेष इति लघुरकारादिरक्षरो यावत्या सूर्यगत्या उच्चार्यते तावद्गत्यवच्छिन्नः कालो निमेषः, सूर्यगतिस्तु अस्मदादिनित्यपरोक्षा, तेन निमेषादिक्रिययैव सा लक्ष्यते । निमेषादिप्रयोजनं यथा—"स्नेहं मात्रासहस्रं तु धारयेद्धि प्रयोगतः" इति । मात्राशब्दो हि निमेषपर्यायः । यदुक्तं—"निमेषोन्मेषणं पुंसां स्फोटनं वाऽपि[4] चाङ्गुलेः । अक्षरस्य लघोर्वाऽपि मात्रा तूच्चारणं भवेत् ॥" इति । काष्ठाप्रयोजनं तु कलावच्छेदकत्वमिह ज्ञेयम् । आगमसिद्धत्वाच्च काष्ठाविभागो दर्शितः । कलाप्रयोजनं यथा—"स खल्वाप्यो रस एकैकस्मिन् धातौ त्रीणि त्रीणि कलासहस्राण्यवतिष्ठते" ( सू. अ. १४ ) इति । मुहूर्तप्रयोजनं—"स यदि मुहूर्तस्थितस्तादृश एव" ( सू. अ. ४५ ) इत्यादि । दिनादिप्रयोजनं तु "अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दूष्यति" ( चि. अ. ३७ ) इति; "पक्षाद्विरेको वान्तस्य" (चि. अ. ३६) इति; तथा—"मासेन रसः शुक्री-

---

१ 'उपव्याकरणं' इति मु. । २ 'राशिराश्यंशकसूक्ष्मभागादिचाररूपगतिविशेषेण' इति ह. । ३ 'लघ्वक्षिनिपातमात्रः' इति ता. । ४ 'वा तथाऽङ्गुलेः' इति मु. ।

भवति" ( सू. अ. १४ ) इत्यादि शास्त्रेषु बहुषु व्यक्तमेव । कलाया दशभागश्चेति दशमो भागः दशभागः काष्ठात्रयमित्यर्थः । एतदेव च मुहूर्तमानप्रमाणं यच्छोणितवर्णनीये मासप्रमाणं कलया सर्वतन्त्रसिद्धं वदन्ति—"अष्टादशसहस्राणि संख्या ह्यस्मिन् समुच्चये । कलानां नवतिश्चैव स्वतन्त्रपरतन्त्रयोः" ( सू. अ. १४ ) इति । एतद्धि काष्ठात्रयाधिकविंशतिकलामुहूर्तेन परं पूर्यते । तेन यद्भोजेऽप्युच्यते "त्रिंशत् काष्ठाः कलां विद्यान्मुहूर्तं विंशतिः कलाः" इति, तथा भालुकितन्त्रे "त्रिंशत्कलो मुहूर्तस्तु विज्ञेयः कुशलैर्नरैः" इति; स लिपिदोषात् पाठो वर्णनीयः । ( तत्र तु ऋतुसमयाद्वा ज्ञेयः । ) इह तु परतन्त्रग्रहणमौपधेनवादितन्त्रसंमत्या ज्ञेयम् । स द्विविधः शुक्लः कृष्णश्चेति अमावास्यादिपौर्णमास्यादि पक्षद्वयं प्राय उपयुक्तं दर्शयितुं कृतम् । तेन शुक्लकृष्णव्यतिमिश्रोऽपि पञ्चदशाहोरात्ररूपः पक्षो भवति; यथा—"पक्षाज्जातरसं पिबेत्" इत्यादौ । अत्र हि सन्धानदिनादारभ्य पञ्चदशाहेन पक्षः । तौ मास इति पञ्चदशाहरूपौ पक्षौ शुक्लकृष्णौ । पक्षद्वयरूपस्तु मासश्चन्द्रगतिकृतो नेहादित्यगतिभिन्ने काले प्रधानतया निर्देश्यः ॥ ५ ॥

**तत्र माघादयो द्वादश मासाः संवत्सरः, द्विमासिकमृतुं कृत्वा षड्तवो भवन्ति; ते च शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः; तेषां तपस्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः, शुचिशुक्रौ ग्रीष्मः, नभोनभस्यौ वर्षाः, इषोर्जौ शरत्, सहःसहस्यौ हेमन्त इति ॥ ६ ॥**

तत्र माघादय इत्यादि । माघादयो द्वादशेत्यादौ संवत्सर इति वचनं न संवत्सरनिर्देशपरं, किंतु माघादिद्वादशमासानां संवत्सररूपतया पुनस्तेनैव क्रमेणावृत्तिः, न त्रयोदशादिमाससंभव इति दर्शयितुं; तेनाक्रमेण संवत्सरोदाहरणं तथा द्विः संवत्सरोदाहरणमिति न संभावनीयम् । द्विमासिकमिति माघादिद्विमासिकम् । द्वादश मासाः षड्तवो भवन्तीति योजना । तपो माघः, तपस्यः फाल्गुनः, मधुः चैत्रः, माधवो वैशाखः, शुचिः ज्येष्ठः, शुक्र आषाढः, नभोनभस्यौ श्रावणभाद्रौ, इषोर्जौ आश्विनकार्तिकौ, सहः अग्रहायणः, सहस्यः पौषः ॥ ६ ॥

**त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालप्रविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरं च । तयोर्दक्षिणं वर्षाशरद्धेमन्ताः; तेषु भगवानाप्यायते सोमः, अम्ललवणमधुराश्च रसा बलवन्तो भवन्ति, उत्तरोत्तरं च सर्वप्राणिनां बलमभिवर्धते । उत्तरं च शिशिरवसन्तग्रीष्माः; तेषु भगवानाप्यायतेऽर्कः, तिक्त[2]कषायकटुकाश्च रसा बलवन्तो भवन्ति, उत्तरोत्तरं च सर्वप्राणिनां बलमपहीयते ॥ ७ ॥**

शीतोष्णवर्षलक्षणा इत्यधिकशीतोष्णवर्षलक्षणास्त्रयः, साधारणशीतोष्णवर्षलक्षणाश्च त्रयः, इति षड्तवः । चन्द्रादित्ययोरित्यादौ शिशिराद्याः षड्तवो द्वे अयने भवत

१ अयं पाठो मुद्रितपुस्तके नोपलभ्यते । २ 'कटुतिक्तकषायाश्च' इति ता. ।

इति योजना । चन्द्रादित्ययोः कालप्रविभागकरत्वादिति कर्कटादिराशिषट्कगत्या तथा मकरादिराशिषट्कगत्या च सूर्यस्य यथाक्रमं दक्षिणोत्तरायणस्वरूपे परमार्थतो भिन्नेऽपि चन्द्रादित्ययोर्बलवत्त्वेन वर्षशीतोष्णादिप्रयोजकेन कालेन प्रविभागादित्यर्थः । एतेन प्रथम-प्रतिपादितमादित्यगतेरयनप्रविभागकरत्वमविरुद्धं भवति । दक्षिणाभिमुखगमनं हि सूर्यस्य दक्षिणायनम्, उत्तराभिमुखगमनं चोत्तरायणमुच्यते; न तु चन्द्रगतिः काऽप्यत्रायन-भेदिका । बलवत्त्वं[१] तु दक्षिणायने चन्द्रस्य यद्भवति तदादित्यगतिवशादेव, एवं वायुबलवत्त्वमप्यादित्यगतिवशादेवोचितकाले स्वभावव्यवस्थितं भवतीति सिद्धान्तः । माघादिक्रमेणोत्तरायणनिर्देशे प्राप्ते प्रथममत्र दक्षिणायननिर्देशः, तस्य बलजनकत्वेन प्रशस्तत्वात् । तेषु भगवानाप्यायते सोम इति आदित्यस्य दक्षिणकर्कटादिराशिगति-महिम्नैव सोमस्य बलवत्त्वं ज्ञेयम्; एवमर्कस्यापि बलवत्त्वमुत्तरमकरादिराशिगतिप्रभा-वाज्ज्ञेयम् । अत्र वर्षासु अम्लो रसोऽपां विदाहाद्भवति, वर्षासु दक्षिणायनतया विसर्ग-रूपत्वे सति यद्यपि सौम्यत्वं, तथाऽप्यादानप्रकर्षाहितोष्णतायाः क्षीयमाणाया अपि महत्त्वादुष्णोऽम्लो रसो भवति । एवं शरदि आश्विनेऽर्कस्य वृद्धत्वादुष्णो लवणो रसः सोमवृद्ध्या च मनाक् स्निग्धो भवति; तथा कार्तिकेऽपि किंचित्क्षीयमाण-स्यार्कस्य लवणे उष्णतां प्रति कारणत्वं ज्ञेयम् । हेमन्ते तु सोमबलत्वप्रकर्षादर्कस्य चातिहीनबलवत्वाच्छीतः स्निग्धो गुरुश्च मधुरो रसो भवतीति युक्तमेव । एवं शिशिर-वसन्तयोरादानमहिम्ना क्षीयमाणस्यापि चन्द्रस्य विसर्गाहितबलतया बलवत्त्वमेव, तेन तिक्तकषायौ रसौ बलवन्तौ भवतः, आदानमहिम्ना तु तावेव रूक्षौ भवतः । वैशाखेऽपि च कषायस्य शीतस्योत्पत्तिर्विसर्गाहितशैत्यस्यानत्यल्पत्वाज्ज्ञेया[२] । ग्रीष्मे त्वर्कस्य बलवत्वादुष्णो लघू रूक्षश्च कटुर्भवतीति युक्तम् । किं तु कषायो रसो रूक्षतमः, रूक्ष-तरश्च कटुः । यदुक्तं **चरके**—"रूक्षात् कषायो रूक्षाणामुत्तमो मध्यमः कटुः" ( च. सू. अ. २६ ) इति । तेन कटो रूक्षतरस्योत्पादो वसन्ते प्राप्नोति, कषायस्य च ग्रीष्मे, तस्मात् कालमहिमाऽप्यत्राचिन्त्यो रसोत्पादकारणं ज्ञेयम् । वर्षादिषु चाम्लादीनां बल-वत्त्वमुक्तं, न तु सर्वथाऽम्लादित्वं; तेन यदुच्यते—"द्रव्याणां तेष्वृतुष्वम्लादिरसता-भिधानाद् द्रव्यगुणव्यवस्थितरसद्रव्याभिधानं व्यर्थम्" इति, तन्निरस्तं भवति । काल-महिम्ना ह्यम्लादेर्बलवत्त्वं वर्षादौ, तथा प्रकृत्या मधुरादिरसे द्रव्येऽनुरसत्वेनाम्लादि-र्भवति, न तु स्वभावभूतरसनाशः । यथा—आहारस्य षड्रसस्यापि मधुराम्लकटुकैरव-स्थापाकैः श्लेष्मादिजननमुक्तं, नत्ववस्थापाकजरसैः प्राकृताहाररसकार्यनाशः क्रियते, येन तत्र मधुरादयः स्वं स्वं कार्यं कुर्वन्त्येव; तद्वदिहापि प्रकृतिभूतरसकार्यं तथा काला-हितरसकार्यं च यथाभूतमेव पित्तचयादि कल्पनीयम् । वर्षादिषूत्तरोत्तरबलोपचयेऽप्या-दानाहितदुर्बलतया हीनं मध्यं तथोत्तमं क्रमाद्बलं भवति, तथा शिशिरादौ बलापच-येऽपि विसर्गाहितबलवत्तयोत्तमं मध्यमं हीनं च यथाक्रमं बलं भवति । तदुक्तं **चरके**—

---

१ 'समधिबलवत्त्वं' इति ह. । २ '°शैत्यस्याल्पत्वात्' इति मु. ।

"आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम्। मध्ये मध्यं बलं त्वन्ते श्रेष्ठमग्रे विनिर्दिशेत्" (च. सू. अ. ६ ) इति ॥ ७ ॥

**भवति चात्र—**

**शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि ॥**
**तावुभावपि संश्रित्य वायुः पालयति प्रजाः ॥ ८ ॥**

उक्तमर्थं[2] वायुव्यापाराधिक्यकथनयुक्तमुपसंहरन्नाह—सोम इत्यादि । क्लेदयतीति वर्षशिशिराभ्याम् । उभावपि संश्रित्येत्यनेन वायोर्योगवाहितयोभयार्थकर्तृतया प्रजापालनं दर्शयति । एतेन क्लेदनं केवलं तथा शोषणं वा न प्रजापालनं किं तु मिलितं, तच्च वायुना क्रियते, ताभ्यां वा मिलिताभ्यां क्रियत इति लभ्यते । यदुक्तं **चरके**—"तावेतावर्कवायू सोमश्च कालमार्गस्वभावपरिगृहीताः कालर्तुरसदोषबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते" ( च. सू. अ. ६ ) इति ॥ ८ ॥

**अथ[3] खल्वयने द्वे युगपत् संवत्सरो भवति । ते तु पञ्च युगमिति संज्ञां लभन्ते । स एष निमेषादिर्युगपर्यन्तः कालश्चक्रवत् परिवर्तमानः कालचक्रमित्युच्यत इत्येके ॥ ९ ॥**

संवत्सरं क्रमप्राप्तमाह—अथ खल्वयने इत्यादि । युगपत् मिलिते । एतच्चायनद्वयात्मकत्वं वत्सरस्य रसोत्पत्त्यादौ प्रसिद्धतरं, तेन "परिसंवत्सरो याप्यः" (च. चि. अ. ११) इत्यादौ रोगोत्पाददिनात् प्रभृति पुनस्तदुक्त[4]संबन्धितद्दिनप्राप्त्या वर्षत्वं गणनीयम् । युगमाह—ते तु पञ्चेत्यादि । ते तन्त्रान्तरप्रसिद्धाः संवत्सरपरिसंवत्सरादिसंज्ञाः पञ्च युगमिति संज्ञां लभन्ते । युगाश्च बृहस्पतिचारसहितादित्यगतिविशेषात् षष्ट्या वर्षैर्द्वादशरूपाः परिवर्तन्ते । यदुक्तमपूरचित्ते—"अब्दाष्टमुक्तं शकराजकालं संशोध्य षष्ट्या विषयैर्विभज्य । युगानि नारायणपूर्वकानि लब्धा विशेषाः क्रमशः समाः स्युः" इति। अत्र नारायणपूर्वकाः "विष्णुः सुरेशः" इत्यादिना द्वादशयुगाधिपा उक्ताः; तथा प्रतियुगं वर्षाणामसाधारण्यः संज्ञा देवताश्चोक्ताः । यथा—"संवत्सरोऽग्निः परिवत्सरोऽर्क इदा मतः शीतमयूखमाली । प्रजापतिश्चाप्यनुवत्सरः स्यादिद्वत्सरः शैलसुताधिपश्च" इत्यादिबहुप्रपञ्चेनोक्ताः । तथा काश्यपीये प्रोक्तं—"कालचक्रं तु वर्षाणां पञ्चानां संप्रवर्तते । युगसंज्ञा च दैवज्ञैस्तत्र संपरिकीर्तिता" इत्यादि । इह तु युग[5]प्रयोजनस्यानतिप्रयोजनत्वादशून्यतार्थं संज्ञामात्रेण कीर्तनमिति ज्ञेयम् । एतन्निमेषादिकालकथनेन पुनरावृत्तेस्तद्रूपतया सर्वकालकथनं भवतीति दर्शयन्नाह—स एष इत्यादि । चक्रवदिति चक्रं यथा भ्रममाणं पुनस्तदेव भ्रमते, एवं

१ 'सोमः क्लेदयते भूमिं सूर्यः शोषयते पुनः' इति ता. । २ 'उक्तमर्थमनुवदन्' इति ह. । ३ 'ते द्वे अयने वर्षः । संवत्सरः, परिवत्सरः, इदावत्सरः, इद्वत्सरः, वत्सरः, इत्येवं पञ्च वर्षाणि । ते पञ्च युगमिति संज्ञां लभन्ते' इति ता. । ४ 'तदृतुसंबन्धि°' इति मु. । ५ 'युगव्युत्पादनस्य' इति मु. ।

निमेषादयोऽपि युगान्ताः कालचक्रं भवति । एके इति रसबलादिजनकशिशिराद्यृतुक्रमवादिनः, तेन 'इह तु' इत्यादिना दोषचयादिकारकर्तुभेदोऽन्यवादिपक्ष इति भवति; किंवा एक इति युगान्तकालचक्रवादिनः, तेन कलियुगादिरूपयुगचक्रवादिनोऽपरे सन्तीति सूचितम्[1] ॥ ९ ॥

**इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तं; ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः; तद्यथा—भाद्रपदाश्वयुजौ वर्षाः, कार्तिकमार्गशीर्षौ शरत्, पौषमाघौ हेमन्तः, फाल्गुनचैत्रौ वसन्तः, वैशाखज्येष्ठौ ग्रीष्मः, आषाढश्रावणौ प्रावृडिति ॥ १० ॥**

रसवादार्थोक्तक्रमाद्व्यतिरिक्तं[2] दोषचयादिप्रयोजनमायुर्वेदोपयुक्तं दर्शयन्नाह—इह त्वित्यादि । अनेन च प्रकारेणात्रोपयुक्तः प्रावृडाद्यृतुक्रमोऽप्यस्तीति प्रदर्श्यते; न तु पूर्वोक्त ऋतुक्रमः खण्ड्यत इति ज्ञेयम् । अत एव प्रयोजनविषय उक्तः—दोषोपचयप्रकोपोपशमनिमित्तमिति । अयं च दोषचयादिक्रमो रसोत्पादक्रमाद्भवति; तेन हेतुभूतो रसोत्पादक्रमः प्रथममुच्यते, दोषचयादिक्रमस्तु कार्यतया कारणाधीन इति पश्चादुच्यते । दोषचयादिनिमित्ततया च शिशिरादौ दोषशोधनप्रयोजनमप्यस्य "तत्र वर्षाहेमन्तग्रीष्मेषु संचितानां" इत्यादिनाऽग्रे वक्ष्यमाणं लभ्यत एव । एतेन "एवमेते प्रावृडादयः षडृतवः संशोधनमधिकृत्य विभज्यन्ते" ( च. वि. अ. ८ ) इति चरकवचनं च संगतं भवति । चयादिकारकक्रमभेदमाह—तत्र भाद्रपदेत्यादि । प्रावृडिति प्रथमवृष्टिलक्षितः कालः । प्रशब्दोऽयमत्रादिकर्मणि । अत्र पक्षे शिशिरो नास्ति । चरकेऽपि तस्याशितीये रसबलोत्पादार्थं शिशिरादिक्रमो दर्शितः, तदनु रोगभिषग्जितीये संशोधनमधिकृत्य प्रावृडादिक्रम उक्तः; यथा—"हेमन्तग्रीष्मवर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति, तेषामन्तरेष्वितरे साधारणास्त्रयः प्रावृट्शरदवसन्ताः" ( च. वि. अ. ८ ) इत्यादि; तथा तत्रैव **दृढबले**नाप्युक्तम्—"अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः । तदन्तरे प्रावृडाद्या ज्ञेयाः साधारणास्त्रयः ॥ प्रावृट् शुक्रनभौ ज्ञेयौ शरदूर्जसहौ पुनः । तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति" ( च. सि. अ. ६ ) इति । तदेवं चरके सुश्रुते च प्रयोजनं विशेषेण ऋतुक्रमद्वयस्य दर्शितम् । काश्यपतन्त्रे यो देशभेदे(न) ऋतुभेदक्रम उक्तः स इहासंमतः । उक्तं हि **काश्यपीये**—"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जलम् । तत्र वर्षाप्रावृडाख्यौ ऋतू तेषां प्रकल्पितौ ॥ तस्या एवोत्तरे देशे हिमवद्धिप्रसंकुले[3] । भूयः शीतमतस्तेषां वसन्तशिशिरावृतू" इति । अयं च काश्यपमते देशभेदेन ऋतुभेदो देशभेदप्रयुक्ताहाराचारविशेषमेवगमयति[4] । यथा—मरुदेशे ग्रीष्मस्यैव प्रधानतया चिरं

---

१ 'सूच्यते' इति मु. । २ 'रसार्थोक्तर्तुक्रमात्' इति मु. । ३ 'हिमवद्धिमसंकुले' इति मु. । ४ 'एव गमयति' इति मु. ।

ग्रीष्मविधिः क्रियते, आनूपे च वसन्तविधिरेव प्रायः क्रियते । यदि तु देशविशेषनियत एव प्रावृडादिः शिशिरादिश्च क्रमः स्यात्तदा चरके प्रयोजनविशेषोद्देशेन तत्कथनमसंगतं स्यात् । रसाद्युत्पत्तिक्रमे श्रावणभाद्रपदौ वर्षारूपौ, दोषचयादिक्रमे च भाद्राश्विनौ वर्षारूपौ । श्रावणभाद्रपदयोरुत्पद्यमानोऽप्यम्लो रसो दुर्बलतया पूर्वर्त्वाहितवातप्रकोपप्रकर्षवति शरीरे न तथा पित्तचयं करोति, यथा—आदानाहितदुर्बलशरीरे वर्षादौ विसर्गो बलं जनयन्नपि न बलजनकतया लक्ष्यते, तेन श्रावणे मासि न पित्तचयो दर्शितः, भाद्रे तु बलवत्तयाऽम्लो रसः पित्तचयं करोतीति व्यपदिश्यते । एवमाश्विनेऽपि भाद्रान्तप्रवृद्धोऽम्लो रसः क्षीयमाणोऽपि वृद्ध एव लवणरससहकारितया च पित्तचयं करोति, यथा—आदानादौ ऋतुप्रवृद्धं बलं क्षीयमाणमपि प्रकृष्टमेव सत् स्वकार्यं करोतीति; तदेवं दोषचयाद्यर्थे ऋतुक्रमे भाद्राश्विनयोः पित्तचयकर्तृत्वमुपपन्नम् । अनया दिशा पौषमाघयोरपि कफचयकर्तृत्वम्, अग्रहायणस्य च कफचयं प्रत्यनुपपादेयत्वं वर्णनीयम् । वैशाखज्येष्ठयोस्त्वपगतसौम्यगुणतया वातचयकर्तृत्वमुपपन्नमेव ॥ १० ॥

**तत्र, वर्षास्वोषधयस्तरुण्योऽल्पवीर्या आपश्चाप्रशान्ताः क्षितिमलप्रायाः, ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां[1] विदह्यन्ते, विदाहात् पित्तसंचयमापादयन्ति; स संचयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीञ्जनयति । ता एवौषधयः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रशान्ताः स्निग्धा अत्यर्थं गुर्व्यश्च, ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च[2] श्लेष्मसंचयमापादयन्ति; स संचयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां[3] देहिनां श्लैष्मिकान् व्याधीञ्जनयति । ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च, ता उपयुज्यमानाः सूर्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाच्च वायोः संचयमापादयन्ति; स संचयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां देहिनां शीतवातवर्षेरितो वातिकान् व्याधीञ्जनयति । एवमेष दोषाणां संचयप्रकोपहेतुरुक्तः ॥ ११ ॥**

संप्रति ऋतून् विभज्य तेषां चयादिहेतुत्वं यथा भवति तथाऽऽह—तत्र वर्षास्वित्यादि । तरुण्यः अभिनवाः; अत एवाल्पवीर्याः; अभिनवत्वं च वर्षजातपल्लवादितया पूर्वसिद्धानामप्यौषधीनां ज्ञेयम् । विदह्यन्त इति कालप्रभावादम्लरसोद्गमादग्निमान्द्याच्च । शीतवातविष्टम्भिताग्नीनामिति शीतेन कुपितो वातः शीतवातस्तेन व्याहताग्नीनाम् । अत्र च

---

१ 'शीतवातवर्षाविष्टम्भिताग्नीनां' इति ता. । २ 'उपलेपित्वात्' इति ता. । ३ 'ईषत्स्तब्धदेहानां' इति ताडपत्रपुस्तके न पठ्यते ।

क्षीणबलशरीरत्वादिसहितः शीतकुपितो वातो वह्निमान्द्यं करोति, न वैषम्यमिति ज्ञेयम्। शीतकाले तु शीतगुणयुक्तोऽनिलो बहिरनिर्गच्छदुष्मणो निरोधाद्बलवति शरीरे वृद्धिमादधातीति न विरोधः। विदाहादिति ओषधीनामपां च। पैत्तिकान् व्याधीनिति अम्लीकापिपासापरिदाहादीन्। ता एवेत्यादि। मन्दकिरणत्वाद्भानोरिति श्लेष्मचयानुगुणत्वं कालमहिम्ना भानोः। सतुषारोपस्तम्भितदेहानामिति सह तुषारेण वर्तते इति सतुषारश्चन्द्रमाः; तेनाप्यायितदेहानाम्। अविदग्धा इति मधुरपाकं गताः। स्नेहादिवदोषधीनामपां च गुणेभ्यः समानः श्लेष्मा चीयत इत्याह—स्नेहादित्यादि। प्रविलायित इति भाषया अनतितीक्ष्णतया भानोर्विलयनमात्रं दर्शयति, न शोषणं श्लेष्मणः। श्लैष्मिकान् व्याधीनिति अन्नद्वेषहृदयोत्क्लेशादीन्। ता एवौषधयो निदाघे निःसारा इति अपगतसौम्यांशाः, अत एव रूक्षा लघ्व्यश्च समगुणं वातं चिन्वन्ति। अत्र ग्रीष्मे उष्णेऽपि वातस्य रूक्षगुणप्राधान्याच्चयो भवति। रौक्ष्यं तु वायोः प्रधानो गुण इति कटुकेन रूक्षोष्णेन वातवृद्धिनिदर्शनात्, तथा मधुरेण शीतस्निग्धेन वातप्रशमदर्शनाच्चावगम्यते। यदि शीतत्वमपि वाते प्रधानं स्यात् तदा न कटुकेनोष्णेन वृद्धिः, मधुरेण वा शीतेन न प्रशमः स्यात्; शीतत्वं च वायोरायुर्वेदसिद्धान्ते। रूक्षत्वं वायोः प्रथमनिर्देशात्[1] प्रधानमिति सत्यमेव, परं कटुना वातवृद्धिः रौक्ष्यलाघववैशद्याद्यैर्भूरिभिर्वातसमानगुणै रौक्ष्यमभिभूय[2] क्रियते, मधुरेण च स्नेहान्माधुर्यगौरवात् पैच्छिल्याच्च वातजय इति "विरुद्धगुणसंनिपाते भूयसाऽल्पमवजीयते" (च. वि. अ. १) इति न्यायादेवोपपन्नमिति पश्यामः। विस्तरोक्तमुपसंहरति—एवमेष इत्यादि॥ ११॥

**तत्र वर्षाहेमन्तग्रीष्मेषु संचितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्तव्यम्॥ १२॥**

अत्र चयप्रकोपावसरे पूर्वमेकवर्गेण सूचितस्यापि प्रशमस्यानभिधानं प्रकोपानन्तरवक्तव्यशुद्धेः प्रस्तुतत्वात्, अत एवानन्तरं[3] शुद्धिविधानमित्यत आह—तत्र वर्षेत्यादि। प्रकुपितानामित्यत्र प्रशब्देन बहुत्वेन कोपः शोधनविषय इति दर्शयति। बहुदोषे हि शोधनं भवति। यदा तु तत्र ऋतूक्तविध्याऽऽहारादिना मध्यबलो दोषो भवति तदा पाचनादि कर्तव्यं, यदा स्वल्पदोषता तदा लङ्घनादि कर्तव्यमिति दर्शयति। प्रकुपितानां निर्हरणं कर्तव्यमिति वक्तव्ये यत् पुनः शरद्-वसन्त-प्रावृट्सु निर्हरणं कर्तव्यमिति वदति, तेनोत्सर्गतः साधारणशीतादिगुणतया शरदादावेव शोधनं दर्शयति, वर्षाहेमन्तग्रीष्मेषु त्वतियोगाच्छोधनं निषेधयति। यदुक्तं **चरके**—"साधारणेष्वृतुषु वमनादीनां प्रवृत्तिः, निवृत्तिः पुनरितरेषु" (च. वि. अ. ८) इति। आत्ययिके पुनर्व्याधौ वर्षादावपि शोधनं; यदुक्तं **चरके**—"आत्ययिके पुनः कर्मणि" (च. वि. अ. ८) इत्यादि। एतच्चात्रापि प्रावृट्सु चेति चकारेण सूचितमिति ज्ञेयम्। अयं चार्तवो दोषचयादिः ऋतुविपरीताहारा-

---

१ 'प्रथमनिर्देशात्' इति मु. पु. नास्ति। २ 'औष्ण्यं' इति मु.। ३ 'एवानुगुणं' इति ह.।

चारमकुर्वतां भवति, ऋतुविपरीताहाराचारक्रमे सति चाल्पो भवति न भवत्येव वा, इति च ज्ञेयम् । तत्र शरदादीनां हि द्विमासिकत्वेऽपि तन्त्रान्तरदर्शनाच्छोधनमासव्यवस्था । तदुक्तं **कपिलवचने**—"मधौ सहे नभसि[1] च मासि दोषान् प्रवाहयेत् । वमनैश्च विरेकैश्च निरूहैः सानुवासनैः" इति । तथा **चरके**ऽप्युक्तं—"माधवप्रथमे मासि नभस्यप्रथमे पुनः । सहस्यप्रथमे चैव वाहयेद्दोषसंचयम्" ( च. सू. अ. ६ ) इति । माधवो वैशाखस्तस्य प्रथमश्चैत्रः, नभस्यो भाद्रस्तस्य प्रथमः श्रावणः, सहस्यः पौषस्तस्य प्रथमो मार्गशीर्षः । **भट्टारहरिचन्द्रस्तु** सहशब्दमकारान्तं कृत्वा तत्प्रथमं कार्तिकमाह, पठति च—"कार्तिके श्रावणे चैत्रे मासि साधारणे क्रमात् । वर्षादिसंचितान् दोषान् त्रिमासान्तरितान् हरेत्" इति । अस्मिन् पक्षे त्रिमासान्तरितत्वं दुर्घटं **कपिलबल**[2]वचनविरोधश्च ॥ १२ ॥

**तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां शरदि, स्वभावत एव; त एते संचयप्रकोपोपशमा व्याख्याताः ॥ १३ ॥**

शुद्धिमभिधाय प्राकृतमुपशममाह—तत्र पैत्तिकानामित्यादि । वातिकानां शरदीति वर्षाप्रावृषोस्तुल्यरूक्षशीतगुणतया ऋतुद्वये वातकोपस्तिष्ठति, पित्तकफमथान्तरे ऋतावुपशाम्यति । उपसंहरति—स्वभावत इत्यादि । स्वभावत इति कालस्य शीतादिगुणतः ॥ १३ ॥

**तत्र, पूर्वाह्णे वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकं, शारदमर्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेत्; एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् ॥ १४ ॥**

सांवत्सरिकं विधिं दिवसेऽप्यतिदिशन्नाह—तत्र पूर्वाह्ण इत्यादि । वासन्तिकं लिङ्गमिति कफप्रकोपः । अत एव तत्र पूर्वाह्णे वमनं देयमित्यादिकफप्रकोपानुगुणं बहु शास्त्रे विधानम् । मध्याह्ने ग्रैष्मिकमिति भानोर्बलवत्त्वाच्छ्लेष्मक्षयादिलक्षणम् । अत एव श्लेष्मक्षयेऽत्र विरेचनमुक्तं—"मध्याह्ने तु विरेचनम्" इत्यादिना; उच्यते च—"श्लेष्मोत्तरश्छर्दयति ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यक्" ( च. सि. अ. १ ) इति । प्रावृषेण्यमिति वातकोपलक्षणम् । अत एवानुवासनं वातशमनं विधीयतेऽपराह्णे, वातिकज्वरस्याभ्यागमनमभिवृद्धिर्वेति । **चरके** तु निरूहदानं यत् "मध्याह्ने किंचिदावृत्ते दद्यादास्थापनं बुधः" इत्यनेनोक्तं तत्तदैव स्फुटस्रोतसि शरीरे स्रोतःशुद्धिकरस्य निरूहस्य यौगिकत्वादिति ज्ञेयम् । प्रदोषे वार्षिकमिति पित्तचयहेतुत्वं, शारदम[3]र्धरात्रे इति पित्तकोपहेतुत्वं, प्रत्यूषसि हैमन्तमिति पित्तप्रशमहेतुत्वं, कफचयहेतुत्वं च हैमन्तं लिङ्गं ज्ञेयम् । एते चाहोरात्रावयवविशेषाः स्वभावादेव शीतोष्णादिसूक्ष्म-

१ 'नभसे' इति **मु.** । २ 'कपिलवचनविरोधश्च' इति **मु.** । ३ 'मध्यमे दिने' इति **ह.** ।

विशेषैर्युक्ता दोषचयादिहेतवो भवन्तीत्यनुभवादागमाच्चावधार्यते । तेनार्धरात्रेऽपि कालमहिम्नैव पित्तप्रकोपो ज्ञेयः । यत्तु, अर्धरात्रे प्रायोऽन्नविदाहो भवति, तेनार्धरात्रे पित्तप्रकोपो भवति स आहारावस्थाकृतः पित्तप्रकोपो न कालकृतः, तस्मात् कालस्वभाव एवात्र कारणं वक्तव्यम् । अन्यत्राप्युक्तं—"नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम्" (वा. सू. अ. १) इति । यत्तु व्रणप्रश्ने प्रभातस्य वातप्रकोपकत्वं, मध्याह्नस्य पित्तप्रकोपकत्वं, प्रदोषस्य कफप्रकोपकत्वं, तत्पूर्वकालकृतचयक्रमेण भवतीति नेह मुख्यतया वर्ण्यते; यदि वा तदपि मध्याह्नादौ ग्रीष्मादिलक्षणतया ग्राह्यम् । अयं चाहोरात्रावयवकृतदोषचयादिरहोरात्रावयवपूर्वाह्णादिस्वभावनियतोष्णत्वादिकृतोऽल्पकारणतया स्वल्पः, ऋतुकृतस्तु भूरिचिरकालानुगतकारणतया महान् चिरकालव्यापकः, तदनयोर्भिन्नहेतुसमानयोरनुभवागमसिद्धयोर्न बाध्यबाधकभावः । तेन शरत्काले प्रत्यूषसि हैमन्तिकलिङ्गतया यः पित्तप्रशमो नासौ शरदाहितपित्तप्रकोपं प्रशमयति, किंत्वर्धरात्रप्रभावजनितपित्तप्रकोपं प्रशमयति, शरदाहितस्तु पित्तप्रकोपोऽनुवर्तत एव; शरदर्धरात्रे तु ऋतुकृतः पित्तप्रकोपो बलवानस्ति, अर्धरात्रमहिमकृतश्च भवतीति नितरां पित्तप्रकोपो लक्ष्यते । यथा—दिवा सूर्यतेजस्यग्निजनितं च यदा तेजो भवति तदा तेजो वृद्धतरं भवति, एवमन्यत्राप्यहोरात्रावयवे वर्णनीयम् । शीतोष्णवर्षेत्यादौ शीतेन प्रत्यूषम्, उष्णेन मध्याह्नमर्धरात्रं च, वर्षेण प्रदोषं, पूर्वाह्णादींश्च साधारणशीतादिना जानीयात् । प्रदोषे च सोम[1]गुणातिरेको(कात्) वर्षणमिव वर्ष इति विज्ञेयम् । चयादयश्च प्रभातादौ व्याहृता एव ॥ १४ ॥

**तत्र, अव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च; ता उपयुज्यमानाः प्राणायुर्बलवीर्यौजस्कर्यो भवन्ति ॥ १५ ॥**

इदानीं यथोक्तानामृतूनामव्यापन्नानां सहेतुकं कार्यान्तरमाह—तत्राव्यापन्नेष्वित्यादि । ओषधय इह सर्वाहारद्रव्याणि । प्राणशब्देनात्राग्निसोमादयो ग्राह्याः, बलं शक्तिः, वीर्यं मानसं बलमुत्साहसंज्ञकम्, ओजः सप्तधातुसारं; किंवा प्राणः शक्तिः, बलमुपचयः । ननु, अव्यापन्नेष्वृतुष्वव्यापन्ना ओषधय आपश्च दोषचयादिकर्तृतयोक्ताः, ता एव कथं प्राणादिहेतवो भवन्ति? दोषजनकं हि प्राणाद्युपघातकं भवति । मैवं, तासामव्यापन्नत्वेनेह प्राणादिजनकत्वं, यत्तु दोषचयहेतुत्वं तत्कालस्वभावाहिताम्लमधुरादिगुणोत्कर्षाद्भवदपि प्राणादिजनितसाम्यतादिरूपं व्याहन्ति दुष्टत्वात्[2]; यथा—आहारस्य शरीरपुष्ट्यादिजनकत्वं च भवति, अप्रतिक्रियायां शरीरोपघातकमलमूत्रादिहेतुत्वं च भवति, तद्वदेतदपि ज्ञेयम् ॥ १५ ॥

**तासां पुनर्व्यापदोऽदृष्टकारिताः । शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च । तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवति । तत्र, पुराणाभिरोषधिभिरनुपहतवीर्याभिः क्रियाः[3] कार्याः १६**

---

१ 'श्लेष्मगुणातिरेकः' इति ह. । २ 'दृष्टत्वात्' मु. । ३ 'अव्यापन्नानामोषधीनामपां चोपयोगः' इति ड. ।

अव्यापन्नर्तुमूलानामोषधीनामपां चाव्यापदमभिधाय तासां व्यापदः सहेतुकाः प्राह— तासां पुनरित्यादि । अदृष्टकारित्वमेव विवृणोति—शीतोष्णेत्यादि । अदृष्टकारितशीतोष्णादिवैपरीत्येन शीताद्यात्मकानामृतूनामयोगातियोगमिथ्यायोगलक्षणा व्यापदोऽभिमताः । एतदेव चाध्यायान्ते वक्ष्यति—स्वगुणैरतियुक्तेष्वित्यादिना । पुराणाभिरिति अव्यापन्नर्तुसमयोद्धृताभिः ॥ १६ ॥

**कदाचिदव्यापन्नेष्वप्यृतुषु कृत्याभिशापक्रोधाधर्मैरुपध्वस्यन्ते जनपदाः, विषौषधिपुष्पगन्धेन वा वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते, ग्रहनक्षत्रचरितैर्वा, गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा ॥ १७ ॥**

संप्रति, ऋतुव्यापदो जनसाधारणरोगकारणत्वमभिधाय प्रकरणादपरमपि जनसाधारणरोगकारणमाह—कदाचिदित्यादि । कृत्या राक्षसी अभिचारजाता, अभिशापो गुरुसिद्धादीनां, क्रोधो राक्षसस्य । विषौषध्यो अतिनिन्द्यादिकाः (?); गन्धेन गन्धवद्द्रव्यं सूक्ष्मं गृह्यते, निराश्रयस्य गन्धस्य गत्यभावात् । ग्रहाः सूर्यादयः, तेषामिह चरितं दुष्टाचारो ज्ञेयः; नक्षत्राणां चाश्विन्यादीनां चरितमिह दुष्टग्रहयुक्तत्वादि ज्ञेयम् । गृहादीनां गर्हितलक्षणानि गर्हितच्छायाप्रादुर्भावादीनि । एतानि च लक्षणानि जनपदोद्ध्वंसं गमयन्ति, अधर्म एव तु तैः सूचितो जनपदोद्ध्वंसकारणमिति ज्ञेयम् ॥ १७ ॥

**तत्र, परित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यम्, एवं साधु भवति ॥ १८ ॥**

ऋतुव्यापदादिकृतानां गदानां यथासंभवं चिकित्सामाह—तत्रेत्यादि । परित्यागो व्यापन्नानामोषधीनां गृहादीनां च, शान्तिरिन्द्रियजयः, प्रायश्चित्तमधर्मक्षयार्थं क्रियमाणं चान्द्रायणादि, उपहारः सपशुर्बलिः, तपः पञ्चतपादि, नियमो मौनादि, दीक्षा गुरुपूर्वक्रमेण मन्त्रादिग्रहणम्, अभ्युपगमो देवतादिसदनमिदं दास्यामीत्युक्तिः । एतच्च दैवव्यपाश्रयमेव प्रायश्चिकित्सितमुक्तं यथोक्तव्यापदामधर्मेणैव प्राय उत्पादादिति ज्ञेयम् ॥ १८ ॥

**अत ऊर्ध्वमव्यापन्नानामृतूनां लक्षणान्युपदेक्ष्यामः ॥ १९ ॥**

**वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः ॥**
**छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः ॥ २० ॥**
**दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः ॥**
**रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये ॥ २१ ॥**

---

१ '°रक्षःक्रोधाधर्मै°' इति ड. । २ 'गृहदार'शब्दौ ताडपत्रपुस्तके न पठ्येते । ३ 'अचिनिन्द्रादिकाः' इति मु. । ४ 'स्थानपरित्याग°' इति ड. । ५ 'देवतादिगमनं' ह. ।

शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः ।
शेषं हेमन्तवत् सर्वं विज्ञेयं लक्षणं बुधैः ॥ २२ ॥
सिद्धविद्याधरवधूचरणालक्तकाङ्किते ॥
मलये चन्दनलतापरिष्वङ्गाधिवासिते ॥ २३ ॥
वाति कामिजनानन्दजननोऽनङ्गदीपनः ॥
दम्पत्योर्मानभिदुरो वसन्ते दक्षिणोऽनिलः ॥ २४ ॥
दिशो वसन्ते विमलाः काननैरुपशोभिताः ।
किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः ॥ २५ ॥
कोकिलाषट्पदगणैरुपगीता मनोहराः ॥
दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः ॥ २६ ॥
ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः ॥
भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव ॥ २७ ॥
भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः ॥
ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः ॥ २८ ॥
प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः ॥
अम्बुदैर्विद्युदुद्द्योतप्रस्रुतैस्तुमुलस्वनैः ॥ २९ ॥
कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही ।
कदम्बनीपकुटजसर्जकेतकिभूषिता ॥ ३० ॥
तत्र वर्षासु नद्योऽम्भश्छन्नोत्खाततटद्रुमाः ॥
वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः ॥ ३१ ॥
भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता ॥
नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ ३२ ॥
बभ्रुरुष्णः शरद्यर्कः श्वेताभ्रविमलं नभः ॥
तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः ॥ ३३ ॥
पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः ।
बाणसप्ताह्वबन्धूककाशासनविराजिता ॥ ३४ ॥

केचित् 'अत ऊर्ध्वं' इत्यादिग्रन्थमव्यापन्नर्तुलक्षणमिह पठन्ति ॥ १९—३४ ॥

स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः ॥
विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥ ३५ ॥
हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ॥
वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात् ॥ ३६ ॥

---

इति सुश्रुतसंहितायां सूत्रस्थाने ऋतुचर्या
नाम षष्ठोऽध्यायः ॥ ६ ॥

इदानीं व्यापदो येन प्रकारेण भवन्ति, व्यापन्नेषु तेषु यद्भवति, तदाह—स्वगुणैरित्यादि । ऋतूनां स्वगुणाः शीतोष्णवर्षतत्साधारणत्वादयः । अतियुक्तत्वमतिशीतत्वादि, विपरीतत्वमशीतत्वहीनशीतत्वादि, विषमं चान्यर्तावन्यर्तुधर्मयोगः । दोषकोपोऽत्र यथायोग्यतया ज्ञेयः ॥ ३५ ॥ ३६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यव्याख्यायां भानुमत्यां
सूत्रस्थाने ऋतुचर्याध्यायः षष्ठः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

**अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अग्रोपहरणीये कर्मकरणार्थमग्रोपहर्तव्येषु प्रथमं यन्त्रमुक्तम्, अतः सर्वकर्मापेक्षणीयकालविशेषाभिधायकतया ऋतुचर्यं प्राक्प्रस्तुतमभिधाय, यन्त्रविधिरेव प्रागुद्दिष्टयन्त्रप्रतिपादकोऽभिधीयते । यन्त्राणां विधिः कल्पना संख्यानामाकारादिकथनरूपा ॥ १ ॥ २ ॥

**यन्त्रशतमेकोत्तरम्[1]; अत्र[2] हस्तमेव प्रधानतमं यन्त्राणामवगच्छ, तदधीनत्वाद्यन्त्रकर्मणाम् ॥ ३ ॥**

असंख्येयभेदत्वेऽपि यन्त्राणां यथास्थूलं संख्यानियममाह—यन्त्रशतमित्यादि । एकोत्तरमिति एकाधिकम् । यद्यपि रूढ्या योगेन च पञ्चसु स्वस्तिकयन्त्रादिषु यन्त्रशब्दो वर्तते, तथाऽपि शल्याहरणोपायो यन्त्रमिति परिभाषया उपयन्त्रेषूपशब्दसूचिताप्राधान्येषु पाण्यादिषु च वर्तते । तत्रापि सर्वयन्त्राणां हस्ताधीनतया हस्तं स्तौति—यन्त्राणां हस्तयन्त्रमेवेत्यादि । कङ्कमुखस्य स्वस्तिकयन्त्रेषु प्राधान्यं भविष्यति ॥ ३ ॥

**तत्र, मनःशरीराबाधकराणि शल्यानि; तेषामाहरणोपायो यन्त्राणि ॥ ४ ॥**

मन इत्यादिना यन्त्रविषयमुपदर्श्य यन्त्रलक्षणमाह—तेषामित्यादि । आहरणोपाय इत्यपनयनोपायः ॥ ४ ॥

**तानि षट्प्रकाराणि; तद्यथा—स्वस्तिकयन्त्राणि, संदंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि, चेति ॥ ५ ॥**

यन्त्राणामुपयुक्तान् भेदानाह—तानि षडित्यादि । स्वस्तिकः चतुरङ्गः पिष्टकविकारः ख्यातः, तत्सदृशं स्वस्तिकयन्त्रम् ॥ ५ ॥

---

१ 'त्वङ्मांससंधिस्रोतःस्राय्वस्थिकोष्ठगतशल्योद्धरणार्थमुपदिश्यते यन्त्रशतमेकोत्तरम्' इति ता. । २ 'यन्त्राणां हस्तयन्त्रमेव प्रधानतममवगच्छ' इति चक्रपाणिसंमतः पाठः स्यात् ।

**तत्र चतुर्विंशतिः स्वस्तिकयन्त्राणि, द्वे संदंशयन्त्रे, द्वे एव तालयन्त्रे, विंशतिर्नाड्यः, अष्टाविंशतिः शलाकाः, पञ्चविंशतिरुपयन्त्राणि ॥ ६ ॥**

**तानि प्रायशो लौहानि भवन्ति, तत्प्रतिरूपकाणि वा तदलाभे ॥ ७ ॥**

लौहानीति सुवर्णादिलोहयु(कृ)तानि । प्रायोग्रहणसूचितं लौहत्वव्यभिचारमेवाह—तत्प्रतिरूपकाणि वेति; दन्तश्रृङ्गादिकृतानि च यन्त्राणि भवन्तीत्यर्थः ॥ ६ ॥ ७ ॥

**तत्र, नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि; तस्मात्तत्सादृश्यादागमादुपदेशादन्ययन्त्रदर्शनाद्युक्तितश्च कारयेत् ॥ ८ ॥**

**समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च ॥**
**सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥ ९ ॥**

यन्त्राणामसंख्येयत्वेऽपि प्रसिद्धानामाकृतिं सारूप्यान्निर्दिशन्नाह—तत्र नानेत्यादि । व्यालानामिति हिंस्राणाम् । मृगपक्षिणामिति पक्षिणः प्रसहा एव श्येनादयो हिंस्राः । प्रायोग्रहणाद्विनाऽपि व्यालमुखसादृश्यं नाडीयन्त्रादीनि भवन्तीति दर्शयति; व्यालमुखसादृश्यं तु वक्ष्यमाणस्वस्तिकयन्त्राणामेव । यन्त्रकरणज्ञानोपायान् कारुर्येनाह—तस्मादित्यादि । तत्सादृश्यादिति व्यालमुखसादृश्यात् । आगमादिति शास्त्ररूपागमात् । यथा—अर्शोभगन्दरबस्तियन्त्रादीनां शास्त्रागमादेवाकारकथनं भविष्यति । उपदेशादिति वृद्धवैद्योपदेशात्; ते हि वृद्धवैद्यपरंपरागतमेवोपदिशन्ति । अन्ययन्त्रदर्शनं तु विनाऽपि सादृश्यं शास्त्रवचनं वा वृद्धोपदेशं वा प्रामाणिककृतमिदं यन्त्रमिति यन्त्रकरणं प्रयोजयतीति हेत्वन्तरं भवति । समाहितानीति यथास्थानं निविष्टावयवानि ॥ ८ ॥ ९ ॥

**तत्र स्वस्तिकयन्त्राणि—अष्टादशाङ्गुलप्रमाणानि, सिंहव्याघ्रवृकतरक्षवृक्षद्वीपिमार्जारश्रृगालमृगैर्वारुककाककङ्कुररचासभासशशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजाञ्जलिकर्णावभञ्जननन्दीमुखमुखानि, मसूराकृतिभिः कीलैरवबद्धानि, मूलेऽङ्कुशवदावृत्तवारङ्गाणि, अस्थिविदष्टशल्योद्धरणार्थमुपदिश्यन्ते ॥ १० ॥**

सिंहादयो वर्गेषु व्याख्येयाः । कीलावबद्धत्वं स्कन्धदेशे ज्ञेयम् । आवृत्तवारङ्गाणीति भुग्नवारङ्गाणि ॥ १० ॥

**सनिग्रहोऽनिग्रहश्च संदंशौ षोडशाङ्गुलौ भवतः; त्वङ्मांससिरास्नायुगतशल्योद्धरणार्थमुपदिश्येते ॥ ११ ॥**

सनिग्रहः सवारङ्गो नापितस्येव, 'नासाशोधनी' इति ख्यातः । अनिग्रहः सुवर्णकारस्येव ॥ ११ ॥

---

१ 'सारूप्यात्' इति ता. । २ '°गृध्रोत्क्रोस°' इति ता. ।

**तालयन्त्रे द्वे-द्वादशाङ्गुले मत्स्यतालवदेकतालद्वितालके, कर्णनासा-नाडीशल्यानामाहरणार्थम् ॥ १२ ॥**[1]

ताललक्षिते यन्त्रे तालयन्त्रे । मत्स्यतालवदिति मत्स्य(ताल)वदेकतालमनवबद्धे शल्ये, द्वितालं त्ववबद्धे शल्ये । यदा तु 'तालुवत्' इति पाठस्तदा मत्स्यमिह भेकटमत्स्यमाहुः, तन्मुखवदेकतालुकद्वितालुके । एतच्च यन्त्रद्वयमप्रसिद्धं; मत्स्यविशेषस्य मुखवद्वर्तुलदीर्घमुखीत्यवयवा नासाशोधनी द्वितालकी, एतदेकार्धरूपमानताग्रमेकतालकमिति वा ॥ १२ ॥

**नाडीयन्त्राणि-अनेकप्रकाराणि, अनेकप्रयोजनानि, एकतोमुखान्युभयतोमुखानि च[2]; तानि स्रोतोगतशल्योद्धरणार्थं, रोगदर्शनार्थम्, आचूषणार्थं, क्रियासौकर्यार्थं चेति; तानि स्रोतोद्वारपरिणाहानि, यथायोगदीर्घाणि च। तत्र भगन्दरार्शोव्रणवस्त्युत्तरवस्तिमूत्रवृद्धिदकोदरधूमनिरुद्धप्रकशसन्निरुद्धगुदयन्त्राण्यलाबूशृङ्गयन्त्राणि चोपरिष्टाद्वक्ष्यामः ॥ १३ ॥**

नाडीतन्मध्यसुषिराणि नाडीयन्त्राणि । एकतोमुखानीति अर्शोयन्त्रादीनि स्थूलमूलमुखानि । उभयतोमुखानीति स्थूलमुखानि बस्तियन्त्राणि स्रोतोगतशल्योद्धरणार्थं निरुद्धप्रकाशादियन्त्राणि; तानि स्रोतोगतमलादि[3]शल्योद्धरणरोगोपदर्शनार्थमुभयपार्श्वच्छिद्रार्शोभगन्दरयन्त्रादीनि, क्रियासौकर्यार्थमेकपार्श्वच्छिद्रार्शोयन्त्रादीनि, आचूषणार्थं शृङ्गालाबूव्रणादियन्त्राणि । नाडीयन्त्रप्रपञ्चनार्थमग्रे वक्तव्यतामाह— तत्र भगन्दरेत्यादि । भगन्दरार्शोयन्त्रे द्वे दर्शनकर्मार्थे; बस्तिनेत्रं चतुर्विधं षडष्टदशद्वादशाङ्गुलं वयोभेदात्; उत्तरबस्तिनेत्रं द्विविधं स्त्रीपुरुषविषयभेदादिह विवक्षितं; धूमनेत्रं त्रिविधं—स्नैहिकवैरेचिकप्रायोगिकभेदात्, अत्र कासहरवामनीयनेत्रयोरपि वैरेचनिकतया विरेचनीयेऽन्तर्भावः; अवशिष्टं यन्त्रमेकैकं ज्ञेयम् ॥ १३ ॥

**शलाकायन्त्राण्यपि नानाप्रकाराणि, नानाप्रयोजनानि, यथायोगपरिणाहदीर्घाणि च । तेषां गण्डूपदसर्पफणशरपुङ्खबडिशमुखे द्वे द्वे, एषणव्यूहनचालनाहरणार्थमुपदिश्येते; मसूरदलमात्रमुखे द्वे किंचिदानताग्रे स्रोतोगतशल्योद्धरणार्थं; षट् कार्पासकृतोष्णीषाणि प्रमार्जनक्रियासु; त्रीणि दर्व्याकृतीनि खल्लमुखानि, क्षारौषधप्रणिधानार्थं; त्रीण्यन्यानि जाम्बववदनानि, त्रीण्यङ्कुशवदनानि, षडेवाग्निकर्मस्वभिप्रेतानि; नासार्बुदहरणार्थमेकं कोलास्थिदलमात्रमुखं खल्लतीक्ष्णौष्ठम्; अञ्जनार्थमेकं कलायपरिमण्डलमुभयतोमुकुलाग्रं; मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति ॥ १४ ॥**

---

१ 'कर्णनासास्रोतोगतशल्योद्धरणार्थम्' इति ता. । २ 'च; तानि' इति ताडपत्रपुस्तके न पठ्यते. ३ 'मलादिदर्शनार्थानि' इति मु. ।

शलाकायन्त्राणां यथायोगपरिणाहदीर्घतयाऽव्यवस्थितमानतां बुद्धिमत्कल्पनीयामाह—शलाकेत्यादि । गण्डूपदेत्यादौ मुखशब्दः प्रत्येकं संबध्यते । गण्डूपदेत्यादौ सादृश्यं च यन्त्रमुखे ज्ञेयम् । अश्मरीनिर्दिष्टं यन्त्रमग्रवक्त्रं सर्पफण इव । तेषां चतुर्णामेषणादिकर्मचतुष्टयं यथासंख्यं ज्ञेयम् । व्यूहनमूर्ध्वीकरणमुत्तुण्डितस्य छित्त्वोद्धरणार्थं, वारङ्गानुसरणमित्यन्ये । कार्पासकृतोष्णीषाणीति तूलकवेष्टितमुखानि । अत्र च शलाकायन्त्रेषु तुल्यरूपाणामपि यन्त्राणां षडादिसंख्यानियमः प्रायस्तावतैव कर्मसमाप्तिं सूचयति । जम्बूफलवद्वदनं यस्य तत्, जाम्बौष्ठमिति प्रसिद्धम् । अङ्कुशवदनमिति एतदेव खट्वापादवदवनततया खट्वापादमाहुः । कोलास्थिदलमिह कोलास्थिमज्जदलं ज्ञेयम् । तीक्ष्णौष्ठमिति च्छेदः । अञ्जनार्थं कलायप्रमाणवर्तुलाग्रं, तच्चाष्टाङ्गुलं शालाक्यवचनाद्भवति ॥ १४ ॥

**उपयन्त्राण्यपि—रज्जुवेणिकापट्टचर्मान्तवल्कललतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखबालाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि चेति ॥ १५ ॥**

उपयन्त्राणीत्यादौ वेणिका सन्दष्टगुणत्रयकृता; चर्मान्तश्चर्मावयवः; वल्कलमुदुम्बरादित्वगादि व्रणबन्धनार्थम्; अष्ठीलाश्म अष्ठीलावद्वर्तुलाश्म, अष्ठीला च कर्मकाराणां प्रसिद्धैव; पाणिपादतलमित्यत्र तलत्वेनैकं विवक्षितं, तलशब्दस्तु स्वरूपे, हस्तयन्त्रस्येह प्राधान्यात् पाणिः पृथगेव ग्रहीतुमधिकरोति, तेनाश्वशाखे एकविकल्पेन निर्दिष्टत्वादेकत्वेन गणनीये, उक्तं हि शल्यापनयनीये—"शल्यवारङ्गं निर्भुज्य बद्ध्वा तच्चाश्वकटके पञ्चाङ्ग्यां वृक्षशाखायां वा बद्ध्वाऽपहरेत्" (सू. अ. २७) इत्यादि; जिह्वा अक्षिरजःशल्यादीनामवलेहनेनापनयार्थं; मुखमाचूषणार्थं; ष्ठीवनं कण्ठगतश्लेष्मादिशल्यनिरसनार्थं; प्रवाहणं पुरीषाश्रुश्लेष्मादिनिर्हरणाय यत्नः; हर्षः क्रोधादिशल्यापहरणार्थः; अयस्कान्तः पाषाणभेदो लौहभेदः, स च आकर्षक-द्रावक-भ्रामक-चुम्बकभेदाच्चतुर्विधोऽपि गृह्यते; भयं क्रोधापस्मारादिशल्याहरणार्थम्; अग्निक्षारयोर्दुर्नामादिशल्यापहरणोपायतया यन्त्रत्वं भेदनादिशस्त्रकर्मसाधनतया चानुशस्त्रेऽपि पाठो भविष्यति, भवति चैकस्मिन्नेव हि पुरुषे क्रियाद्वययोगात् पाचकः पाठक इति च व्यपदेशः । भेषजशब्देन शल्योपनयनीयोक्तपाचनस्यानवबद्धशल्यापहरणोपायस्य ग्रहणं बोद्धव्यम् । तथा स्वभावशब्दगृहीतानां क्षवथ्वादीनां प्रवाहणेन ग्रहणम् । प्रमार्जनादीनां चेहानुक्तानामपीह यन्त्रकर्मतया ग्रहणं; तेन तेषां प्रमार्जनादिसाधनयन्त्र एव पाण्यादौ यथायोग्यतयाऽवरोधः । प्रतिमर्षस्तु अङ्गुलीकर्मतया अङ्गुल्यामवरोद्धव्यः ॥ १५ ॥

**एतानि देहे सर्वस्मिन् देहस्यावयवे तथा ॥**
**संधौ कोष्ठे धमन्यां च यथायोगं प्रयोजयेत् ॥ १६ ॥**

एतानीत्यादिनोक्तानां यन्त्राणां बुद्ध्या विचार्य यद्यत्राधिकरोति तत्तत्र योज्यं; साक्षाद्बहुप्रपञ्चत्वान्नोक्तमिति दर्शयति ॥ १६ ॥

---

१ 'एव' इति ह. । २ 'स्थूलाग्रं' इति मु. ।

**यन्त्रकर्माणि तु—निर्घातनपूरणबन्धनव्यूहनवर्तनचालनविवर्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः १७**

यन्त्रकर्माणि यथासंभवमाह—यन्त्रकर्माणीत्यादि । निर्घातनमितश्चेतश्च चालयित्वा निर्हरणम्, इतश्चेतश्च चालनमित्येके; पूरणं बस्तिनेत्रादिना; व्यूहनं प्रागुक्तं; चालनं स्थलान्तरनयनं; वर्तनं विकीर्णस्य वर्तुलीकरणं; विवर्तनं कर्णे[1]ऽवलग्नस्य कर्णलग्नावयवमोक्षार्थं पार्श्वान्तरनयनं; विवरणं प्रकाशनं, विरणमिति पाठपक्षे शल्यापहरणे क्रियमाणेऽस्थ्यादेः[2] प्रकृतिभूतस्य निर्गच्छतः प्रतिबन्धो विरणं; पीडनं व्रणादीनां पूयादिनिर्गमार्थं; मार्गशोधनं मूत्रादिसङ्गे शलाकाप्रणयनादिना ज्ञेयं; विकर्षणं विगृह्याकर्षणम्; आहरणमनवबद्धस्याग्रे नयनम्; आञ्छनं कुञ्चितस्याङ्गुल्यादेरायामनम्; उन्नमनमूर्ध्वनयनम्; विनमनमधोनयनं; भञ्जनं शल्यकर्णादेर्मर्दनम्; उन्मथनं नष्टशल्यस्य ज्ञानायालोडनम्; आचूषणं दुष्टरुधिरादेः शृङ्गादिना, एषणं व्रणगत्याद्यनुसरणम्; दारणं शिरःकर्णादिद्विधाकरणम्; प्रधमनं चूर्णस्य नाडीयन्त्रेण प्रणयनम् ॥ १७ ॥

**स्वबुद्ध्या चापि विभजेद्यन्त्रं कर्माणि बुद्धिमान् ॥**
**असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः ॥ १८ ॥**

इदानीं स्थूलोपग्रहेणैतद्यन्त्रसंख्याकथनं; यन्त्रकर्मसंख्याकथनं च, परमार्थतस्तु यन्त्राणि तत्कर्माणि चासंख्येयानीति दर्शयन्नाह—स्वबुद्ध्येत्यादि । यन्त्रं स्वबुद्ध्या विभजेत्, कर्माणि च स्वबुद्ध्या विभजेत् । 'यन्त्रकर्माणि' इति तु पाठपक्षे यन्त्राणामेव कल्पनं मुख्यं ज्ञेयं, कर्मणि तु तत्कल्पनात् कर्मणां चासंख्येयत्वं फलति । असंख्येययन्त्रकल्पने च हेतुमाह—असंख्येयेत्यादि ॥ १८ ॥

**तत्र अतिस्थूलम्, असारम्, अतिदीर्घम्, अतिह्रस्वम्, अग्राहि, विषमग्राहि, वक्रं, शिथिलम्, अत्युन्नतम्, मृदुकीलं, मृदुमुखं, मृदुपाशम्, इति द्वादश यन्त्रदोषाः ॥ १९ ॥**

यन्त्राणां दोषान् वक्तुमाह—तत्रेत्यादि । असारम् असारलौहादिघटितम् । शिथिलं पीडनाक्षमम् । अत्युन्नतं स्थूलकोटिकम् । मृदुपाशं तनुपाशम् ॥ १९ ॥

**एतैर्दोषैर्विनिर्मुक्तं यन्त्रमष्टादशाङ्गुलम् ॥**
**प्रशस्तं भिषजा ज्ञेयं तद्धि कर्मसु योजयेत् ॥ २० ॥**

स्वस्तिकयन्त्राणामेव बहुविषयतया प्रधानत्वादुक्तदोषाणां च प्रायस्तत्रैव दर्शनादेतैरित्यादिना स्वस्तिकयन्त्राण्येवाह । अष्टादशाङ्गुलत्वं स्वस्तिकयन्त्राणाम्, अन्येषां तु यथाकथितं यथायोग्यं च ज्ञेयम् ॥ २० ॥

---

१ 'कर्णेन लग्नस्य' इति ह. । २ 'हस्तादेः' इति मु. ।

**दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः ॥**
**निर्हरेत शनैः शल्यं शास्त्रयुक्तिव्यपेक्षया ॥ २१ ॥**

दृश्यमित्यादौ स्थूलमुखतया दृश्ये सिंहमुखादयः, सूक्ष्मतया लदृश्ये कङ्कमुखादयः। आदिशब्दः प्रकारवाची, तेन कङ्कमुखादौ सूक्ष्ममुखानां ग्रहणं, सिंहमुखादौ तु स्थूलमुखानां ग्रहणम् ॥ २१ ॥

**विवर्तते साध्ववगाहते च शल्यं निगृह्योद्धरते च यस्मात् ॥**
**यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वधिकारि चैव ॥ २२ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने यन्त्रविधिर्नाम**
**सप्तमोऽध्यायः ॥ ७ ॥**

बहुविषयतया कङ्कमुखं स्तौति—विवर्तत इत्यादि । विवर्तते निवर्तते साधु तथाऽवगाहते विशति च साधु, एवं गृह्णाति साधु, उद्धरते च साधु, इति योज्यम् । अधिकारि सर्वत्र उचितत्वात्; 'अविकारि' इति वा पाठः, स चापि सुगमः ॥ २२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने
यन्त्रविधिर्नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

**अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

यन्त्रदर्शितस्य व्याधेश्छेदादिशस्त्रकर्मार्हतेति यन्त्रविध्यनन्तरं शस्त्रावचारणीय उच्यते ॥ १ ॥ २ ॥

**विंशतिः शस्त्राणि; तद्यथा—मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधारसूचिकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चककुठारिकाव्रीहिमुखारावेतसपत्रकबडिशदन्तशङ्क्वेषण्य इति ॥ ३ ॥**

शस्त्रावचारणं छेदाद्यर्थं शरीरे शोभनं, तच्च शस्त्रावचारणं शस्त्रज्ञानपूर्वकमिति शस्त्रभेदानेवाग्रे प्राह—विंशतिः शस्त्राणीत्यादि । संख्येयनिर्देशात् संख्यायां लब्धायामपि संख्योपादानं संख्येयदुर्बोधत्वनिरासार्थं, तन्त्रान्तरीयन्यूनाधिकसंख्यानिरासार्थं च ॥ ३ ॥

**तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च, वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्धधाराणि छेदने भेदने च, सूचीकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे, कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च, बडिशं दन्तशङ्कुश्चाहरणे, एषण्येषणे आनुलोम्ये च, सूच्यः सीवने; इत्यष्टविधे कर्मण्युपयोगः शस्त्राणां व्याख्यातः ॥ ४ ॥**

निर्दिष्टानां मण्डलाग्रादीनामष्टविधे कर्मणि विषयभेदमाह—तत्र मण्डलाग्रेत्यादि। अत्र चकारेणान्यदपि तद्वत्कर्म समुच्चिनोति; एवमन्यत्रापि चकारेण योग्यकर्मान्तरं सूच्यते। अत्र शस्त्रे बडिशः पठ्यते यन्त्रे च, उभयत्राप्याहरणं कर्म कर्तव्यं, तथा एषण्यपि शस्त्रे यन्त्रे च पठ्यते, एषणं चोभयत्रापि कर्मोक्तं, तत् कथमनयोर्भेदः?। तत्रैके वदन्ति—यत्–"मानभेदादत्र भेदः। यन्त्रे अनियतमानो बडिशः, एषणी च। यदुक्तं शेषयन्त्रप्रमाणे—"यथायोगपरिणाहदैर्घ्याणि" (सू. अ. ७) इति। शस्त्रे तु "नखवर्धन्येषण्यावष्टाङ्गुले, शेषाणि तु षडङ्गुलानि" इत्यनेन बडिशः षडङ्गुलः"। अपरे तु वदन्ति-यत्-"मानमात्रं न यन्त्रत्वशस्त्रत्वयोः प्रयोजनं; तेन शस्त्रोक्तबडिशैषण्योः कर्मभेदोऽप्यस्ति सूचितः; तेनायं भेदः—एषणी तावदानुलोम्ये च पठ्यते, आनुलोम्यं च विस्रावणमुच्यते, बडिशेऽपि शस्त्रान्तराभावे व्यधनादि कर्म ऊह्यम्" इति। किं तु, एषणमात्रं च शस्त्रकर्मतयोक्तं यन्त्रकर्मतया च, तदनयोरपि भेदो व्युत्पाद्यः, अभेदो वा? अभेदपक्षे तु यथा कर्माभिन्नं यन्त्रशस्त्रयोः, तथा बडिशैषण्यावपि यन्त्रं शस्त्रं च भवत इति कल्पनीयम्। परं यन्त्रकर्माहरणमेषणं च शरीरहिंसाव्यतिरेकेण क्रियमाणं ज्ञेयं, शस्त्रकर्माहरणमेषणं च शरीरहिंसायुक्तम्। शस्त्रं हि शरीरहिंसकमिति 'शसु' हिंसायामिति धात्वर्थादपि भवति। तेन यत्राहरणे एषणे वा शरीरावयवहिंसा तच्छस्त्रकर्म, शरीराहिंसकं तु यन्त्रकर्म। अनेनैव च कर्मभेदेन यन्त्रशस्त्रयोरपि भेद इति पश्यामः। सूच्य इति वक्ष्यमाणत्र्यङ्गुलादिभेदाद्बहुवचनम्॥ ४॥

**तेषामथ यथायोगं ग्रहणसमासोपायः कर्मसु वक्ष्यते—तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयात्, भेदनान्येवं सर्वाणि, वृद्धिपत्रं मण्डलाग्रं च किंचिदुत्तानेन पाणिना लेखने बहुशोऽवचार्य, वृन्ताग्रे विस्रावणानि, विशेषेण तु बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजमात्राणां[2] च त्रिकूर्चकेन विस्रावयेत्, तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखं, कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्याऽङ्गुष्ठविष्टब्धयाऽभिहन्यात्, आराकरपत्रैषण्यो मूले, शेषाणि तु यथायोगं गृह्णीयात्॥ ५॥**

तेषामित्यादि। यथायोगमिति यथा भेदादि शस्त्रकर्म युक्तं योग्यं भवति तथा शस्त्रग्रहणं वक्तव्यमित्यर्थः। वृन्तफलसाधारण इति वृन्तफलमध्ये। भेदनान्येवमिति वृन्तफलमध्ये। मण्डलाग्रं बहुश इति "सकृदुपाहरेच्छस्त्रं" (सू. अ. ५) इत्यस्यापवादः। तलप्रच्छादितमिति हस्ततलपिहितं, हस्तेन गृहीतत्वात्। विष्टब्धयेति स्तम्भनाभिवर्धितवेगया। शेषाणीत्यनुक्तानि वेतसपत्रादीनि। यथायोगमिति यथा सम्यग्योगः॥ ५॥

**तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखवर्धन्येषण्या-**

---

१ 'तच्छक्यं' इति मु.। २ 'राजपुत्राणां' इति पा०।

**वष्टाङ्गुले, सूच्यो वक्ष्यन्ते, (प्रदेशिन्यग्रपर्वप्रदेशप्रमाणा मुद्रिका, दशाङ्गुला शरारिमुखी, सा च कर्तरीति कथ्यते) शेषाणि तु षडङ्गुलानि॥६॥**

संक्षेपेण शस्त्राकारं दर्शयन्नाह—तेषामित्यादि । नामभिरिति अनुगतार्थैर्नामभिः, तद्यथा—उत्पलपत्राकृत्यादिना उत्पलपत्रमित्यादिनामार्थानुगमः । प्रायेणेति वचनादागममेतत्तन्त्रमागमान्तरं च समानतन्त्रं शस्त्राकाराभिधायकं दर्शयति । शस्त्राणां प्रमाणमाह—नखवर्धनीत्यादि । वर्धनी छेदनी; 'वृधु' छेदने, इत्यस्मात् साध्यम् । सूच्यो वक्ष्यन्त इत्यष्टविधशस्त्रकर्माध्याये व्यङ्गुलादिमानेन वक्ष्यन्ते । शेषाणि षडङ्गुलानीति अत्र प्रायःशब्दोऽध्याहार्यः; तेन तन्त्रान्तरोक्तकरपत्रादिमानभेदोऽनुमत इति वदन्ति । किंतु एतत्तन्त्राभिहितं शेषाणां षडङ्गुलत्वं साक्षादुक्तत्वादेवाबाधनीयं तावद्भवति, तन्त्रान्तरोक्तमानभेदोऽपि क्वचिदवयवविशेषेऽपि भवतीति युक्तम् । अत्र तन्त्रान्तराणि समुदायार्थमर्थविशेषप्रतीत्यर्थं च लिख्यन्ते । यथा मण्डलाग्रे **भोजः**—"द्वे मण्डलाग्रे ये प्रोक्ते एकं वृत्तमुखं तयोः । तीक्ष्णधारं दृढं कार्यमेकं तच्च क्षुराकृति"—इति; तथा **भालुकिः**—"यदग्रे मण्डलं वृत्तं क्षुरसंस्थानमेव च । मण्डलाग्रं विजानीयात् प्रमाणे तु षडङ्गुलम्" इति । करपत्रे तन्त्रान्तरं "द्वादशाङ्गुलदीर्घं स्यात्तनु चाचित्तकण्टकम् । करपत्रं विजानीयाद्भिषगाकृतिमानतः"—इति । वृध्या लक्षितं पत्रमस्येति वृद्धिपत्रम् । अत्र तन्त्रान्तरं—"सप्ताङ्गुलं प्रमाणेन वृद्धिपत्रं द्विलक्षणम् । अञ्चितं वाऽऽयताग्रं च कारयेत् कुशलो भिषक् ॥ सप्ताङ्गुलं, विभज्यैतत् प्रमाणं वृद्धिपत्रयोः । अर्धमेकाधिकं वृन्तं फलं त्रिषु च कारयेत्" इति; एकाधिकमित्येकाङ्गुलाधिकं त्र्यङ्गुलरूपमर्धमेवं सप्ताङ्गुले वृद्धिपत्रे चतुरङ्गुलस्य वृन्तेन गतत्वात् त्र्यङ्गुलफलमुक्तमुपपन्नं भवति । अत्रैवायताग्रं वृद्धिपत्रं क्षुरमाहुः; अत एव 'क्षुरकर्तरिकासदंशैः' इत्याचार्यवचनं क्षुरसंज्ञान्तरवचनादुपपन्नं भवति । नखशस्त्रे **भोजः**—"नखानां छेदने कार्यं शस्त्रमष्टाङ्गुलायतम् । अर्धाङ्गुलं मुखं तस्य तीक्ष्णधारं तु कल्पयेत्"—इति । मुद्रिकाशस्त्रं 'क्षुर' इति प्रसिद्धं; तत्र **भालुकिः**—"मुद्रिकया विबद्धं स्याद्वृद्धिपत्रसलक्षणम् । द्व्यङ्गुलं मुद्रिकाशस्त्रं क्षुरसंस्थानमेव च" इति । उत्पलपत्रे **भोजः**—"तुल्यमुत्पलपत्रेण तीक्ष्णधारं समाहितम् । षडङ्गुलं प्रमाणेन शस्त्रमुत्पलपत्रकम् ॥ तत्फलं त्र्यङ्गुलायामं कार्यमङ्गुलविस्तृतम्" इति । अर्धधारमिति चक्रधारमिति प्रसिद्धे **भोजः**—"अर्धधारं तु कर्तव्यं शस्त्रमष्टाङ्गुलायतम् । उरस्यङ्गुलविस्तारं फलं तद्व्यङ्गुलं भवेत्" इति । उरसीति क्रोडे । अध्यर्धधारमिति पाठपक्षे अधिकमर्धं धारा यस्येति ज्ञेयम् । अत्र पक्षे भोजेऽपि 'अध्यर्धधारं' इति पठितव्यम् । कुशपत्रे तन्त्रान्तरं—"वृन्तं स्यात् त्र्यङ्गुलं चाग्रे कुशपत्रसलक्षणम्" इति । आटी वर्धनीनाम पक्षिविशेषः, तत्सदृशमुखमाटीमुखम् । अत्र तन्त्रान्तरं—"वृन्तं सप्ताङ्गुलं विद्यात्तस्याग्रे फलमिष्यते । आटीमुखप्रकारं हि फलमष्टाङ्गुलायतम्" इति । शरारिः पक्षी; स द्विविधो धवलस्कन्धो रक्तशीर्षश्च, धवलस्कन्धः शरारीति प्रसिद्धः, शरारिमुखसदृशमुखं शस्त्रं शरारिमुखं, 'कर्तरी' इति लोके प्रसिद्धम् । अत्र तन्त्रान्तरं—"आनुपूर्व्यायतां तीक्ष्णां प्रमाणेन दशाङ्गुलाम् । त्रिभागे कीलयोगं

हि जानीयात् कर्तरीं भिषक्'' इति । पाशवती कर्तरी बन्धनकीलवती, अकीलाऽपि कर्तरी भवत्यश्वनापितानामिव । मध्ये मुखं यस्य तदन्तर्मुखं; तत्र तन्त्रान्तरं—''सप्ताङ्गुलं प्रमाणेन जिह्मधारेण चाप्लुतम् । शस्त्रमन्तर्मुखं नाम चन्द्रार्धमिव चोद्गतम्'' इति । अत्रैव ख्याताङ्गुलिशस्त्रावरोधः । त्रिकूर्चके तन्त्रान्तरम्—''अङ्गुलानि तथाऽष्टौ च शस्त्रं कार्यं त्रिकूर्चकम् । फलैरन्तर्मुखाकारैरङ्गुलैरन्वितं त्रिभिः ॥ एकैकस्य फलस्यैषामन्तरं व्रीहिसंमितम् । वृत्तं(न्तं) पञ्चाङ्गुलायामं कार्यं रुचकभूषितम्'' इति । कुठारिकायां तन्त्रान्तरं—''कुठारिकाया वृन्तं स्यात् सार्धपञ्चाङ्गुलायतम् । फलमर्धाङ्गुलायामं गोदन्तसदृशं समम्'' इति । व्रीहिमुखे **भोजः**—''शस्त्रं व्रीहिमुखं कार्यमङ्गुलानि षडायतम् । द्व्यङ्गुलं तस्य वृन्तं स्यात् फलं तु चतुरङ्गुलम् ॥ तन्मुखं व्रीहिविस्तारं तनु संमू(गू)ढकण्टकम्'' इति । आरा चर्मकाराणां शस्त्रं; तत्र तन्त्रान्तरं—''आरा ह्यष्टाङ्गुलायामा कर्तव्या तु विशांपते! । तिलप्रमाणं तु फलं तस्याः कार्यं समाहितम् ॥ दूर्वाङ्कुरपरीणाहं वृन्तं गोपुच्छसंनिभम्'' इति । वेतसपत्रे **भोजः**—''तीक्ष्णमङ्गुलिविस्तारं चतुरङ्गुलमायतम् । अङ्गुलानि च चत्वारि वृन्तं कार्यं विजानता'' इति । बडिशे तन्त्रान्तरं—''बडिशौ चापि कर्तव्यौ प्रमाणेन दशाङ्गुलौ । स्वानतस्तु तयोरेक एको नात्यानतो भवेत् ॥ अर्धपञ्चाङ्गुलं वृन्तं शेषं कार्यं मुखं तयोः । अर्धचन्द्राकृतिमुखं कार्यं नात्यानतस्य तु ॥ आनतं नामयेत्तत्र बडिशं च भिषग्वरः'' इति । दन्तशङ्कौ तन्त्रान्तरं—''कार्यः षडङ्गुलायामो दन्तशङ्कुर्विजानता । शङ्कुवच्च मुखं तस्य कार्यमर्धाङ्गुलायतम् ॥ चतुरस्रं समं चैव तीक्ष्णधारं समाहितम् । वृन्ताग्रं तस्य कर्तव्यं शस्त्रव्रीहिमुखाकृति ॥ कपालिकां शर्करां च दन्तस्थां तेन शोधयेत्'' इति । एषण्यां तन्त्रान्तरं—''व्रणैस्तासां परीणाहो मुखं गण्डूपदाकृति'' इति ॥ ६ ॥

**तानि सुग्रहाणि, सुलोहानि, सुधाराणि, सुरूपाणि, सुसमाहितमुखाग्राणि, अकरालानि, च; इति शस्त्रसंपत् ॥ ७ ॥**

गुणसंपदमाह—तानीत्यादि । सुग्रहाणीति सुवारङ्गानि; गृह्यन्तेऽस्मिन्निति ग्रहो वारङ्गम् । सुमुखत्वमभिधायापि सुधारत्वाभिधानं धारायां यत्नातिशयं दर्शयति, तदधीनत्वाच्छस्त्रव्यापाराणाम् । अकरालानि अदन्तुराणि ॥ ७ ॥

**तत्र धारा भेदनानां मासूरी, लेखनानामर्धमासूरी, व्यधनानां विस्रावणानां च कैशिकी, छेदनानामर्धकैशिकीति । बडिशं दन्तशङ्कुश्चानताग्रे । तीक्ष्णकण्टकप्रथमयवपत्रमुख्येषणी गण्डूपदाकारमुखी च ॥८॥**

यस्य शस्त्रस्य यथाकारा धारा कार्या तन्निदर्शनमाह—तत्र धारेत्यादि । मासूरी मसूरधारासदृशी । कैशिकी केशप्रमाणा । अर्धकैशिकी अर्धकेश[3]प्रमाणा । तीक्ष्णकण्टकमुखत्वं बडिशस्य, प्रथमयवपत्रमुखत्वं चैषण्या भवति । तेनानुलोम्ये चेत्यनेन विस्रावणं पूर्वमुक्त

---

१ 'अश्वनापितानामिव' इति मुद्रितपुस्तके न पठ्यते । २ 'सार्धसप्ताङ्गुलायतम्' इति मु. । ३ 'केशाग्रार्धप्रमाणा' इति मु. ।

घटते । अन्ये पुनः कर्मानुगुणेनैव धारालाभात् 'तत्र धारा भेदनानां' इत्याद्यारभ्य 'एषणी गण्डूपदमुखी च' इत्यन्तं ग्रन्थं न पठन्ति । एषणीनां तीक्ष्णकण्टकमुखत्वप्रथमयवपत्रमुखत्वगण्डूपदमुखत्वभेदाद्बहुत्वं, तेन 'एषण्य एषणे' इति बहुवचनमुपपन्नं भवति ॥ ८ ॥

**तत्र वक्रं, कुण्ठं, खण्डं, खरधारम्, अतिस्थूलम्, अत्यल्पम्, अतिदीर्घम्, अतिह्रस्वम्, इत्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीत, अन्यत्र करपत्रात्; तद्धि खरधारमस्थिच्छेदनार्थम् ॥ ९ ॥**

शस्त्रदोषानाह—तत्र वक्रमित्यादि । संख्येयनिर्देशादेव संख्यालाभे पुनरष्टाविति वचनं परसंमतदोषाणामत्रैवान्तर्भावार्थम् । अन्यत्र करपत्रादिति करपत्रस्य करालस्यैव पूजितत्वात् ॥ ९ ॥

**तेषां पायना त्रिविधा क्षारोदकतैलेषु । तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु, उदकपायितं मांसच्छेदनभेदनपाटनेषु, तैलपायितं सिराव्यधनस्नायुच्छेदनेषु ॥ १० ॥**

तेषां पायनेत्यादि । पायना घटना । निर्वृत्तशस्त्रनिर्वापनं तत्तद्द्रव्यविशेषेण शक्तिविशेषकरं भवतीति दर्शयन्नाह—पायना त्रिविधेत्यादि ॥ १० ॥

**तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा; धारासंस्थापनार्थं शाल्मलीफलकमिति ॥ ११ ॥**

सुधारकारकं धारासंस्थापनं चाह—तेषामित्यादि । निशानार्थमिति अनिशितशस्त्राणां निशानार्था । धारासंस्थापनार्थमिति निशितानां धारासंस्थापनार्थम् ॥ ११ ॥

**भवति चात्र—**

**यदा सुनिशितं शस्त्रं लोम[1]वाहि सुसंस्थितम् ॥**
**सुगृहीतं प्रमाणेन तदा कर्मसु योजयेत् ॥ १२ ॥**

एवं संस्कृतशस्त्रस्य कर्मयोजनायोग्यावस्थामाह—यदेत्यादि । लोम वोढुं स्वभावो यस्येति लोमवाहि । सुसंस्थितमिति न विघटितम् । प्रमाणेनेति यथोक्तेन लक्षितम् । सुगृहीतमिति यथोक्तग्रहणस्थानवृन्तफलमध्यादिगृहीतं, किंवा ग्रहणार्थोक्तशस्त्रप्रदेशप्रमाणेन गृहीतमित्यर्थः ॥ १२ ॥

**अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकोग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति ॥ १३ ॥**

**शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् ॥**
**त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान् ॥ १४ ॥**

---

१ 'रोमच्छेदि' इति ड. ।

आहार्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत् ॥
विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम् ॥ १५ ॥
ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये ॥
गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान् ॥ १६ ॥
एष्येष्वेषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः ॥

संप्रति बालादीनां शस्त्रानर्हाणां शस्त्रालाभे वा प्रयोगार्थमनुशस्त्राण्याह—अनुशस्त्राणीत्यादि । अनुशस्त्रं हीनशस्त्रम् । त्वक्सारो वंशः, तस्य त्वग् ग्राह्या; कुरुविन्दो लोहिताश्मविशेषो रत्नभेदः । छेद्यादीत्यत्रादिशब्देन प्रकारवाचिना भेद्यादीनां शस्त्रकर्मणां प्रयत्नतो भेदः (?)। आहार्येत्यादि नखविषयः । शक्येष्विति नखशक्येष्वाहार्यादिषु । गोजी दार्वीपत्रिका, शाखोटको वा; शाकः पाश्चात्यप्रसिद्धः ॥ १५-१६ ॥—

शस्त्राण्येतानि मतिमाञ् शुद्धशैक्यायसानि तु ॥ १७ ॥
कारयेत् करणे प्राज्ञैः कर्मारैः कर्मकोविदैः ॥

शस्त्राणि यथा साधु भवन्ति तदाह—शस्त्राणीत्यादि । शुद्धं मलहीनं, शैक्यं तीक्ष्णम् । करणे शस्त्रकरणे । प्राज्ञैरिति अभ्यासान्वितैः । कर्मकोविदैरित्यनेन शस्त्रकर्माभिज्ञतया शस्त्रकरणेऽपि प्रागल्भ्यं दर्शयति; किंवा करणप्राप्तैरिति राजकर्मस्थाननिबद्धैः; ते हि राजसंगततया अविसंवादका भवन्ति ॥ १७ ॥—

प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः ॥ १८ ॥
तस्मात् परिचयं कुर्याच्छस्त्राणां ग्रहणे सदा ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने शस्त्रावचारणीयो नामाष्टमोऽध्यायः ॥ ८ ॥

न केवलं शस्त्रसंपत् सिद्ध्यर्थमित्याह—प्रयोगज्ञस्येत्यादिना । प्रकृष्टा योजना प्रयोगः, तज्ज्ञानं च कर्मदर्शनादभ्यासाच्च भवति । अत आह—तस्मादित्यादि । शस्त्राणां ग्रहणे इति शस्त्राणां प्रयोगज्ञाने; ग्रहणं हि ज्ञानतो ग्रहणमत्रोच्यते । तच्च वक्ष्यमाणयोग्यासूत्रीयं ग्रहणोपायमुपक्षिपति । 'प्रमाणज्ञस्य' इति वा पाठः । तत्र प्रमाणं शस्त्राणां वृन्तमध्यादिदेशो यथोक्त एव, तज्ज्ञस्य; अस्मिन् पक्षे ग्रहणस्तुतिरियम् ॥ १८ ॥—

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने शस्त्रावचारणीयो नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

---

१ 'करणप्राप्तं कर्मारं कर्मकोविदम्' इति ड. ।

प्रागुक्तं 'शस्त्राणां ग्रहणे परिचयं सदा कुर्यात्,' तेनोपोद्घातेन शस्त्रादीनां सम्यग्योगज्ञानार्थं योग्यासूत्रीयोऽभिधीयते । कर्तव्यकर्मणः सम्यग्योगाय तत्सदृशकर्माभ्यासो योगः, तेन योगाय सम्यग्योगाय प्रभवतीति योग्या; प्रभवतीत्यर्थे तद्धितः; स्त्रीत्वं स्वभावात्, मैत्रीवत्; तस्याः सूत्रं योग्यासूत्रम् । सूत्रत्वेन च योग्याया एकदेशाभिधानं वक्ष्यमाणं दर्शयति ॥ १ ॥ २ ॥

**अधिगतशास्त्रार्थमपि शिष्यं योग्यां कारयेत् । स्नेहादिषु छेद्यादिषु च कर्मपथमुपदिशेत् । सुबहुश्रुतोऽप्यकृतयोग्यः कर्मस्वयोग्यो भवति। तत्र, पुष्पफलालाबूकालिन्दकत्रपुसै(सो)र्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेत्, उत्कर्तनापकर्तनानि चोपदिशेत्; दृतिबस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्यां; सरोम्णि चर्मण्यातते लेख्यस्य; मृतपशुसिरासूत्पलनालेषु च वेध्यस्य; घुणोपहतकाष्ठवेणुनलनालीशुष्कालाबूमुखेष्वेष्यस्य; पनसबिम्बीविल्वफलमज्जमृतपशुदन्तेष्वाहार्यस्य; मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य; सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्मान्तयोश्च सीव्यस्य; पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धनयोग्यां; मृदुषु मांसखण्डेष्वग्निक्षारयोग्यां, मृदुचर्ममांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम्; उदकपूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च नेत्रप्रणिधानबस्तिव्रणबस्तिपीडनयोग्यामिति ॥ ३ ॥**

---

अधिगतशास्त्रार्थमपीत्यादि । अपिशब्देन योग्याया अवश्यकर्तव्यतामाह । छेद्यादिष्वित्यत्रादिशब्देन प्रकारवाचिना भेद्यादीनां शस्त्रकर्मणां ग्रहणम् । स्नेहादिष्वित्यत्रादिशब्देन प्रकारवाचिना स्वेदबस्तिवमनादीनां ग्रहणम् । योग्यां कारयेदित्यस्यैवार्थं व्याकरोति—कर्मपथमुपदिशेदिति । कर्मणोऽपेक्षितनैरुज्यसाधकस्य छेद्यादेः स्नेहादेश्च पन्था इव पन्थाः अपेक्षितसाध्यप्राप्त्युपायः, तमुपदिशेत् 'शिष्याय' इति शेषः । एतेन, एवमेवं छेद्यादयः कर्तव्या इति वक्ष्यमाणयोग्याविषये शिष्यप्रवर्तनं योग्याकारकत्वं गुरोरिति फलति । योग्याफलमेव व्यतिरेके फलालाभेनाह—सुबहुश्रुतोऽपीत्यादि । सुः पूजायां, योगाय सम्यग्योगाय प्रभवतीति योग्यः, तद्विरुद्धोऽयोग्यः । एतेन चाकृतकर्मणः कर्मसमारम्भेऽपटुत्वं लोकसिद्धमेव दर्शितं भवति; किंवा योग्यां कारयेच्छेद्यादिष्विति च्छेदः । आदिशब्देन प्रकारवाचिना भेद्यादीनां बन्धयन्त्रप्रणिधानादीनां च योग्याभ्यासानां सर्वेषामेव ग्रहणम् । स्नेहादिष्वित्यनेन च योग्याया अविषयाः स्नेहपानवमनविरेचनादयः शिक्षाविषयप्रस्तावादुच्यन्ते । स्नेहपाने हि न क्रियाभ्यासरूपा योग्या सम्यगस्ति; शरीरव्याधिदेशकालाद्यपेक्षा तु योजना तत्र साधनाङ्गमस्ति; अतस्तदुपदेशार्थमाह—स्नेहादिषु कर्मपथमुपदिशेदिति । कर्म चिकित्सा स्नेहप्रयोगादिरूपा; तत्पथमिति तदुपायमुपदिशेदित्यर्थः । एतच्च प्रस्तावागतमुक्तं; तेन सुबहुश्रुतोऽपीत्यादिना योग्यैव

प्रकृता उच्यत इति सङ्गतं भवति । छेद्यविशेषा गोतीर्थलाङ्गलादयः । उत्कर्तनम् ऊर्ध्वच्छेदनम् । दृतिश्चर्मपुटकः । पुस्तमयो वस्त्रादिरचितः पुरुषः ॥ ३ ॥

**भवतश्चात्र—**

**एवमादिषु मेधावी योग्यार्हेषु यथाविधि ॥**
**द्रव्येषु योग्यां कुर्वाणो न प्रमुह्यति कर्मसु ॥ ४ ॥**

एषणादीनामनन्तभेदतया न कात्स्न्र्येन योग्याविषयः शक्यः प्रतिपादयितुमित्याह—एवमादिष्वित्यादि ॥ ४ ॥

**दृष्टान्तमात्रमेतावदुपदिष्टमशेषतः ।**
**यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेत् ॥ ५ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने योग्यासूत्रीयो नाम नवमोऽध्यायः ॥ ९ ॥**

अनुक्तयोग्याविषये ग्रहणार्थमाह—दृष्टान्तमात्रमित्यादि । अशेषत इति अशेषं वीक्ष्य; अशेषत इति उत्तरेण संबध्यते । यस्य कर्मणः सदृशविषयतया यत्र द्रव्ये योग्या तस्य तत्र योग्यां समाचरेदित्यर्थः ॥ ५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यटीकायां भानुमत्यां सूत्रस्थाने योग्यासूत्रीयो नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

**अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

शास्त्रज्ञानवतः कृतयोग्यतया निष्पन्नस्य भिषजश्चिकित्साकर्मण्यधिकार इति योग्यासूत्रीयानन्तरं यथा चिकित्सा आचरितव्या तदुपदर्शकं विशिखानुप्रवेशनीयमाह । विशिखाऽत्र कर्ममार्ग उच्यते, एतदुद्दिश्यानुप्रवेशनं; यदि वा विशिखा रथ्यैव, तस्यां चिकित्सार्थमनुप्रवेशनम् ॥ १ ॥ २ ॥

**अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्मणा कृतयोग्येन शास्त्रं[2] निगदता राजानुज्ञातेन नीचनखरोम्णा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेणाकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखाऽनु[3]प्रवेष्टव्या ॥ ३ ॥**

---

१ 'तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्मसु' इति ड. । २ 'शास्त्रार्थं निगदता' इति ता. । ३ 'चरितव्या' इति ता. ।

यादृशस्य विशिखानुप्रवेशनाधिकारस्तमाह—अधिगतेत्यादि । अधिगततन्त्रेणेति पाठतो गृहीततन्त्रेण । उपासिततन्त्रार्थेनेति यथाविध्यभ्यस्ततन्त्रार्थेन । शास्त्रं निगदतेति पाठतोऽर्थतश्च प्रस्तावागतमपेक्षितं शास्त्रप्रदेशं कथयता । निष्पन्नेन वैद्येन प्रजापालके राज्ञि आत्मा गुणतो दर्शनीयः, ततो राज्ञा परीक्ष्य वैद्यः प्रजारक्षार्थमनुमन्तव्य एष धर्मः, अनिष्पन्नवैद्यो गुणतश्चिकित्सां कुर्वाणो लोकापकारकतया राज्ञा शासनीयः, यदुक्तं—"कुवैद्यो वधमर्हति राजतः"—( सू. अ. ३ ) इति; अतो वैद्यत्वं निष्पन्नं दर्शयितुमाह—राजानुमतेनेति । नीचनखरोमता कृत्तनखरोमता, अनेन चार्जवं तथा शुचिता कर्मक्षमता च भवति । छत्रवत्वमातपादिप्रतिषेधाय । दण्डहस्तत्वं स्खलितादिनिषेधाय । उपानत् पादुका, साऽपि कण्टकादिनिषेधाय । एतेषां च गुणाश्चरके मात्राशीतीये "इतेर्विधमनम्" ( च. सू. अ. ५ ) इत्यादिना विस्तरोक्ता ज्ञातव्याः । अनुद्धतानामार्याणां वेशो वस्त्रकेशादिरचना अनुद्धतवेशः । सुमना इति प्रशस्तकारुण्यादिगुणवन्मनाः । कल्याणं कल्याणाय वा अभिव्याहारो यस्य स तथा । कुहक इति 'कुह' विस्मयने, इत्यत्र निष्पन्नः; परवञ्चनाय दम्भादिना विस्मायकोऽभिधीयते; तद्विपरीतोऽकुहकः । सहायदोषेण प्रसजत्सु दोषनिरासार्थं, तथाऽसहायस्य सर्वकार्येष्वेव गमननिषेधादुक्तं—सुसहायवतेति ॥ ३ ॥

**ततो दूतनिमित्तशकुनमङ्गलानुलोम्येनातुरगृहमभिगम्य, उपविश्य, आतुरमभिपश्येत्, स्पृशेत्, पृच्छेच्च; त्रिभिरेतैर्विज्ञानोपायै रोगाः प्रायशो वेदितव्याः (इत्येके तत्तु न सम्यक्; षड्विधो हि रोगाणां विज्ञानोपायः, तद्यथा—पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति ) ॥ ४ ॥**

बन्धुभूतेनेतिवचनाद्विशिखानुप्रवेशे दैवसंपत्तिसूचकमपेक्षणीयमाह—ततो दूतेत्यादि । वैद्यानयनाय प्रश्नाय वाऽऽगतः पुरुषो दूतः, निमित्तमनुलोमसुरभिवातादि, शकुनं पक्षिविशेषदर्शनरुतादि, मङ्गलं पूर्णकुम्भादिदर्शनम्, एषामानुलोम्यं शुभसूचकता । पृच्छेच्चेति चकारेण घ्राणेन श्रोत्रेणानुमानेन च ग्रहणं सूच्यते । अत एव त्रिभिरित्यादौ ज्ञानोपायान्तरसूचकं प्राय इति सूचितम् । एतेन शब्देन वातव्रणवातातिसारादिज्ञानं, तथा पूतिगन्धेन पित्तातिसारव्रणादिज्ञानं भवति; तथा पिपीलिकोपसरणेन यन्माधुर्यानुमानान्मेहविशेषावधारणं, तदप्यनुमतं सूचितं भवति । रसनप्रत्यक्षं त्वातुरगतं नेच्छन्त्येव । यदाह **चरकः**—"मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात्"—( च. इं. अ. २ ) इत्यादि । अन्यतया तु तत्साक्षान्नोक्तम्, अत एव **चरके** द्विव्रणीये-"दर्शनस्पर्शनप्रश्नैः परीक्षा त्रिविधा मता" ( च. चि. अ. २५ ) इत्युक्तम् । दर्शनादिपूर्वकं तु यदनुमानं तद्दर्शनाद्युपायतया दर्शनादिग्रहणगृहीतमेव, अत एव विज्ञानोपायैरिति कृतं; तेन

---

१ 'निष्पन्नतत्त्वेन' इति ह. । २ अयं पाठश्चक्रासंमतः । 'त्रिभिरेतैर्विज्ञानोपायैर्दीर्घायुषोऽल्पायुपश्च वेदितव्याः' इति ता. । ३ 'तदप्यनुमितं भवति' इति मु. ।

दर्शनादि प्रत्यक्षादौ साक्षादुपायः, परंपरया चानुमानमपि तत्पूर्वकं भवत्येव; अत एवायुः प्रत्यक्षाप्रत्यक्षशरीरादिसंयोगतयाऽप्रत्यक्षमपि आयुर्बलस्य दर्शनविषयतया दर्शनप्रत्यक्षेष्वायुरुक्तम्। आगमस्त्वायुर्वेदतन्त्ररूपो व्याधिस्वरूपादिज्ञापकः परीक्षकस्य वैद्यस्य श्रुतशालिताविशेषलब्ध एव। यदुक्तं **चरके**—"द्विधैव परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं च" (च. वि. अ. ४) इति। अनेन च न्यायेनाभिमतसर्वश्रोत्रादिना भेषजसिद्ध्येऽधिकपरीक्षा 'श्रोत्रादिभिरिन्द्रियैः प्रश्नेन च' इत्यादिना 'तत्स्थानीयैर्जानीयाद्' इत्यन्तेन पठन्ति; एके तन्नानुमन्यन्ते। प्रश्नेन चेह तद्विषयमुत्तररूपं वचनं लौकिकागमरूपं गृह्यते ॥ ४ ॥

**तत्र दृष्ट्वा शरीरोपचयापचयावायुर्वर्णवैकृतं छायां चातुरस्य भिषग्जानीयात्; स्पृष्ट्वा शीतोष्णादीन् स्पर्शविशेषान् विपरीताविपरीतान् ज्वरशोषादिषु; पृष्ट्वा देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायमग्निं वातमूत्रपुरीषाणां प्रवृत्तिमप्रवृत्तिं चेति ॥ ५ ॥**

तत्रेत्यादिना दर्शनपरीक्षणीयमाह। आयुषो दर्शनपरीक्षणीयत्वं यथा भवति तद्व्याकृतमेव। वर्णवैकृतमकस्मादन्यथाभावो वर्णस्य। छायाविकृतिश्च पाञ्चभौतिकी[2]। चकारात् प्रभादिदर्शनग्राह्यग्रहणम्। अत्र छायाप्रभयोर्भेदे **चरकः**—"वर्णमाक्रामति च्छाया भा तु वर्णप्रकाशिका। आसन्ना लक्ष्यते छाया प्रभा दूरात्तु लक्ष्यते" (च. इं. अ. ७) इति। शीतादीनीत्यत्रादिशब्देन कठिनमृद्वादीनां स्पर्शग्राह्याणामुपग्रहः। स्पर्शविशेषादिति स्पर्शग्राह्या विशेषा विपरीता अस्वाभाविकाः; स्वाभाविकास्त्वविपरीताः। यत्र प्रायो विपरीताविपरीतादि संभवति तदाह—ज्वरशोषादिष्विति। ज्वरे हि सहजत्वादविपरीतमुष्णत्वम्, एवं शोषेऽपि सर्वाङ्गज्वरयुक्ते उष्णत्वमविपरीतं शीतत्वं तु विपरीतम्। ये तु शोषस्थाने शोथं पठन्ति तन्मते शोथे क्वचित् पित्तकृते मार्दवमविपरीतं काठिन्यं तु विपरीतमित्यादि ज्ञेयम्। प्रश्नेन प्रश्नविषयोत्तरवचनेन। देशो भूमिरातुरश्च; तत्र भूदेशोऽनूपादिः, आतुरस्तु श्लेष्मप्रकृत्यादिः[3] प्रश्नेन ज्ञेयः। कालोऽपि नित्यगः ऋत्वादिः, आवस्थिकोऽपि बालादिभेदवान् तथा ज्वराद्यवस्थाभेदवान्। अयं च देशकालभेदो व्याध्यु-

---

१ 'तत्र श्रोतेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते—'तत्र सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छति' (सू. अ. २६) इत्येवमादयः, स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयः (स्पर्शविशेषा) ज्वरशोफादिषु, चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्णविकारादयः, रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः, घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानां च गन्धविशेषाः, प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलमन्तरग्निं वातमूत्रपुरीषाणां प्रवृत्तिमप्रवृत्तिं कालप्रकर्षादींश्च विशेषान्। आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात्' इति ड.।
२ 'छाया च पाञ्चभौतिकी' इति मु.। ३ 'श्लेष्मप्रकृत्यादिभेदेन' इति ह.।

त्पत्त्यादौ समानासमानत्वादिना प्रश्नपूर्वकोत्तरप्रतिपन्नो व्याध्यादिबलवत्त्वादिज्ञापको भवति । जातिर्ब्राह्मणत्वादिरूपा; साऽपि प्रकृतिविशेषं जातिप्रसक्तं गमयन्ती व्याधिविशेषं गमयति । अन्ये तु जातिशब्दं देशकालाभ्यां प्रत्येकमभिसंबध्नन्ति । सात्म्यं द्विविधं चेष्टाहारभेदात् । यदुक्तं "यो रसः कल्पते सम्यक् सुखित्वाय निषेवितः । व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत्" (सू. अ. ३५) इति । चतुर्विधं वा सात्म्यम्, ऋतुचेष्टादेशव्याधिसात्म्यभेदात् । तदुक्तं—**चरके** "इत्युक्तमृतुसात्म्यं यत्" ( च. सू. अ. ६ ) इत्यादिना "चेष्टितं चाद्यमेव च" "इत्यन्तेन । आतङ्कः समुपपद्यते अस्मादिति आतङ्कसमुत्पत्तिर्निदानम् । वेदनासमुच्छ्रायो वेदनोत्पत्तिः, वेदनासंस्थानमिति यावत् । अग्निर्विषमादिभेदेन चतुर्विधः । अप्रवृत्तिं चेति चकारेण रक्तपित्तोर्ध्वगत्वादिग्रहणम् ॥ ५ ॥

**भवति चात्र—**

**मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च ॥**
**तथा दुष्परिमृ(पृ)ष्टाश्च मोहयेयुश्चिकित्सकम् ॥ ६ ॥**
**तस्मात् परीक्ष्याः सततं भिषजा सिद्धिमिच्छता ॥**
**युक्तिना व्याधयः सर्वैः प्रमाणैर्दर्शनादिभिः ॥ ७ ॥**

इदानीमुक्तदर्शनादीनि समीचीनान्येव सम्यग्ज्ञानहेतूनीति दर्शयन्नाह—मिथ्येत्यादि । मिथ्यादृष्टाः भ्रान्तदर्शनदृष्टाः । दुष्परिपृष्टा इत्यनेन दुराख्याता इति लक्षयति । प्रमाणैरिति प्रमाणरूपैर्दर्शनप्रश्नैः; न तु प्रमाणभासैः, तेषां व्यामोहहेतुत्वात् । सर्वैरित्यनेन यथासंभवं दर्शनादिप्रमाणसंप्लवमपि दर्शयति । यथा च दर्शनादिना प्रमाणग्रहणं तथा दर्शितमेव प्राक् ॥ ६ ॥ ७ ॥

**एवमभिसमीक्ष्य साध्यान् साधयेत्, याप्यान् यापयेत्, असाध्यान्नैवोपक्रमेत्, परिसंवत्सरोत्थितांश्च विकारान् प्रायशो वर्जयेत् ॥ ८ ॥**

परीक्षाप्रयोजनमाह—एवमित्यादि । प्रवृत्तिप्रस्तावादितश्चाप्रवृत्तिविषय इत्याह—परिसंवत्सरोत्थितांश्चेत्यादि । अत्र प्रायोग्रहणात् परिसंवत्सराणामपि वर्षापनीयरक्तगुल्मादीनामुपक्रमणीयत्वमाह ॥ ८ ॥

**तत्र साध्याः खल्वपि व्याधयः प्रायेणैषां दुश्चिकित्स्यतमा भवन्ति; तद्यथा—श्रोत्रियनृपतिस्त्रीबालवृद्धभीरुराजसेवककितवदुर्बलवैद्यविदग्धव्याधिगोपकदरिद्रकृपणक्रोधनानामनात्मवतामनाथानां च; एवं निरूप्य चिकित्सां कुर्वन् धर्मार्थकामयशांसि प्राप्नोति ॥ ९ ॥**

पुरुषविशेषेणापि क्रियाकष्टत्वमाह—तत्र साध्याः खल्वपीत्यादि । अत्र श्रोत्रियः शिष्याध्ययनादिना भेषजं न करोति; नृपतिर्मृत्युभयात्, स्त्री लज्जया, बालवृद्धयोरसाहसतया भेषजासम्यग्योगः, एवमन्येष्वपि यथासंभवं कारणमूह्यम् ॥ ९ ॥

भवति चात्र—

स्त्रीभिः सहास्यां संवासं परिहासं च वर्जयेत् ॥
दत्तं च ताभ्यो नादेयमन्नादन्यद्भिषग्वरैः[1] ॥ १० ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः ॥ १० ॥

वैद्यस्य विशिखायां विशेषपरिहर्तव्यमाह—स्त्रीभिरित्यादि । आस्या अवस्थानम्, एतच्च पतिपरोक्षे बोद्धव्यम् । अन्नादन्यदित्यनेनान्नं वृत्तिहेतुतया गृहीतव्यमिति दर्शयति; भर्त्रा त्वनुमतं यत् स्त्रीदत्तं तदिह तदननुमतत्वेनैव ग्राह्यं; चरके हि भर्त्राननुमतं स्त्रीदत्तं न ग्राह्यमित्युक्तमिति ॥ १० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अग्रोपहरणीये शस्त्रमनु शस्त्रकर्मणो रक्तस्रावनिषेधकतया छेद्यादिबहुविषयतया च क्षार उद्दिष्टः, अतो यथाव्याख्यातोपोद्घातौ योग्यासूत्रीयविशिखानुप्रवेशनीयौ समाप्य, क्रमागतः क्षारपाकविधिरेवोच्यते । क्षारस्य पचनं पाकः, विधिरवचारणं, तावधिकृत्य कृतोऽध्यायो ज्ञेयः ॥ १ ॥ २ ॥

**शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमः, छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च ॥ ३ ॥**

वैद्यातुरप्रवृत्त्यर्थमधिकृतस्य क्षारस्य सहेतुकां स्तुतिमाह—शस्त्रानुशस्त्रेभ्य इत्यादि । शस्त्राणि मण्डलाग्रादीनि, अनुशस्त्राणि त्वक्सारादीनि । छेद्यादिकर्तृत्वं क्षारस्य भगन्दरच्छेद-नाडीदारण-कुष्ठलेखनादिना; विशेषक्रियावचारणं च पित्तरक्तसंभूतेऽर्शसि आदौ क्षार एव विशेषेणावचार्यते, नाग्निः; यदुक्तं—'क्षारेणैव मृदुना रक्तपित्तनिमित्तानि ( चि. अ. ६ ) इति । त्रिदोषघ्नत्वमुक्तं नानौषधिसमवायादित्यादिना साधयिष्यति । एतच्छेद्यादिबहुविषयत्वं न मण्डलाग्रादीनां त्वक्सारादीनां वा प्रत्येकं समुदितमस्ति यथा क्षारे, इति क्षारस्य प्रधानतमत्वं सिद्धम् । यत्तु वक्ष्यति—"क्षारादग्निर्गरीयान्" ( सू. अ. १२ )

---

१ 'दत्तं ताभ्यो न गृह्णीयादन्नादन्यद्भिषक् सदा' इति ता. । अस्याग्रे ताडपत्रपुस्तके श्लोकद्वयमधिकं पठ्यते; यथा—"वेदोत्पत्तिः शिष्यदीक्षा दानमध्ययनस्य च । प्रभाषणं चाग्रहरमृतुचर्या तथैव च ॥ यन्त्रशस्त्रावचारौ च योग्यासूत्रीय एव च । विशिखानुप्रवेशश्च प्रोक्तो वै प्रथमो दश ॥" इति ।

इति, तद्वातश्लेष्मानुबन्धरक्तार्शःप्रभृतिदाहे, अग्निदग्धानामपुनःप्ररोहादिति हेतुना विशिष्टविषये दर्शितमिति न बहुविषयत्वादिनोक्तक्षारप्राधान्यं विनिहन्ति; न चैवं शस्त्रादपि प्राधान्ये शस्त्रादग्रेऽभिधानं क्षारस्य प्रसज्जति, अनुशस्त्रतयाऽप्रधानत्वस्यापि विवक्षितत्वात् ॥ ३ ॥

**तत्र क्षरणात् क्षणनाद्वा क्षारः; नानौषधिसमवायात्त्रिदोषघ्नः, शुक्लत्वात् सौम्यः, तस्य सौम्यस्यापि सतो दहनपचनदारणशक्तिरविरुद्धाऽऽग्नेयौषधिगुणभूयिष्ठत्वात्, कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः[1] स्तम्भनो लेखनः कृम्यामकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः ॥ ४ ॥**

छेद्यादियोग्यधर्मं क्षारस्य निरुक्तिद्वयेनाह—तत्र क्षरणादित्यादि । क्षरणादिति दुष्टमांसादिचालनात् शातनादित्यर्थः । क्षणनादिति पक्षे पृषोदरादित्वाद्रूपसिद्धिः । त्रिदोषघ्नत्वे हेतुमाह—नानौषधिसमवायादिति; वातपित्तकफहरौषधिमेलनकृतात्, अत्र प्रकृतिसमसमवायारब्धत्वाद् वातादिहरणमेव करोतीति दृष्टत्वादवधार्यते; न तु संयोगमहिमाऽत्रादृष्टचरः कल्पनीयः । न च वाच्यं यद्—वातहरादिक्षारद्रव्याणां दग्धत्वान्न तद्गुणान्वयो भस्मनीति; दृष्टो हि भस्मन्यपि प्रकृतिगुणान्वयः; उक्तं हि—"सक्षौद्रमिन्दीवरभस्मवारि निहन्ति रक्तम्" (उ. तं. अ. ४५) इत्यादि । दहनादिगुणतयाऽऽग्नेयत्वं क्षारस्य स्फुटं, पित्तजयानुगुणं तु सौम्यत्वमस्फुटं स्फोरयन्नाह—शुक्लत्वात् सौम्य इति । अभास्वरं हि शुक्लत्वमस्त्येव । यदुक्तं—"तेजोधातुर्यदाऽब्धातुप्रायो भवति तदा गर्भं गौरं करोति" (शा. अ. २); तथा "श्लेष्मा श्वेतो गुरुः" (सू. अ. २१) इति; तथा "ओजः सोमात्मकं शुक्लं शीतम्" (सू. अ. १५) इत्यादि । सौम्यत्वेऽप्यस्य न शीतत्वम्, उष्णत्वस्यैव दर्शनात्; भूतानां चादृष्टविशेषयन्त्रितो मेलकविशेषः समानाश्रयमपि गुणं नारभते; यथा—आमलके तेजः अम्लत्वमारभते नोष्णत्वं, रक्तशाल्यादौ पृथिवीजले माधुर्यमारभेते न गौरवमित्यादौ बहु दृश्यते; अत एव घृते सौम्यत्वं पठित्वाऽपि शीतमिति पाठ उपपन्नः । सौम्यस्यापि क्षारस्य यथा दहनादिकर्तृत्वं विशेषेण भवति तदाह—तस्येत्यादि । अत्र चाग्नेयांशेन भूयसाऽपि विरुद्धस्य सौम्यकार्यस्य पित्तार्शोयौगिकत्वस्य न विरोधः; तत्तु दृष्टत्वाद् व्युत्पादितमेव । पाचन इति व्रणशोथस्याजीर्णस्य च । विलयनः शोथस्य वातकफभूयिष्ठस्य । शोधनो दुष्टव्रणस्य । रोपणत्वं तु विशुद्धस्य यथा क्षारो व्रणं शोधयति सम्यग्युक्तः, तथा शुद्धः सन् स्वयमेव व्रणो रोहतीति रोपयतीति रोपणः; शुद्धे तु व्रणे क्षारस्य मांससिरादिक्षारकतया स्वतन्त्रस्य द्रव्यान्तरयुक्तस्य वा प्रयोगो न दृश्यत इति; तेन तिलवन्न द्रव्यविशेषयोगाच्छोधनत्वं रोपणत्वं च क्षारस्य भवति । स्तम्भन इति शोणितातिप्रवृत्तिस्तम्भनः । क्रिम्यादिहन्तृत्वं यथायोग्यतया पानीयेन प्रतिसारणीयेन च ज्ञेयम् । पुंस्त्वस्य चातिसेवित इति पानीयक्षार एव गुल्मादावपि यथोक्ताभ्यासातिरेकसेवितो ज्ञेयः ॥ ४ ॥

---

१ 'रोपणः शोषणः' इति ङ. ।

**स द्विविधः—प्रतिसारणीयः, पानीयश्च ॥ ५ ॥**

स द्विविध इत्यादि । प्रतिसारणीय इति पानीय इति चार्हे कृत्यः ॥ ५ ॥

**तत्र प्रतिसारणीयः कुष्ठकिटिभदद्रुमण्डलकिलासभगन्दरार्बुदार्शोदुष्टव्रणनाडीचर्मकीलतिलकालकन्यच्छव्यङ्गमशकबाह्यकृमिविषादिषूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीषु, एतेष्वेवानुशस्त्रनिपातनमुक्तम् ॥ ६ ॥**

किटिभादि कुष्ठत्वेन गृहीतमपि पुनरिहातिशयक्षारसाध्यतया पठितम्; आदिशब्देन वल्मीकादीनां ग्रहणम् । तिस्रो रोहिण्य इति असाध्यसंनिपातजशोणितजरोहिणीद्वयं त्यक्त्वा क्षारसाध्यरोहिणीत्रयं ज्ञेयम् । अनुशस्त्रनिपातनमिति क्षारनिपातनम् ॥ ६ ॥

**पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाहशर्कराश्मर्याभ्यन्तरविद्रधिकृमिविषार्शःसूपयुज्यते । अहितस्तु रक्तपित्तज्वरितपित्तप्रकृतिबालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः॥७॥**

पानीयविषयमाह—गरेत्यादि । गरः कृत्रिमविषम्, अग्निः सज्जते येषु तेऽग्निसङ्गाः विसूचिकादयः, अजीर्णमामादिभेदाच्चतुर्विधम् ॥ ७ ॥

**तं चेतरक्षारवद्दग्ध्वा परिस्रावयेत् । तस्य विस्तरोऽन्यत्र ॥ ८ ॥**

पानीयक्षारविधिमाह—तं चेतरक्षारवदित्यादि । इतरवदिति वक्ष्यमाणप्रतिसारणीयवत् । एतेन यथा प्रतिसारणीयस्य दाहादिविस्रावणपर्यन्तं तथा पानीयेऽपि कर्तव्यं, द्वितीयपाकस्तु न कर्तव्यः । मात्रा तु पलत्रिकर्षार्धपलरूपा उत्तममध्यमाधमबलेषु । विस्तरोऽन्यत्रेति गुल्माध्यायादौ ॥ ८ ॥

**अथेतरस्त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च । तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपवसन् प्रशस्तेऽहनि प्रशस्तदेशजमनुपहतं मध्यमवयसं कालमुष्ककमधिवास्यापरेद्युर्वैकृतमद्भुतं न पश्येत्तदोपकल्पयित्वा खण्डशः प्रकल्प्य निवाते देशे चितिं कृत्वा तिलनालैरादीपयेत् । अथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च । अथानेनैव कल्पेन कुटजपलाशाश्वकर्णपारिभद्रकबिभीतकारग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्निमन्थगुञ्जाश्चतस्रश्च कोशातकीः समूलफलपत्रशाखा दहेत् । ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैः, एकविंशतिकृत्वः परिस्राव्य, महति कटाहे शनैर्दर्व्याऽवघट्टयन् विपचेत्, स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च, तमादाय महति वस्त्रे परि-**

१ '°परिस्रावण° ह. । २ अस्याग्रे 'सुधाशर्कराश्च प्रक्षिप्य' इत्यधिकं डल्हणः पठति ।

स्राव्येतरं विभज्य पुनरग्नावधिश्रयेत् । तत एव क्षारोदकात् कुडवमध्यर्धं वाऽपनयेत् । ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खनाभीरग्निवर्णाः कृत्वाऽऽयसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य, पिष्ट्वा, तेनैव द्विद्रोणेऽष्टपलसंमितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य, सततमप्रमत्तश्चैनमवघट्टयन् विपचेत् । स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत । अथैनमागतपाकमवतार्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः । एष चैवाप्रतीवापः पक्कः संव्यूहिमो मृदुः । प्रतीवापे यथालाभं दन्तीद्रवन्तीचित्रकलाङ्गलीपूतिकप्रवालतालपत्रीविडसुवर्चिकाकनकक्षीरीहिङ्गुवचातिविषाः समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणाः प्रतीवापः । स एव सप्रतीवापः पक्कः पाक्यस्तीक्ष्णः ॥ ९ ॥

(तेषां यथाव्याधिबलमुपयोगः ॥ १० ॥)

अथेत्यादौ अथशब्दो मङ्गले, मङ्गलाचरणं च शल्यतन्त्रेषु प्रतिसारणीयक्षारविधिप्राधान्यं सूचयति । शरदीतिवचनेन तत्रैवाग्नेयसौम्यक्षारार्थं भेषजग्रहणमित्याचार्यवचनादवधार्यते । गिरिसानुजमित्यनेन तद्देशजाप्राप्तौ तत्समानजाङ्गलदेशेऽपि ग्रहणमूह्यम्[3] । शुचिरुपवसन्निति क्षारद्रुमस्थितभूतविघ्ननिषेधार्थम्, एवमेव च ग्रहणे भैषज्यं गुणयुक्तं भवतीति दर्शयितुं च । प्रशस्तदेशजमिति श्वभ्रश्मशानादिरहितदेशजमित्यर्थः । अनुपहतमिति क्रिम्याद्यनुपहतम् । मध्यवयसमिति बालवृद्धयोरपूर्णक्षीणवीर्यत्वात् । कालमुष्ककमिति कालपुष्पं घण्टापाटलिमाह; स च बहुविधः, उक्तं हि **विश्वामित्रे**—"श्वेतपुष्पः कालपुष्पो रक्तपुष्पस्तथैव च । पीतपुष्पो वरस्तेषु कालपुष्पः प्रकीर्तितः" इति । अधिवास्येति समन्त्रबलिकर्मादिनाऽधिवासनं कृत्वा, **भोजे** हि पठ्यते—"प्राङ्मुखोपगतस्तत्र बलिं दत्त्वा चतुर्दिशम् । वृक्षाभ्यासे ततो ब्रूयात् प्राञ्जलिः प्रयतः स्तुवन् ॥ निवसन्तीह भूतानि यान्यस्मिन् कानिचिद्द्रुमे । अपक्रामन्त्वितश्छेद्यः परार्थे श्वो ह्ययं द्रुमः ॥" इति । वैकृतं शाखाभङ्गादि, अद्भुतं रक्तवर्षादि । निवात इति सम्यग्दाहार्थम् । चितिर्दाहस्थानम् । तिलनालैरादीपनं शक्त्यतिशयार्थमिति वचनादुन्नीयते[3] । काष्ठरसो भस्मनि गलितो दग्धः शर्करासदृशत्वाद् भस्मशर्करोच्यते । तथा च **निघण्टुः**—"मुष्ककाद्दह्यमानात्तु रसः प्रच्यवते यदा । भस्मना सह संयुक्तः काठिन्यमुपगच्छति ॥ तं भस्मशर्करामाहुः" इत्यादि । अनेनैव कल्पेनेति छेदननिवातदेशचितिकरणादिना । अश्वकर्णः सर्जभेदः; इन्द्रवृक्षः कुटजभेद एव, तेन कुटजोऽत्र चरकोक्तस्त्रीपुंभेदाद् द्विविधो हि ग्राह्यः; कोषातकी घोषकः, सा च बृहत्फला अल्पफला पीतपुष्पा श्वेतपुष्पा इति चतुष्प्रकारा । "मुष्ककस्य तथा

---

१ अयं पाठश्चक्रासंमतः, ताडपत्रपुस्तकेऽपि न पठ्यते । २ 'उक्तम्' इति **मु.** । ३ 'इति वचनादुन्नीयते' इति **मु.** पुस्तके नास्ति ।

कुटजादीनां पृथक्पाठेन मुष्ककेनैकेनापि क्षारपाक इति दर्शयति" इत्येके । तथा ह्यन्यत्र पठ्यते—"तोये कालकमुष्ककस्य विपचेद्भस्माढकं षड्गुणे" इत्यादि । अन्ये तु "एकीकृत्यपाठेन सर्वभस्मनां तुल्यता स्यात्, भेदोपादाने त्वर्धं मुष्ककभस्म, अपरेषां च मिलितानामर्धं ग्राह्यमिति सूचयति" इति व्याख्यानयन्ति । मिलितभस्मपाकेन नानौषधिसमवायोऽपि दर्शितो व्यक्तो भवति; केवलमुष्ककभस्मपाके तु भिन्नानलसंबन्धादावापप्रतिवापमात्रकृतो नानौषधिसमवायस्त्रिदोषघ्नत्वापेक्षो वर्णनीयः । मिलितपाठोऽपि दृश्यते; तथा ह्युक्तमन्यत्र—"शरदाद्यन्यतमस्मिन्नाग्नेयकाले कालमुष्कककाष्ठानि सुबहून्यार्द्राणि संगृह्य चित्रकपलाशभल्लातककदल्यपामार्गमिश्रितानि सम्यग्दग्धानि भस्मद्रोणमुदकद्रोणैः षड्भिरेकीकृत्य विपाचयेत् पादशेषितम्" इत्यादि । मुष्ककादीनां क्षारकरणविधानमेतत् । क्षारभस्मपाकस्तु मुष्ककादीनां सर्वेषामेव व्यस्तानां मिलितानां च भवतीत्यनेन लभ्यते । नानौषधिसमवायारब्धत्वं तु वाय्वग्निजलपृथिव्याद्यौषधारब्धत्वात् क्षारस्योद्भूताग्नेयस्य सौम्यस्य भवति; तेनाग्नेयमुष्ककशङ्खनाभिमात्रावचयस्यापि क्षारस्य तन्त्रान्तरोक्तस्य त्रिदोषघ्नत्वमुपपन्नं भवति । ततः क्षारद्रोणमुदकद्रोणैः षड्भिरिति भस्मद्रव्यात्; षड्गुणोदकपरिभाषेयं; तेनान्यत्रापि क्षारपाके षड्गुणमुदकं भवति । 'यथोक्तैर्मूत्रैर्वा' इति पाठपक्षेऽन्नपानोक्तैर्गवादिमूत्रैर्वा षड्गुणैरिति ज्ञेयम् । स इति क्षारक्वाथः । तमादायेति एकविंशतिवारपरिमितस्रावणेनादाय । इतरमिति क्षारकल्कम् । यथोक्तं चाच्छपैच्छिल्यादि प्रायस्त्रिभागावशिष्टे क्वाथे भवति, अत एव त्रिभागावशिष्टक्वाथग्रहणार्थं केचित् पठन्ति—'द्विद्रोणेऽष्टपलसंमितमवाप्य' इति; ये तु न पठन्ति ते तन्त्रान्तरदर्शनाच्चतुर्भागावशिष्टं क्वाथं वदन्ति । तत एवेति परिस्रावितगृहीतात् । कुडवमिति अष्टौ पलानि, अध्यर्धमिति द्वादशपलानि । एतत् पृथक्करणं च कटशर्करादिनिर्वापणार्थम् । कुडवाध्यर्धकुडवविकल्पश्च कटशर्करादीनामावापानां निर्वापणाल्पभूयस्त्वविकल्पात् क्षारतैक्ष्ण्यमार्दवकारकत्वं सूचयति । कटशर्करा गाङ्गेष्टिका, भस्मशर्करा व्याकृतैव, क्षीरपाकः शुक्तिका । आयसे पात्रे इति लोहपात्रे; अस्यैवातिदृढत्वेन क्षाराभेद्यत्वात्; किंवा लोहपत्रे एव शक्त्यतिशयः क्षारस्य भवतीति वचनादुन्नीयते, यदुच्यते-"यथा कुर्वन्ति स उपायः" ( सू. अ. ) इति । पिष्ट्वेति निषेकचूर्णितशेषं पिष्ट्वा । अत्र कटशर्करादीनामावापादीनां ये 'द्विद्रोणेऽष्टपलसंमितम्' इति पठन्ति, तन्मते प्रत्येकमष्टपलत्वेन द्वात्रिंशत्पलानि भवन्ति, तथा च द्विद्रोणे क्षारोदके द्विप्रस्थमान आवापः षोडशांशो भवति । षोडशांशेन चावापेन पाक्यसंज्ञः श्रेष्ठः क्षारो भवति, चतुर्भागावापेन संव्यूहिमसंज्ञो मृदुः । यदुक्तं-"तुर्येणाष्टमकेन षोडशभवेनांशेन संव्यूहिमो मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छल्ककः" इति । अत्र संव्यूहिम इति मृदुः । तदनुसारेण क्षारमार्दवे विवक्षिते चतुर्थभागेन कटशर्करादि देयं, मध्ये तु क्षारे विवक्षिते अष्टमेन भागेन देयं, श्रेष्ठे तीक्ष्णे विवक्षिते षोडशभागेन

१ 'भागेनांशेन' इति मु. ।

दातव्यमित्येषां संव्यूहिमादिव्यवस्था । तथा क्षारो द्विविधः—सप्रतिवापोऽप्रतिवापश्च । आवापानन्तरं यत् पुनः शक्त्यतिशयार्थं दीयते स प्रतीवापः । अत्राप्रतीवापो मृदुः संव्यूहिमसंज्ञः, सप्रतीवापश्च पाक्यसंज्ञस्तीक्ष्णः । अयं चापि क्षारो द्विविधः, यदुक्तं **भोजे**—"संव्यूहिमस्तथा पाक्यो द्विविधः क्षार इष्यते । पाक्यस्तु सप्रतीवापस्तीक्ष्णोऽन्यस्तु भवेत् पुनः ॥ सुधादिवर्गं पिष्ट्वा तु सिञ्चेत् क्षारोदकैः शनैः । तेनैव तं पुनः पिष्ट्वा त्वयःपात्रे निधापयेत् ॥ एष संव्यूहिमः क्षारो मृदुः संपरिकीर्तितः" इति । ईदृशीमेव च सप्रतिवापतां दर्शयितुं प्रतीवापमाह—प्रतीवापे यथालाभमित्यादि । द्रवन्ती चीरितपत्रा दन्ती; पूतिकः कण्टकिकरञ्जः, तस्य पल्लवाः; तालपत्री तालमूली; कनकक्षीरी 'कङ्कुष्ठ' इति व्यवह्रियते । शुक्तिप्रमाणा इति प्रत्येकमर्धपलप्रमाणाः । दन्त्यादीनां ग्रहणं तीक्ष्णत्वेन तद्योगेनेह तीक्ष्णता भवतीति वचनादुन्नीयते; अयःकुम्भस्थापनमाधारविशेषोऽपि शक्त्यतिशयार्थं भवतीति; क्षारावस्थानयोग्यतया तु लोहभाण्डस्थापनं सोपपत्तिकमेव ॥ ९ ॥ १० ॥

**क्षीणबले तु क्षारोदकमावपेद्बलकरणार्थम् ॥ ११ ॥**

कालादिवशाद्धीनशक्तिके क्षारे भूते बलजननोपायमाह—क्षीणबल इत्यादि । क्षारोदकमिति यथोक्तविधानगृहीतक्षारोदकम् । अत्र च क्षारपाके तन्त्रान्तरक्षारप्रयोगा बहवो दृष्टार्थाः श्रूयन्ते, तत्सारूप्यकल्पनयेहापि नानाप्रकारां व्याख्यां कुर्वन्ति, तच्च न मां धिनोति, येन भिन्नाभिप्रायाणां प्रयोगाणां नैकवाक्यता भवति; यथा तन्त्रान्तरीयगुग्गुल्वादिप्रयोगाणां; प्रधानक्षारकार्यत्वेन विरोधिता प्रयोगभेदेऽपि भवति, तथाऽपि शिष्यव्युत्पत्त्यर्थं तन्त्रान्तराणि क्षारप्रयोगे लिख्यन्ते । तत्र **विश्वामित्रः**—"षडाढके जले पचनविशेषाच्चतुर्भागावशिष्टषट्प्रस्थे तच्चतुर्भागं कल्कमध्यर्धप्रस्थप्रमाणं दापयेत्" इत्यादि । तथा—"क्षारोदकचतुर्भागं कल्कमेषां प्रयोजयेत् । द्रव्याणां शुष्कचूर्णानां शुक्तिमात्रं प्रदापयेत्" इति । तथा **भोजः**—"शुक्तिं शङ्खं सुधां चैव शर्करां च तथैव च । भागोत्तराणि कुर्वीत समाहृत्यौषधानि च ॥" इत्यादि । तथा **विश्वामित्रः**—"एको[1] भागः शर्करायाः सौधाश्चत्वार एव च । द्वौ शुक्तेश्चापि विज्ञेयावेकः शङ्खस्य शुक्तितः" इति । तथा तन्त्रान्तरं—"तोये कालकमुष्ककस्य विदधेद्भस्माढकं षड्गुणे, पात्रे लोहमये दृढे विपुलधीर्दर्व्या शनैर्घट्टयन् । दग्ध्वाऽग्नौ बहु शङ्खनाभिशकलान् पूतावशेषे क्षिपेत्, यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतात्" इति । तथा—"शर्करैकभागो, द्वौ शुक्तीनां, चतुर्गुणं शङ्खात्" इति । तथा—"प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम् । कालमुष्ककमादाय दग्ध्वा भस्म समावपेत् ॥ आढकं त्वेकमादाय जलद्रोणे पचेद्भिषक् । चतुर्भागावशिष्टं तु वस्त्रपूतेन वारिणा ॥ शङ्खचूर्णस्य कुडवं प्रक्षिप्य विपचेत् पुनः । शनैर्मृद्वग्निना पाच्यं यावत् सान्द्रतनुर्भवेत् ॥ सर्जिकायावशूकाभ्यां

---

१ 'अष्टौ भागाः' इति मु. ।

शुण्ठीमरिचपिप्पलीः । वचामतिविषां चैव हिङ्गुचित्रकयोस्तथा ॥ एषां चूर्णं विनिक्षिप्य पृथक्त्वेनाष्टमाषकम् । दर्व्या संघट्टितं चापि स्थापयेदायसे घटे ॥ एष वह्निसमः क्षारः कीर्तितः कश्यपादिभिः'' इति । एवमादि बहु विस्तरभयान्न लिख्यते ॥ ११ ॥

**भवतश्चात्र—**

**नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः ॥**
**अविष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः ॥ १२ ॥**
**अतिमार्दवश्वैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसान्द्रताः ॥**
**सर्पिताऽपक्कता हीनद्रव्यता दोष उच्यते ॥ १३ ॥**

क्षारगुणान् दोषांश्चाह—नैवातीत्यादि । श्लक्ष्णोऽकर्कशः; 'मृत्स्नः' इति पाठपक्षेऽपि स एवार्थः । अविष्यन्दी अप्रसरणशीलः । शिव इति कल्याणकारितया, किंवा शिवः सौम्यः; 'समः' इति पाठपक्षे नातिसान्द्रो नातिद्रव इत्यर्थः । गुणशब्दश्चायं प्रशस्तधर्मगुणवचनः, तेन संप्रत्यनुपयुक्तकटुरसादिगुणनिषेधार्थम् 'अष्टगुणः' इति कृतम् । अतिमार्दवेत्यादावतिशब्दः प्रत्येकं सान्द्रतापर्यन्तं संबध्यते । अपक्कता हीनपाकादिना ॥१२॥१३॥

**तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निवातातपे देशेऽसंबाधेऽग्रोपहरणीयोक्तेन विधानेनोपसंभृतसंभारं, ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा छित्त्वा शलाकया क्षारं प्रतिसारयेत्, दत्त्वा वाक्शतमात्रमुपेक्षेत ॥ १४ ॥**

तत्र क्षारसाध्येत्यादि । अवघृष्येत्यादिपक्षत्रये पित्तदुष्टमुत्तानमवघृष्य, वातदुष्टमनत्यवगाढं वाऽवलिख्य, कफदुष्टमवगाढं च प्रच्छयित्वेति व्यवस्था । छित्त्वेति तु छेद्येष्वेव । वाक्शतमात्रमिति तावतैव कालेन गुणवत्क्षारकर्मकर्तृत्वात्; वाक् लघ्वक्षरोच्चारणम् । अत्युद्गत इति गगनमध्यगते, सम इति उदितमात्रात्युद्गतमध्ये; अनेन न्यायेन शरद्यतितीक्ष्णायां ग्रीष्मवत्, शिशिरे तु प्रभूतशीते हेमन्तवत्, वर्षास्वनुद्गतशीतोष्णासु वसंतवत् क्षारकालो लक्षणीयः ॥ १४ ॥

**एवं निपतिते व्याधौ कृष्णता दग्धलक्षणम् ॥**
**तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः ॥ १५ ॥**
**अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्यते ॥**
**इदमालेपनं तत्र समग्रमवचारयेत् ॥ १६ ॥**
**अम्लकाञ्जिकबीजानि तिलान् मधुकमेव च ॥**
**प्रपेष्य समभागानि तेनैनमनुलेपयेत् ॥ १७ ॥**

१ 'प्रतिसार्य वाक्शतमात्रं' इति ता. । २ एतद्व्याख्यानुसारी चक्रपाणिसंमतः पाठोऽनुपलब्धत्वान्न मूले सन्निवेशितः ।

**तिलकल्कः समधुको घृताक्तो व्रणरोपणः ॥**
**रसेनाम्लेन तीक्ष्णेन वीर्योष्णेन च योजितः ॥ १८ ॥**
**आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति ॥**
**एवं चेन्मन्यसे वत्स! प्रोच्यमानं निबोध मे ॥ १९ ॥**
**अम्लवर्जान् रसान् क्षारे सर्वानेव विभावयेत् ॥**
**कटुकस्तत्र भूयिष्ठो लवणोऽनुरसस्तथा ॥ २० ॥**
**अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसे ॥**
**माधुर्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति ।**
**माधुर्याच्छममाप्नोति वह्निरद्भिरिवाप्लुतः ॥ २१ ॥**

एवं निपतित इति क्षारसाधितोपलक्षणं, किंवा निपतित इति क्षारापनीते व्याधौ कृष्णता दग्धलक्षणं ज्ञेयम् । एतच्च दाहे ज्ञेयं लक्षणं, विकारोपशमादि उदर्कंज्ञेयमग्रे वक्ष्यति । अम्लवर्गः सौवीरकतुषोदकादिः । स्थिरमूलत्वेन दग्धलक्षणं च भवति, न च निःशेषव्याधिशातनं, तत्रायं लेपः—अम्लकाञ्जिकेत्यादि । रसेनाम्लेनेत्याद्याक्षेपपरिहारे शिष्यबुद्धिवृद्ध्यर्थम् । कटुकस्तत्र भूयिष्ठ इति स्वरूपकथनम् । लवणोऽनुरस इति तु अम्लेन सह योगे माधुर्यगमनानुगुणम् । अत एव कटुकं विहाय 'स तीक्ष्णो लवणो रसे' इति पठितम् । अन्ये तु कटुकोऽनुरसो भूयिष्ठो लवण इति योजयन्ति; उक्तमत्रैवाध्याये 'कटुक' इति, **चरके** "कटुर्लवणभूयिष्ठः" इति क्षारः पठितः । एतच्च बहिरन्तश्चाम्लेन क्षारमाधुर्यनयनात् क्षारविकारहननं सूच्यते । यदुक्तं **चरके** मदात्ययेऽम्लेन मद्येनान्तरक्षारविकारशमनं, यथा हि—"क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः" ( च. चि. अ. २४ ) इति; बाह्ये तु क्षारे शीतस्पर्शत्वादप्यम्लं क्षारदाहं हन्ति । यदुक्तं **विश्वामित्रे**—"यतश्चोष्णतमः क्षारः शैत्यं चाम्लरसेऽधिकम् । तस्मात् सेकप्रदेहाभ्याममम्लं क्षारं निवर्तयेत्" इति ॥ १५—२१ ॥

**तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च, हीनदग्धे तोदकण्डुजाड्यानि व्याधिवृद्धिश्च, अतिदग्धे दाहपाकरागस्रावाङ्गमर्दक्लमपिपासामूर्च्छाः स्युर्मरणं वा ॥ २२ ॥**

सम्यग्दग्धादिलक्षणमाह—तत्रेत्यादि । विकारोपशमादि उत्तरकाले ज्ञेयम् ॥ २२ ॥

**क्षारदग्धव्रणं तु यथादोषं यथाव्याधि चोपक्रमेत् ॥ २३ ॥**

क्षारदग्धव्रणमिति हीनातिदाहजं व्रणम् । यथादोषमित्यादिना हेतुविपरीतां व्याधिविपरीतां च चिकित्सामाह ॥ २३ ॥

**अथ नैते क्षारकृत्याः—तद्यथा—दुर्बलबालस्थविरभीरुसर्वाङ्गशूनोदररक्तपित्तिगर्भिण्यृतुमतीप्रवृद्धज्वरिप्रमेहिरूक्षक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीबापवृत्तोद्वृत्तफलयोनयः; तथा मर्मसिरास्नायुसन्धितरुणास्थि-**

**सेवनीधमनीगलनाभिनखान्तःशेफस्स्रोतःस्वल्पमांसेषु च देशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात् ॥ २४ ॥**

नैते क्षारकृत्या इत्यादिना प्रतिसारणीयपानीययोरपि यथासंभवमविषया उच्यन्ते। सर्वाङ्गशूलोदरी प्रतिषेधविषयः, प्लीहोदरे क्षारविधानात्। क्लीबोऽत्राल्पशुक्रः, तस्य क्षारः सर्वथा पुंस्त्वं हन्यात्; अशुक्रस्य पुंस्त्वाभावादेव न तद्बाधा। उद्वृत्तमूर्ध्वगतं फलमण्डं योनिर्वा यस्य प्राणिनः; तथा अपवृत्तमधोगतं फलं योनिर्वा यस्य, नासौ क्षारकृत्यः; फलयोनिशब्देनान्ये गर्भाशयमाहुः। मर्मेत्यादिना देशविशेषेणापि निषेधमाह। तरुणास्थि घ्राणकर्णग्रीवाक्षिकूटास्थि। सेवन्यः पञ्च शिरसि जिह्वाशेफसोरेकैका इति सप्त। मर्मगृहीतेऽपि नाभिपठनं दोषातिशयसूचनार्थम्। अल्पमांसदेशाः जानुललाटादयः ॥ २४ ॥

**तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्नद्वेषिणं हृदयसन्धिपीडोपद्रुतं च क्षारो न साधयति ॥ २५ ॥**

अवस्थायां क्षारनिषेधमाह—तत्र क्षारसाध्येष्वपीत्यादि ॥ २५ ॥

**भवति चात्र—**

**विषाग्निशस्त्राशनिमृत्युकल्पः क्षारो भवत्यल्पमतिप्रयुक्तः ॥**
**स धीमता सम्यगनुप्रयुक्तो रोगान्निहन्यादचिरेण घोरान् ॥ २६ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने क्षारपाकविधिर्नामैकादशोऽध्यायः ॥ ११ ॥**

क्षारो योग्यायोग्यप्रयोगान्महागुणो महादोषश्च भवतीति दर्शयन्नाह—विषेत्यादि। विषादिभूरिदृष्टान्तो विषादिवत् संज्ञानाशादिना प्रकरणसाधकत्वख्यापनार्थम्। एवंभूतोऽप्ययमाशुदारुणरोगोपहर्तृत्वात् क्रियत इत्याह—स धीत्यादि ॥ २६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकाख्यायां भानुमत्यां सूत्रस्थाने क्षारपाकविधिर्नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः।

**अथातोऽग्निकर्मविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

दाहकत्वसाधर्म्यात् क्षारमनु अग्निर्वाच्य इति तदध्यायारम्भः। अग्निकर्मविधिमधिकृत्य कृतोऽध्यायोऽग्निकर्मविधिः ॥ १ ॥ २ ॥

**क्षारादग्निर्गरीयान् क्रियासु व्याख्यातः, तद्दग्धानां रोगाणामपुनर्भावाद्भेषजशस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च ॥ ३ ॥**

क्षारादग्निर्गरीयानित्यादिना कार्यविशेषे वह्नेरपि गरीयस्त्वं क्षाराद्दर्श्यते, पूर्वं तु क्षारप्राधान्यं बहुविषयत्वादिनोक्तं, तेन भिन्नविषयतया क्षाराग्न्योः परस्परप्राधान्याभिधानं न विरोधि, यथा **चरके**—"कुष्ठं दीर्घरोगाणां" ( च. सू. अ. २५ ) इत्यनेन राजयक्ष्मणोऽपि कुष्ठप्राधान्यं दीर्घरोगतयोक्तं, पुनश्च—"राजयक्ष्मा रोगसमूहानां" ( च. सू. अ. २५ ) इत्यनेन वैवर्ण्यरौक्ष्यसुप्त्यादिलक्षणरूपरोगसमूहात् कुष्ठाच्च राजयक्ष्मप्राधान्यमुच्यते । क्रियास्विति कार्येषु; स्वशक्त्या यथा शीघ्रं दाहमर्शःप्रभृतिषु करोति न तथा क्षारः । हेत्वन्तरमाह—तद्दग्धानामित्यादि । क्षारेण हि महामूले व्याधौ सम्यग्दाहलक्षणकृष्णतायुक्ते दाहे कृतेऽपि पुनर्विरोहनिषेधाय काञ्जिकबीजाविलेपेन शातनमुक्तम्—"अथ चेत् कृतमूलत्वात्" ( सू. अ. १० ) इत्यादिना, अग्निना सम्यग्दाहे त्वेवं नास्ति; यत्तूक्तं **चरके** "पुनर्विरोहः" ( च. चि. अ. १४ ) इति, तदसम्यग्दग्धविषयमिति; उक्तं हि **चरके**—"भ्रंशस्तत्र सुदारुणः । पुंस्त्वोपघातः" ( च. चि. अ. १४ ) इत्यादि । अत्र क्षारादिभ्रंश एवासम्यग्योगादिलक्षणे पुंस्त्वोपघातादिषु पुनर्विरोहः पठितः, तद्व्यर्थैवात्र कुसमाधानान्तरे क्लिश्यन्ते व्याख्यातारः । हेत्वन्तरमाह—भेषजेत्यादि । यत्र भेषजादीनि न शक्तानि तत्राग्नेः क्षमत्वाद् गरीयस्त्वमुक्तं, यदुक्तं—"महान्ति प्राणवतश्छित्त्वाऽग्निना दहेत्" ( चि. अ. ६ ) इति; किंवा क्रियासु यद्गरीयस्त्वं प्रतिज्ञातं तद्धेतुत्वेन यथोक्तेन साध्यत इति व्याख्येयम् । अन्यव्याख्यानं तु प्रपञ्चभयादिह न दर्शितम् ॥ ३ ॥

**अथेमानि दहनोपकरणानि भवन्ति; तद्यथा—पिप्पल्यजाशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतरलौहाः क्षौद्रगुडस्नेहाश्च । तत्र, पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानां, जाम्बवौष्ठेतरलौहा मांसगतानां, क्षौद्रगुडस्नेहाः सिरास्नायुसन्ध्यस्थिगतानाम् ॥ ४ ॥**

अथेत्यादौ राशित्रयकरणं वक्ष्यमाणदाहयोग्यराशित्रयभेदात् । स्नेहाश्चेति चकारात् सर्जरसमधूच्छिष्टादिग्रहणम् । जाम्बवौष्ठो जम्बूफलसदृशौष्ठः प्रसिद्ध एव, अनेन च लौहग्रहणम्; इतरलौहास्ताम्ररजतादयः ॥ ४ ॥

**तत्राग्निकर्म सर्वर्तुषु कुर्यात्, अन्यत्र शरद्ग्रीष्माभ्यां; तत्राप्यात्ययिकेऽग्निकर्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा ॥ ५ ॥**

तत्रेत्यादौ आत्ययिक इति अग्निकर्माकरणे यत्रात्ययो भवति तत्रैव निषिद्धेऽपि कालेऽग्निदाहमाह । तत्प्रत्यनीकमिति शरद्ग्रीष्मप्रत्यनीकं शीतविधिमित्यर्थः; यदुक्तम्—"उष्णे चोष्णनिवारणम्" ( सू. अ. ३५ ) इति ॥ ५ ॥

**सर्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः[1] कर्म कुर्वीत ॥ ६ ॥**

---

१ 'भुक्तवतः; मूढगर्भाश्मरीभगन्दरोदराशोंमुखरोगेष्वभुक्तवतः' इति ड. । 'अश्मरीभगन्दराशोंमुखरोगेष्वभुक्तवतः' इति हा. ।

पिच्छिलमन्नमग्निरूक्षगुणकृतवातशमनम्, एतच्च पिच्छिलान्नभोजनमग्नेरनुशस्त्रत्वेन च कर्मणि विहितभोजनान् व्याधीन् प्रति ज्ञेयं; तेनार्शःप्रभृतिषु भुक्तवतामेव दाहः ॥ ६ ॥

**तत्र द्विविधमग्निकर्माहुरेके—त्वग्दग्धं, मांसदग्धं च; इह तु सिरास्नायुसन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः ॥ ७ ॥**

अग्निकर्मण्येकीयमतमाह—तत्र द्विविधमित्यादि । उक्तं हि **काश्यपेन**—"न सिरास्नायुसन्ध्यस्थिमर्मस्वपि कथंचन । दंशस्योत्कर्तनं कार्यं दाहो वा भिषजाऽग्निना" इति । स्वमतमाह—इहेत्यादि । 'विहित' इति भाषां त्यक्त्वा 'न प्रतिषिद्ध' इति भाषया केवलात्ययिकरोग एव परं सिरादौ क्षौद्रादिद्रव्यनियमेन चाग्निर्विधातव्य[1] इति दर्शयति, तेन सिरास्नाय्वादौ दाहप्रसवनिषेधात्[2] परमतमप्यनुमतं भवति ॥ ७ ॥

**तत्र, शब्दप्रादुर्भावो दुर्गन्धता त्वक्संकोचश्च त्वग्दग्धे, कपोतवर्णताऽल्पश्वयथुवेदना शुष्कसंकुचितव्रणता च मांसदग्धे, कृष्णोन्नतव्रणता स्रावसन्निरोधश्च सिरास्नायुदग्धे, रूक्षारुणता कर्कशस्थिरव्रणता च सन्ध्यस्थिदग्धे ॥ ८ ॥**

तत्र शब्देत्यादीनि सम्यग्दग्धलक्षणानि ॥ ८ ॥

**तत्र शिरोरोगाधिमन्थयोर्भ्रूललाटशङ्खप्रदेशेषु दहेत्, वर्त्मरोगेष्वार्द्रालक्तकप्रतिच्छन्नां दृष्टिं कृत्वा वर्त्मरोमकूपान् । त्वङ्मांससिरास्नायुसन्ध्यस्थिस्थितेऽत्युग्ररुजि वायावुच्छ्रितकठिनसुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्बुदभगन्दरापचीश्लीपदचर्मकीलतिलकालकान्त्रवृद्धिसन्धिसिराच्छेदनादिषु नाडीशोणितातिप्रवृत्तिषु चाग्निकर्म कुर्यात् ॥ ९ ॥**

शरीरप्रदेशेषु रोगभेदादग्न्यवचारणमाह—तत्रेत्यादि । उग्ररुजीति उग्रशूलादिवेदनावति । व्रणे इति सामान्यव्रणे उच्छ्रितकठिनसुप्तमांसे । ग्रन्थ्यादयस्तु स्वरूपेणैवाग्निविषयाः ॥ ९ ॥

**तत्र वलय-बिन्दु-विलेखा-प्रतिसारणानीति दहनविशेषाः ॥ १० ॥**

आकारभेदेन दहनभेदानाह—तत्र वलयेत्यादि । वलयादयः प्रसिद्धाः । प्रतिसारणं रोगदेशं प्रत्यवचारणं वह्नेस्त्र्यस्रचतुरस्रादिभेदेन ॥ १० ॥

**भवति चात्र—**

**रोगस्य संस्थानमवेक्ष्य सम्यङ्नरस्य मर्माणि बलाबलं च ॥**
**व्याधिं तथर्तुं च समीक्ष्य सम्यक् ततोऽध्यवस्येद्भिषगग्निकर्म ॥ ११ ॥**

यथोक्ताग्निकर्मप्रवृत्तिनिवृत्तिविषयविवेचनोपायमाह—रोगस्येत्यादि । संस्थानं वर्तुलादि- वलयादि प्रवृत्तिविषयः । मर्माणीति सप्तोत्तरशतानि यथोक्तानि परिहार्याणि । बलमग्नि-

---

१ 'दातव्यः' इति मु. । २ 'दाहप्रसरनिषेधात्' इति मु. ।

प्रवृत्तिविषयम्, अबलं निवृत्तिविषयमिति बलाबलम् । व्याधिमग्निप्रवृत्तिविषयं ग्रन्थ्यर्बुदादि, निवृत्तिविषयं रक्तपित्तादि । ऋतुं हेमन्तादि प्रवृत्तिविषयं, निवृत्तिविषयं शरद्ग्रीष्मरूपम् । सम्यगित्यग्निप्रवृत्तिविषयं सम्यक् परिच्छिद्याग्निकर्माध्यवस्येत् ॥ ११ ॥

**तत्र सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्गः ॥ १२ ॥**

तत्र सम्यग्दग्धेत्यादि ॥ १२ ॥

**अथेमानग्निना परिहरेत्—पित्तप्रकृतिमन्तःशोणितं भिन्नकोष्ठमनुद्धृतशल्यं दुर्बलं बालं वृद्धं भीरुमनेकव्रणपीडितमस्वेद्यांश्चेति ॥ १३ ॥**

अन्तःशोणिते पाकभयाद् दाहनिषेधः । अनेकव्याधिपीडिते अग्निविरुद्धव्याधिपीडिते, अग्निविरुद्धव्याधिवृद्धिभयादग्निपीडासहत्वाच्च । अस्वेद्या वक्ष्यमाणाः "पाण्डुर्मेही रक्तपित्ती विषार्तः" ( चि. अ. ३२ ) इत्यादिना ॥ १३ ॥

**अत ऊर्ध्वमितरथादग्धलक्षणं वक्ष्यामः । तत्र, स्निग्धं रूक्षं वाऽऽ(चा)श्रित्य द्रव्यमग्निर्दहति; अग्निसंतप्तो हि स्नेहः सूक्ष्मसिरानुसारित्वात्त्वगादीननुप्रविश्याशु दहति; तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति ॥ १४ ॥**

पूर्वोक्तत्वगादिदाहलक्षणेन सर्वदाहानामज्ञानात् प्रकरणान्तरेण च सर्वदाहं ज्ञापयन्नाह—अत ऊर्ध्वमित्यादि । इतरथेति वलयादि परित्यज्य स्नेहादिदाहेनान्यथादाहः; अयं च यद्यपि सिरादिदाहलक्षणेनोक्तस्तथाऽपि वलयाद्याकाराभावाद्वक्ष्यमाणोग्ररुजताविशेषाच्चेतरथाऽपि भवति, तथा वलयादिषु स्नेहादिषु च दाहेषु प्रमादाद् वैद्यदोषाद्वा अयोगातियोगात् प्लुष्टदुर्दग्धातिदग्धानां लक्षणानि, तत्प्रसङ्गात् सामान्यदग्धलक्षणाभिधानं चेतरथादग्धलक्षणं ज्ञेयम्; एतदेवाह—तत्रेत्यादि । रूक्षदाहस्य वलयादिना व्याप्तत्वाद्वलयाद्यव्याप्तं स्निग्धदाहमाह—अग्निसंतप्तो हीत्यादि ॥ १४ ॥

**तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धं चेति चतुर्विधमग्निदग्धम् । तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत् प्लुष्टं; यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धं; सम्यग्दग्धमनवगाढं तालवर्णं सुसंस्थितं पूर्वलक्षणयुक्तं च; अतिदग्धे मांसावलम्बनं गात्रविश्लेषः सिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति, व्रणश्चास्य चिरेण रोहति, रूढश्च विवर्णो भवति । तदेतच्चतुर्विधमग्निदग्धलक्षणं पूर्वोक्तकर्मप्रसाधकं भवति ॥१५॥**

तत्र प्लुष्टेत्यादौ प्लुष्टदुर्दग्धयोर्हीनदग्धरूपत्वेऽपि भिन्नलक्षणचिकित्सितत्वाद् भेदोपपादनम्, अत एव चतुर्विधत्वं शङ्कानिरासार्थं कृतम् । विवर्णमिति पाण्डुवर्णम् । प्लुष्यत इत्यग्नितापेन खिद्यत इव । चोषस्त्वाकृष्यत इव । तालवर्णं पूर्वलक्षणयुक्तं च पूर्वोक्तत्वगादिसम्यग्दाहलक्षणयुक्तं च; तानि च क्वचिदुत्सर्गापवादन्यायेन, यथा—मांसदग्धे

कपोतवर्णताऽपवादः, क्वचित् समुच्चयेन । पूर्वोक्तकर्मप्रसाधकं भवतीति पूर्वोक्तशिरोरोगादिविषय-वलयाद्यग्निकर्मणः प्रसाधकं सम्यग्योगकारकं भवति । प्लुष्टादि हेयतया, सम्यग्दाहलक्षणं चोपादेयतया ज्ञातं सद्धेयं परित्यज्योपादेयं प्रवर्तयत् पूर्वोक्ताग्निकर्मणः साध्यसाधकं भवतीति । 'आत्मकर्मप्रसाधकं' इति पाठपक्षेऽपि हेयोपादेयज्ञानादिति वैद्यस्य सम्यग्योगकारककर्मसाधकं भवतीत्यर्थः । यदि वा पूर्वोक्तमधुसर्पिरभ्यङ्गसाधकं चैतत् प्लुष्टादि भवतीति; चकाराद्वक्ष्यमाणप्लुष्टादिचिकित्सितसाधकं भवतीति व्याख्यानयन्ति ॥ १५ ॥

भवन्ति चात्र—

अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति ॥
ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्यते ॥ १६ ॥
तुल्यवीर्ये उभे ह्येते रसतो द्रव्यतस्तथा ॥
तेनास्य वेदनास्तीव्राः प्रकृत्या च विदह्यते ॥ १७ ॥
स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च बाधते ॥

चिकित्सार्थं दोषदूष्यमाह—अग्निनेत्यादिना । तेनैवाग्निना पित्तप्रकोपोपपत्तिमाह—तुल्यवीर्ये इत्यादि । वीर्यं उष्णम्, रसः कटुः, द्रव्यं तेजः । रसतो द्रव्यतश्चेति रसद्रव्याभ्यामपि तुल्ये इत्यर्थः । तेनास्य वेदनास्तीव्रा इत्यत्र अग्निकोपितेन रक्तेन पित्तेन च । प्रकृत्या चेति दाहरूपस्वभावेन; रक्तमपि हि विदग्धं पित्तवद्दहति; यदुक्तं—"विदाहश्चास्य पित्तवत्" ( सू. अ. २१ ) इति; चकाराद्वायुश्च ताभ्यां मार्गावरोधात् कुप्यति । एतद्वेदनातीव्रत्वादि सामान्यं सम्यग्दग्धे प्रायो भवति ॥ १६ ॥ १७ ॥—

दग्धस्योपशमार्थाय चिकित्सा संप्रवक्ष्यते ॥ १८ ॥
प्लुष्टस्याग्निप्रतपनं कार्यमुष्णं तथौषधम् ॥
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम् ॥ १९ ॥
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यतिशोणितम् ॥
तस्मात् सुखयति ह्युष्णं नतु शीतं कथंचन ॥ २० ॥
शीतामुष्णां च दुर्दग्धे क्रियां कुर्याद्भिषक् पुनः ॥
घृतालेपनसेकांस्तु शीतानेवास्य कारयेत् ॥ २१ ॥
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ॥
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक् ॥ २२ ॥
ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत् ॥
पित्तविद्रधिवच्चैनं संततोष्माणमाचरेत् ॥ २३ ॥
अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम् ॥
क्रियां कुर्याद्भिषक् पश्चाच्छालितण्डुलकण्डनैः ॥ २४ ॥

तिन्दुकीत्वक्कपालैर्वा घृतमिश्रैः प्रलेपयेत् ॥
व्रणं गुडूचीपत्रैर्वा छादयेदथवौदकैः ॥ २५ ॥
क्रियां च निखिलां कुर्याद्भिषक् पित्तविसर्पवत् ॥
मधूच्छिष्टं समधुकं रोध्रं सर्जरसं तथा ॥ २६ ॥
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ॥
सर्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥ २७ ॥
स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत् ॥

दग्धस्येत्यादि । कुतः इष्टे व्याधिसमानमग्निप्रतपनमित्याह—शरीर इत्यादि । स्विन्नभूयिष्ठ इति स्तोकास्विन्ने । उदकमिति दाहप्रत्यनीकतया दीयमानमुदकम् । स्कन्दयतीति स्त्यानीकरोति । स्कन्नेन च शोणितेनानिर्गच्छता तेजसाऽऽवृतमार्गेण च वायुना पच्यमानं दाहादि करोति; उष्णक्रियया तु रक्तं विलीयते, तेजोऽपैति, वायुरनुलोमो भवति, इत्युष्णैरल्पशःक्रिया सुखयतीति वाक्यार्थः; इयमेव च विरुद्धार्थकारिणी क्रिया शास्त्रे उच्यते । अत्रैवार्थे तन्त्रान्तरं—"स्त्याने रक्ते हिमेनौष्ण्यानिष्क्रमेऽनुगतो बहिः । वेदना वर्धते तेन रुधिरं च विदह्यते ॥ उष्णं निष्क्रामयन् कुर्यादूष्माणं मन्दतां रुजः । तस्मात् सुखयति ह्युष्णं न तु शीतं कथंचन" इति । शीतामुष्णामिति अवगाढभागे निर्वापणाय शीताम्, अनवगाढभागे रक्तविलयनायोष्णां; व्यत्यासाच्छीतामुष्णां चेति त्वन्ये । तत्परं घृतालेपादि शीतमेव दुर्दग्धे ज्ञेयम् । तुगाक्षीरी वंशरोचना । अमृता गुडूची । सन्ततोष्माणमिति बहुलोष्मतावस्थायाम् । पित्तविद्रधिवदिति "पैत्तिकं शर्करालाजामधुकैः" ( चि. अ. १६ ) इत्याद्युक्तक्रियातिदेशः । शालितण्डुलकण्डनैरिति शालितण्डुलकण्डनोद्भवगुण्डकैः । तिन्दुकीत्वक्कपालैरिति तिन्दुकीफलकर्परैः; किंवा 'तिन्दुकीत्वक्कषायैः' इति पाठः, तत्र तिन्दुकीत्वचा, तथा कषायैश्च कषायवृक्षैः । 'कपालैः' इति पाठपक्षे मृत्कपालैरित्यर्थः । पित्तविसर्पवदिति अनेन "कशेरुशृङ्गाटकपद्मगुन्द्रा" ( चि. अ. १७ ) इत्याद्युक्तचिकित्सातिदेशः । मधूच्छिष्टमित्यादिना रोपणं घृतं केचित् पठन्ति ॥ १८—२७ ॥—

अत ऊर्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् ॥ २८ ॥
श्वसिति[1] क्षौति चात्यर्थमत्याधमति कासते ॥
चक्षुषोः परिदाहश्च रागश्चैवोपजायते ॥ २९ ॥
सधूमकं निश्वसिति घ्रेयमन्यन्न वेत्ति च ॥
तथैव च रसान् सर्वाञ् श्रुतिश्चास्योपहन्यते ॥ ३० ॥
तृष्णादाहज्वरयुतः सीदत्यथ च मूर्च्छति ॥
धूमोपहत इत्येषः, शृणु तस्य चिकित्सितम् ॥ ३१ ॥

---

१ 'श्वसित्याध्माति चात्यर्थं कासते क्षवते भृशम्' इति ता. ।

सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ॥
मधुराम्लौ रसौ वाऽपि वमनाय प्रदापयेत् ॥ ३२ ॥
वमतः कोष्ठशुद्धिः स्याद्धूमगन्धश्च नश्यति ॥
विधिनाऽनेन शाम्यन्ति सदनक्षवथुज्वराः ॥ ३३ ॥
दाहमूर्च्छातृडाध्मानश्वासकासाश्च दारुणाः ॥
मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः ॥ ३४ ॥
सम्यग्गृह्णातीन्द्रियार्थान् मनश्चास्य प्रसीदति ॥
शिरोविरेचनं चास्मै दद्याद्योगेन शास्त्रवित् ॥ ३५ ॥
दृष्टिर्विशुध्यते चास्य शिरोग्रीवं च देहिनः ॥
अविदाहि लघु स्निग्धमाहारं चास्य कल्पयेत् ॥ ३६ ॥

गुदकण्ठनासादिष्वग्निकर्मसंभवधूमोपघातचिकित्सितमाह—अत ऊर्ध्वमित्यादि । अत्र श्वासादिभिर्मूर्च्छान्तैर्यथासंभवं भूयोभिर्धूमोपघातो ज्ञेयः; एतच्छ्वासादिमेलक एव धूमोपघातशब्दवाच्यः । आध्मातीति शूनोदरो भवति । एते च श्वासादयो यथायोग्यतया कोष्ठघ्राणचक्षुरादीनां धूमोपघातात्तर्कणीयाः । सर्पिरित्यादिचिकित्सितं व्यक्तार्थमेव ॥२८–३६॥

उष्णवातातपैर्दग्धे शीतः कार्यो विधिः सदा ॥
हिमवर्षानिलैर्दग्धे स्निग्धमुष्णं च शस्यते ॥ ३७ ॥
तथाऽतितेजसा दग्धे सिद्धिर्नैकान्तिकी मता ॥
इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ॥
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥ ३८ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थानेऽग्निकर्म-
विधिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

दग्धचिकित्साप्रसङ्गेन यत्रान्यत्रापि दग्ध इति लोकव्यवहारस्तच्चिकित्सामाह—उष्णवातेत्यादि । उष्णयुक्तो वात उष्णवातः । हिमोपघातेऽपि दाहव्यवहाराद्धिमसमानवर्षादिनोपघातचिकित्सामाह—हिमेत्यादि । उष्णोऽत्र शीतवैपरीत्यात्, स्निग्धस्तु वातप्रतिकूलत्वात् । अतितेजो वज्राग्निः । नैकान्तिकीतिभाषया मनाग्दग्धे सिद्धिरपि भवतीति दर्शयति ॥ ३७ ॥ ३८ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यटीकायां भानुमत्यां सूत्रस्थाने
ऽग्निकर्मविधिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथातो जलौकोऽवचारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पृथगध्यायप्रयोजकानुशस्त्रपारिशेष्यादग्निकोपितरक्ते सुखोपायत्वाच्च जलौकसामध्यायोऽभिधीयते। जलौकोऽवचारणमधिकृत्य कृतोऽध्यायो जलौकोऽवचारणीयः। तेन शृङ्गालाबूकथनमप्यत्र भवति प्रतिज्ञातम् ॥ १ ॥ २ ॥

**नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः ॥ ३ ॥**

परमसुकुमार इति शृङ्गालाबुनोः[1] सुकुमारयोरपि श्रेष्ठ इत्यर्थः ॥ ३ ॥

**तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकोऽलाबुभिरवसेचयेद्विशेषतश्च विस्राव्यं, सर्वाणि सर्वैर्वा ॥ ४ ॥**

विशेषतश्च विस्राव्यमिति पूर्वेण संबध्यते। तेन वातादिदुष्टे शृङ्गादिविधानं मुख्यम्। उक्तं हि **चरके**—"भिषग्वातान्वितं रक्तं विषाणेनाशु निर्हरेत्। पित्तान्वितं जलौकोभिरलाबूभिः कफान्वितम्" (च. चि. अ. २१) इति। विशेषतो योग्यतायामित्यर्थः। सर्वाणि सर्वैर्वेति वातादिदुष्टे शृङ्गादिनियमं निषेधयति; उक्ताप्राप्तावयोग्यतायां यत् प्राप्यते यद्वा योग्यं भवति तेनैव हर्तव्यमित्यर्थः[2] ॥ ४ ॥

**भवन्ति चात्र श्लोकाः—**

**स्निग्धं श्लक्ष्णं समधुरं[3] गवां शृङ्गं प्रकीर्तितम् ॥**
**तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ ५ ॥**
**शीताधिवासा मधुरा जलौका वारिसंभवा ॥**
**तस्मात् पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥ ६ ॥**
**अलाबु कटुकं रूक्षं तीक्ष्णं च परिकीर्तितम् ॥**
**तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ ७ ॥**

यद्गुणयोगाच्छृङ्गादीनां वातादिदुष्टरक्तविषयता तदाह—स्निग्धं श्लक्ष्णमित्यादि। शीताधिवासा शीतसंबद्धा शीतलेत्यर्थः। वारिसंभवेति तृणजलौकाप्रतिषेधार्थम्। मधुरेति मधुरार्थक्रियाकारित्वात् ॥ ५–७ ॥

**तत्र प्रच्छिते तनुबस्तिपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदाचूषणात्,[4] सान्तर्दीपयाऽलाब्वा[5] ॥ ८ ॥**

शृङ्गादिना यथा रक्तावसेचनं कार्यं तदाह—तत्रेत्यादि। ([6]उत्सेधो दैर्घ्यम्। त्र्यङ्गुलावष्टम्भेनेति त्र्यङ्गुलगात्रप्रदेशातिक्रामकेन। अश्वहनः करवीरस्तस्य पुष्पवृन्तस्याग्रेण

---

१ 'शृङ्गालाबूभ्यां सुकुमाराभ्याम्' इति **मु.**। २ 'कर्तव्यं' इति **मु.**। ३ 'उष्णं समधुरं स्निग्धं' इति ड.। ४ अस्याग्रे "अर्धचन्द्राकृति शृङ्गं तनु सप्ताङ्गुलायतम्। प्रच्छिते दापयेत् पूर्वमास्येनाचूषयेद्बली" इति ताडपत्रपुस्तकेऽधिकः पाठ उपलभ्यते। ५ 'अन्तर्दीप्तेनालाबुना' इति **ता.**। ६ ( ) एतद्व्याख्यानमूलभूतपाठस्त्वनुपलब्धत्वान्न मूले संनिवेशितः।

सदृशमुपरि शृङ्गाग्रे छिद्रमिति वाक्यार्थः । तोदादि वातदुष्टशोणितलिङ्गम् । भूर्जेत्यादिना अलाबुविधिः । नातिवेदनावतीति अतिवेदनापाकाभिमुखे शृङ्गस्यालाब्वाश्च शोथदारणादिभयात् प्रतिषेधः ) ॥ ८ ॥

**जलमासामायुरिति जलायुकाः, जलमासामोक इति जलौकसः ॥ ९ ॥**

जलायुकाविधौ वक्तव्ये विस्तरभयात्तद्दर्शनानुवादपूर्वकं तासां लक्षणमाह—जलमित्यादि । जलमायुर्हेतुत्वादायुरुच्यते । ओक इति निवासस्थानम्, अनेनापि तृणजलौकानिषेधः ॥ ९ ॥

**ता द्वादश; तासां सविषाः षट्, तावत्य एव निर्विषाः ॥ १० ॥**

**तत्र सविषाः—कृष्णा, कर्बुरा, अलगर्दा, इन्द्रायुधा, सामुद्रिका, गोचन्दना चेति । तासु, अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा, वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा; रोमशा महापार्श्वा कृष्णमुखी अलगर्दा; इन्द्रायुधवदूर्ध्वराजिभिश्चित्रा इन्द्रायुधा; ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका; गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्दिर्मदः सदनमिति लिङ्गानि भवन्ति । तत्र महागदः पानालेपननस्यकर्मादिषूपयोज्यः । इन्द्रायुधादष्टमसाध्यम् । इत्येताः सविषाः सचिकित्सिता व्याख्याताः ॥ ११ ॥**

एवेत्यवधारणं तन्त्रान्तरोक्तसविषाष्टजलौकानिषेधार्थं, तन्त्रोक्ताधिकद्वयस्य षट्स्वत्रोक्तास्वेवावरोधात् । सविषाणामुपन्यासः परित्यागार्थं, दैवतो लग्नानां विषचिकित्सार्थं च । क्वचिच्छिन्नः क्वचिदुन्नतः कुक्षिर्यस्याः सा छिन्नोन्नतकुक्षिः । रोमशेव दृश्यते इति रोमशा । गोवृषणवदिति गवाण्डवदिति । महागदः सर्पदष्टचिकित्सिते वक्तव्यः । इन्द्रायुधादष्टमसाध्यमिति असाध्यसर्पदष्टलक्षणतुल्यतया ज्ञेयं, तथेह सविषदष्टलक्षणतया दंशे श्वयथ्वादय उक्तास्तेऽपि तीव्रा इन्द्रायुधादष्टे ज्ञेयाः ॥ १० ॥ ११ ॥

**अथ निर्विषाः—कपिला, पिङ्गला, शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका चेति । तत्र, मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धा मुद्गवर्णा कपिला; किंचिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगा च पिङ्गला; यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी; मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका; मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी; स्निग्धा पद्मपत्रवर्णाऽष्टादशाङ्गुलप्रमाणा सावरिका, सा च पश्वर्थे; इत्येता अविषा व्याख्याताः ॥ १२ ॥**

अथ निर्विषा इत्यादि । मुद्गवर्णेति हरितमुद्गवर्णा । यकृद्वर्णेति यकृत्सदृशनीललोहितवर्णा । मूषिकाकृतिवर्णेति मूषिकालाङ्गूलाकृतिः, तद्वद्वर्णा च । सा पश्वर्थ इति अतिविशालत्वात् ॥ १२ ॥

तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि; तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति ॥ १३ ॥

तत्र, सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः; पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवलकोथजाता विमलेष्वम्भःसु च निर्विषाः ॥ १४ ॥

भवति चात्र—

क्षेत्रेषु विचरन्त्येताः सलिलाढ्यसुगन्धिषु ॥
न च संकीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥ १५ ॥

केचित् तासां यवनादीनि क्षेत्राणि पठन्ति, अन्ये तु सविषाणां सविषकीटादिकोथस्य तथा निर्विषाणां पद्मादिकोथस्य क्षेत्रतयोक्तत्वान्न पठनीयानीति वदन्ति; तथा क्षेत्रेषु विचरन्तीत्यादि श्लोकं केचित् पठन्ति । न च संकीर्णचारिण्य इति विषादिविरुद्धाहारभुजः, शैवलाद्यशनं ह्यविरुद्धमुक्तम् ॥ १३–१५ ॥

तासां ग्रहणमार्द्रचर्मणा, अन्यैर्वा प्रयोगैर्गृह्णीयात् । अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात्; भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य; शय्यार्थं तृणमौदकानि च पत्राणि; त्र्यहात्त्र्यहाच्चाभ्योऽन्यज्जलं भक्ष्यं च दद्यात्; सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत् ॥ १६ ॥

तासामित्यादि । अन्यैर्वा प्रयोगैरिति नवनीताक्तजङ्घामांसपेशिकाद्युपायैर्वा गृह्णीयात् । नवघटस्थापनादिविधानं तथैव जलौकसां सम्यगरोगत्वेनावस्थानात्, तथैव निर्विषत्वाच्च ॥ १६ ॥

भवति चात्र—

स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः ॥
अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः ॥ १७ ॥

अपोषणीयाः प्राह—स्थूलमध्या इत्यादि । स्थूलमध्या विकृतत्वादग्राहित्वादिदोषाच्च न पोषणीयाः ॥ १७ ॥

अथ जलौकोवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा, विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात्; गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत्; श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात्; अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्यात्,

**शस्त्रपदानि वा कुर्वीत; यद्येवमपि न गृह्णीयात्तदाऽन्यां ग्राहयेत्, यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्णातीति; गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां कृत्वा धारयेत्; दंशे तोदकण्डुप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति; शुद्धमाददानामपनयेत्; अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत्। अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलीभ्यां शनैः शनैरनुलोममनुमार्जयेदामुखात्, वामयेत् तावद्यावत् सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरके न्यस्ता भोक्तुकामा सती चरेत्। या सीदती न चेष्टते सा दुर्वान्ता, तां पुनः सम्यग्वामयेत्। दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्ववत् सन्निदध्यात्॥ १८॥**

अथेत्यादि। संवेश्येति शाययित्वा। यद्यरुज इति सरुजे विलक्षणेन रुजावृद्धिभयात्तन्न कर्तव्यमिति। सर्षपरजनीकल्कलेपनादि निर्विषत्वाय। सरकः पात्रम्। विगतमला इति अपगतबाह्यमलाः। जलायुका प्रभावात् प्रथमं दुष्टमेव रक्तमादत्ते। यदुक्तं—"संपृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम्। आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव" इति। अतो दुष्टरक्ते गृहीते शुद्धरक्तज्ञानोपायानाह—दंशे तोदेत्यादि। प्रादुर्भावैरिति प्रकर्षेण तोदाद्युद्भवैः, मनाक् तोदादि दुष्टरक्तग्रहणेऽपि भवति। अत्र शुद्धशोणितधातुक्षये कफकार्या कण्डूर्न युक्तेति कण्डूं केचिन्न पठन्ति; किं तु तृप्यज्जलौकामुखोद्भूतकफेन प्रथमं शुद्धरक्ताकर्षणे कण्डुरुपपद्यते। तण्डुलकण्डनं तण्डुलगुण्डकः। केचिज्जलायुकाया असम्यग्वमने इन्द्रमदं व्याधिं पठन्ति, तल्लक्षणानिर्देशान्न पठनीय इत्यन्ये॥ १८॥

**शोणितस्य योगायोगानवेक्ष्य शतधौतघृताभ्यङ्गः, तत्पिचुधारणं वा; जलौकोव्रणान् मधुनाऽवघट्टयेत्, शीताभिरद्भिः परिषेचयेद्बध्नीत वा, कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति॥ १९॥**

शोणितस्येत्यादौ अयोगशब्देनातियोगमिथ्यायोगानां ग्रहणम्। अयोगे मधुनाऽवघर्षणं रक्तस्रावार्थं, यदुक्तमन्यत्र—"अशुद्धौ स्रावयेद्रक्तं हरिद्रागुडमाक्षिकैः" इति; सम्यग्योगे शतधौतघृताभ्यङ्गः; अतियोगे शीताभिरद्भिः सेकः, तथा व्रणमुखबन्धः; मिथ्यायोगे कषायप्रदेहादिः शेषदुष्टशोणितप्रसादार्थमिति व्याख्यानयन्ति। यदा तु योगशब्देनायोगातियोगग्रहणं तदा शीतलजलसेकादि सर्वमतियोगचिकित्सितम्। शोणितावसेचनं तु बलदोषरोगदर्शनं विशुद्धिं चापेक्ष्य कर्तव्यं; यदुक्तं **चरके**—"बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा। शोणितं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा" ( च. सू. अ. २४ ) इति॥ १९॥

भवति चात्र—

क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ॥
जलौकसां च यो वेत्ति तत्साध्यान् स जयेद्गदान् ॥ २० ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने जलौकोऽवचारणीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

केचित् 'क्षेत्राणि' इत्यादिसंग्रहश्लोकं पठन्ति । तत्र च कर्मेति चिकित्सा ॥ २० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने जलौकोऽवचारणीयस्त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

"शोणितस्य योगायोगमवेक्ष्य" ( सू. अ. १३ ) इतिवचनाच्छोणितं जिज्ञासितम्, अतः शोणितं कारणतः कार्यतः प्रकृतितो विकृतितश्चिकित्सिततश्च वर्णयितुं शोणितवर्णनीयोऽभिधीयते ।

तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्याष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याहारस्य सम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स 'रसः' इत्युच्यते; तस्य हृदयं स्थानं, स हृदयाच्चतुर्विंशतिधमनीरनुप्रविश्योर्ध्वगा दश दशाधोगामिन्यश्चतस्रश्च तिर्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति धारयति यापयति चादृष्टहेतुकेन कर्मणा। तस्य शरीरमनुसरतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः । तस्मिन् सर्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा— किमयं सौम्यस्तैजस ? इति । अत्रोच्यते—स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते ॥ ३ ॥

तत्र शोणितस्य कारणाधीनत्वाच्छोणितप्रभवं रसमेव कारणक्रमोत्पत्तिलक्षणस्थानक्रियाकार्यैर्निर्दिशन्नाह—तत्रेत्यादि । चतुर्विधस्येति अशित-पीत-लीढ-खादितभेदेन । पाञ्चभौतिकस्येति पृथिव्यादिपञ्चभूतात्मकस्य । द्विविधवीर्यस्येति शीतोष्णवीर्यभेदेन । अष्टविधवीर्यस्य वेति मतान्तरेण शीतोष्ण-स्निग्ध-रूक्ष-विशद-पिच्छिल-मृदु-तीक्ष्णवीर्यभेदेन । अनेकगुणस्येति अन्नपानवक्तव्यगुरुलघुद्रवादिभिर्वीर्यशब्दाष्टगुणातिरिक्तैर्दशभिः, तथाऽपरैश्चानुक्तैः संख्यापरिमाणादिभिर्गुणैर्युक्तस्य; गुणानां दर्शनभेदेन बहुविधमानतया संख्यानवधारणेन 'अनेकगुणस्य' इति कृतम् । परिणतस्येत्यनेनैवोपयोगे लब्धे उपयुक्तस्येति

पदं सम्यगुपयोगदर्शनार्थम् । तेन तत्र चतुर्विधस्येत्यादिविशेषणलब्धमाहारस्य देशकाल-पुरुषापेक्षम् "अनन्यमना अहसन्नजल्पन् भुञ्जीत" ( च. वि. अ. १ ) इत्याद्येवंप्रकारं सम्यगुपयोगं दर्शयति । तत्र चतुर्विधस्येत्यादिविशेषणमनुपलब्धमपि प्रशस्तचतुर्विधत्व-पाञ्चभौतिकत्वादिग्रहणार्थं, तेन प्रकृति-करण-संयोग-राशीनां सम्यक्त्वं लभ्यते । तत्र सम्यक्पाञ्चभौतिकत्वादिभिः प्रशस्ताकृतिराहारद्रव्यस्य लभ्यते, अशितादिसम्यक्त्वेन सम्यक्करणं वा लभ्यते । राशिस्तु मात्रारूपः परिणामगुणसम्यक्त्वेन लभ्यते, संयोगस्तूप-योगगुणसम्यक्त्वेन लभ्यते । तदेवं चरके प्रकृति-करण-संयोग-राशि-देश-कालोपयोग-संस्थोपयोक्त्रष्टमान्याहारविधिविशेषायतनान्युक्तानीह सम्यक्त्वेनोक्तानि भवन्ति । यद्यपि चैतत्सामग्रीहीनोऽप्याहारो रसकारणं भवत्येव, तथाऽपि वक्ष्यमाणाभिमततर्पणादिकर्तृत्वं यथोक्ताहारोत्पन्नरसस्यैवेति दर्शयितुं विशेषणमनुनेयं ज्ञेयम् । सम्यगिति विशेषणमसम्य-क्परिणामेन रसस्यामताप्रतिषेधार्थं; यदुक्तं—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपा-चितः । आद्य आहारधातुर्यः स आमः परिकीर्तितः" इति । यथोक्तगुणसंपन्नादपि ह्याहाराद् रात्रिजागरणशोकादिभिरसम्यक्परिणामोऽपि संभवतीति युक्तं सम्यगिति विशेषणम् । तेजोरूपः सार इति प्रसादरूपो निर्मलभाग इति यावत् । यथा "रसादीनां शुक्रान्तानां यत् परं तेजः" ( सू. अ. १५ ) इत्यत्र तेजःशब्देन निर्मलभागः प्रसादरूप उच्यते, तथा **चरके**—"मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः" ( च. सू. अ. ६ ) इत्यत्रापि स एवार्थः । अनेन च विशेषणेन वृक्षादिसारवदिह न कठिनरूपता विवक्षितेति फलति । किंवा तेजो घृतं तद्वदुद्भूत इति तेजोभूतः, तेन घृतं यथा तक्रादिमलीकृत्य सार-मभिव्यज्यते, तथा रसोऽप्याहारस्थितमलांशं परित्यज्य घृतवत् सारतया भवति । परम-सूक्ष्म इति अतिसूक्ष्मावयवः; अत एव सूक्ष्मस्रोतोऽनुसारित्वमस्य भवति । तस्य हृदयं स्थानमिति ओजसाऽनाक्रान्तहृदयप्रदेशः स्थानमिति ज्ञेयम् । ओजोऽपि "हृदि तिष्ठति यच्छुद्धं" ( च. सू. अ. १७ ) इत्यादिना हृदयस्थानत्वेनोक्तत्वात् । हृदयस्थानस्यापि कृत्स्नशरीरपोषणं रसस्य दर्शयति—स हृदयादित्यादि । तर्पयति प्रीणाति । जीवयतीति जीवनहेतुतया । वर्धयतीति स्वाग्निक्षीयमाणं शरीरं पोषणेन वर्धयति । केचित् तर्पयति गर्भमपरासंज्ञतया नाड्या तर्पयति बालं; जीवयति मध्यं, 'जीवयति' इत्यस्य स्थाने 'धार-यति' इति पाठः, तत्रापि स एवार्थः; यापयति वृद्धं, वृद्धस्य क्षीयमाणधातुतया यापनमेव रसकार्यम् । कुतः पुनरेष रसस्याचेतनस्यापि व्यापार इत्याह—अदृष्टेत्यादि । येनैवादृष्टेन शरीरमारब्धं तेनैवादृष्टेन हेतुना रसस्येदृशं कर्म व्यापारो भवतीत्यर्थः; किंवा अदृष्टहेतु-केनेति जन्मान्तरकृतेन शुभाशुभहेतुना कर्मणेत्यदृष्टेन सहितो रस एवं करोति । रसस्या-गमदर्शितायां कृत्स्नशरीरगतौ दार्ढ्यार्थमनुमानमप्याह—तस्येत्यादि । शरीरमनुसरतो गतिरिति शरीरानुसरणरूपा गतिरिति फलति । अनुमानलिङ्गमाह—क्षयवृद्धिवैकृतैरिति । रसस्य क्षयेण वृद्ध्या विकारेण च शरीरस्य क्षयवृद्धिविकारा यतो भवन्ति, तेन समवायि-

---

१ 'अपराह्वया' इति मु. ।

कारणतया रसः कार्यरक्तादिशरीरदेशगत एव कारणं भवतीत्यर्थः । ये तु क्षयविकारैर्वृद्धिविकारैश्चेति योजयन्ति, तन्मते रसविकारेण शरीरविकाररूपं लिङ्गमेव गृहीतं स्यात् । रसस्य सौम्यत्वं दर्शयितुं विचारयन्नाह—तस्मिन्नित्यादि । तत्र दोषमलानुसारित्वं रसस्य साक्षान्न संभवति, तेन तदवष्टब्धदोषानुसारित्वेन तदनुसारित्वं ज्ञेयं; यदपि रसगतमलांशेन रसादिमलरूपश्लेष्मपित्तधातुमलानामुत्पादात्तदनुसारित्वं रसस्य, तदपि वातं प्रति तथाऽऽहारमलं प्रति नास्तीति प्रथमैव व्याख्या तत्रानुसरणीया । स खल्वित्यादिना सौम्यश्लेष्माग्नेयपित्तसाधारणौ धर्मौ संशयहेतू दर्शयित्वा सौम्यत्वे हेतुमाह—स्नेहनेत्यादि ॥ ३ ॥

**स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति ॥ ४ ॥**

**श्लोकौ चात्र भवतः—**

**रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् ॥**
**अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ ५ ॥**

रसस्याप्यत्वं व्युत्पाद्य रक्तहेतुतां दर्शयन्नाह—स खल्वित्यादि । आप्य इत्याप्योऽपि रागत्वमुपैति । यकृत्प्लीहानावित्यनेन तत्र रञ्जकपित्तसंबन्धं दर्शयति । यदुक्तं—"यकृत्प्लीह्नोर्यत्पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा" (सू. अ. २१) इति । एवमेवार्थं सुखग्रहणार्थं श्लोकेनाह—रञ्जिता इत्यादि । शरीरस्थेनेति यकृत्प्लीहरूपशरीरदेशस्थेन । प्रसन्नेनेति अविगुणेन । आप इति रसरूपा आपः, अनेन चाप्शब्दोक्तेन रसेन रञ्जकेनाग्निना च निष्पादनाभिधानाच्छोणितस्योभयजन्यतया सौम्याग्नेयत्वमाचार्येणोक्तम् । तथा पाञ्चभौतिकत्वाभिधानेऽपि शोणिते राग एवाग्न्यात्मकतागमकोऽभिधातव्यः । तथा यत्र रसस्य कारणत्वेऽपि तद्धर्मसौम्यत्वानुगतिर्न भवति तत्राप इति आप्य इति च भाषां परित्यज्य रसस्यैव कारणत्वं वदति । यथा—"रसादेव स्त्रिया रक्तं" इति । उभयात्मकत्वेनैव च शोणितमनुष्णाशीतं भवति । तद्वक्ष्यति व्रणप्रश्ने—"अनुष्णशीतं मधुरं स्निग्धं रक्तं च वर्णतः । शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत्" (सू. अ. २१) इति । पुष्कलावतेऽप्युक्तम्—"आहारस्य यत् परं धाम तदग्निना रञ्जितं रक्तत्वं प्रतिपद्यते, तत् सौम्याग्नेयत्वादुष्णद्रवैश्चाभिवर्धते" इति; तथा भोजेऽप्युक्तम्—"अनुष्णशीतं मधुरं स्निग्धं रक्तं च वर्णतः । शोणितं गुरु विस्रं स्याद्विदग्धं चोष्णमेव च" इति । वाग्भटेऽपि—"मधुरं लवणं किंचिदशीतोष्णमसंहतम् ।···लोहितम्" (वा. सू. अ. २७) इति । यत्तु पित्तप्रकोपणैः प्रकोपाभिधानं तदुष्णशोणितस्याग्नेयताकारणतया युक्तं, प्राकृतं तु न पित्तहेतोरुत्पद्यते । तथाहि प्राकृतरक्तक्षये "अम्लशीतप्रार्थना" (सू. अ. १५) इत्यनेन सौम्याग्नेयहेतुप्रार्थनया सौम्याग्नेयत्वमेवोक्तम् । तथा "पित्तवच्छोणितजः" (सू. अ. १७) इति पित्तसमानलक्षणाभिधानं यत्, तथा चिकित्सायां "आगन्तौ रक्तजे च लेप एषोऽभिपूजितः" इत्यनेन पित्तविहितलेपाभिधानं तदुष्णरक्तस्योष्णतयाऽऽग्नेयत्वस्वीकारादेवोपपन्नम् ॥ ४ ॥ ५ ॥

---

१ '°प्रसाधनौ' इति मु. ।

**रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्तते ॥**
**तद्वर्षाद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ६ ॥**
**आर्तवशोणितं त्वाग्नेयम्, अग्नीषोमीयत्वाद्गर्भस्य ॥ ७ ॥**

आर्तवस्योपधातुत्वेऽपि गर्भहेतुतया प्राधान्यादुत्पादमाह—रसादेवेत्यादि । अत्र च कर्मवशात् कालविशेषे आविर्भावतिरोभावौ ज्ञेयौ । अस्य धातुशोणिताद्विशेषमाह,—आर्तवशोणितं त्वाग्नेयमिति । तु शब्दः पूर्वस्मात् सौम्याग्नेयाद्रक्ताद्व्यावर्तयति । अस्य च सौम्याद्रसादुत्पन्नस्याग्नेयत्वं परिणामविशेषादेव कारणविसदृशं कार्यं भवति, यथा तेजसः पार्थिवो धूमो भवति, इक्षुरसाच्छ्लेष्महेतोस्त्रिदोषकारि फाणितं भवति । अस्यैवाग्नेयत्वावगमे हेतुमाह—अग्नीषोमीयत्वाद्गर्भस्येति । यदि ह्यार्तवमाग्नेयं न स्यात्तदा सौम्यशुक्राग्नेयार्तवारब्धतया सर्वतन्त्रसिद्धमग्निसोमारब्धत्वं न स्यादिति भावः; धातुशोणिते त्वप्रतिषेधादविरुद्धेनानुमतम् ॥ ६ ॥ ७ ॥

**पाञ्चभौतिकं त्वपरे जीवशोणितमाहुराचार्याः ॥ ८ ॥**
**विस्रता द्रवता रागः स्पन्दनं लघुता तथा ॥**
**भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥ ९ ॥**

मतान्तरमाह—पाञ्चभौतिकमित्यादि । जीवशोणितमिति धातुशोणितम् । पञ्चभूतावगमकलक्षणान्याह—विस्रतेत्यादि । यत्तु रक्ते तद्वितयमप्युद्भूतं नास्ति, तत् साधारणतया[1] पञ्चभूतानां पाञ्चभौतिकत्वमुच्यत एवेति भावः । ये तु 'आर्तवं शोणितं' इति पठित्वा आर्तवं धातुशोणितं चाग्नेयमिच्छन्ति, अभेदं च तयोर्वदन्ति, तन्मते अग्नीषोमीयत्वादिति हेतुर्न धातुशोणिते सङ्गतस्तन्त्रान्तरविरोधश्च; धातूपधात्वोश्चैकरूपता स्वतन्त्रपरतन्त्रासंमतेति दोषः ॥ ८ ॥ ९ ॥

**रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ॥**
**मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रं तु जायते ॥ १० ॥**

इदानीं रसाद्रक्तोत्पत्तिप्रसङ्गेन सर्वधातूनामेवोत्पत्तिक्रममाह—रसादित्यादि । रसाद्रक्तोत्पत्तिः पुनः कालविशेषेण "स खलु त्रीणि" इत्यादिना वक्ष्यमाणेन रक्ताद्युत्पाददर्शनार्थमुच्यते । अत्र प्रवर्तत इति प्रशब्दः प्रकर्षवाची, तेन रसादिगतमलांशात् "कफः पित्तं मलः खेषु" ( सू. अ. ४६ ) इत्यादिना वक्ष्यमाणमलोत्पत्तिरप्यपकृष्टांशजन्या सूचिता भवति । यदुक्तं **चरके**—"रसात् स्तन्यं तथा रक्तमसृजः कण्डराः सिराः । मांसाद्वसा त्वचः षट् च मेदसः स्नायुसन्धयः" ( च. चि. अ. १५ ) इति । शुक्रं तु जायते इत्यनेन पुनरुत्पादाभिधानेन शुक्रस्य विशिष्टं मलांशरहितमुत्पादं दर्शयति; शुक्रं हि स्वाग्निपच्यमानमपि निर्मलसुवर्णवत् सहस्रशः पच्यमानमप्येवमेव । यत्तु श्मश्रु शुक्रमलतया कैश्चिदुच्यते तन्न, शास्त्रेऽनभिहितत्वात्, तथा स्त्रीणां च सशुक्रतया श्मश्रुप्रसक्तेः; तस्माच्छ्मश्रु च लोमविशेषतयाऽस्थिमलमेव । रसादिषु च रक्तोत्पादो नापूर्वोत्पादः, रसादीनां

१ 'कारणतया' इति पा० ।

जन्मप्रभृतिव्यवस्थितत्वात्; तेन तत्समानभागेन पोषणमिह जननं ज्ञेयम् । अत्र च रसाद्रक्ताद्युत्पादने केचिदिदं वदन्ति–यत्—रसोऽग्निपच्यमानो रक्ततां याति, रक्तं च मांसतामित्यादिपूर्वपूर्वधातुपरिणामेनोत्तरोत्तरधातूत्पादः; यथा—क्षीराद्दधि भवति, दध्नो नवनीतं, नवनीताद्घृतमित्येकः पक्षः । किंवा रस एव रक्तं प्रथमं प्लावयति, तत्र रक्तस्थानसंबन्धाद्रक्तसादृश्यं रक्तव्यपदेशं चानुभवति, रक्तं च रक्तसमानेन स्तोकेनांशेन पोषयति; ततो रक्तमाप्लाव्य मांसमाप्लावयति, तत्रापि मांससमानेनांशेन मांसपोषणं करोति, मांससादृश्यं मांसशब्दाभिधेयतां चानुभवति; एवमुत्तरोत्तरधातून् रस एवाप्लावयति; यथा—केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीमाप्लावयतीति द्वितीयः पक्षः । एतदेवोक्तं **हारीतेन** यत्—"रसः सप्ताहादर्वाक् परिवर्तमानः श्वेत-कपोत-हरित-हारिद्र-पद्म-किंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं सप्तदिवसपरिवर्ताद्वर्णपरिवर्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते" इत्यादि । अत्रापि 'तत्रैषां धातूनां' इत्यादिना, तथा 'स खलु त्रीणि त्रीणि' इत्यादिना रसेनैव पोषणमनेनैव न्यायेन वक्तव्यम् । किंवाऽऽहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरस-रुधिर-मांसादीन् रसरुधिरादिसमानेनांशेन तर्पयति । तत्र यः प्रत्यासन्नो धातुस्तत्पोषको रसधातुस्तं शीघ्रं पुष्णाति, यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषणं भवति, एवं भिन्नैरेव मार्गैर्धातुपोषणं भवति; तेन रक्तपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति, तथा मांसपोषणादुत्तरकालं मेदःपोषको रसभागो मेदः पोषयति । तेन रसाद्रक्तमित्यादेरयमर्थो—यद्रसपुष्टिकालादुत्तरकालं रक्तं प्रवर्तते, रक्तपुष्टिकालादुत्तरकालं मांसं प्रवर्तत इत्यादि । अस्मिंश्च पक्षे यदुक्तं "विण्मूत्रमाहारमलः सारः प्रागीरितो रसः । स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत्" ( सू. अ. ४६ ) इति, तथा "तस्मिन् धातुमलाशयानुसारिणि रसे" इति च मुख्यार्थं भवति; तथा **चरकेऽपि**—"स्रोतसा च यथा स्वेन धातुः पुष्यति धातुना" ( च. चि. अ. ८ ) इति च मुख्यार्थं भवति । तेन यथा खले उत्पतितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नत्वविप्रकृष्टत्वादिभेदेन शीघ्रं चिरेण वा गमनं भवति तद्वत् । इति क्षीरदधिन्याय-केदारीकुल्यान्याय-खलेकपोतन्यायात् त्रिधा धातुपोषणक्रमः । तत्रैतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेन नीरसत्वं देहस्य स्यात्, मासोपवासाच्च शुक्रमयं[1] शरीरं स्यादिति नेष्यते । केदारीकुल्यापक्षे तु रसाद्रक्तादिपोषणं मुख्यार्थतया भवति, यदपि रक्तादेर्मांसादिपोषणं तदपि रसादेव रक्तादिधर्मतया रक्तादिव्यपदेशभाजो भवतीति व्युत्पादितमेव । यत्तु रसस्य सर्वधातुदोषमलाशयानुसारित्वमुक्तं तदपि रक्तादिपोषकतया, तथा हृदयस्थायिरसस्य कृत्स्नदेहव्यापकतया चोपपन्नम् । एवं चरकेऽप्युक्तं "व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा । युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा" ( च. चि. अ. १५ ) इत्यादि, तदप्युक्तन्यायेनैवोपपन्नम् । यदपि मांसादिना समानेन मांसादेरेव पोषणं, तदपि धात्वाप्लावनन्यायेन गच्छताऽपि रसेन

१ 'शुक्रक्षयशरीरं' इति **मु.** ।

तद्धातुसमानेनांशेनैव तद्धातुपोषणादुपपन्नं, वृष्यं तु प्रभावाद्यथा खलेकपोतन्याये विदूरमपि शुक्रं प्रभावाच्छीघ्रं याति तथाऽत्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातूञ्छीघ्रमाप्लावयतीति सुघटम् । एवमनया दिशाऽन्यदप्यत्र दूषणमुद्धार्यम् । तेनायं पक्षस्तावत् साधुः । खलेकपोतपक्षेऽपि यथा रसाद्रक्तमित्यादिपक्षो गौणतया भवति तद्दर्शितमेव । यत्तु **चरके** "रक्तं विबद्धमार्गत्वान्मांसादीन्न प्रपद्यते" ( च. चि. अ. ८ ) इत्युक्तं, तत् कृत्स्नदेहचारिशोणिताभिप्रायेण, न पोषकरक्ताभिप्रायेणेति व्यवस्थाप्यते । यत्तु 'एकैकस्मिन् धातौ त्रीणि' इत्यादिना धातोरवस्थानकाल उक्तः, स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरसस्येति व्यवस्थाप्यते । एवमनयोर्महाजनोपगीतयोर्गतिरुपदर्शिता भवति । स्वरसस्त्वस्माकं केदारीकुल्यान्याये । यत्त्वन्यैः खलेकपोतन्यायस्वीकारेण **चरके** सन्ततज्वरस्य द्वादशाश्रयत्वमित्याद्युक्तं, तन्न बुध्यामहे । येन सन्ततस्य द्वादशाश्रयत्वं दोषमहिम्ना कृत्स्नदेहव्यापकतया "यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः । युगपच्चानुपद्यन्ते नियमात् सन्तते ज्वरे" ( च. चि. अ. ३ ) इत्यादिनोक्तं; दोषाणां च कुपितानां संप्राप्तिविशेषात् किमगम्यमस्ति देहे येन यावद्रसमेव परं सर्वधात्वादिव्यापकं सर्वधातुदूषणेऽपेक्षन्त इति ॥ १० ॥

**तत्रैतेषां सर्वधातूनामन्नपानरसः प्रीणयिता ॥ ११ ॥**

**रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः ।**
**अन्नापात् नाच्च मतिमानाचाराच्चाप्यतन्द्रितः ॥ १२ ॥**

रसाद्रक्तमित्याद्युक्ते ग्रन्थे रसस्यैवोक्तेन न्यायेन सर्वधातुतर्पकत्वं दर्शयन् रसस्य प्राधान्यमाह—तत्रैषामित्यादि । अन्नपानादेकाहेनोत्पन्नरसोऽन्नपानरसः । सर्वधातूनामित्यत्र सर्वशब्देन स्थायिरसमपि गृह्णाति । यदुक्तं **चरके**—"पुष्यन्ति त्वाहाररसाद्रसरुधिरमांस" ( च. सू. अ. २८ ) इत्यादि । ननु यद्येवं, तत् किं रसद्वयं ? तथा चाष्टधातुत्वं शरीरस्य ? मैवम्; एक एवायमाहाररसो द्विप्रस्थानः पोष्यपोषकभेदेन, तत्र पोष्यो रसांशः सर्वशरीरचारी पोषकेन रसांशेन समानेन नित्यं पाकान्तरानपेक्षेणैवाल्पीयसा युज्यते, अवशिष्टस्तु रक्तादिपोषको रक्तं याति, तत्र रक्तस्थेनाग्निना यथावक्ष्यमाणकालजातपाकात् कफं मलं त्यक्त्वा रक्तसमानेनांशेनाल्पीयसा सर्वथा रक्तीभूतेन रक्तं पोषयति, शेषस्तु मांसादिसमानो रसभागो मांसादीन् याति, तत्रापीदृश्येव पाकव्यवस्था; तेन स्थायिपोषकरसयोः कर्मभेदाद्भेदोऽभिधीयते, पाकान्तर-स्थानान्तर-गत्यन्तराभावाच्चैकताऽपि । तेन क्वचिद्भेदविवक्षायां "पुष्यन्ति त्वाहाररसात्" ( च. सू. अ. २८ ) इत्याद्युक्तं भवति, अभेदविवक्षया तु "रसाद्रक्तं" ( च. चि. अ. १५ ) इत्याद्युक्तमिति युक्तम् ॥ ११ ॥ १२ ॥

**तत्र 'रस' गतौ, धातुः; अहरहर्गच्छतीत्यतो रसः ॥ १३ ॥**

रसस्य निरुक्त्या स्वरूपमाह—तत्र रसगताविल्यादि । अहरह इति प्रतिदिनोत्पन्नः; किंवा अहरहरिति अहर्निशोपलक्षणम् ॥ १३ ॥

---

१ 'एतेन रसरक्तयोः' इति ह. ।

**स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धाताववतिष्ठते; एवं मासेन रसः शुक्रीभवति स्त्रीणां चार्तवम् ॥ १४ ॥**

**भवति चात्र—**

**अष्टादशसहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये ॥**
**कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥ १५ ॥**

तस्य पच्यमानस्य प्रकर्षेण प्रतिधात्ववस्थानकालमाह—स खल्वित्यादि । धाताविति रक्तादिधातौ । अत्र त्रीणि कलासहस्राणि पञ्चदशकलाधिकानि पञ्चाहोरात्राणि भवन्ति । (येन[1] विंशतिः कलाः काष्ठाश्च तिस्रो मुहूर्तं, त्रिंशन्मुहूर्तं चाहोरात्रं, त्रिंशच्च भवन्ति काष्ठाः कलाः, तेनाहोरात्रेण षट्कलाशतानि तिस्रश्च कला भवन्ति । ) एतच्च पञ्चाहोगुणितं कलासहस्रत्रयं पञ्चदशकलाधिकं भवति । तेन रक्तादिषड्धात्ववस्थानकालषट्पञ्चाहसंकलनया वक्ष्यमाणाष्टादशसहस्राणि नवतिकलाधिकानि मासेन भवन्ति; एतदेवाह—एवं मासेनेत्यादि । रसस्यैकाहोत्पन्नस्य तद्दिनं परित्यज्य शोणितता पञ्चाहेन पूर्णा[2], एवं रसोत्पाददिनेन समं रक्तोत्पत्तिदिनात् सप्तमात् पूर्वं रसस्य[3] रक्तापत्तिर्हारीतेनान्नस्य सप्ताहादर्वाक् परिवृत्तिरित्यनेनोक्ताऽविरुद्धा भवति । एवं च रक्तादिषड्धातुस्था अग्नयः पूर्वधातुपाचकाः स्वस्वधातूष्मरूपाश्च भवन्ति, रसाग्निस्तु स्वधातुमात्रोष्मरूप[4] एव, एवं सप्तधात्वग्नयः । ओजस्तु सप्तधातुसाररूपमपि पृथगग्निकं[5] सप्तधातुसारमेवेति दर्शयिष्यामः । स्त्रीणां चार्तवमिति मासेन रसः स्त्रीणामार्तवतां यातीत्यर्थः । यद्यपि रसादार्तवं मासादर्वागेव भवति, तथाऽपि रजसः सूक्ष्मविप्रकृष्टमार्गतया मासेन भवनं, यदुक्तं **विश्वामित्रेण—** "सूक्ष्मकेशप्रतीकाशा बीजरक्तवहाः सिराः । गर्भाशयं तर्पयन्ति[6] मासाद्बीजाय कल्पते" इति । अत्र बीजभूतरक्तं बीजरक्तमार्तवमित्यर्थः । अत्र यदि नामार्तवस्य रक्तरूपता स्तोकेनापि कालेन भवति, तथाऽपि तस्य गर्भाशयप्राप्तिर्मासेनैव भवति, गर्भाशयगतं च तन्मुख्यार्तवशब्दवाच्यम्, अतो मासेन तद्भवनाभिधानं युक्तम् । अन्ये मासेनोपचयादाविर्भावमार्तवस्य मासेनेति वदन्ति । ये तु, आर्तवशब्दं स्त्रीशुक्रे वर्णयन्ति, तन्मते अशास्त्रीयेयं व्याख्या । यदपि, "घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते । विसर्पत्यार्तवं पुंसां तथा स्त्रीणां समागमे" ( शा. अ. २ ) इति कैश्चित् पठ्यते, तद्यद्यार्षं, तदा तत्रार्तवशब्देन रज एवोच्यते, तद्धि मैथुनसमये पुरुष( बीज )ग्रहणाय विसर्पति, स्त्रीशुक्रं तु शुक्रशब्देन पुरुषस्त्रीसाधारणेन मांसादिवत् प्राप्तमेव । यत्तु स्त्रीशुक्रस्य गर्भानारम्भकत्वं, तद्वचनादेव तथा नारीरजसो गर्भारम्भकत्वादेव लब्धम् । उक्तं च तन्त्रान्तरे— "स्त्रीणां शुक्रं न गर्भाय भवेद्गर्भाय चार्तवम्" इति । स्त्रीशुक्रं च क्वचिदाश्रयीभूतं गर्भा-

---

१ अयं पाठो हस्तलिखितपुस्तके नोपलभ्यते । २ 'पूर्णेन' इति मु. । ३ 'मांसतोत्पत्तिः' इति मु. । ४ 'स्वधातूष्ममात्रोष्मरूपः' इति ह. । ५ 'पृथङ्ग् गणितं' इति मु. । ६ 'पूरयन्ति' इति मु. ।

रम्भकं वक्तव्यं; यथा—"मुञ्चतः शुक्रमन्योन्यमनस्थिस्तत्र जायते" ( शा. अ. २ ) इति । उक्तकालस्य कलासंकलनमाह—अष्टादशेत्यादि । एतच्च व्याकृतार्थमेव प्राक् । परतन्त्रम् असमानतन्त्रम् ॥ १४ ॥ १५ ॥

**स शब्दार्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं केवलम्॥ १६ ॥**

ननु च तन्त्रान्तरेऽष्टाहाच्छुक्रोत्पत्तिरुक्ता; यदुक्तं **पाराशरे**—"आहारोऽद्यतनो यः श्वो रसत्वं संनियच्छति । शोणितत्वं तृतीयेऽह्नि, चतुर्थे मांसतामपि ॥ मेदस्त्वं पञ्चमे, षष्ठे त्वस्थित्वं, सप्तमे त्वियात् । मज्जत्वं, शुक्रतां यायान्नियमात्त्वष्टमे नृणाम्" इति; **चरके**ऽप्युक्तं—"षड्भिः केचिदहोरात्रैः केचित् सप्तभिरेव च । इच्छन्ति मुनयः प्रायो रसस्य परिवर्तनम्" ( च. चि. अ. १५ ) इति; तदेवाशङ्क्याह—स शब्दार्चिर्जलसन्तानवदित्यादि । यदेतन्मासेन रसस्य शुक्रत्वाभिधानं तत् पराकाष्ठया ज्ञेयम्, अर्वागपि त्वग्निप्रकर्षस्रोतःशुद्धिप्रकर्षाद्रसस्य शुक्रतोत्पत्तिर्भवति, तन्त्रान्तरोक्ता बुद्धिः कल्पनीया च । यदुक्तं **चरके**—"सन्तत्या भोज्य[2]धातूनां परिवृत्तिस्तु चक्रवत्" ( च. चि. अ. १५ ) इति । अत्र हि चक्रस्य वाह्यवाहकप्रकर्षाप्रकर्षाभ्यां यथा परिवृत्तिः शीघ्रं चिरेण वा भवति, तथा रसस्यापीति वाक्यार्थः । तेनेहापि शब्दवदनुसरतीत्यनेन मध्यः [3]परिवृत्तिक्रम उच्यते; अर्चिर्वदित्यनेन शीघ्रः, अर्चिःसंतानो हि शब्दसंतानादपि शीघ्रः; जलसंतानवदित्यनेन चातिमन्दः परो मासेन परावृत्तिरूपः क्रम उच्यते । अन्यत्राप्युक्तं—"केचिदाहुरहोरात्रात् षडहादपरे परे । [4]मासेन याति शुक्रत्वमन्ये पाकक्रमादिति" ( च. चि. अ. १५ ) इति । अणुना विशेषेणेति सूक्ष्मेण सूक्ष्मबुद्धिगम्येनेति यावत् । यत् शब्दसंतानवत्तिर्यग्गमनं रसस्य, अर्चिःसन्तानवच्चोर्ध्वगमनमुच्यते, जलसन्तानवच्चाधोगमनमुच्यते, तच्च शब्दस्य सर्वदिग्गामित्वादनुपपन्नम्; ऊर्ध्वाधस्तिर्यग्गमनं च रसस्य "हृदयाच्चतुर्विंशतिधमनीः" इत्यादिनोक्तम् ॥ १६ ॥

**वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद्विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति ॥ १७ ॥**

मासेन रसः शुक्रीभवतीत्यादिनोक्तशुक्रभवनापवादमाह—वाजीकरण्यस्त्वित्यादि । स्वबलं द्रव्यस्वभावः, गुणोत्कर्षो गुणस्वभावः, तस्मात् स्वबलगुणोत्कर्षाद् व्यस्तात् समस्ताच्च । यदुक्तं **चरके**—"द्रव्याणि द्रव्यप्रभावाद् गुणप्रभावाद्द्रव्यगुणप्रभावाच्च [5]कर्मकारीणि भवन्ति" ( च. सू. अ. २६ ) इति । शुक्रमाशु विरेचयन्तीति विरेचनमिह विरेचनदृष्टान्तानुगुणतया वृष्यकर्मोपलक्षणमुक्तं; तेन शुक्रवृद्धिः, तथा शुक्रस्रुतिः, तथा शुक्रस्रुतिवृद्धी च लक्षयति । तत्र वृष्यं पादलेपादि, स्रुतिकरं क्षीरादि, वृद्धिकरं माषादि ।

---

१ 'व्याहृतार्थमेव' इति **मु.** । २ 'पोष्यधातूनां' इति **मु.** । ३ 'परावृत्तिक्रमः' इति **मु.** । ४ 'मासात् प्रयाति' इति **मु.** । ५ 'कार्मुकाणि' इति **मु.** ।

तदुक्तं—"शुक्रस्रुतिकरं किञ्चित् किञ्चिच्छुक्रविवर्धनम् । स्रुतिवृद्धिकरं किंचित्त्रिविधं वृष्यमुच्यते" इति । वाजीकरण्य इति बहुवचनमाद्यर्थे, यथा "सप्तमी शौण्डैः" (पा. अ. २।१।४०) इत्यत्र; तेन बल्यजीवनादीनामप्याशुकारित्वं सूचितं भवति । एतदेव **चरके**ऽप्युक्तं यत्—"वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हि" (च. चि. अ. १५) इत्यादि ॥ १७ ॥

**यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं, नैव नास्तीति; अथ चास्ति, सतां भावानामभिव्यक्तिरिति कृत्वा, केवलं सौक्ष्म्यान्नाभिव्यज्यते; स एव विवृतपत्रकेशरे पुष्पे कालान्तरेणाभिव्यक्तिं गच्छति; एवं बालानामपि वयःपरिणामाच्छुक्रप्रादुर्भावो भवति, रोमराज्यादयश्च विशेषा नारीणाम् ॥ १८ ॥**

बालानां हर्षादिशुक्रकार्याभावेऽपि शुक्रसद्भावमुत्तरकालीनकार्यदर्शनेन सदृष्टान्तं दर्शयन्नाह—यथा हीत्यादि । न शक्यमिति साक्षादनुपलब्धत्वान्न शक्यं, नैव नास्तीत्यत्र वक्तुं शक्यमिति योजना । सतां भावानामिति साक्षादनुपलब्धानामव्यक्तादीनाम् । अथ चास्तीति सतामेवाविर्भाव इति सांख्यदर्शनेनेत्यर्थः । वयःपरिणामादिति तारुण्याद् । रोमराज्यादय इत्यत्रापिशब्दाद् रजःप्रादुर्भावस्तनस्तन्यादयो ग्राह्याः । नारीणामित्युपलक्षणं, तेन पुंसां च श्मश्रुप्रभृति ज्ञेयम् ॥ १८ ॥

**स एवान्नरसो वृद्धानां परिपक्वशरीरत्वादप्रीणनो भवति ॥ १९ ॥**

अन्नरसस्य क्वचिदप्रीणनत्वमप्याह—स एवेत्यादि । परिपक्वशरीरत्वादिति शरीरारम्भककर्मणाऽनुगतेन वातप्रबलतया क्षीयमाणधातुत्वेन च पक्वमिव पतनोन्मुखीकृतशरीरत्वादित्यर्थः । अप्रीणन इति ईषत्प्रीणनः ॥ १९ ॥

**त एते शरीरधारणाद्धातव इत्युच्यन्ते ॥ २० ॥**

उक्तानां रसादीनां धातुशब्दनिरुक्तिमाह—त इत्यादि । धारणादिति धारणप्रकर्षात्; तेन दोषाणामपि साम्यावस्थितानां देहधारकाणामपि धारकत्वप्रकर्षाभावान्न मुख्यं धातुत्वम् । यत्तु "किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्" (च. सू. अ. १) इत्यत्र धातुशब्देन दोषाणामपि ग्रहणं, तद् गौणधातुशब्दयोगाज्ज्ञेयम् । उक्तं हि—"दोषा ह्यपि धातुशब्दं लभन्ते" इति । धारणशब्देन च धारणं पोषणं चेह विवक्षितं, तेनोपधातूनां किंचिद्धारणत्वेऽपि पोषणाभावान्न धातुत्वम् । उक्तं हि **भोजे**—"सिरास्नायुवसास्तन्यत्वचो गतिविवर्जिताः । धातुभ्यश्चोपजायन्ते तस्मात्त उपधातवः" इति । अत्र हि गतिविवर्जिता इत्यनेन धात्वन्तरपोषणार्था गतिर्निषिध्यते । शुक्रं त्वोजःपोषकतया धारणपोषणयोगाद्धातुरेव ॥ २० ॥

**तेषां क्षयवृद्धी शोणितनिमित्ते, तस्मात्तदधिकृत्य वक्ष्यामः । तत्र फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टं; नीलं पीतं**

**हरितं श्यावं विस्रमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तेन दुष्टं, गैरिकोदकप्रतीकाशं स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं च श्लेष्मदुष्टं; सर्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टं; द्विदोषलिङ्गं संसृष्टम् ॥ २१ ॥**

संप्रत्यध्यायप्रकृतं शोणितमेव व्याकुर्वन्नाह—तेषामित्यादि । शोणितस्यापि क्षयवृद्ध्या क्वचिद्रसे उपस्नेहात् क्षयवृद्धिनिमित्तत्वं; यदुक्तं **चरके**—"परस्परोपसंस्तम्भाद् धातुस्नेहपरम्परा" ( च. चि. अ. १५ ) इति । मांसादावुपस्नेहात् कारणतया तथा जीवत्वेन[1] स्थितिप्रलयकारणतया च तेषां क्षयवृद्धी शोणितनिमित्ते इत्युक्तं, तदुक्तमधिकृतं कृत्वाऽऽह—फेनिलमित्यादिवातादिदुष्टरक्तलक्षणानि । अस्कन्दि असंहतम् । अरूपस्यापि वायोः प्रभावेणारुणादिवर्णकर्तृत्वं ज्ञेयम् । 'पित्तवद्रक्तेन' इति पाठपक्षे प्रदेशान्तरदुष्टेन रक्तेन यदा प्रदेशान्तरे रक्तं दूष्यते तदा लक्षणं ज्ञेयम् ॥ २१ ॥

**इन्द्रगोपकप्रतीकाशमसंहतमविवर्णं च प्रकृतिस्थं जानीयात् ॥ २२ ॥**

संहतविपरीतत्वेन तन्विति वक्तव्ये, यदसंहतमिति वदति तेन संहतमात्रनिषेधेनातितनुत्वमपि नेच्छति । इन्द्रगोपकप्रतीकाशमिति इन्द्रगोपकोऽत्र लोहितो विवक्षितः । इन्द्रगोपकवर्णेनैव वर्णे लब्धे 'अविवर्णम्' इतिवचनं वातादिप्रकृतीनामपि नराणां ये शोणितवर्णा भवन्ति तेषामप्यविवर्णतया ग्रहणार्थम् । यदुक्तं **चरके**—"तपनीयेन्द्रगोपाभं पद्मालक्तकसंनिभम् । गुञ्जाफलसवर्णं च विशुद्धं विद्धि शोणितम्" ( च. सू. अ. २४ ); तेन लोहितेन्द्रगोपवर्णः समधातोः; शेषा वातादिप्रकृतिशोणितवर्णा ज्ञेयाः ॥ २२ ॥

**विस्राव्याण्यन्यत्र वक्ष्यामः ॥ २३ ॥**

विस्राव्याण्यन्यत्रेति अष्टविधशस्त्रकर्मीये "स्राव्या विद्रधयः" ( सू. अ. २५ ) इत्यादिना ॥ २३ ॥

**अथाविस्राव्याः—सर्वाङ्गशोफः, क्षीणस्य चाम्लभोजननिमित्तः, पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनां च श्वयथवः ॥ २४ ॥**

पाण्डुरोग्यादीनां प्रादेशिका अपि शोथा न विस्राव्याः ॥ २४ ॥

**शस्त्रविस्रावणं द्विविधं—प्रच्छानं सिराव्यधनं च ॥ २५ ॥**

**तत्र, ऋज्वसंकीर्णं सूक्ष्मं सममनवगाढमनुत्तानमाशु च शस्त्रं पातयेन्मर्मसिरास्नायुसन्धीनां चानुपघाति ॥ २६ ॥**

विस्रावणं शोणितविस्रावणं शस्त्रानुशस्त्राभ्याम् । तत्रानुशस्त्रं श्रृङ्गादि विस्रावणमुक्तमग्रे; शस्त्रेऽपि यथा ग्रहणं तदुक्तम्, अवशिष्टमनुक्तमाह—तत्र ऋज्वित्यादि । एतच्च

---

१ 'जीवनत्वेन' इति मु. ।

रूप(रक्त)विस्रावणविषयं व्यधनस्य "कुठारिकां वामहस्तन्यस्तां" ( सू. अ. ८ ) इत्यादि-नोक्तत्वात्, तदवशेषोऽपि सिराव्यधे वक्तव्यः । असंकीर्णमिति नातिप्रत्यासन्नम् । सूक्ष्मं यथायोग्यतया, प्रच्छन्नसिराव्यधनयोरपि वा योज्यम् ॥ २५ ॥ २६ ॥

**तत्र, दुर्दिने दुर्विद्धे शीतवातयोरस्विन्ने भुक्तमात्रे स्कन्नत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति ॥ २७ ॥**

**मदमूर्च्छाश्रमार्तानां वातविण्मूत्रसंगिनाम् ॥**
**निद्राभिभूतभीतानां नृणां नासृक् प्रवर्तते ॥ २८ ॥**

शोणितस्य स्रावणे अयोगातियोगौ सहेतुलक्षणौ चिकित्सार्थमाह—तत्र दुर्दिन इत्यादि। दुर्विद्ध इति पार्श्वतोऽन्यत्र वा विद्धे । स्कन्नत्वादिति दुर्दिनादिस्त्यानीकृतत्वात् ॥२७॥२८॥

**तद्दुष्टं शोणितमनिर्ह्रियमाणं शोफदाहरागपाकवेदना जनयेत् ॥ २९ ॥**

तद्दुष्टं शोणितमिति यन्त्रपीडागतमनिर्गतं संस्रस्तम् ॥ २९ ॥

**अत्युष्णेऽतिस्विन्नेऽतिविद्धेऽज्ञैर्विस्रावितमतिप्रवर्तते; तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थतिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं दाहं पक्षाघातमेकाङ्गविकारं हिक्कां श्वासकासौ पाण्डुरोगं मरणं चापादयति ॥ ३० ॥**

शिरोऽभितापः शिरःशूलम् । एते शिरोऽभितापादयो रक्तक्षयजवातकृताः । विस्रावणमिथ्यायोगस्तु अत्रैवोक्ताविस्राव्यविस्रावणं विस्राव्यस्याविस्रावणं वा ज्ञेयम् । स चातियोगायोगलक्षणमेव प्राय इति पृथङ्नोक्तः ॥ ३० ॥

**तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते ॥**
**यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक् ॥ ३१ ॥**

सम्यग्योगस्रावणं सहेतुकमाह—तस्मान्न शीत इत्यादि । यवागूं प्रतिपीतस्येत्यादि प्रतेर्वीप्सार्थत्वाद् द्विस्त्रिर्वा यवागूपानम् । तिलतण्डुलयवागूश्चात्र सद्यःस्नेहनतया विवक्षिता ॥ ३१ ॥

**सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते ॥**
**शुद्धं तदा विजानीयात् सम्यग्विस्रावितं च तत् ॥ ३२ ॥**
**लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः ॥**
**सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥ ३३ ॥**
**त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये ॥**
**रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥ ३४ ॥**

विस्रावितस्य विस्रावणशुद्धरक्तस्य च लक्षणमाह—सम्यगित्यादि । गत्वा यदा सम्यग्रक्तमवतिष्ठते तदा शुद्धं विजानीयात् । सुविस्रावितपक्षे सम्यग्गत्वेति सम्यक्

प्रवर्तनं कृत्वा स्वयमेवावतिष्ठते तदा सम्यग्विस्रावितं ज्ञेयमित्यर्थः । रक्तशुद्धियुक्तसम्यक्स्रावणलक्षणान्तराण्याह—लाघवमित्यादि । शोणितजा रोगा विसर्पादयो व्याधिसमुद्देशीयोक्ताः ॥ ३२—३४ ॥

**अथ खल्वप्रवर्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैर्लवणतैलप्रगाढैर्व्रणमुखमवघर्षयेत्, एवं सम्यक् प्रवर्तते ॥ ३५ ॥**

अयोगेनास्रावे चिकित्सामाह—अथाप्रवर्तमान इत्यादि । शीतशिवः कर्पूरम् । यथालाभेनैवात्र त्रिचतुःप्रयोगसिद्धौ पुनस्तद्वचनमेकद्विद्रव्यनिषेधार्थम् ॥ ३५ ॥

**अथातिप्रवृत्ते रोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाषयवगोधूमचूर्णैः शनैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत् सालसर्जार्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा, यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात्, शीताच्छादनभोजनागारैः शीतैः प्रदेहपरिषेकैश्चोपचरेत्, क्षारेणाग्निना वा दहेद्यथोक्तं, व्यधादनन्तरं तामेवातिप्रवृत्तां सिरां विध्येत्; काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत्, एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरं; क्षीरयूषरसैः सुस्निग्धैश्चाश्नीयात्; उपद्रवांश्च यथास्वमुपचरेत् ॥ ३६ ॥**

रक्तातिप्रवृत्तौ चिकित्सामाह—अथातीत्यादि । पत्तङ्गं कुचन्दनम् । ध्मापितेनेति दग्धेन । यथोक्तैरिति आलेपाध्यायोक्तैः क्षौमादिभिः । पुनः सिराव्यधनं गतिविच्छेदार्थम् । दाहः सिरासंकोचार्थम् । एते च रक्तस्थापनोपायाः यथोत्तरं बलवत्तया करणीया इति स्वयमेव दर्शयिष्यति । रक्तातिस्रुतौ भेषजमाह—काकोल्यादीत्यादि । अत्र पित्तप्रकृतेः क्षीरेण, वाते रसेन, कफे यूषेणेत्यादि कल्पनीयम् । यथास्वमिति स्वस्वचिकित्सितेनैव ॥ ३६ ॥

**भवन्ति चात्र—**

**धातुक्षयात् स्रुते रक्ते मन्दः संजायतेऽनलः ॥**
**पवनश्च परं कोपं याति तस्मात् प्रयत्नतः ॥ ३७ ॥**
**तं नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्धनैः ॥**
**ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥ ३८ ॥**

धातुक्षयादित्यादौ धातुक्षयो बलक्षयकरतयाऽग्निमान्द्यं करोति । उच्यते हि—"आदानदुर्बले देहे पक्ता भवति दुर्बलः" ( च. सू. अ. ६ ) इति । नातिशीतैरित्यनेन नातिशीतोष्णतया शोणितवर्धकत्वम् । लघुत्वेनाग्निवर्धनता । स्निग्धत्वेन वातशमनत्वम् । ईषदम्लतादि इच्छानुगुणतया ॥ ३७ ॥ ३८ ॥

चतुर्विधं यदेतद्धि रुधिरस्य निवारणम् ॥
संधानं स्कन्दनं चैव पाचनं दहनं तथा ॥ ३९ ॥
व्रणं कषायः संधत्ते, रक्तं स्कन्दयते हिमम् ॥
तथा संपाचयेद्भस्म, दाहः संकोचयेत् सिराः ॥ ४० ॥
अस्कन्दमाने रुधिरे संधानानि प्रयोजयेत् ॥
संधाने भ्रश्यमाने तु पाचनैः समुपाचरेत् ॥ ४१ ॥
कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि ॥
असिद्धिमत्सु चैतेषु दाहः परम इष्यते ॥ ४२ ॥

पूर्वोक्तरक्तास्थापनयोगानामुत्तरोत्तरं गरीयस्त्वेन पूर्वपूर्वासिद्धौ कर्तव्यतोपदर्शनार्थमाह—चतुर्विधमित्यादि । सन्धानं व्रणस्य, स्कन्दनं रक्तस्य, पाचनं तथा दाहश्च व्रणस्यैव । कषाय इति कषायरसद्रव्यं लोध्रादि । शीतमिति[1] शीताच्छादनेत्यादिनोक्तं, स्कन्दयते स्त्यानीकरोति । भस्मेति दग्धक्षौमभस्मादि । यथोक्तव्रणबन्धसिराव्यधावपि सन्धानहेतुतया सन्धानान्तर्भूताविति न चातुर्विध्याधिक्यम् । शेषे दाहाभिधानं महाविभ्रमकतया ज्ञेयम् ॥ ३९—४२ ॥

शेषदोषे यतो रक्ते न व्याधिरतिवर्तते ॥
सावशेषे ततः स्थेयं न तु कुर्यादतिक्रमम् ॥ ४३ ॥
देहस्य रुधिरं मूलं रुधिरेणैव धार्यते ॥
तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥ ४४ ॥

रक्तातियोगस्य महाव्यापत्तिकतया परिहारप्रकारमाह—शेषदोषे इत्यादि । न व्याधिरतिवर्तत इति संशमनेनापि जीयत इत्यर्थः । मूलमिति मांसादिहेतुतया । धार्यत इति नीरक्तस्य देहत्वासंभवात् । जीवमिति जीवधारकत्वात् । तदुक्तं—"रक्तं जीवयति" (सू. अ. १५) इति ॥ ४३ ॥ ४४ ॥

स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले ॥
शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत् ॥ ४५ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने शोणितवर्णनीयो
नाम चतुर्दशोऽध्यायः ॥ १४ ॥

स्रुतरक्तस्येत्याद्यवस्थाचिकित्सितम् ॥ ४५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यटीकायां भानुमत्यां सूत्रस्थाने
शोणितवर्णनीयश्चतुर्दशोऽध्यायः ॥ १४ ॥

---

१ 'हिममिति' इति मु. ।

## पञ्चदशोऽध्यायः ।

**अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये "तेषां क्षयवृद्धी शोणितनिमित्ते" ( सू. अ. १४ ) इत्यनेन धातूनां क्षयवृद्धी उक्ते, ते च प्रतिकर्तव्यतया जिज्ञासिते, अतस्तदभिधानप्रसङ्गागतदोषमलसहितधातुक्षयवृद्धिविज्ञानार्थं दोष-धातु-मल-क्षयवृद्धिविज्ञानीयोऽभिधीयते । अत्र च धातुशब्देन उपधातूनामोजसश्च ग्रहणात् तत्क्षयाद्यभिधानम् । आदौ च दोषाभिधानं तन्निमित्तत्वाद्धातुक्षयवृद्ध्योर्ज्ञेयम् । दोषधातुमलाश्च तथा तत्क्षयश्च तथा वृद्धिश्चेति विग्रहाद्दोषादीनां साम्यावस्थालक्षणाभिधानमप्यत्र युक्तं; किंवा दोषादीनां क्षयवृद्ध्योः प्रकृतिज्ञानानन्तरीयकतया दोषादिस्वरूपाभिधानं ज्ञेयम् ॥ १ ॥ २ ॥

**दोषधातुमलमूलं हि शरीरं, तस्मादेतेषां लक्षणमुच्यमानमुपधारय ॥ ३ ॥**

कुतः पुनरेतेषां स्वरूपादि ज्ञातव्यमित्याह—दोषेत्यादि । हि यस्मादर्थे । तत्र मूलमित्यारम्भकत्वात् । तेषां लक्षणमिति दोषादीनां प्रकृतिस्थानां तथा क्षीणानां तथा वृद्धानां च क्रमेणोच्यमानमित्यर्थः ॥ ३ ॥

**तत्र, प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति (॥ १ ॥);**

तत्र प्रकृतिज्ञानाधीनत्वाद्विकृतेः प्राकृतमेव कार्यरूपं वातादीनां प्रकृतिस्थानां लिङ्गं क्रमेणाह—तत्र प्रस्पन्दनेत्यादि । स्वरूपं तु यदेषां रूक्षशीतादि तद्वातव्याधिव्रणप्रश्नादौ वक्तव्यं; स्वरूपं हि वातादीनां कार्यगम्यमेव, तेन कार्यमेवात्र प्राधान्यादुच्यते । **चरकेऽपि** कार्यमेवोक्तं—"दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम् । क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म कुर्वते" ( च. सू. अ. १७ ) इति । अत्रापि लिङ्गं व्यक्तत्वात् कार्यमेवोच्यते । तथा पुनस्तत्रैव त्रिशोथीये "उत्साहोच्छ्वास" ( च. सू. अ. १८ ) इत्यादिना वातादीनां कर्मैव प्रकृतिहानिवृद्धिलक्षणमुक्तम् । प्रस्पन्दनं व्यानस्य; उद्वहनमिन्द्रियार्थानामुदानस्य; पूरणं प्राणस्य; विवेकः पृथक्करणं रसमूत्रादीनां समानस्य; धारणमवेगकाले अपानस्य, मूत्रादिप्रवर्तनमप्यविरुद्धम् । किंवा सर्वकर्मैव तत्साम्यात् सर्ववातानां; अत्र पक्षे पञ्चधा प्रभेदः स्थानभेदादिना वक्ष्यमाणो ज्ञेयः (॥ १ ॥) ॥

**रागपक्त्योजस्तेजोमेधोष्मकृत् पित्तं पञ्चधा प्रविभक्तमग्निकर्मणाऽनुग्रहं करोति (॥ २ ॥);**

रागेत्यादि । पित्तकर्मसु रागो रञ्जकपित्तस्य, पक्तिः पाचकस्य, तेजो[1] मेधा च साधकस्य; तेजोऽत्र नायनं, तदालोचकस्य; ऊष्मा शरीरोष्मा, स त्वक्स्थभ्राजकपित्तस्य कर्म (॥ २ ॥)॥

---

१ 'ओजो' इति मु. ।

**सन्धिसंश्लेषणस्नेहनरोपणबृंहणतर्पणबलस्थैर्यकृच्छ्लेष्मा पञ्चधा प्रविभक्त उदककर्मणाऽनुग्रहं करोति ॥ ४ ॥**

सन्धीत्यादि कफकार्यम् । अत्र सन्धिसंश्लेषणं सन्धिसन्धानं, स्नेहनं शरीरस्य, रोपणं व्रणस्य, बृंहणं सौम्यत्वैघनत्वाभ्यां शरीरस्य, तर्पणत्वमपि सौम्यत्वाद्, बलकारित्वं **चरके**ऽप्युक्तं "प्राकृतस्तु बलं श्लेष्मा' ( च. सू. अ. १८ ) इत्यनेन ॥ ४ ॥

**रसः[2] प्रीणयति, रक्तं जीवयति, मांसं लेपयति, मेदः स्नेहयति, अस्थि धारयति, मज्जा पूरयति, धैर्यच्यवनबीजार्थकृच्छुक्रम् (॥ १ ॥);**

रसः प्रीणयतीत्यादि प्राकृतधातुकर्म । प्रीणयति तर्पयति धातून्; तृप्तिप्रयोजकतया च सकर्मकत्वम् । जीवयतीति जीवं धारयति । लेपयति अस्थ्यादि लेपयति । धारयतीति शरीरं दृढीकृत्य धारयति । धैर्यच्यवनं मैथुनप्रयोजकतया । बीजार्थो गर्भजननो ज्ञेयः ( ॥ १ ॥ ) ॥—

**पुरीषमुपस्तम्भं[3] वाय्वग्निधारणं च, बस्तिपूरणविक्लेदकृन्मूत्रं, स्वेदः क्लेदत्वक्सौकुमार्यकृत् (॥ २ ॥);**

पुरीषं निःसारमपि आशयबलकारितया वाय्वग्निधारणमुपस्तम्भं च करोति । यदुक्तं—"सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम्" ( च. चि. अ. ८ ) इति (॥२॥) ॥

**यथोक्तरक्तलक्षणमार्तवं गर्भकृच्च, गर्भो गर्भलक्षणं[4], स्तन्यं स्तनयोरापीनत्वजननं जीवनं चेति ॥ ५ ॥**

यथोक्तरक्तलक्षणमित्यार्तवरूपरक्तस्य यल्लक्षणमुक्तं "मासि मासि त्र्यहं स्रवेत्" इत्यादि, तदेवास्य प्रकृतिस्थस्य लक्षणम् । स्तन्यं जीवनमिति बालजीवनम् ॥ ५ ॥

**तत्र विधिवत् परिरक्षणं कुर्वीत ॥ ६ ॥**

ईदृशे वातादीनां साम्ये कर्तव्यमाह—तत्रेत्यादि । विधिवदिति स्वास्थ्यरक्षणाय वक्ष्यमाणविधिना, परितः सर्वतो वातादीनां रक्षणं कर्तव्यम् ॥ ६ ॥

**अत ऊर्ध्वमेषां क्षीणलक्षणं वक्ष्यामः । तत्र, वातक्षये मन्दचेष्टताऽल्पवाक्त्वमप्रहर्षो मूढसंज्ञता च, पित्तक्षये मन्दोष्माग्निता निष्प्रभता च, श्लेष्मक्षये रूक्षताऽन्तर्दाह आमाशयेतराशयशून्यता[5] ( सन्धिशैथिल्यं तृष्णा दौर्बल्यं प्रजागरणं[6] ) च ॥ ७ ॥**

---

१ 'सौम्य-स्नेहनत्वाभ्यां' इति **मु.** । २ "रसस्तुष्टिं प्रीणनं रक्तपुष्टिं च करोति, रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च, मांसं शरीरपुष्टिं मेदसश्च, मेदः स्नेहस्वेदौ दृढत्वं पुष्टिमस्थ्नां च, अस्थीनि देहधारणं मज्ज्ञः पुष्टिं च, मज्जा स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नां च करोति, शुक्रं धैर्यच्यवनं प्रीतिं देहबलं हर्षं बीजार्थं च" इति डल्हणसंमतः पाठः । ३ 'प्राणवाय्वग्निधारणावष्टम्भकृत् पुरीषं' इति **ता.** । ४ 'गर्भलक्षणमार्तवं' इति **ता.** । ५ 'आमाशयेतराशयशून्यता शिरसश्च' इति **ता.** । ६ अयं पाठस्ताडपत्रपुस्तके न पठ्यते चक्रेणाव्याख्यातश्च ।

अत ऊर्ध्वमित्यादि वातादिक्षयलक्षणम्। मन्दचेष्टता सकलप्राकृतवातक्रियाणामल्पता। मूढसंज्ञताऽसम्यग्ज्ञानम्, एतच्च प्राकृतवायोरिन्द्रियार्थसंप्राप्तिकरस्य वैगुण्यादुपपन्नम्। चकारादनुक्तप्राकृतकर्महानिः, एवं पित्तश्लेष्मणोरपि वाच्या। अन्तर्दाह इति श्लेष्मक्षये प्राकृतेनापि पित्तेन क्रियमाणतापस्य निष्प्रत्यनीकत्वमपि सह्यतया ज्ञेयम्। यत्तु श्लेष्मक्षयेऽविरोधितया पित्तवृद्धिर्भवतीति यदुक्तमन्यैः, तदयुक्तं, न हि दोषाणां विरुद्धकर्मणामपि विरोधो भवतीति; "विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्" ( च. चि. अ. २६ ) इत्युपदर्शन(र्शित)मेव। **चरके** "विरोधिनाम्" ( च. सू. अ. १८ ) इत्यनेन क्षीणदोषकर्मविरुद्धानां वा वृद्धिरिति दर्शितम्; अन्यथा पित्तवृद्धिः श्लेष्मक्षये लिङ्गं, श्लेष्मवृद्धिश्च पित्तक्षये लिङ्गं स्यात्, तच्च नेष्यते। वायोस्तु पित्तश्लेष्मणोर्धातुरूपयोः क्षये वृद्धिर्भवत्येव, "वायोर्धातुक्षयात् कोप" ( च. चि. अ. २८ ) इति वचनात्। इतराशयाः श्लेष्मण एव उरः-शिरः-सन्धयः; अत्रामाशयस्य साक्षादुपादानाद्विशेषेण शून्यतोक्ता ज्ञेया ॥ ७ ॥

**तत्र स्वयोनिवर्धनान्येव प्रतीकारः ॥ ८ ॥**

अत्र चिकित्सासूत्रमाह—तत्र स्वयोनीत्यादि। स्वयोनीति वक्तव्ये यद् वर्धनमधिकं करोति, तेन स्वयोनिश्च यद्वातादीनां कषायादितया आमलकादि प्रतिभाति तन्निरासार्थं; तद्धि स्वयोनित्वेऽपि पथ्यत्वप्रभावबाधितत्वान्न वर्धनं; तथा प्रभावादपि यत् कफादिवर्धनं मत्स्यादि तदपि गृह्यते। किंवा वातादीनां स्वयोनिभूतवर्धनं ? तत्र वायोर्वायुरेव योनिः, पित्तस्याग्निः, कफस्यापः। एवं धातुमलक्षयेऽपि स्वयोनिवर्धनं व्याख्येयम्। तत्र पञ्चभूतात्मकत्वेन रस आप्यः, रक्तं तेजोजलात्मकं, मांसं पार्थिवं, मेदो जलपृथिव्यात्मकम्, अस्थि पृथिव्यनिलात्मकं, मज्जा शुक्रं चाप्यं, मूत्रं जलानलात्मकं, पुरीषं पार्थिवम्, आर्तवमाग्नेयं, स्वेदः स्तन्यं चाप्यम् ॥ ८ ॥

**रसक्षये हृत्पीडाकम्पशोषशून्यतास्तृष्णा च, शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना सिराशैथिल्यं च, मांसक्षये स्फिग्गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यं च, मेदःक्षये प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च, अस्थिक्षयेऽस्थिशूलं दन्तनखभङ्गो रौक्ष्यं च, मज्जक्षयेऽल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च, शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेकः, प्रसेके चाल्परक्तशुक्रदर्शनम् ॥ ९ ॥**

रसक्षय इत्यादौ हृच्छब्दः पीडाकम्प-शोष-शून्यताभिर्योज्यः; एते च रसक्षये वृद्धवाताद्भवन्ति। चकारादिहान्यत्र च रसादीनां स्वकर्महानिः परधात्वपचयश्च ज्ञेयः। त्वक्पारुष्यं रक्तेन स्निग्धश्लक्ष्णत्वक्ताभिधानात्। अम्लशीतप्रार्थना सौम्याग्नेयत्वाद्रक्तस्य स्वयोनितया भवति। सिराशैथिल्यं पूरकरक्ताल्पतया। स्फिगादिशुष्कता तेषां विशेषेण मांस-

स्थानतया तच्छोषात्[1] । धमनीशैथिल्यं मांसक्षये सुषिराधारतया । प्लीहाभिवृद्धिरुदरे मेदःक्षये वृद्धवातेनोदरशून्यतया च प्लीहा स्थानाद् भ्रष्टो वर्धते । मेदुरमांसप्रार्थना मेदोजनकतया मेदुरमांसस्य । वक्ष्यति–"दोषधातुमलक्षीणो बलक्षीणोऽथवा नरः । स्वयोनिवर्धनं तत्तदन्नपानं प्रकाङ्क्षति" इत्यादि । दन्तनखभङ्गोऽपि तत्प्रभवास्थिक्षयादेव । मज्जक्षये शुक्रक्षयाभिधानं कारणक्षये कार्यक्षयोपलक्षणं, तेनान्यत्राप्ययमर्थ उन्नेयः । शून्यताऽस्थ्नामपूरकतया ज्ञेया । तत्र अल्पशुक्ररक्तदर्शनं च शुक्रक्षयेऽपि प्रकुपितेन वायुना हर्षोदीरितेन च रक्तानयनाद्भवति ॥ ९ ॥

**तत्रापि स्वयोनिवर्धनद्रव्योपयोगः ॥ १० ॥**

अत्र चिकित्सामाह—तत्रापीत्यादि । एतच्च प्रागेव व्याख्यातम् ॥ १० ॥

**पुरीषक्षये हृदयपार्श्वपीडा सशब्दस्य च वायोरूर्ध्वगमनं कुक्षौ संचरणं च, मूत्रक्षये बस्तितोदोऽल्पमूत्रता च; अत्रापि स्वयोनिवर्धनद्रव्योपयोगः । स्वेदक्षये स्पर्शवैगुण्यं स्तब्धरोमकूपता त्वक्शोषः स्वेदनाशश्च[2]; तत्राभ्यङ्गः स्वेदोपयोगश्च ॥ ११ ॥**

स्वेदक्षये स्पर्शवैगुण्यमिति स्वेदक्षयवृद्धवातेन ज्ञेयं; स्तब्धरोमकूपता स्वेदक्षयेन शुष्कत्वात् । स्वेदोपयोग इत्यत्र स्वेदशब्देन स्वेदस्तथा स्वेदनं चरणायुधादि गृह्यते ॥ ११ ॥

**आर्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च; तत्र संशोधनमाग्नेयानां च द्रव्याणां विधिवदुपयोगः । स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासंभवोऽल्पता वा; तत्र श्लेष्मवर्धनद्रव्योपयोगः । गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च; तत्र प्राप्तबस्तिकालायाः क्षीरबस्तिप्रयोगो मेद्यान्नोपयोगश्चेति ॥ १२ ॥**

आर्तवक्षय इत्यादौ योनिवेदना तद्देशाभिपूरकार्तवक्षयकुपितेन वायुना । तत्र शोधनमित्यनेन स्रोतःशुद्ध्यर्थं शोधनं; तच्च वमनं विरेचनं चोर्ध्वाधःस्रोतःशुद्धिकरतया, आर्तवस्रोतश्च शुक्रवहमेव, यदुच्यते शारीरे—"ते एव रक्तमभिवहतो नारीणामार्तवसंज्ञम्" ( शा. अ. ९ ) इति । आग्नेयानामिति सुरादीनाम् । विधिवदित्यनेन शोधनपूर्वकमुपयोगं मात्रादिना योग्येन युक्तं दर्शयति । श्लेष्मशब्देनार्द्रद्रव्यं दर्शयति । प्राप्तबस्तिकालाया इति प्राप्ताष्टमासायाः, तत्रैव हि गर्भिण्या बस्तिमभिधास्यति । मेद्यान्नं बृंहणार्थं, मेध्याण्डेति पाठपक्षे मेध्याण्डं बस्ताण्डादि ज्ञेयम् ॥ १२ ॥

**अत ऊर्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः । वृद्धिः पुनरेषां स्वयोनिवर्धनात्युपसेवनाद्भवति । तत्र, वातवृद्धौ वाक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढ-**

---

१ 'तच्छेषात्' इति मु. । २ त्वक्शोषस्वेदनाशौ ताडपत्रपुस्तके न पठ्येते ।

**वर्चस्त्वं च; पित्तवृद्धौ पीतावभासता संतापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वं च; श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिश्लिष्टता च ॥ १३ ॥**

क्रमाद्वृद्धिलक्षणमाह—अत ऊर्ध्वमित्यादि। तत्रेत्यादि कार्ष्ण्यं वायुना प्रभावेन क्रियते। उष्णकामिता वायोः शीतत्वात्। निद्रा मनसो निवृत्त्या भवति; यदुक्तं—"यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः। विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः" ( च. सू. अ. २१ ) इति; तत्र वायुना मनोभ्रमणान्निद्रा न भवति। पित्तस्याप्युष्णतया मनाङ्मनोविक्षेपान्निद्रा स्वल्पा भवति। मूर्च्छा पित्तेन युक्तैव; यदुक्तं—"मूर्च्छा पित्ततमःप्राया" ( शा. अ. ४ ) इति। सन्ध्यस्थिश्लिष्टता सन्धिश्लेषककफवृद्ध्या युक्तैव ॥ १३ ॥

**रसोऽतिवृद्धो हृदयोत्क्लेशं प्रसेकं चापादयति; रक्तं रक्ताङ्गाक्षितां सिरापूर्णत्वं च; मांसं स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रतां च; मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यं च; अस्थ्यध्यस्थीन्यधिदन्तांश्च; मज्जा सर्वाङ्गनेत्रगौरवं; शुक्रं शुक्राश्मरीमतिप्रादुर्भावं च ॥ १४ ॥**

रसवृद्धौ हृदयोत्क्लेशो हृल्लासः। प्रसेको मुखस्रावः। उदरस्य तत्पार्श्वस्य च वृद्धिः। अधिदन्ता अधिकदन्ताः। अध्यस्थि अधिकास्थि ॥ १४ ॥

**पुरीषमाटोपं कुक्षौ शूलं च; मूत्रं मूत्रवृद्धिं मुहुर्मुहुः प्रवृत्तिं वस्तितोदमाध्मानं च; स्वेदस्त्वचो दौर्गन्ध्यं कण्डूं च ॥ १५ ॥**

पुरीषमित्यादि। आटोपम् ईषत्सशब्दमाध्मानम्। मूत्रवृद्धिमिति प्रचुरमूत्रनिर्गमम्। मुहुर्मुहुः प्रवृत्तिस्तस्यैव ॥ १५ ॥

**आर्तवमङ्गमर्दमतिप्रवृत्तिं दौर्गन्ध्यं च; स्तन्यं स्तनयोरापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदं च; गर्भो जठराभिवृद्धिं स्वेदं च ॥ १६ ॥**

आर्तवं वृद्धतया वातरोधादङ्गमर्दं करोति। अत्रानुक्तानां नेत्रादिमलानामुक्तानां च वृद्धिलक्षणार्थं **चरको**क्तं चकारेण सूचितं भवति। यदुक्तं—"मलवृद्धिं गुरुतया लाघवान्मलसंक्षयम्। मलायनानां बुध्येत सङ्गोत्सर्गादतीव च" ( च. सू. अ. ७ ) इति। एवं च वातादिरसादिलक्षणान्यपि तत्र तत्र कृतचकारैश्चरकोक्तानि सूचितानि ज्ञेयानि ॥१६॥

**तेषां यथास्वं क्षपणमविरुद्धैः[2] क्रियाविशेषैः प्रतिकुर्वीत ॥ १७ ॥**

**पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्धयेद्धि परं परम् ॥**
**तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥ १८ ॥**

---

१ 'क्रमातिवृद्धि०' इति मु.। २ 'संशोधनं क्षपणं च क्षयादविरुद्धैः' इति ड.।

अत्र चिकित्सासूत्रं—तेषामित्यादि। अविरुद्धैरिति वृद्धस्य तथा क्षपणं कर्तव्यं यथाऽन्यदोषस्य धातोर्वा वृद्धिः क्षयो वा न भवतीति भावः। प्रतीति प्रतिक्षणं च बहुदोषे संशोधनेनाल्पे संशमनेन च कर्तव्यम्। धात्वादीनां च यद्यपि वृद्धिर्व्याधिरूपतया दोषकृतैव, तथाऽपि रसाद्याश्रयवशादपि तद्गतदोषाणां चिकित्साविशेषो भवतीति ज्ञेयम्। तथाऽपि क्षयेऽपि पूर्वः क्षीणः परधातुं क्षपयति परश्च पूर्वमिति ज्ञेयम्। यदुक्तं—"क्षीणे रेतस्यनन्तराः। क्षीयन्ते धातवः" (उ. त. अ. ४१) इति। तस्माद्वृद्धाः क्षीणा वा धातवो नोपेक्षणीया इति भावः॥ १७॥ १८॥

**बललक्षणं बलक्षयलक्षणं चात ऊर्ध्वमुपदेक्ष्यामः। तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते, स्वशास्त्रसिद्धान्तात्॥ १९॥**

संप्रति धातुसारभूतत्वेन धात्वभिन्नस्यौजसस्तथा तत्कार्यस्य बलस्य च प्रयोजनवशादभेदेन स्वरूपं क्षयं च चिकित्सार्थमाह—बललक्षणमित्यादि। रसादीनां शुक्रान्तानां यत् परं तेजः सारं घृतमधुस्थानीयं, प्रत्येकमेव रसादीनां य उत्कृष्टोंऽशः सारभागः स मिलित्वा हृदयप्रधानस्थानत्वात् तत्रस्थ एव च धमनीभिरपि हृदयमूलाभिः कृत्स्नं शरीरं तर्पयति बलहेतुश्च धातूनां भवति, शुक्रशोणितसंसर्गात् प्रभृति शरीरमधितिष्ठते स्वकर्मणा तदोजः। तच्चापि परापरभेदेन द्विविधं; तत्र यत् परमष्टबिन्दुकं तद्धृदि तिष्ठति, यत्तु ततो बहु तदपरं शरीरं प्रीणयति। यदुक्तमन्यत्र—"प्राणायतनस्यौजसोऽष्टौ बिन्दवो हृदयाश्रिताः" इति। तथा **चरके**ऽपि—"हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम्। ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति" (च. सू. अ. १७) इत्यादि। अत्रेषदित्यल्पं, तथा—"तावच्चैव श्लेष्मण ओजसः प्रमाणम्" (च. शा. अ. ७) इत्यनेनार्धाञ्जलित्वमुक्तमोजसः। नानावर्णत्वं चास्य नानावर्णसर्वधातुसाररूपत्वादेव। यदुक्तं—"भ्रमरैः फलपुष्पेभ्यो यथा संह्रियते मधु। तद्वदोजः शरीरेभ्यो गुणैः संह्रियते नृणाम्" (च. सू. अ. १७) इति। न तु शुक्रप्रसादरूपमोज इति पक्षः, तद्धि न शब्दादिह प्रतीयते; किं च तथा सति रसादीनामपि परंपरयाऽप्योजसः सारत्वाभिधानेन शुक्रान्तानामित्येवाभिदध्यात्, न तु रसादीनामिति। ननु यदि शुक्रसारमोजो न भवति, तदा यदुच्यते **चरके**—"यत् सारमादौ गर्भस्य यत्तु गर्भरसाद्रसः। संवर्तमानं हृदयं समाविशति यत् पुनः[1]" (च. सू. अ. ३०) इत्यादि; तत् कथं? न हि शुक्रशोणितसंयोगे जीवाधिष्ठितमात्रे धातवः सन्ति, यत्प्रसादमेलकरूपं तत्रौजः स्यात्; अस्ति तु शुक्रं, तेन तत्प्रसादपक्षे तदा तस्यावस्थानमुपपन्नम्। मैवं, तदाऽपि शुक्रशोणिते बीजरूपतया सर्वधातूनां विद्यमानत्वात्, तदुक्तं कललोपदर्शने—"सर्वधातुकलुषीभूतो भवत्यव्यक्तविग्रहः" (च. शा. अ. ४) इति; तच्चौजो धातुभ्यो[2] न भिन्नमिति कृत्वा सप्तधातुकत्वम्। दहनस्यापि धात्वग्नाववकल्पनं स्थानविशेषात् कार्यविशेषाच्च। भेदेनाप्योजोऽ-

१ 'पुरा' इति मु.। २ 'धातुत्वेन' इति ह.।

भिधीयत इति भेदव्यवहारोऽभेदश्च ओजोधातोः सिद्धो भवति। यत्तु चरके रसे तथा श्लेष्मणि च ओजःशब्दप्रयोगः, स रसे सारवचने, यथा—"मलीभवति तत् प्रायः कल्पते किंचिदोजसे" (च. चि. अ. ८) इति; यत्र कफे त्वोजःशब्दप्रयोगः स साररूपधातुकार्यकारितया बलहेतुसाधर्म्याच्च, यथा—"प्राकृतस्तु बलं श्लेष्मा विकृतो मल उच्यते। स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते" (च. सू. अ. १७) इति। तदेव बलमित्यनेन बलहेतुताप्रकर्षेण बलशब्दवाच्यता, न तु परमार्थतो बलमेवौजः; यतः "प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च" (सू. अ. १) इत्यनेनानयोर्भेदं वक्ति, तथा क्षीरगुणे "बल्यं बृंहणमोजः साम्यादभिवर्धयेत्। कृशानां हितम्" इति यद्वक्ष्यति भेदप्रतिपादकं, तेन बलं शक्तिः शरीरस्य भारहरणादिगम्या, सा च प्राय ओजःसमाश्रया, ओजः संबन्धादेवेतरधातवो विशेषेण बलिनो भवन्ति; तेनौजोधर्मतया बलस्य द्रवरसादिरूपविरहितस्य समानवर्धनीयतारूपताविरहिततया ओजसो रसादिरूपतया ओजःसमानरसादियुक्तेन समं चिकित्सार्थमभिधानमाह; एवं भेलेऽप्युक्तं—"बलं यदोजो मर्त्यानां तदोज इति निर्दिशेत्। रसादीनां प्रसादस्तु शुक्रान्तानां स उत्तमः" इति। अत्रापि हि निर्दिशेदिति भाषया प्रयोजनवशेनाभेदोपदर्शनमोजोबलयोरिति दर्शितम्; एतदेवोक्तमिहापि "तदेव बलमित्युच्यते, स्वशास्त्रसिद्धान्तात्" इति। अत्र स्वशास्त्रसिद्धान्तेन समं सिद्धं बलौजसोरभेदं दर्शयति। अभेदोपदर्शने प्रयोजनं चोक्तमेव। ननु यद्योजः शक्तिर्बलं तेजः प्रभावाहितो धातुर्वा शक्तिशक्तिमतोर्नित्यसंबन्धेनेति किं भेदेन "बलवर्णौजसां" (सू. अ. १) इत्यादौ बलौजसोरभिधानम्? उच्यते—बल्यमांसवत्कुक्कुटादि विशेषेण बलयुक्तमोजो जनयति, ओजोजनकेन तु साधारणबलयुक्तमोजो जन्यते, तेनौजोजनकत्वेऽपि बल्यत्वाभिधानं विशेषार्थं, यथाऽऽग्नेयेष्वेव स्नेहो बलवन्तमग्निं जनयति "नालं स्नेहसमिद्धस्य शमनार्थं सुगुर्वपि" (च. सू. अ. १३) इति। बलं च यद्यपि तद्धातुमलदोषाद्याधारतयाऽप्युक्तं, यथा—"सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम्" (च. चि. अ. ८) इति; अनेन मलाधारं बलमुक्तं, तथा "हन्वोर्बलं स्वरबलं" (च. सू. अ. ५) इत्यादिना, तथा "बलं भवति चाधिकम्। शिरोरुहकपालानां" (च. सू. अ. ५) इत्यादिना; तथा प्रकृतिसारसंहननाद्याश्रयतया च चरके प्रपञ्चेन बलमुक्तं, तथाऽपि कृत्स्नदेहबलाधायकतया धात्वादिबलस्यापि चौजोहेतुतयाऽत्र प्राधान्येन ओजो बलमित्युक्तम्। यदुक्तं **चरके**—"येनौजसा वर्तयन्ति प्रीणिताः सर्वधातवः" (च. सू. अ. ३०) इति। यत्तु बलशब्देनोपचयोऽप्यभिधीयते, तन्न युक्तम्। यतः "केचित् कृशाः प्राणवन्तः, स्थूलाश्चाल्पबला नराः" (सू. अ. ३५); तथा—"स्थूलः प्रमेही बलवानिहैकः कृशस्तथाऽन्यः परिदुर्बलश्च" (च. चि. अ. ६) इत्यनेन स्थूलाद्भेदेन बलाभिधानात्। यत्तु लोकोक्तौ दुर्बलशब्देन क्वचित् कृशाभिधानं, तत् कृशे प्रायो दुर्बलत्वदर्शनादुपचाराभिधानम् ॥ १९ ॥

१ 'यत्तेजो मर्त्यानां' इति मु.।

**तत्र बलेन स्थिरोपचितमांसता सर्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणां च करणानामात्मकार्यप्रतिपत्तिर्भवति ॥ २० ॥**

ओजःकार्यमाह—तत्र बलेनेत्यादि । स्थिरोपचितमांसत्वं सर्वधातुस्नेहरूपतया मांसाप्यायनादुक्तं, स्थिरत्वं स्थायित्वं, मांसं चेह बहिर्दृश्यमानकार्यतयोक्तं, तेनेतरेषामपि धातूनां स्थिरत्वमुपचितत्वमनेनैवोक्तं ज्ञेयम् । सर्वचेष्टास्वप्रतिघात इत्यत्र चेष्टा कायपरिस्पन्द; अत्र बलरूपतयौजसो बलसंपाद्यक्रियास्वप्रतिघातो ज्ञेयः । स्वरवर्णप्रसादश्चौजःकार्यमेव । बाह्यानामिति पाय्वादीनां कर्मेन्द्रियरूपकरणानाम्, आभ्यन्तराणामिति चक्षुरादीनां मनःसहितानाम्; आत्मकार्यमेषां विसर्गादि तथा बुद्ध्यादि तथा चिन्तनादि च । प्रतिपत्तिरनुष्ठानम् । तेन सर्वेन्द्रियाणां स्वकार्यप्रतिपत्तिरोजोनुग्रहाद्भवतीति वाक्यार्थः । तत्रेन्द्रियाणि यदि भौतिकानि तदा विशिष्टभूतमयेनौजसा तद्बलबृंहणं युक्तमेव; यदुक्तं—"शरीरं ह्यपि सत्त्वमनुविधीयते सत्त्वं च शरीरम्" (च. शा. अ. ४) इति । एतदेवौजःकार्यं चरके व्यतिरेकेण दर्शितं; यथा—"बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः । दुश्छायो दुर्मना रूक्षः क्षामश्चाप्योजसः क्षये"—(च. सू. अ. १७) इति ॥२०॥

**भवन्ति चात्र—**

**ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम् ॥**
**विविक्तं मृदु मृत्स्नं च प्राणायतनमुत्तमम् ॥ २१ ॥**
**देहः सावयवस्तेन व्याप्तो भवति देहिनः ।**
**यद्क्तं सर्वभूतानां न क्वचिन्नावतिष्ठते ॥ २२ ॥**

चिकित्साज्ञानार्थमोजो गुणैराह—ओज इत्यादि । शुक्लमिति प्राधान्येन शुक्लं, तेन तन्त्रान्तरोक्तरक्तत्वाद्यनुगमोऽप्यविरुद्धः । यत्तु जीवरक्तरूपतयौजसो रक्तादिवर्णताभिधानं, तन्न युक्तं, प्राणायतनं हि रक्तं हृदयस्थं जीवरक्तमुच्यते, तस्य त्वोजोरूपता चरकेणोक्ता । अन्ये शुक्लस्थाने स्वच्छमिति पठन्ति, तच्चरके "शुद्धं(भ्रं)" ( च. सू. अ. १७ ) इति पाठाद्युक्तम् । स्थिरमिति स्थायि । सरमिति देहव्यापकतया; यदा तु 'रसं'इति पाठस्तदा प्रधानकल्पनया मधुररसमित्यर्थः । विविक्तमिति प्रत्यग्रं, तेन च प्रत्यग्रैरेव घृतादिभिर्वर्धते न पर्युषितैरिति लभ्यते; किंवा विविक्तं श्रेष्ठगुणं, तथाऽपि श्रेष्ठगुणैर्घृतादिभिर्वर्धत इत्यर्थः । मृत्स्नं स्पर्शसुखम् । प्राणायतनमुत्तममिति अग्निः सोमो वायुः सत्त्वं पञ्चेन्द्रियाणि भूतात्मा मनश्चेति प्राणाः; तेषामायतनं तदुपघातेन तदुपघातात् । उत्तममित्यनेन इतरशङ्खादिप्राणायतनेषूत्तमत्वम् । यदुक्तं चरके—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः । शङ्खौ मर्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्"—( च. सू. अ. २९ ) इति । तस्य हृदयस्थस्यापि देहव्याप्तिं तदभावे च शरीरनाशमाह—देह इत्यादि । "देहः सावयवस्तेन व्याप्तो भवति देहिनाम् । यद्रक्तं सर्वभूतानां न क्वचिन्नावतिष्ठते"—इति ॥ २१ ॥ २२ ॥

१ "तदभावाच्च शीर्यन्ते शरीराणि शरीरिणाम्" इति ड. ।

अभिघातात् क्षयात् कोपाच्छोकाद्ध्यानाच्छ्रमात् क्षुधः ।
ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् ॥
तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥ २३ ॥

तस्य क्षयकारणमाह—अभिघातादित्यादि । धातवो गृह्यन्ते यैस्तानि धातुग्रहणानि स्रोतांसि ओजोवाहीनि, यदुक्तं—"ओजोवहाः शरीरे या विधम्यन्ते समन्ततः"—( च. सू. अ. ३० ) इति । किंवा धातुग्रहणस्रोतःस्थानतया धातुग्रहणं हृदयं, ततो निःसृतं धमनीभिरेव । किंवा 'निष्ठितं' इति पाठः, तदा ओजोवाहिस्रोतःसु हृदि स्थितमित्यर्थः ॥ २३ ॥

**तस्य विभ्रंशो व्यापत् क्षय इति त्रयो दोषाः; लिङ्गानि भवन्ति संन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विभ्रंशे, स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने, मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये ॥ २४ ॥**

**भवन्ति चात्र—**

**त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ॥**
**विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ॥ २५ ॥**
**अप्राचुर्यं क्रियाणां च बलविस्रंसलक्षणम् ॥**
**गुरुत्वं स्तब्धताऽङ्गेषु ग्लानिर्वर्णस्य भेदनम् ॥ २६ ॥**
**तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम् ॥**
**मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च ॥ २७ ॥**
**पूर्वोक्तानि च लिङ्गानि मरणं च बलक्षये ॥**

तस्य क्षयभेदानाह—तस्येत्यादि । विभ्रंशः च्युतिः स्वस्थानाद्, व्यापद्दोषदुष्टत्वे सति गुणहीनत्वं, क्षयः स्वमानादल्पता । लिङ्गानि भवन्तीत्युत्तरेण सन्धिविश्लेषणादिना योज्यम् । दोषविस्रंसनं दोषच्यवनं मलमूत्रयोर्वातादीनां वा भ्रंशः । क्रिया कायवाङ्मनसां क्रिया; अत्र नञन्तर्भावादल्पो वा निरोधः । अत्र चकारेणौजसः स्वकर्मगुणहानिश्च ज्ञेया । मूर्च्छा सर्वथा चेतनानाशः ॥ २४–२७ ॥

**तत्र विभ्रंशे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्याययेत्; इतरं तु मूढसंज्ञं वर्जयेत् ॥ २८ ॥**

क्रियाविशेषैरित्योजोवर्धकैस्तद्विशेषविशोधकैश्च । अविरुद्धैरित्यन्नपानाद्यविरुद्धैः । बलमित्योजः । इतरमित्यनेनैव लब्धे मूढसंज्ञमिति विशेषणं मूढसंज्ञायामेवंवर्तनार्थम् ॥ २८ ॥

**यस्य धातुक्षयाद्वायुः संज्ञां कर्म च नाशयेत् ॥**
**प्रक्षीणं च बलं यस्य नासौ शक्यश्चिकित्सितुम् ॥ २९ ॥**

---

१ 'विस्रंसः' इति मु. ।

दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः ॥
स्वयोनिवर्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥ ३० ॥
यद्यदाहारजातं तु क्षीणः प्रार्थयते नरः ॥
तस्य तस्य स लाभे तु तं तं क्षयमपोहति ॥ ३१ ॥

एतदेवाधिकं वक्तुं श्लोकेनाह—यस्येत्यादि । धातुक्षयादिति ओजःक्षयात् । संज्ञा ज्ञानं, कर्म व्यापारः, एतयोरुपरम एव मूर्च्छा । प्रक्षीणं बलमित्यत्र बलं शक्तिः । अत्र 'दोषधातु'–इत्यादि श्लोकद्वयं केचित् पठन्ति; तत्र बलक्षीण इति क्षीणौजाः । स्वयोनिवर्धनशब्दार्थः प्रागेव व्याकृतः । क्षीणस्य समानद्रव्यप्रार्थना चादृष्टवशात् स्वभावभूता ज्ञेया । अत्र दोषादिक्षयवृद्धिप्रकरणे प्रतिकर्तव्या ओजसो वृद्धिर्नाभिहिता, तस्यायुर्वृद्धिवन्निर्विकारत्वेनाभिमतत्वादेव ॥ २९–३१ ॥

रसनिमित्तमेव स्थौल्यं कार्श्यं च । तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चाम एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, मेदसोऽतिवृद्धत्वाज्जाठर्यमापादयति[2]; तमतिजाठरं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति, सौकुमार्यान्मेदसः सर्वक्रियास्वसमर्थः, कफमेदोनिरुद्धमार्गत्वाच्चाल्पव्यवायो भवति, आवृतमार्गत्वादेव शेषा धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति, प्रमेहपिडकाज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति, सर्वे एव चास्य रोगा बलवन्तो भवन्त्यावृतमार्गत्वात् स्रोतसाम्; अतस्तस्योत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जनमधुयवमुद्गकोरदूषकश्यामाकोद्दालकादीनां विरूक्षणच्छेदनीयानां च द्रव्याणां विधिवदुपयोगो व्यायामो लेखनबस्त्युपयोगश्चेति ॥ ३२ ॥

संप्रति समुदितदेहस्य क्षयवृद्धिकारणलिङ्गमाह—रसेत्यादि । अत्र चकारान्मध्यशरीरत्वं च वक्तव्यं गृह्यते । अध्यशनम् अजीर्णभोजनम् । तत्र आम एवेति आमाशयतया मधुरतरश्चेति ज्ञेयः; न तु "आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः" इत्यादिनोक्तः, तस्य रोगहेतुतया आमाशयस्थत्वेन च मेदोजनकत्वायोगात् । जाठर्यमिति बृहज्जठरत्वम्, एतच्च प्रथमस्थौल्योत्पत्तिकारणं, तेन स्थूलस्य बलवदग्नितया मधुर उत्पाद इति नोद्भावनीयम्; उत्पन्नेऽपि स्थौल्येऽतिमात्रत्वादिना आहार आमो मधुररस(तर)श्च भवतीति युक्तम् । क्रथनम् अकस्मादुच्छ्वासावरोधः; यदुक्तं—"श्वासरोधो हि योऽकस्मात् स क्राथः क्रथनं च तत्" इति । अल्पप्राणता शेषधात्वनाप्यायनादेव । प्रमेहपिडकाः प्रमेहा-

१ 'व्याहृतः' इति मु. । २ 'तदतिस्थौल्यमापादयति; तमतिस्थूलं' इति डल्हणसंमतः पाठः

श्रयपिडकाः शराविकाद्याः । उद्दालको वनकोद्रवः । आदिग्रहणाच्छ्यामाकगवेधुकादिग्रहणम्[१] । विधिवदिति पुरुषाग्निमात्राबलाद्यनुगुणतयोपयोगः । लेखनवस्तिर्यथा—"त्रिफलाक्काथगोमूत्रक्षौद्रक्षारसमन्विताः । ऊषकादिप्रतीवापा बस्तयो लेखना मताः" ( चि. अ. ३८ ) इति । चकाराच्चरकोक्तं "गुरु चातर्पणं श्रेष्ठं स्थूलानां कर्शनं प्रति" ( च. सू. अ. २१ ) इति समुच्चिनोति ॥ ३२ ॥

**तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन्नल्पत्वान्न प्रीणाति, तस्मादतिकार्श्यं भवति; सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेष्वसहिष्णुर्वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति, श्वासकासशोषप्लीहोदराग्निसादगुल्मरक्तपित्तानामन्यतममासाद्य मरणमुपयाति, सर्व एव चास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वात्; अतस्तस्योत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु पयस्याश्वगन्धाविदारिगन्धाशतावरीबलातिबलानागबलानां मधुराणामन्यासां चौषधीनामुपयोगः, क्षीरदधिघृतमांसशालिषष्टिकयवगोधूमानां च, दिवास्वप्नब्रह्मचर्याव्यायामबृंहणवस्त्युपयोगश्चेति ॥ ३३ ॥**

तत्रेत्यादि कृशदेहत्वादिवर्णनम् । एतदपि क्षीणरसजन्यतया रसनिमित्तं कार्श्यमुक्तम्[२] । अल्पप्राण इति अल्पबलः । क्रियास्विति उक्तभारहरणादिव्यतिरिक्तास्वपि क्रियासु । सर्व एव रोगा अस्य बलवन्तो भवन्तीति यद्यप्यविशेषेण स्थूलकृशयोरुक्तं तथाऽपि स्थूले विशेषेण बलवन्त इति ज्ञेयम् । केचिदेनमेवार्थं दर्शयितुं स्थूले 'बलवत्तरा' इति पठन्ति । यदुक्तं **चरके**—"स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हि तौ । यद्युभौ व्याधिरागच्छेत् स्थूलमेवातिपीडयेत्" ( च. सू. अ. २१ ) इति । पयस्या क्षीरकाकोली । नागबला गोरक्षतण्डुला । बृंहणवस्तिर्यथा—"बृंहणद्रव्यनिष्क्काथाः कल्कैर्मधुरकैर्युताः । सर्पिर्मांसरसोपेता बस्तयो बृंहणा मताः" ( चि. अ. ३८ ) इति ॥ ३३ ॥

**यः पुनरुभयसाधारणान्यासेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति, समधातुत्वान्मध्यशरीरो भवति सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवातवर्षातपसहो बलवांश्च, स सततमनुपालयितव्य इति ॥ ३४ ॥**

मध्यस्य हेतुं लक्षणं चाह—यः पुनरित्यादि । उभयसाधारणानीति नातिस्निग्धरूक्षादीनि । समानिति समत्वेन, उपचिनोतीति पोषयति । सर्वक्रियासमर्थत्वेनैव बलवत्त्वे लब्धे बलवांश्चेति वचनं स्थायिबलवत्त्वोपदर्शनार्थम् । अनुपालयितव्य इति वक्ष्यमाणस्वस्थवृत्तेन रक्षणीयः ॥ ३४ ॥

---

१ 'कर्शकगवेधुकादिग्रहणम्' इति पा० । २ 'कार्श्यं युक्तम्' इति मु. ।

भवन्ति चात्र—

द्वावपि गर्हितावेतौ सदा स्थूलकृशौ नरौ ॥
श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात्तु पूजितः ॥ ३५ ॥

एतदेव सुखग्रहणार्थं स्थूलातिनिन्दां युक्तामाह—द्वावपीत्यादि ॥ ३५ ॥

दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा ॥
इद्धः स्वतेजसा वह्निरुखागतमिवोदकम् ॥ ३६ ॥

( संप्रति दोषाणामेव धातुबलक्षयहेतुत्वमाह—दोष इत्यादि । ) अथ धातुक्षयस्य विकाररूपतया द्रव्यकालचेष्टाविशेषकार्यत्वेऽप्यवश्यं दोषकार्यत्वं वक्तव्यं, विनादोषं विकारानभ्युपगमादिति दोषकार्यतां धातुक्षयलक्षणामाह—दोषः प्रकुपित इत्यादि । धातुशब्देनात्र धारणार्थकतया[1] मला उपधातवश्च गृह्यन्ते । आत्मतेजसेति आत्मप्रभावेन । अत्र पित्तस्य वातस्य च क्षयहेतुत्वं संशोषणत्वादुपपन्नं, श्लेष्मणश्च यदि क्षयहेतुत्वं वक्तव्यं तदा स्रोतोऽवरोधकतया, यद्वक्ष्यति—"कफप्रधानदोषैर्हि रुद्धेषु रसवर्त्मसु । क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः" ( उ. त. अ. ४१ ) इति । अग्निदृष्टान्तस्तु कफस्य क्षयकारणतामात्रेण योज्यः । यत्तु "स्वतेजसेति स्वस्वभूतात्म(ग्नि)ना" इति व्याख्यानयन्ति, तत् सर्वथाऽसंगतमेव । धातुक्षये च दोषकारणत्वव्युत्पादनेन धातुवृद्धावपि कारणत्वं दोषाणां सुगममिति साक्षान्नोक्तम् । धातूनां वृद्धिक्षयाभ्यामेव च दोषाभिसंबद्धदुष्टताऽप्युक्ता भवति । यतो धातूनां दुष्टतायामपि तद्गुणानां वृद्धिर्हानिर्वाऽवश्यं स्वीकर्तव्या; तेन धातूनां वृद्धिः, क्षयः, तथा दुष्टत्वं चेति त्रिधाऽपि विकारोऽवरुद्धो ज्ञेयः । किंवा धातूनां क्षयवृद्धी उक्ते एव; ततश्च दोषदुष्टतामप्यनेनाह—दोषः प्रकुपित इत्यादिना । क्षपयतीति दुष्ट्या स्वधर्महीनान् करोति । अस्मिन् पक्षे श्लेष्मणाऽपि धातुदुष्टिर्मुख्यैव भवतीति ॥ ३६ ॥

वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च ।
दोषधातुमलानां तु परिमाणं न विद्यते ॥ ३७ ॥
एषां समत्वं यच्चापि भिषग्भिरवधार्यते ॥
न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना ॥ ३८ ॥

यतः क्षयवृद्धी प्राकृतमानापेक्षे, तच्चेह नोक्तं, कुत इत्याह—वैलक्षण्यादित्यादि । दीर्घ-ह्रस्व-स्थूल-कृश-बाल-वृद्धादीनां वैलक्षण्यात्, शरीरवैलक्षण्ये च तद्दोषादिमानवैलक्षण्यमित्यर्थः । अस्थायित्वादिति दोषादिभिः संबध्यते; तेन पूर्वाह्णे वसन्ते च कफो वृद्धः, ग्रीष्मे सायं च क्षीण इत्यादिना तत्तद्वृद्धिक्षयहेतुप्राप्त्याऽपि दोषधातुमलानामनियतमानत्वादित्यर्थः । न विद्यत इति नियतं मानं न विद्यते यच्छास्त्रकारेण निदर्श्येतेति भावः । अथ कथं तर्हि दोषादिसाम्यव्यवहार इत्याह—एषामित्यादि । एषां दोषादीनां व्यस्तानां

१ 'धारणात्मकतया' इति ह. ।

समस्तानां च साम्यं स्वास्थ्येन व्यस्तेन च वक्तव्यमित्यर्थः । तत्र सर्वथा स्वास्थ्येन सर्वसाम्यं, वातादीनां च प्रतिप्रतिकथितप्राकृतलक्षणरूपस्वास्थ्येन प्रतिप्रतिवातादिसाम्यं वक्तव्यम् । हेतुनेति लिङ्गेन । एतच्च प्राकृतलक्षणयोगेन साम्यज्ञानम् । ये त्वञ्जल्यादिमानेन साम्यं दोषादीनां वदन्ति **चरकभोजादयः,** तैरपि प्राकृते मानाभावात् साम्यगमकं स्वास्थ्यमेव स्वीकृतं तस्याञ्जल्यादिमाननिर्देशात्; तस्मात्तदेवापरत्रापि स्वास्थ्यज्ञापनमस्त्विति भावः । चरकेऽपि समस्तस्वस्थपुरुषस्य दोषादेरञ्जल्यादिमानमुक्तं स्वरूपख्यापनार्थं; स्वरूपकथनं च योगिनां तथा भिषजां रसादिवैषम्यमानप्रतीत्या तत्पोषकस्यापि द्रव्यस्य विषमोपयोगार्थतयेत्यभिप्रायः ॥ ३७ ॥ ३८ ॥

**दोषादीनां त्वसमतामनुमानेन लक्षयेत् ॥**
**अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ॥ ३९ ॥**
**स्वस्थस्य रक्षणं कुर्यादस्वस्थस्य तु बुद्धिमान् ॥**
**क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक् ॥**
**तावद्यावदरोगः स्यादेतत् साम्यस्य लक्षणम् ॥ ४० ॥**

अथ दोषादीनामसमता कथं ज्ञेयेत्याह—दोषादीनां त्वसमतामित्यादि । असमता वृद्धिर्हानिर्वा । अनुमानेनेति दोषादिक्षयवृद्धिप्रतिपादितनैसर्गिकेणानुमानेन । तत्तद्दोषाद्यसमतायामनुगतं सामान्येन लिङ्गं दर्शयंश्चिकित्सासूत्रसंग्रहमाह—अप्रसन्नेत्यादि । अप्रसन्नेन्द्रियत्वं सर्वदोषादिविकारमात्रगतत्वेनोक्तं, यतोऽवश्यं विकारे दुःखकारिणि मनोवाक्स्पर्शादिषु वाऽन्यतममिन्द्रियं विकृततया अप्रसन्नं भवति । बुद्धिमानित्यनेन विशेषविकृतवातादिलिङ्गज्ञानवानुच्यते । क्षपयेदिति वृद्धान्, बृंहयेदिति क्षीणान् । क्षपणवर्धनावध्युपदर्शनं यावदरोगः स्यादिति । कथमियदवधि क्षपणं वर्धनं वा कर्तव्यमित्याह—एतत् साम्यस्य लक्षणमिति । एतदरोगत्वं दोषधातुमलसाम्यस्य स्वास्थ्यस्य लक्षणं, स्वास्थ्यार्थो च चिकित्सेति भावः ॥ ३९ ॥ ४० ॥

**समदोषः समाग्निश्च समधातुमलक्रियः ॥**
**प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ४१ ॥**

## इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

अथारोग्यमेव स्वास्थ्यरूपं कथं ज्ञेयमित्याह—समदोष इत्यादि । समदोषत्वमिदं यद्यपि ऋत्वहोरात्रावस्थानियततत्तद्दोषवृद्धिक्षययुक्तत्वेन नास्ति, तथाऽपि तस्याल्पत्वेनाव्यपदेश्यस्यासंभवाद् व्यपदेश्यदोषवैषम्यविरहि समदोषत्वमिह गृह्यते; अत एव सुस्थ इत्यभिधीयत इति पारिभाषिकमुत्तेजकदोषवैषम्यविरहिदोषसाम्यं स्वास्थ्यमुक्तम् । सुष्ठु निर्विकारत्वेनावतिष्ठत इति स्वस्थः । समदोषत्वमेव कुतो ज्ञायत इत्याह–समाग्निः समधातुमलक्रिय इति । समा प्राकृती धातूनां मलानां च क्रिया प्राकृतकर्मरूपा यस्य स तथा;

अत्र क्रियाग्रहणं समक्रिययैव धातुमलानां परोक्षाणां प्रायः साम्यावगतिरिति सूचनार्थं; धातुग्रहणेन उपधात्वादीनां च धारकाणां ग्रहणम् । अग्न्यादिसमतयैव दोषाः समा लक्ष्यन्ते; एतेन च व्याख्यानेन यदुच्यते दोषसाम्येनैवाग्न्यादिसाम्यं लब्धं तत् किं पुनरुच्यत इति निरस्तं भवति । अथ समाग्नित्वाद्यप्यन्तर्वर्तितया दुर्विज्ञेयं कथं ज्ञेयमित्याह—प्रसन्नात्मेन्द्रियमना इति । आत्मादिप्रसन्नता हि दुःखरूपाग्न्यादिवैषम्यात्मकविकारविरहितत्वेन भवति; न हि दुःखयोगे सत्यात्मादिप्रसन्नता संभवति, आत्मादिप्रसादश्च आत्मनि व्यक्त एव, परमात्मनि च प्रसादोऽवगम्यत इति भावः । आत्मादित्रयाभिधानं च त्रिभिरेव मिलितैर्निर्दुःखताज्ञानरूपप्रसन्नतानुभवात्, यदुक्तं—"आत्मा ज्ञः करणैर्योगाज् ज्ञानं त्वस्य प्रवर्तते" (च. शा. अ. १) इति । करणानि च ज्ञाने मनःसहितानीन्द्रियाणि, तेन प्रसन्नात्मेन्द्रियमनस्त्वमेव स्वास्थ्यलक्षणमव्यभिचारि व्यक्तं च; तत्परिकरतया वैद्यकसिद्धान्तोपयुक्ततया च समदोषत्वाद्यभिधानमिति युक्तं पश्यामः । अन्ये तु समदोषत्वं स्वास्थ्यलक्षणमभिधाय समाग्न्यादिविशेषणानामधिकमपि प्रयोजनमिच्छन्ति, यतोऽग्निधातुमलात्ममनइन्द्रियाणीति पक्षत्रयापेक्षाच्चिकित्साविशेषसूचनार्थमग्न्याद्यभिधानं, तेनाग्न्यपेक्षया क्वाथादिप्रयोगस्तथा रसदुष्टत्वाद्यपेक्षया रसादिशुद्धिकारकचिकित्साभिधानं शास्त्रोक्तं सूचितं भवति, तथा मनस्करक्षीरघृतादिप्रयोगं तथेन्द्रियहितचक्षुष्यादिविधानं च सूचितं भवतीत्यादि वदन्ति, तच्च सर्वं शास्त्रे बहुधा प्रतिपादितम्, इह लक्षणावसरे न संगतमिति[२] ॥ ४१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यटीकायां भानुमत्यां सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयोऽध्यायः पञ्चदशः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

**अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायोक्तस्वस्थाधिकारात् स्वस्थविषयकर्णव्यधबन्धविधिरुच्यते । तेनाधिकारानुवृत्तिरिह संबन्धः । उच्यते हि—अधिकारानुवृत्तिः शेषत्वं तात्पर्यं[३] जात्यभेदो नामकीर्तनं चेति पञ्चाध्यायसंबन्धाः । स्वस्थे च बाले कर्णव्यधः, तदुक्तं **भोजे**—"कालेष्वेतेषु दोषाणां बालानां कर्णयोर्व्यधः । सह गात्रैर्विवर्धन्ते कर्णपाल्यश्च खानि च" इति ॥ १ ॥ २ ॥

**रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते । तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं**

---

१ 'प्रसन्नादेव गम्यते' इति मु. । २ अस्याग्रे 'सर्वे शुद्धाः' इत्यधिकं पठ्यते हस्तलिखितपुस्तके । ३ 'तादर्थ्यं' इति मु. ।

धात्र्यङ्के कुमारधराङ्के वा कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्र आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेनर्जु विध्येत्, प्रतनुकं सूच्या, बहलमारया; पूर्वं दक्षिणं कुमारस्य, वामं कुमार्याः; ततः पिचुवर्तिं प्रवेशयेत्। शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति जानीयात्, निरुपद्रवतया तद्देशविद्धमिति ॥ ३ ॥

तत्राज्ञेन यदृच्छया विद्धासु[१] सिरासु कालिका-मर्मरिका-लोहितिकासूपद्रवा भवन्ति। तत्र, कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति; मर्मरिकायां वेदना ज्वरो ग्रन्थयश्च; लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्वीत ॥ ४ ॥

रक्षार्थे **कुमारतन्त्रं** "कर्णव्यधे कृते बालो न ग्रहैरभिभूयते। भूष्यतेऽस्य मुखं तस्मात् कार्यस्तत्कर्णयोर्व्यधः" इति। यद्यपि च कर्णयोर्व्यधेन व्रणिनि बाले रक्षोभयं भवति, तथाऽपि तदल्पकालं प्रतिकर्तव्यं च, तेन चिरकालं रक्षार्थं तदल्पं त्यज्यत एव, यथादोषमल्पाग्नेर्विरेचनं चिरकालाग्निवृद्धिकारकं तत्कालमल्पाग्निमान्द्यकारकमपि क्रियते। कर्णव्यधस्तु कुलस्थित्या त्रिवर्षे पञ्चवर्षे वा बाले कर्तव्यः। स त्विह संवत्सरादिभाद्रं मासमारभ्य षष्ठे मासे माघे वा सप्तमे फाल्गुने कर्तव्य इत्याह—तौ तु षष्ठ इत्यादि। मुहूर्ताः शिवभुजगादयः; तिथ्यादिप्राशस्त्यं ज्योतिषशास्त्रे ज्ञेयम्। अभिसान्त्वनं बालस्य कर्णव्यधशब्दभयपरिहारार्थम्। दैवकृते छिद्रे इति दैवेन कर्णव्यधार्थं सूर्यालोकदृश्यमानप्रतनुप्रदेशरूपं सिरादिभी रहितं निर्लोहितागमनं च कृतमस्तीति भावः। प्रतनुकं पत्तलं, बहलं घनं वदन्ति। अत्र केचिद्वदन्ति—यतः सिराव्यधाध्याये "कर्णयोश्चतस्रः, तासां शब्दवहामेकैकां परिहरेत्" (शा. अ. ८) इति वक्ष्यति, तेन तदधिकसिराभिधानमिहानुक्तमिति; किं तु तत्र स्थूलविभागेन स्थूलसिराचतुष्कमुक्तम्, इह तु सूक्ष्मसिराव्यधेनाधिकं वक्तव्यं, यतो **भोजे**ऽपि "लोहिता मर्मरी कृष्णाः कर्णपालिश्रिताः सिराः। तासां तु व्यधने दोषाननुपूर्वेण मे शृणु ॥ मन्यास्तम्भोऽपतानश्च शूलो वा लोहिताव्यधात्। वेदना ग्रन्थयश्चैव मर्मरीव्यधनात् स्मृताः ॥ कालिकाव्यधनाच्छोथो ज्वरो दाहश्च जायते" इति। त्रयः स्थूलविभागेनात्र पठिताः सिराः, तन्त्रान्तरे सूक्ष्मविभागेन द्वासप्ततिः पठ्यन्ते। एतत्सिरात्रयवर्जनं च दैवकृतच्छिद्रव्यधादेव भवति। यथास्वमिति ज्वरादिचिकित्सयैव ॥ ३ ॥ ४ ॥

क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्तित्वाद्दोषसमुदायादप्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्तिमुपहृत्याशु मधुकैर-

१ 'विद्धायां सिरायां ज्वरो दाहः श्वयथुर्वेदनाग्रन्थिमन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति' इति ता.।

ण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरालेपयेत्तावद्यावत् सुरूढ इति; सुरूढं चैनं पुनर्विध्येत्; विधानं तु पूर्वोक्तमेव ॥ ५ ॥

दोषसमुदायादिति पूर्वमेव व्यधानन्तरं वा दोषप्रकोपात् । संरम्भः श्वयथुदाहादियोगः ॥ ५ ॥

तत्र सम्यग्विद्धमामतैलेन परिषेचयेत्, त्र्यहात्त्र्यहाच्च वर्तिं स्थूलतरां दद्यात्, परिषेकं च तमेव ॥ ६ ॥

आमतैलमिति अभिनवापक्वतैलम् ॥ ६ ॥

अथ व्यपगतदोषोपद्रवे कर्णे वर्धनार्थं लघु वर्धनकं कुर्यात् ॥ ७ ॥

वर्धनकमपामार्ग-कार्पास-निम्बादिकाष्ठमयं दोषापेक्षया प्रकृत्यपेक्षया वा क्रियते ॥ ७ ॥

एवं विवर्धितः कर्णश्छिद्यते तु द्विधा नृणाम् ॥
दोषतो वाऽभिघाताद्वा सन्धानं तस्य मे शृणु ॥ ८ ॥

दोषत इति शरीरदोषक्षोभात् ॥ ८ ॥

तत्र समासेन पञ्चदशकर्णबन्धाकृतयः । तद्यथा—नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति[1] । तेषु, पृथुलायतसमोभयपालिर्नेमिसन्धानकः; वृत्तायतसमोभयपालिरुत्पलभेद्यकः; ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः; अभ्यन्तरदीर्घैकपालिरासङ्गिमः; बाह्यदीर्घैकपालिर्गण्डकर्णः; अपालिरुभयतोऽप्याहार्यः, पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः; स्थूलाणुसमविषमपालिर्व्यायोजिमः; अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः; बाह्यदीर्घैकपालिरितराल्पपालिरर्धकपाटसन्धिकः । तत्र दशैते कर्णबन्धविकल्पाः साध्याः; तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः । संक्षिप्तादयः पञ्चासाध्याः । तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः; अनधिष्ठानपालिः पर्यन्तयोः क्षीणमांसो हीनकर्णः; तनुविषमाल्पपालिर्वल्लीकर्णः; ग्रथितमांसस्तब्धसिराततसूक्ष्मपालिर्यष्टिकर्णः; निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठक इति । बन्ध्येष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति ॥ ९ ॥

भवन्ति चात्र—

एकैव तु भवेत् पालिः स्थूला पृथ्वी स्थिरा च या ॥
तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् ॥ १० ॥

---

१ अस्याग्रे 'तेषां नामभिरेवाकृतयो व्याख्याताः' इत्यधिकश्चक्रपाणिसंमतः पाठो भवेत्, टीकायां तथा व्याख्यातत्वात् ।

गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता ॥
कर्णपालीमपालेस्तु कुर्यान्निर्लिख्य शास्त्रवित् ॥ ११ ॥
यस्य पालिद्वयमपि कर्णस्य न भवेदिह ॥
कर्णपीठं समे मध्ये तस्य विद्धा विवर्धयेत् ॥ १२ ॥
आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः ॥
बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् ॥ १३ ॥

तत्रेत्यादिना बन्धविशेषार्थं तथाऽसंधेयकर्णपरित्यागार्थं च पाल्याकृतिविशेषानाह। यद्यपि दश कर्णा अत्र बन्धनार्हा वक्तव्याः, पञ्चासाध्यत्वान्न बन्ध्याः, तथाऽपि पञ्चदशकर्णबन्धाकृतय इति वचनादबन्ध्यानामपि बन्ध्यसंभावनामात्रं बन्धसंबन्धाज्ज्ञेयम्। ये तु 'कर्णाकृतय' इति पठन्ति तद्ग्रन्थः स्पष्ट एव। तद्यथेत्युपदर्शनेनामी नेमिसंन्धानकादयो नित्यकर्मदर्शनादभ्यासाच्च प्रायो ज्ञातव्याः। पृथुलायत इत्यादिना नेमिसन्धानकादिविषयमाह। नेमिसन्धानक इति नेमिसन्धानबन्धेन बन्धनीयः। एवमुत्पलभेद्यकादावपि व्याख्येयम्। एतद्बन्धानां चान्वर्थमुक्तं यत्—तेषां नामभिराकृतयो व्याख्याता इति। पृथुले विस्तृते, समे समप्रमाणे, नेमिचक्रस्येव। वृत्तेत्यादौ पूर्वस्माद्वृत्तत्वं पाल्योर्विशेषः; अत एवोत्पलतुल्यतया उत्पलभेद्यको बन्धो भवति। ह्रस्वेत्यादावनतिदीर्घत्वं विशेषः, अत्रानेकशो बल्लूरवत् पाटनं कृत्वा वल्लूरकं बन्धं वदन्ति। एते त्रयो बन्धाः समोभयपालयः। अभ्यन्तरो गण्डदेशः, एतद्विपर्ययेण बाह्यः; अत्र दीर्घैकपालिकं बन्धद्वयं; तत्राभ्यन्तरैकपालेर्बहिरासञ्जनादासङ्गिमः, बाह्यैकपालेस्तु गण्डात् कृत्तेन मांसेन योजनाद् गण्डकर्णः; एतयोः सन्धानश्लोकौ केचित् पठन्ति, यथा—"एकैव तु भवेत् पालिः स्थूला पृथ्वी च या स्थिरा। तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् ॥"; तथा—"गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता। कर्णपालिमपालेस्तु कुर्यान्निर्लिख्य शास्त्रवित्" इति। अत्रापालिः ईषत्पालिः; आहार्य इत्युभयपार्श्वतोऽप्याहृत्य मांसं योजनीयः। यस्य पालिद्वयं मूलत एव छिन्नं स पीठोपमपालिः; निर्वेधिम इति पुनः प्रदेशान्तरवेधेन निष्पन्नः। अस्य लक्षणं केचित् पठन्ति—"यस्य पालिद्वयमपि कर्णस्य न भवेदिह। कर्णपीठं समे मध्ये तस्य विद्धा विवर्धयेत्" इति। एतदपालिकं बन्धद्वयम्। अणुस्थूलसमविषमपालिरिति अणुस्थूलत्वाभ्यां पालिरेका समा, अपरा विषमा यस्य स तथा; तत्र वैषम्यं लिखित्वा बन्धेन योज्यत इति व्यायोजिमः। अभ्यन्तरदीर्घैकपाल्या बाह्यपालेरपिधानाद् बाह्यः कपाटसन्धिकः। बाह्यदीर्घैकपाल्या त्वभ्यन्तरह्रस्वपालेरल्पपिधानादर्धकपाटसन्धिको भवति। अत्रैव पठन्ति—"बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत्" इति। एते च त्रयो बन्धा विषमपालयः। दशैते बन्ध्या इति एतेषु बन्धः कार्यकरो भवति। असाध्यानाह—तत्रेत्यादि। शुष्कशष्कुलिरिति शुष्कपाल्यधिष्ठानः। इतरा गण्डदेशानुगा अल्पा पालिर्यस्य। अनधिष्ठानपालिरिति अल्पत्वेनाविद्यमानपाल्यधिष्ठान इत्यर्थः। पर्यन्तयोरिति गण्डबाह्यकर्णयोः। तनुः प्रतनुः विषमा च स्थूलाल्पत्वाभ्यां

पालिर्यस्य स तथा । ग्रथितमांससिरासन्तता सूक्ष्मा च पालिर्यस्य स यष्टीकर्णः । निर्मांसेत्यादौ काकौष्ठसदृशत्वात् काकौष्ठकः । एते च पञ्च पालयोऽपि पाल्यल्पताक्षीणरक्तत्वादिना बन्धनायोग्या एव; कथंचिद्बद्धा अपि न सिध्यन्तीत्यसाध्याः । एतेषामसाध्यत्वे हेतुमाह—बन्ध्येष्वपीत्यादि; किंवा पूर्वेषामेव दशानां बन्ध्यानामसिद्धौ हेतुमाह—बन्ध्येष्वपीत्यादि । दाहादिभिरुपद्रवैर्बन्धनार्हा अपि न सिध्यन्तीत्यर्थः ॥ ९–१३ ॥

**अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसंभारं, विशेषतश्चात्रोपहरेत् सुरामण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णं चेति; ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतं च कृत्वा, बन्धमुपधार्य, छेद्यभेद्यलेख्यव्यधनैरुपपन्नैरुपपाद्य, कर्णशोणितमवेक्ष्य[1] दुष्टमदुष्टं वेति; तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे शीतोदकपयोभ्यां श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ, पुनरवलिख्यानुन्नतमहीनमविषमं च कर्णसन्धिं सन्निवेश्य, स्थितरक्तं संदध्यात् । ततो मधुघृतेनाभ्यज्य, पिचुप्रोतयोरन्यतरेणावगुण्ठ्य, सूत्रेणानवगाढमनतिशिथिलं च बद्ध्वा, कपालचूर्णेनावकीर्याचारिकमुपदिशेत्, द्विव्रणीयोक्तेन च[2] विधानेनोपचरेत् ॥ १४ ॥**

अतोऽन्यतममित्यादि । विशेषतश्चोपहरेदिति सुरादिभिरत्र प्रक्षालनाद्युपयोगस्य वक्ष्यमाणत्वात् । पुरुषशब्देन जातिवचनेनाङ्गनालाभेऽप्यङ्गनावचनं विशेषेण कर्णव्यधेऽधिकृतत्वदर्शनार्थम् । यदुक्तं **भोजे**—"सकुण्डलानि दीप्तानि शोभन्ते वदनानि तु । भोज! स्त्रीणां विशेषेण कृतैः कर्णविभूषणैः" इति । ग्रथितकेशत्वं व्रणे केशसंबन्धपरिहारार्थम् । लघुभोजनं विदाहपरिहारार्थम् । छेद्यादिकर्तव्ये बन्धनानुगुणं यत्तत् कर्तव्यम् । कपालचूर्णमिह शरावचूर्णमिच्छन्ति । आचारिकमिति व्रणितोपासनीयवक्ष्यमाणव्रणिताचारं कर्तव्यतयोपदिशेत् । द्विव्रणीयोक्तेनेति आलेपादिनाऽत्र योग्येन ॥ १४ ॥

**भवति चात्र—**

**विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम् ॥**
**व्यवायमग्निसंतापं वाक्श्रमं च विवर्जयेत् ॥ १५ ॥**

अत्र विशेषेण वर्जनीयान्याह—विघट्टनमित्यादि । विघट्टनं चालनम् ॥ १५ ॥

**न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा संदध्यात् । स हि वातदुष्टे रूढोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान्, अतिप्रवृत्तरक्ते श्यावशोफवान्, क्षीणोऽल्पमांसो न वृद्धिमुपैति ॥ १६ ॥**

---

१ 'अवेक्षेत तद्दुष्ट°' इति पा० । २ 'चान्नपानेनोपचरेत' इति ता. ।

अशुद्धरक्तमिति वातादिदुष्टरक्तम् । वातदुष्टे 'रक्ते' इति शेषः, परिपुटनम् । अतिप्रवृत्ते रक्ते श्यावत्वं शोथवत्त्वं च ज्ञेयम् । क्षीण इति क्षीणरक्तः । तस्य सन्धाने दोषा अल्पमांसो न वृद्धिमुपयाति चेति ज्ञेयम् ॥ १६ ॥

**आमतैलेन त्रिरात्रं परिषेचयेत्, त्रिरात्राच्च पिचुं परिवर्तयेत् । स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदैनं शनैः शनैरभिवर्धयेत् । अतोऽन्यथा संरम्भदाहपाकरागवेदनावान्, पुनश्छिद्यते वा ॥ १७ ॥**

अतोऽन्यथेति असम्यग्गूढवर्धने ॥ १७ ॥

**अथाप्रदुष्टस्याभिवर्धनार्थमभ्यङ्गः । तद्यथा—गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं राजसर्षपजं च यथालाभं संभृत्यार्कालर्कबलाऽतिबलाऽनन्ताऽपामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गपयस्याप्रतीवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात् ॥ १८ ॥**

**स्वेदितोन्मर्दितं कर्णं स्नेहेनैतेन योजयेत्[1] ॥**
**अथानुपद्रवः सम्यग्बलवांश्च विवर्धते ॥ १९ ॥**
**( यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्तनं हितम् ॥**
**शतावर्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः ॥ २० ॥**
**तैलं विपक्कं सक्षीरमभ्यङ्गात् पालिवर्धनम्[2] ॥ )**

कर्णवर्धनार्थं सम्मर्दनयोगिस्नेहमाह—तद्यथा गोधेत्यादि । प्रतुदा लट्वादयोऽन्नपानवक्तव्याः, विष्किरा लावादयः, आनूपा महिषादयः । राजसर्षपः श्वेतसर्षपः, तस्य तैलम्, एवं हि स्नेहोऽयम् । पयश्चात्र पाकार्थं द्रवान्तरानुक्तेश्चतुर्गुणमेव । ये तु पयःस्थाने सर्पिः पठन्ति, तन्मते जलसाध्योऽयम्; अन्ये तु चतुःस्नेहेनेव पयःसाध्यं पठन्ति । अलर्कः अर्कभेदः, जलशूको जलतृणासक्तो भवति 'जलमुँज्ञा'[3] इति प्रसिद्धः । प्रतीवापः कल्कः । ये त्वत्र मधुरगणं पठन्ति पयस्यां च, तन्मते पयस्या क्षीरविदारी । तैलं वेति तैलमेव वा ॥ १८–२० ॥

**ये तु कर्णा न वर्धन्ते स्वेदस्नेहोपपादिताः ॥ २१ ॥**
**तेषामपाङ्गदेशे तु कुर्यात् प्रच्छानमेव तु ॥**
**बाह्यच्छेदं न कुर्वीत व्यापदः स्युस्ततो ध्रुवाः ॥ २२ ॥**
**बद्धमात्रं तु यः कर्णं सहसैवाभिवर्धयेत् ॥**
**आमकोशी समाध्मातः क्षिप्रमेव विमुच्यते ॥ २३ ॥**

---

१ 'कर्णमनेन म्रक्षयेद्बुधः' इति ता. । २ अयं पाठस्ताडपत्रपुस्तके न पठ्यते । ३ 'जलमुखा' इति मु. ।

एवमवर्धमानकर्णविधानान्तरमाह—ये स्विल्यादि । अपाङ्गछेद्यमिति अपाङ्गमनुकर्णं, तिर्यक् छेद्यं, बाह्यछेदे तु व्याधयः स्युस्ततो ध्रुवाः; तत्र छेद्यं कर्णमुद्रिकाया अधस्तिर्यक् कर्तव्यं; प्रच्छानमपि छेददेश एव, अन्ये बन्धनदेशे वदन्ति ॥ २१–२३ ॥

**जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः ॥**
**सुरूढोऽवेदनो यश्च तं कर्णं वर्धयेच्छनैः ॥ २४ ॥**

संधितकर्णस्य वर्धनयोग्यावस्थामाह—जातरोमेत्यादि ॥ २४ ॥

**असिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह ॥**
**यो यथा सुनिविष्टः स्यात्तं तथा विनियोजयेत् ॥ २५ ॥**

कर्णबन्धानां कर्णलताविशेषे बहुविधत्वमाह—असिता इत्यादि । एतेनाविष्कृता एते दश बन्धा उक्ता इति भावः । यो यथेति यः कर्णो यथा सुनिविष्टो भवति स तेनोक्तेनानुक्तेन च बन्धनेन बन्धनीय इत्यर्थः ॥ २५ ॥

**( कर्णपाल्यामयान्नृणां पुनर्वक्ष्यामि सुश्रुत ! ॥**
**कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः ॥ १ ॥**
**द्विधा वाऽप्यथ संसृष्टाः कुर्वन्ति विविधा रुजः ॥**
**विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके ॥ २ ॥**
**दाहविस्फोटजननं शोफः पाकश्च पैत्तिके ॥**
**कण्डूः सश्वयथुः स्तम्भो गुरुत्वं च कफात्मके ॥ ३ ॥**
**यथादोषं च संशोध्य कुर्यात्तेषां चिकित्सितम् ॥**
**स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥ ४ ॥**
**मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ॥**
**य एवं वेत्ति दोषाणां चिकित्सां कर्तुमर्हति ॥ ५ ॥**
**अत ऊर्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ॥**
**उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो व्रणी ॥ ६ ॥**
**अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ॥**
**स्रावी च दाहवांश्चैव शृण्वेषां क्रमशः क्रियाम् ॥ ७ ॥**
**अपामार्गः सर्जरसः पाटलालकुचत्वचौ ॥**
**उत्पाटके प्रलेपः स्यात्तैलमेभिश्च पाचयेत् ॥ ८ ॥**
**शम्पाकशिग्रुपूतीकान् गोधामेदोऽथ तद्वसाम् ॥**
**वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥ ९ ॥**
**लेपमुत्पुटके दद्यात्तैलमेभिश्च साधितम् ॥**
**गौरीं सुगन्धां सश्यामामनन्तां तण्डुलीयकम् ॥ १० ॥**

---

१ 'सन्निविष्टः' इति मु. ।

श्यावे प्रलेपनं दद्यात्तैलमेभिश्च साधितम् ॥
पाठां रसाञ्जनं क्षौद्रं तथा स्यादुष्णकाञ्जिकम् ॥ ११ ॥
दद्याल्लेपं सकण्डूके तैलमेभिश्च साधितम् ॥
व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥ १२ ॥
मधुकक्षीरकाकोलीजीवकाद्यैर्विपाचितम् ॥
गोधावराहसर्पाणां वसाः स्युः कृतबृंहणे ॥ १३ ॥
प्रलेपनमिदं दद्यादवसिच्यावमन्थके ॥
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ॥ १४ ॥
तैलमेभिश्च संपक्वं शृणु कण्डूमतः क्रियाम् ॥
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ॥
एतैरालेपनं दद्यात्तैलमेभिश्च साधितम् ॥ १५ ॥
ग्रन्थिके गुटिकां पूर्वं स्रावयेदवपाट्य तु ॥
ततः सैन्धवचूर्णं तु घृष्ट्वा लेपं प्रदापयेत् ॥ १६ ॥
लिखित्वा संस्नुतं घृष्ट्वा चूर्णैर्लोध्रस्य जम्बुले ॥
क्षारेण प्रतिसार्यैनं शुद्धं संरोपयेत्ततः ॥ १७ ॥
मधुपर्णी मधूकं च मधुकं मधुना सह ॥
लेपः स्राविणि दातव्यस्तैलमेभिश्च साधितम् ॥ १८ ॥
पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः ॥
जीवकाद्यैः ससर्पिष्कैर्दह्यमानं प्रलेपयेत् ॥ १९ ॥ )

कर्णपाल्यामयानित्यादीन् केचिदत्र पठन्ति; तानन्ये मिश्रके चिकित्सिते पठितत्वादिह न पठन्ति । तथाऽपरे पृथगित्यादिना चतुरः पाल्यामयान् पठन्ति । तथाऽपरे उत्पाटनादीनपि सचिकित्सितान् पठन्ति । एतद्द्वयमनार्षं वदन्ति ॥ ( १-१९ ) ॥

विश्लेषितायास्त्वथ नासिकाया वक्ष्यामि सन्धानविधिं यथावत् ॥
नासाप्रमाणं पृथिवीरुहाणां पत्रं गृहीत्वा त्ववलम्बि तस्य ॥ २६ ॥
तेन प्रमाणेन हि गण्डपार्श्वादुत्कृत्य बद्धं त्वथ नासिकाग्रम् ॥
विलिख्य चाशु प्रतिसंदधीत तत् साधुबन्धैर्भिषगप्रमत्तः ॥ २७ ॥
सुसंहितं सम्यगतो यथावन्नाडीद्वयेनाभिसमीक्ष्य बद्ध्वा ॥
प्रोन्नम्य चैनामवचूर्णयेत्तु पतङ्गयष्टीमधुकाञ्जनैश्च ॥ २८ ॥
संछाद्य सम्यक् पिचुना सितेन तैलेन सिञ्चेदसकृत्तिलानाम् ॥
घृतं च पाय्यः स नरः सुजीर्णे स्निग्धो विरेच्यः स यथोपदेशम् ॥ २९ ॥
रूढं च सन्धानमुपागतं स्यात्तदर्धशेषं तु पुनर्निकृन्तेत् ॥
हीनां पुनर्वर्धयितुं यतेत समां च कुर्यादतिवृद्धमांसाम् ॥ ३० ॥

**(नाडीयोगं विनौष्ठस्य नासासन्धानवद्विधिम् ॥**
**य एवमेव जानीयात् स राज्ञः कर्तुमर्हति ॥ ३१ ॥)**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने कर्णव्यधबन्धविधिर्नाम षोडशोऽध्यायः ॥ १६ ॥**

अन्ये नासासन्धानविधिमत्र 'विश्लेषिताया' इत्यादिना पठन्ति । स च सुबोध एव । परमेनमप्यनार्षं वदन्ति । वैकृतफलत्वात् संश्लिग्धसन्धानमपि[2] केचित् पठन्ति । दाक्षिणात्यास्तु कर्णकोटिव्यधनं तदुत्थापनं च सचिकित्सितं पठन्ति, तमप्यनार्षं वदन्ति ॥२६-३१॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने कर्णव्यधबन्धविधिर्नाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

**अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये शोथवान् भवतीत्यनेन शोथोऽभिहितः, तस्य चामता पक्वता च चिकित्साविशेषार्थं ज्ञातव्या भवति, अतस्तदभिधानार्थमामपक्वैषणीयोऽभिधीयते । एषणं ज्ञानं, तेनामपक्वमधिकृत्य कृतोऽध्यायो ज्ञेयः; पच्यमानता चाप्यामग्रहणगृहीता इह वक्तव्या ॥ १ ॥ २ ॥

**शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिहिता अनेकाकृतयः, तैर्विलक्षणः पृथुर्ग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसंघातः शरीरैकदेशोत्थितः 'शोफ' इत्युच्यते ॥ ३ ॥**

ग्रन्थ्यादिषु शब्दविशेषेषु[3] प्राय इहामपक्वलक्षणलक्षणीयं व्रणशोथं भेदेन दर्शयन्नाह—शोथसमुत्थाना इत्यादि । शोथरूपतया उत्तिष्ठन्त इति शोथसमुत्थानाः प्रायेणाभिहिता इति संबन्धः; तेन केचिन्नाभिहितास्तन्त्रान्तरोक्ताः प्रमेहक्षुद्रपिडकादयः, तेभ्यो विलक्षण इति विलक्ष्यमाणविशिष्टलक्षणत्वादेव विलक्षणः । पृथुर्विस्तीर्णः । ग्रथितो ग्रन्थिरिवोन्नतः । समो विषमो वेति वा शब्दः प्रत्येकं पृथुत्वादिभिर्योजनीयः । संघात इति दोषदूष्यसमुच्छ्रायः । त्वङ्मांसस्थायीत्यनेन त्वङ्मांसस्थत्वमवश्यंभावितयोक्तं, तेन व्रणशोथस्येतरवास्तुस्थत्वमपि ज्ञेयमत्र भवत्येव । एकदेशोत्थितत्वेन सर्वसरशोथादपाकिनो व्यावर्तयति । शोथ इत्युच्यत इति प्रकरणाद्व्रणशोथ उच्यत इति ज्ञेयम् ॥ ३ ॥

---

१ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते । २ 'संश्लिग्धसंतानत्वाच्च सन्धानमपि' इति मु. ।
३ 'शब्दविशेषेषु' इति मुद्रितपुस्तके न पठ्यते ।

**स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः । तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः । तत्र, वातशोफः कृष्णोऽरुणो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति; पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसार्योषादयश्चात्र वेदनाविशेषा भवन्ति; श्लेष्मश्वयथुः पाण्डुः कठिनः स्निग्धः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति; सर्ववर्णवेदनः सन्निपातश्वयथुः[1]; पित्तवच्छोणितजोऽतिकृष्णश्च; पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च ॥ ४ ॥**

तस्येत्यादि । दोषरूपव्यञ्जनैरिति दोषरूपैः कृष्णादिभिः, व्यञ्जनैश्च तदितरैर्वेदनादिभिर्लिङ्गैः; किंवा दोषरूपख्यापकैरित्यर्थः । तोदादय इत्यादिशब्देन भेदच्छेदादयो वातवेदनाविशेषा ग्राह्याः । एवं पित्तश्लेष्मणोरप्यादिशब्दार्थ उन्नेयः । वातादिसूत्रे शोणितात् पश्चात् सूत्रितः संनिपातो विवरणेऽग्रेऽभिधीयते, वातादिलक्षणातिदेशस्याव्यवधानेन ज्ञापनार्थं; सूत्रे तु वाताद्यनन्तरं शोणितपाठो वातादिधर्मासञ्जननार्थम् ॥ ४ ॥

**स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न संभावितः[2] प्रशमयितुं क्रियाविपर्ययाद्बहुत्वाद्वा दोषाणां तदा पाकाभिमुखो भवति । तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमुपधारय । तत्र, मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्यं मन्दवेदनताऽल्पशोफता चामलक्षणमुद्दिष्टं; सूचीभिरिव निस्तुद्यते, दश्यत इव पिपीलिकाभिः, ताभिश्च संसर्प्यत इव, छिद्यत इव शस्त्रेण, भिद्यत इव शक्तिभिः, ताड्यत इव दण्डेन, पीड्यत इव पाणिना, घट्ट्यत इव चाङ्गुल्या, दह्यते पच्यत इव चाग्निक्षाराभ्याम्, ओषचोषपरीदाहाश्च भवन्ति, वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति, आध्मातबस्तिरिवाततश्च शोफो भवति, त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासाभक्तारुचिश्च पच्यमानलिङ्गं; वेदनोपशान्तिः पाण्डुताऽल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्याऽवपीडिते प्रत्युन्नमनं बस्ताविवोदकसंचरणं पूयस्य प्रपीडयत्येकमन्तमन्ते चावपीडिते मुहुर्मुहुस्तोदः कण्डूरुन्नतता व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् । कफजेषु तु रोगेषु गम्भीरगतित्वाद्[3]भिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति; तत्र हि त्वक्सवर्णता शीतशोफता स्थैर्यमल्परुजताऽश्मवच्च घनता, न तत्र मोहमुपेयादिति ॥ ५ ॥**

---

१ 'सन्निपातश्वयथुः सर्वदोषलिङ्गोपेतः' इति ता. । २ 'शक्यते' इति ता. । ३ 'गम्भीरानुगतत्वात्' इति ता. ।

स यदेत्यादि । न संभावित इति न योजितः । क्रियाविपर्ययोऽसम्यक्त्वात् । बहुत्वाद्वा दोषाणामिति दोषाणां बहुत्वेन शमयितुं सम्यगुपक्रान्तोऽपि पाकाभिमुखो भवति । तस्येत्यनेन यद्यपि व्रणशोथः प्रत्यवमृश्यते तथाऽपि ग्रन्थ्यादीनामप्येतदेवामादिलक्षणं समानतयोक्तम् । तीव्रदाहोपद्रवे वेदनोपशम इति शान्तिः । कफजेष्वित्यादिना संपूर्णपाकालक्षणेऽपि पाकावधारणं क्वचिदाह—कफजे गम्भीरे तथा शस्त्रजे च गम्भीरे अन्तःपाके शीततादि भवति । तत्रान्तर्दाहादिना पाकादिकावधारणम् । न तत्र मोहमुपेयादिति शेषविदाहादिपूर्वलक्षणैः पाकं जानीयादित्यर्थः ॥ ५ ॥

**भवन्ति चात्र—**

**आमं विपच्यमानं च सम्यक्पक्वं च यो भिषक् ॥**
**जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ ६ ॥**

तस्करवृत्तय इति अज्ञानादपि निषिद्धचिकित्साकर्तृतया ॥ ६ ॥

**वातादृते नास्ति रुजा न पाकः पित्तादृते नास्ति कफाच्च पूयः ॥**
**तस्मात् समस्तान् परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः ॥ ७ ॥**
**कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य ॥**
**पचत्यतः शोणितमेव पाको मतोऽपरेषां विदुषां द्वितीयः[2] ॥ ८ ॥**

पाकस्य दोषत्रयजन्यतामाह—वातादृत इत्यादि । यद्यप्यत्र त्रयाणामपि पाककारणत्वमुक्तं तथाऽपि पाके कारणतया पित्तं प्रधानमेव, पूयत्वं च श्वेतत्वघनत्वाभ्यां कफकार्यम् । मतान्तरेण पाकमाह—कालान्तरेणेत्यादि । कालान्तरं विदाहावस्था, तत्र पित्तप्रकोपो विदाहकारणतया पित्तस्य भवति । वशे कृत्वेत्यायत्तौ कृत्वा, शीतत्वेन पाकप्रतिबन्धकावभिभूयेति यावत् । शोणितं पचतीत्यनेन शोणिताधारमांसादिपाकोऽपि लभ्यते, शोणितं तु मतान्तरेण दोषतया प्राधान्येन[3] साक्षादुक्तम् । एतच्च मतान्तरमविरुद्धत्वादप्रतिषेधेनानुमतमेव । पूर्वोक्तपाकेऽपि हि पित्तप्राधान्यमस्त्येव, पाकतया च शोणितमपि तत्र लभ्यत एव ॥ ७–८ ॥

**तत्र, आमच्छेदे मांससिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति । स यदा भयमोहाभ्यां पक्वमप्यपक्वमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमव-**

---

१ 'नर्ते रुजा वातमृते च पित्तं पाकः कफं चापि विना न पूयः । तस्माद्विपाकं परिपाककाले प्रयान्ति शोफास्त्रिभिरेव दोषैः' इति ता. । २ अस्याग्रे 'द्रव्याणां चन्दनादीनां दग्धानां श्वेतता यथा । तद्वत् पित्तोष्मणा दग्धं रक्तं पूयमिहोच्यते' इत्यधिकः श्लोकः पठ्यते ताडपत्रपुस्तके । ३ 'सातत्येन' इति ह. ।

दार्योत्सङ्गं महान्तमवकाशं कृत्वा नाडीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति ॥ ९ ॥

आमच्छेददोषे क्षतविद्रधिः विरुद्धक्षतेऽनन्तरभावी विद्रधिः । भयादिति भयादपि पाटनभीरुतया पक्वमपक्वमेव द्रढयति । उत्सङ्गः व्रणोत्सङ्गः कोटर इत्यर्थः ॥ ९ ॥

भवति चात्र—

यश्छिनत्त्यामम‍ज्ञानाद्यश्च पक्वमुपेक्षते ॥
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ १० ॥

आमच्छेदादिदोषमाह—यश्छिनत्तीत्यादि । अत्रामशब्देन पच्यमानस्यापि ग्रहणम् । श्वपचश्चण्डालः ॥ १० ॥

प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदातुरं भिषक् ॥
मद्यपं पाययेन्मद्यं तीक्ष्णं यो वेदनाऽसहः ॥ ११ ॥

शस्त्रकर्मणि प्रागुक्तमपि भोजनं विशेषार्थं प्रकरणागततया प्राह—प्रागित्यादि । वेदनासह इत्यकारप्रश्लेषात् ॥ ११ ॥

न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥
तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्मणि ॥ १२ ॥
प्राणो ह्याभ्यन्तरो नृणां बाह्यप्राणगुणान्वितः ॥
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम् ॥ १३ ॥

भोजनविशेषफलमाह–न मूर्च्छतीत्यादि । उक्तेष्विति भोजनीयत्वेनोक्तेषु मूढगर्भादिवर्जितेषु । प्राण इति बलम्; बाह्यप्राण आहारः, प्राणहेतुत्वादुच्यते ॥ १२ ॥ १३ ॥

अल्पो महान् वा क्रियया विना यः समुच्छ्रितः पाकमुपैति शोफः ॥
विशालमूलो विषमं विदग्धः स कृच्छ्रतां यात्यवगाढदोषः ॥ १४ ॥
आलेपविस्रावणशोधनैस्तु सम्यक्प्रयुक्तैर्यदि नोपशाम्येत् ॥
पच्येत शीघ्रं सममल्पमूलः सपिण्डितश्चोपरि चोन्नतः स्यात् ॥ १५ ॥

शोथहरक्रियाणामकरणे दोषं तथा करणे च पाकप्रतिबन्धाभावेऽपि फलं श्लोकद्वयेनाह—अल्पो महान् वेत्यादि । विषमं विदग्ध इति क्रियाव्यतिरेकेण विषममूलतया भवति । शीघ्रपाकादयो गुणा आलेपादिना दोषक्षपणाद्भवन्ति ॥ १४ ॥ १५ ॥

कक्षं समासाद्य यथैव वह्निर्वाय्वीरितः संदहति प्रसह्य ॥
तथैव पूयोऽप्यविनिःसृतो हि मांसं सिराः स्नायु च खादतीह ॥ १६ ॥

कक्षं समासाद्येत्यादिश्लोकं केचिदुक्तस्याप्यर्थस्य दृष्टान्तेन सूत्रग्रहणार्थं पठन्ति ॥ १६ ॥

**आदौ विम्लापनं कुर्याद्द्वितीयमवसेचनम् ॥**
**तृतीयमुपनाहं तु चतुर्थीं पाटनक्रियाम् ॥ १७ ॥**
**पञ्चमं शोधनं कुर्यात् षष्ठं रोपणमिष्यते ॥**
**एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ १८ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने आमपक्वैषणीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥**

आदौ विम्लापनमित्यादि च पठन्ति । तेन च वक्ष्यमाणषष्ठ्युपक्रमाणामन्तर्भावेन सप्तत्वं सुखबोधार्थमुच्यते । तत्र विम्लापनेन शोथविलयनं सर्वमुच्यते, विस्रावणेन तु रक्तस्रावणविरेचनादि गृह्यते, एवमपरेऽपि यथायोगमुपक्रमाः सर्वे चान्तर्भावनीयाः; किंवा षष्ठ्युपक्रमेषु प्राधान्यात् सप्तामी कथ्यन्त इति ॥ १७ ॥ १८ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुतातात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने आमपक्वैषणीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

**अथात आलेपनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायोक्तव्रणोपक्रमतया आलेपनं तदनुषङ्गेन च बन्धमभिधातुमालेपनीयोऽभिधीयते । आलेपनमधिकृत्य कृत इत्यालेपनीयः, तेन व्रणबन्धविधानमिह नोत्सूत्रम् । अन्ये तु 'आलेपव्रणबन्धविधिं' इति पठन्ति ॥ १ ॥ २ ॥

**आलेप आद्य उपक्रमः, एष सर्वशोफानां सामान्यः प्रधानतमश्च, तं च प्रतिरोगं वक्ष्यामः । (ततो बन्धः प्रधानं, तेन शुद्धिर्व्रणरोपणमस्थिसंधिस्थैर्यं च[1]) ॥ ३ ॥**

आलेप आद्य उपक्रम इति शोथभेषजप्रयोगापेक्षया लेपस्याद्यत्वमुक्तं, तेन द्विव्रणीयेऽपतर्पणस्याद्यत्वमुक्तं न विरोधि । सामान्य इति सर्वत्र शोथविहितत्वात् । प्रधानतमत्वमस्य प्रथमभूतशोथावस्थाप्रशमकत्वादेव । तस्य सर्वशोथसमानत्वेन यथावसरं वक्तव्यतामाह—तं प्रतीत्यादि । इह तु तस्य विधिमात्रं वक्ष्यामो न तु तत्प्रयोगानिति भावः ॥ ३ ॥

**तत्र प्रतिलोममालिम्पेत्, प्रतिलोमे हि सम्यगौषधमवतिष्ठतेऽनुप्रविशति[2] च रोमकूपान् स्वेदवाहिभिश्च सिरामुखैर्वीर्यं प्राप्नोति । तस्य प्रमाणं माहिषार्द्रचर्मोत्सेधमिच्छन्ति ॥ ४ ॥**

---

१ अयं पाठस्ताडपत्रपुस्तके न पठ्यते, चक्रेणाव्याख्यातश्च । २ ताडपत्रपुस्तके 'प्रविशति च रोमकूपैः' एतावदेव पठ्यते ।

प्रतिलोममिति लोमाभिमुखम् । अत्र महिषचर्मोत्सेधता परं प्रमाणं लेपस्य । तनुत्वं तु यद्वक्ष्यमाणमालेपस्य तदुक्तमानादपकर्षेण[1] ॥ ४ ॥

**न च शुष्यमाणमुपेक्षेत, अन्यत्र पीडयितव्यात्; शुष्को ह्यपार्थको रुक्करश्च ॥ ५ ॥**

पीडयितव्यादिति पीडयितव्यव्रणकृतादालेपात् । वक्ष्यति हि—"शुष्यमाणमुपेक्षेत लेपनं पीडनं प्रति" (चि. अ. १) इति । अपार्थक इति नीरसतया न कार्यकरः ॥ ५ ॥

**आलेपप्रदेहयोरन्तरं—तत्र, आलेपः शीतस्तनुरविशोषी विशोषी वा; प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च ॥ ६ ॥**

शास्त्रे व्यवह्रियमाणालेपप्रदेहयोर्लक्षणमाह—आलेपेत्यादि । अन्तरं भेदः । विशोषी चेति पीडयितव्ये विशोषी । प्रदेहलक्षणे शीतो वेति वाते पित्तशोणितानुगते ज्ञेयः । बहल इति उक्तप्रमाणः, ततोऽपि वा घनः; बहलत्वेनायं बहिरनिर्गच्छदूष्मरोधाद्वातकफहन्ता; तदुक्तं **चरके**—"श्लक्ष्णसूक्ष्मघनो लेपश्चन्दनस्यापि दाहकृत् । त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः (च. चि अ. ३०) इति । चरके तूपनाहशब्देनायं प्रदेहो ह्युष्ण एव त्वग्गतोष्मरोधात् स्वेदकृदुक्तः; यथा—"व्यायाम उष्णसदनं गुरु प्रावरणं क्षुधा । बहुपानं भयक्रोधावुपनाहाहवातपाः ॥ स्वेदयन्ति दशैतानि नरमग्निगुणादृते" (च. सू. अ. १४) इति । तेनेहापि पाक्षिकमुक्तमुष्णत्वमत्यर्थशीते व्याधौ ज्ञेयम् ॥ ६ ॥

**तत्र, रक्तपित्तप्रसादकृदालेपः; (प्रदेहो वातश्लेष्मप्रशमनः;) शोधनो रोपणः शोफवेदनापहश्च, तस्योपयोगः क्षताक्षतेषु; यस्तु क्षतेषूपयुज्यते स भूयः 'कल्क' इति संज्ञां लभते निरुद्धालेपनसंज्ञः, तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति ॥ ७ ॥**

आलेपस्य कार्यभेदमाह—तत्र रक्तेत्यादि । प्रदेहोऽत्र कार्यभेदेनानिर्दिष्टो गुणालोचनतया वातश्लेष्मप्रशमनो ज्ञेयः । केचित् 'वातश्लेष्मप्रशमनः प्रदेहः' इति पठन्त्येव । आलेपस्य सामान्यविषयमाह—शोधन इत्यादि । क्षताक्षतेष्विति व्रणेऽव्रणे च । भूय उपयुज्यते यः क्षतेषु स कल्क इति संज्ञां लभते इति योज्यम् । निरुद्धा आलेपनसंज्ञा यस्य स तथा, यदा 'निरोध्यालेपनसंज्ञां' इति पाठस्तदाऽपि स एवार्थः । अनन्तर्दोषेत्यत्र दोषशब्देन पूयमुच्यते; यथा "तत्र तत्र व्रणं कुर्याद् यथा दोषो न तिष्ठति" (सू. अ. ५) इत्यत्र पूयं दोषशब्देनोच्यते । व्रणशुद्धिश्चेति चकाराद्व्रणरोपणं च ॥ ७ ॥

---

१ 'तत्र प्रमाणादपकर्षणम्' इति ह. ।

न चालेपं रात्रौ प्रयुञ्जीत, शैत्यविहतोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति ॥ ८ ॥

(प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ॥
पित्तरक्ताभिघातोत्थे सविषे च विशेषतः ॥ ९ ॥
न च पर्युषितं लेपं कदाचिदवचारयेत् ॥
उपर्युपरि लेपं च न कदाचित् प्रदापयेत् ॥ १० ॥
ऊष्माणं वेदनां दाहं घनत्वाज्जनयेत् स हि ॥
न च तेनैव लेपेन प्रदेहं दापयेत् पुनः ॥
शुष्कभावात् स निर्वीर्यो युक्तोऽपि स्यादपार्थकः ॥ ११ ॥)

आलेपं कालविशेषे निषेधयन्नाह—न चालेपमित्यादि । अत्र हेतुमाह—शैत्येत्यादि । रात्रिस्वाभाविकशैत्यात् संवृतरोमकूपत्वात् पुनरालेपनेनापि व्रणोष्मा बहिरनिर्गच्छन्नवरुद्धो विवृद्धः सन्नितरां व्रणे व्रणशोथे वा दाहपाकौ करोतीति भावः । यस्तु प्रदेहो वातश्लेष्मविषयोऽपाकिशोथे स रात्रावपि देयोऽविरुद्धत्वात्; पाचनलेपस्तु पाचकत्वादेव दातव्यः; तथा घृतप्रदेहो निर्वापणतया दीयत एव, क्षीरशीतजलादिसेकश्च; तथा व्रणकल्कोऽप्यहोरात्रस्थायिबन्धविहित एव, उक्तं च **वैतरणे**—"सर्वशस्तु निशां प्राप्य प्रलेपं विनिवर्तयेत् । क्षीरसर्पिःप्रलेपस्तु हितः प्रच्छादने तथा ॥ वर्जयेद्वस्त्रपट्टेन त्वक्पाकेषु कथंचन । रात्रौ तु शीतलं मुक्त्वा प्रलेपमवधा(चा)रयेत् ॥ न च पर्युषितं कल्कं कदाचिदवता(चा)रयेत् । न च तेनैव लेपेन पुनः शोथं प्रलेपयेत्" इति ॥ ८–११ ॥

अविदग्धेषु शोफेषु हितमालेपनं भवेत् ॥
यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥ १२ ॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् ॥
दाहप्रशमनं श्रेष्ठं रुजाकण्डूविनाशनम् ॥ १३ ॥
मर्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् ॥
तत्र संशोध्य कायं हि कुर्यादालेपनं भिषक् ॥ १४ ॥
(षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातिके ॥
अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत् ॥ १५ ॥)

लेपस्य विशेषकार्यमाह—अविदग्धेष्वित्यादि । हितमिति शोथकारकवातादिप्रतिकूलतया हितम् । यथास्वमिति यो यस्य जनको दोषः; तत्र दाहः पित्तस्य, कण्डूः कफस्य, रुजा वायोः । दोषप्रशमनमभिधाय दूष्यप्रसादमाह—त्वक्प्रसादनमित्यादि । अग्र्यमिति

---

१ 'शैत्यात्तु श्लेष्मण ऊर्ध्वं विवृत्तरोमकूपत्वादूष्माणं करोति' इति **ता.** । 'मा भूच्छैत्यपिहितोष्मणः' इति **ड.** । २ अयं पाठस्ताडपत्रपुस्तके न पठ्यते, चक्रेणाव्याख्यातश्च । ३ 'अपाकिशोथे' इति **मु. पु.** न पठ्यते । ४ 'पीडनं' इति **मु.** । ५ 'संशोधनार्थं तेषां' इति **ड.** ।

श्रेष्ठम् । पुनर्दाहकण्डूविनाशनमिति दूष्यमहिमभूतकण्डूप्रशमकत्वोपदर्शनार्थम् । तत्र संशोध्य कायमिति वचनाद्देहं शोधयित्वा देयं; शेषं सुगमम् ॥ १२–१५ ॥

**अत ऊर्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः; तद्यथा—क्षौमकार्पासाविकदुकूलकौशेयपत्रोर्णचीनपट्टचर्मान्तर्वल्कलालाबूशकलंलताविदलरज्जुतूलफलसन्तानिकालौहानीति; तेषां व्याधिं कालं चावेक्ष्योपयोगः; प्रकरणतश्चैषामादेशः ॥ १६ ॥**

आलेपनानन्तरं योग्यतया व्रणबन्धनद्रव्याण्येव तावदाह—अत ऊर्ध्वमित्यादि। क्षौमं शणतन्तुवस्त्रम्; आविकं मेषलोमकृतं; दुकूलं वल्कलविशेषभवं; कौषेयं कोषकारजन्तुकृततन्तुमयं; पत्रोर्णं पतनीतिख्याततन्तुभवं; चीनपट्टं चीनदेशभवं वस्त्रम्; अन्तर्वल्कलं तरुवल्कलमध्यभवं वल्कलं; विदलं लतादिपाटनमध्यं; तूलफलं शाल्मलीफलं, तस्य तूलरचितंतान्तवं बन्धार्थमुपयुज्यते; सन्तानिका कुशलसन्तानिका, कुशलसन्तानिका मर्कटविशेषगृहं वा; आदिशब्दादश्वबालादीनां ग्रहणम् । प्रकरणतश्चैषामादेश इति शास्त्रप्रदेशेषु क्षौमादीनामुपयोग आदेष्टव्य इत्यर्थः । तत्र विषे रज्वा अरिष्टाबन्धो वक्तव्यः, सा च बन्धादिभिर्बद्धा विषप्रतीकारिणी मतेति; सन्तानिकया रक्तातिप्रवृत्तिनिवारणे बन्धनं; लौहैः सुवर्णादिभिर्दन्तबन्धो वक्तव्य इत्यनुसरणीयम् ॥ १६ ॥

**तत्र कोशदामस्वस्तिकानुवेल्लितप्र(मु)तोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्दश बन्धविशेषाः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ १७ ॥**

**तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्, दाम संबाधेऽङ्गे, सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्, अनुवेल्लितं शाखासु, ग्रीवामेढ्रयोः मु(प्र)तोलीं, वृत्तेऽङ्गे मण्डलम्, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकां, यमलव्रणयोर्यमकं, हनुशङ्खगण्डेषु खट्वाम्, अपाङ्गयोश्चीनं, पृष्ठोदरोरःसु विबन्धं, मूर्धनि वितानं, चिबुकनासौष्ठांसबस्तिषु गोफणां, जत्रुण ऊर्ध्वं पञ्चाङ्गीमिति; यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात् ॥ १८ ॥**

बन्धानाह—तत्र कोषेत्यादि । एषां लक्षणमाह—एषां नामभिरेवेत्यादि । प्रायेणेतिवचनादुपदेशमपि सर्वबन्धानां नामान्वयमात्रदुर्विज्ञेयानां सूचयति । तत्र कोषेत्यादि-

---

१ '°वल्कललताविदल°' इति ता. । २ 'बन्धनविशेषभवं' इति ह. । ३ 'तूलरचितास्वरं' इति मु. । ४ 'सन्तानिका क्षीरसंतानिका, कुशलसंतानिकेति पाठे कोकावृतिः' इति मु. । ५ 'प्रतोली रथ्या' इति हाराणचन्द्रः, 'मुतोलीव मुतोली तृणमयः फलाधारः' इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः ।

बन्धानां देशनिर्देशो व्यक्त एव । बन्धानां दुर्विज्ञेयतया तन्त्रान्तराणि ज्ञानार्थं लिख्यन्ते यथाक्रमम् । तत्र कोषे **भोजः**—"अङ्गुल्यङ्गुष्ठकाग्रेषु कूर्च-कूर्पर-जानुषु । कोषकं कोषकाकारं व्रणबन्धं तु योजयेत् ॥ दामाकृतिश्चतुष्पादो बन्धः स्याद्दामसंज्ञितः । स्वस्तिकं स्वस्तिकाकारं बन्धं कुर्यात् स्तनादिषु । शाखासु तिर्यक्पतितान् प्रहारादिकृतान् भिषक् ॥ तान् प्रसीव्यानुबध्नीयादयं ज्ञेयोऽनुवेल्लितः" । प्रतोलीबन्धे **वैतरणः**—"प्रतोली पुटिका प्रोक्ता जालवद् बहुरन्ध्रकः । घाटान्ते चैव ग्रीवायां ललाटे च प्रयोजयेत् ॥ स्थगिकां स्थगिकाकारां मेढ्राङ्गुष्ठाङ्गुलोत्थिताम् । जत्रु-हृत्-कक्ष-शाखादिषडङ्गुष्ठाङ्गुलीयुताम् । यथास्वमौषधैः पूर्णां कल्पयेत् सुसमाहिताम्" इति । एवं भेषजपूर्णां कृत्वा पट्टेन बध्यत इति कोषात् स्थगिकाया विशेषः, कोषस्तु न बध्यते । "यमलव्रणयोः कुर्याद्यमकं मण्डलाकृतिम् । खट्वा तु बहुपादा स्याच्चीराभिर्बहुभिर्वृता ॥ बन्धनं कारयेच्छङ्ख-हनु-गण्डेषु कोविदः । चीन(र)बन्धं विजानीयात् चीना(रा)भिर्बहुभिर्वृतम् ॥ ऐवं बहुविधो बन्धः स्पष्टः पृष्ठोदरोरसि । ऊर्ध्वं तिर्यगधश्चापि पट्टचीराकृतः स तु ॥ वितानं तु वितानाव्यं(भं) मूर्ध्नि कुर्यात् सुसंस्थितम् । गोफणां गोफणाकारां युञ्ज्यान्नासौष्ठवस्तिषु ॥ चिबुके चापि पञ्चाङ्गीं हनुसन्धौ विसङ्गते । स्वेदयित्वा स्थिते सन्धौ कुर्यात् पञ्चाङ्कुशावृताम्" इति ॥ १७ ॥ १८ ॥

**यन्त्रणमूर्ध्वमधस्तिर्यक् च ॥ १९ ॥**

बन्धस्य यन्त्रणाधीनत्वाद्यन्त्रणभेदमाह—यन्त्रणमित्यादि । ॥ १९ ॥

**तत्र घनां कवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमनाविद्धमसंकुचितं मृदु पट्टं निवेश्य बध्नीयात् । न च व्रणस्योपरि कुर्याद्ग्रन्थिमाबाधकरं च ॥ २० ॥**

एतेषां च व्रणाकृतिभेदानुगुण्येन बन्धो यथा कर्तव्यस्तदाह—तत्र घनामित्यादि । कवलयति क्रोडीकरोतीति कवलिका; सा चौषधवस्त्रयोर्मध्ये भेषजस्थापनार्थं यज्ञोदुम्बरत्वगादिरूपा कवलिका दीयते । वामपरिक्षेपो वामहस्तपरिक्षेपः, स च मङ्गलार्थमित्येके; अन्ये तु वामहस्ते पट्टे क्षिप्ते दक्षिणेन साधुबन्धनसंपादनं भवतीत्याहुः; अपरे तु वामदक्षिणपरिक्षेपावुभावपि कर्तव्यौ, क्रियासौकर्यार्थं तु वामपरिक्षेप इह उक्तः । उक्तं हि **चरके**—"बन्धस्तु द्विविधः शस्तो व्रणानां वामदक्षिणः" (च. चि. अ. २५) इति । अनाविद्धमिति बद्ध आबाधकरो यथा न स्यादिति वाच्यम् ॥ २० ॥

**न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्वीत; यस्मादतिस्नेहात् क्लेदो, रौक्ष्याच्छेदो, दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति ॥ २१ ॥**

विकेशिकौषधकल्कयोर्विशेषमाह—न चेत्यादि । तत्र विकेशिका मधु-घृत-तिलकल्कयुक्ता प्रोतसूत्रमयवर्तिः, इयं च दुष्टव्रणविषया; कल्कस्तु निरुक्तपूतिमांसनिष्कृतिकव्रण-

१ 'विबन्धो विविधो बन्धः स तु पृष्ठोदरोरसि' इति पा० । २ 'अस्याग्रे' 'युक्तस्नेहत्वादाशु सम्यगुपसंरोहः' इत्यधिकं पठ्यते ताडपत्रपुस्तके ।

विषयः । उच्यते हि—"सपूतिमांसं सोत्संगं सगतिं पूयगर्भिणम् । व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका" इति ॥ २१ ॥

**तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति—गाढः, समः, शिथिल इति ॥ २२ ॥**

**(पीडयन्नरुजो[1] गाढः सोच्छ्वासः शिथिलः स्मृतः ॥**
**नैव गाढो न शिथिलः समो बन्धः प्रकीर्तितः ॥ २३ ॥)**

**तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरुशिरःसु गाढः, शाखावदनकर्णकण्ठमेढ्र-मुष्कपृष्ठपार्श्वोदरोरःसु समः, अक्ष्णोः सन्धिषु च शिथिल इति ॥ २४ ॥**

व्रणस्य देशविशेषबद्धस्य विशेषमाह—तत्रेत्यादि । आयतनं स्थानं स्फिगादि । तन्त्रान्तरोक्तं यथा—"पीडयन्नरुजो गाढः सोच्छ्वासः शिथिलः स्मृतः । नैव गाढो न शिथिलः समो बन्धः प्रकीर्तितः" । पीडयन्नपि यो रुजां न करोति एष ज्ञेयो गाढः । सोच्छ्वास इति नातिसंलग्नः । शाखाऽत्र बाहू जङ्घे च ॥ २२–२४ ॥

**तत्र पैत्तिकं गाढस्थाने समं बध्नीयात्, समस्थाने शिथिलं, शिथिल-स्थाने नैव; एवं शोणितदुष्टं च; श्लैष्मिकं शिथिलस्थाने समं, समस्थाने गाढं, गाढस्थाने गाढतरम्; एवं वातदुष्टं च ॥ २५ ॥**

अस्यैव दोषविशेषे विशेषमाह—तत्र पैत्तिकमित्यादि ॥ २५ ॥

**तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयात्, रक्तोपद्रुतमप्येवं; श्लैष्मिकं हेमन्तवसन्तयोरुयहात्[2], वातोपद्रुतमप्येवम् । एवमभ्यूह्य बन्धविपर्ययं च कुर्यात् ॥ २६ ॥**

कालविशेषाद्विशेषमाह—तत्र पैत्तिकमित्यादि । एवमभ्यूह्येत्यनेन पैत्तिकं श्लैष्मिकं द्व्यहाद् बध्नीयाद् ग्रीष्मे, प्रातरेव ग्रीष्मवच्छरदि बन्धयेदित्यादि भिषजा तर्क्यमित्यर्थः ॥ २६ ॥

**तत्र, समशिथिलस्थानेषु गाढं बद्धे विकेशिकौषधनैरर्थक्यं शोफवेद-नाप्रादुर्भावश्च, गाढसमस्थानेषु शिथिलं बद्धे विकेशिकौषधपतनं पट्ट-संचाराद्व्रणवर्त्मावघर्षणमिति; गाढशिथिलस्थानेषु समं बद्धे गुणाभाव इति ॥ २७ ॥**

**अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवं च ॥ २८ ॥**

**अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातपप्रभृतिभिर्वि-[3]शेषैरभिहन्यते व्रणः, विविधवेदनोपद्रुतश्च दुष्टतामुपैति, आलेपनादीनि चास्य विशोषमुपयान्ति ॥ २९ ॥**

---

१ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते । २ 'हेमन्ते तृतीयेऽह्नि' इति ता. । ३ '°वात-रजोवर्षमक्षिकाप्रभृतिभिरभिघातविशेषैरभिहन्यते' इति ता. ।

यथोक्ताकरणे दोषोदाहरणमाह—समेत्यादि । नैरर्थक्यं निष्प्रयोजनत्वं, गाढबन्धेनानुचितेन ॥ २७–२९ ॥

**चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम् ॥**
**अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति ॥ ३० ॥**
**सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति ॥**
**सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः ॥ ३१ ॥**

चूर्णितमित्यादि । चूर्णितादि वक्ष्यमाणलक्षणं ज्ञेयम् । सुखमिति बन्धे सति व्रणस्य परिस्थितत्वादवस्थानादि सुखेन भवति, शीघ्ररोहणं च भवति । क्षिप्रं संरोहति व्रण इत्यस्यानन्तरं केचित् पैत्तिकं ग्रीष्मेत्यादिग्रन्थं पठन्ति ॥ ३० ॥ ३१ ॥

**अबन्ध्याः पित्तरक्ताभिघातविषनिमित्ता यदा शोफदाहपाकरागतोदवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुथितप्रशीर्णमांसाश्च भवन्ति ॥ ३२ ॥**

**कुष्ठिनामग्निदग्धानां पिडका मधुमेहिनाम् ॥**
**कर्णिकाश्चोन्दुरुविषे विषजुष्टाश्च ये व्रणाः ॥ ३३ ॥**
**मांसपाके न बध्यन्ते गुदपाके च दारुणे ॥**

अबन्ध्यानाह—अबन्ध्या इत्यादि । पित्तादिजनिताश्च यदा तोददाहवेदनावन्तस्तदा न बन्ध्याः; तेन तोदादियुक्ते पैत्तिके विषजुष्टानां च पित्तरक्तबहुतया शीर्णमांसता बन्धेन भवति । प्रमेहिणः श्लथतरधातुत्वाद् बन्धादतीव प्रक्लिन्नता[1] भवतीत्याद्यनुसरणीयम् । अन्ये तु कुष्ठ्यादीनां मांसपाके व्रणा न बध्यन्ते इति योजयन्ति । कर्णिका विषदुष्टमांसाङ्कुरः ॥ ३२ ॥ ३३ ॥—

**स्वबुद्ध्या चापि विभजेत् कृत्याकृत्यांश्च बुद्धिमान् ॥ ३४ ॥**
**देशं दोषं च विज्ञाय व्रणं च व्रणकोविदः ॥**
**ऋतूंश्च परिसंख्याय ततो बन्धान्निवेशयेत् ॥ ३५ ॥**

अनुक्तार्थोहार्थमाह—स्वबुद्ध्या चेत्यादि । कृत्याकृत्यानिति करणीयाकरणीयान् । तथा व्रणाश्च कुष्ठिनामित्यादिनोक्ताः, ऋतवश्च ग्रीष्मेत्यादिनोक्ताः सूचिताः । परिसंख्यायेति सम्यग्ज्ञात्वा ॥ ३४ ॥ ३५ ॥

**ऊर्ध्वं तिर्यगधस्ताच्च यन्त्रणा त्रिविधा स्मृता ॥**
**यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः ॥ ३६ ॥**
**घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम् ॥**
**विकेशिकामौषधं च नातिस्निग्धं समाचरेत् ॥ ३७ ॥**

१ 'प्राग्नतता' इति मु. ।

प्रक्लेदयत्यतिस्निग्धा तथा रूक्षा क्षिणोति च ॥
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥ ३८ ॥
विषमं च व्रणं कुर्यात् स्तम्भयेत् स्रावयेत्तथा ॥
यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥ ३९ ॥
पित्तजे रक्तजे वाऽपि सकृदेव परिक्षिपेत् ॥
असकृत् कफजे वाऽपि वातजे च विचक्षणः ॥ ४० ॥
तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ॥
सर्वांश्च बन्धान् गूढान्तान् सन्धींश्च विनिवेशयेत् ॥ ४१ ॥
ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः ॥
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता ॥ ४२ ॥
उत्तिष्ठतो निषण्णस्य शयनं चाधिगच्छतः ॥
गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥ ४३ ॥
ये च स्युर्मांससंस्था वै त्वग्गताश्च तथा व्रणाः ॥
सन्ध्यस्थिकोष्ठप्राप्ताश्च सिरास्नायुगतास्तथा ॥ ४४ ॥
तथाऽवगाढगम्भीराः सर्वतो विषमस्थिताः ॥
नैते साधयितुं शक्या ऋते बन्धाद्भवन्ति हि ॥ ४५ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने आलेपनीयो
नामाष्टादशोऽध्यायः ॥ १८ ॥

अन्येऽत्र संग्रहश्लोकान् पठन्ति-ऊर्ध्वं तिर्यगित्यादिना । तानपठनीयानन्ये मन्यन्ते, तन्त्रकर्तुरन्यत्रापि संग्रहश्लोकाकरणात् ॥ ३६-४५ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यटीकायां भानुमत्यां सूत्रस्थाने
आलेपनीयो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ।

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

अनन्तरं व्रणालेपनाधिकारात् कृतव्रणबन्धस्य व्रणिनो विहाराहारोपदर्शनार्थं व्रणितोपासनीयोऽभिधीयते । व्रणितोपासनम् आहाराचारभजनं, तदधिकृत्य कृतोऽध्यायो ज्ञेयः ॥ १ ॥ २ ॥

अथ व्रणितस्य प्रथममेवागारमन्विच्छेत्; तच्चागारं प्रशस्तवास्त्वादिकं कार्यम् ॥ ३ ॥

**प्रशस्तवास्तुनि गृहे शुचावातपवर्जिते ॥**
**न भवन्ति चिरं रोगाः शारीरागन्तुमानसाः ॥ ४ ॥**

तत्र गृहमेव प्रधानं, तत्रस्थस्येतरसेवनादित्याह—अथ व्रणितस्य प्रथममित्यादि। प्रशस्तत्वं देशस्य प्राक्प्रवणत्वादिना वास्तुविद्योक्तं ज्ञेयम्। पूर्वोक्तं श्लोकेन सुखग्रहणार्थमाह; एवमेवात्राध्याये गद्येनोक्तं सम्यग्बोधार्थं सम्यग्ग्रहणार्थं च श्लोकेनाप्यभिधास्यति। तदुक्तं चरके—"गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते। तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गर्ह्यते" (च. नि अ. १) इति। अत्रापि देश एव वास्तुशब्देनोच्यते; अन्ये तु वास्तुपुरुषं वदन्ति। तच्चर्मादिव्याधान(?)गृहकरणम्। चिरमिति चिरस्थायिनो न भवन्ति ॥ ३ ॥ ४ ॥

**तस्मिञ्छयनमसंबाधं स्वास्तीर्णं मनोज्ञं प्राक्शिरस्कं सशस्त्रं च कुर्वीत ॥ ५ ॥**

**सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी ॥**
**प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं च तच्छिरः ॥ ६ ॥**

**तस्मिन् सुहृद्भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्टमासीत ॥ ७ ॥**

**सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः ॥**
**आश्वासयन्तो बहुशः स्वनुकूलाः प्रियंवदाः ॥ ८ ॥**

**न च दिवानिद्रावशगः स्यात् ॥ ९ ॥**

**दिवास्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा ॥**
**श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥ १० ॥**

असंबाधम् असंकीर्णम्। स्वास्तीर्णं सम्यक् कम्बलादिभिरावृतम्। सशस्त्रं च रक्षार्थम् ॥ ५-१० ॥

**उत्थानसंवेशनपरिवर्तनचङ्क्रमणोच्चैर्भाषणाद्यास्वात्मचेष्टास्वप्रमत्तो व्रणं संरक्षेत् ॥ ११ ॥**

**स्थानासनं चङ्क्रमणं दिवास्वप्नं तथैव च ॥**
**व्रणितो न निषेवेत शक्तिमानपि मानवः ॥ १२ ॥**
**उत्थानाद्यासनं स्थानं शय्या चाति निषेविता ॥**
**प्राप्नुयान्मारुतादङ्गरुजस्तस्माद्विवर्जयेत् ॥ १३ ॥**

---

१ तृतीये सूत्रे 'तच्चागारं प्रशस्तवास्त्वादिकं कार्यम्' इत्यस्य स्थाने 'प्रशस्तवास्तु सुनिविष्टं शुच्यवातातपं च' इति ताडपत्रपुस्तके पठ्यते। २ 'निवाते न च रोगाः स्युः' इति डल्हणसंमतः पाठः। ३ 'मुक्तकेनोक्तं' इति ह.। ४ 'मर्मादिव्याधानगृहकरणं' इति ह.। ५ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते। ६ '॰परिमार्जनादिषु' इति ता.। ७ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते।

संवेशनं शयनावस्थानम्, उत्थानं दण्डायमानावस्थानम्, आसनम् उपविष्टावस्थानम् ॥ ११-१३ ॥

**गम्यानां च स्त्रीणां संदर्शनसंभाषणसंस्पर्शनानि दूरत एव परिहरेत् ॥ १४ ॥**

**स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ।**
**ग्राम्यधर्मकृतान् दोषान् सोऽसंसर्गेऽप्यवाप्नुयात् ॥ १५ ॥**

ग्राम्यधर्मकृता दोषा उत्तरत्र वक्तव्या यथा—"मैथुनोपगमाद्घोरान् व्याधीन् प्राप्नोति दुर्मतिः । आक्षेपं" ( चि. अ. ३९ ) इत्यादि ॥ १४ ॥ १५ ॥

**नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटु[१]कगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाङ्गलमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीनि परिहरेत् ॥ १६ ॥**

**तक्रान्तो नवधान्यादिर्योऽयं वर्ग उदाहृतः ॥**
**दोषसंजननो ह्येष विज्ञेयः पूयवर्धनः ॥ १७ ॥**

नवधान्येत्यादौ माषादीनां पुराणानामपि निषेधः । कलायोऽत्र त्रिपुटः, हरेणुसतीनयोस्तु "अन्यैरेवंगुणैर्वाऽपि मुद्गादीनां रसेन वा" (सू. अ. १९) इति वचनेन विधानमेव । अजाङ्गलं मांसमित्यस्य प्रधानकल्पनया जाङ्गलशब्दोऽयं जङ्घालविष्किरयोरेव वर्तते, तेन तदन्येषां सर्वेषामेव निषेधः । एतच्च **चरके**—शोथ एव "ग्राम्याब्जानूपं पिशितलवणं" (च. चि. अ. १२) इत्यादिना अत्राजाङ्गलत्वेनोक्तग्राम्यस्य निषेधाद्व्याख्यायते; एवं जाङ्गलवचनेनैवानूपौदकनिषेधे प्राप्ते पुनस्तद्वचनं विशेषेण तन्निषेधार्थमिति व्याख्यानयन्ति । किंतु, अजाङ्गलशब्देनात्र मांसवर्गे प्रथमोक्तजलेशयानूपग्राम्यक्रव्यभुजैकशफजङ्घालरूपषण्मांसवर्गोक्तजाङ्गलव्यतिरिक्तपञ्चवर्गमांसनिषेधो विवक्षितः; आनूपौदकशब्देन च तत्रैवोक्तजलेशयानूपयोर्विशेषेण दोषकारित्वान्निषेधः; अनेन पञ्चविधोऽपि पुनस्तत्रोक्तजलचरादिर्निषिद्धः ( अन्ये पुनः 'अजाविकानूपौ[२]दकमांसं' इति पठन्ति ) । प्रभृतिग्रहणं समस्तगुरुविदाह्यादितन्त्रान्तरोक्तनिषिद्धतयोक्तग्रहणार्थम् । यदुक्तं **चरके**—"ग्राम्याब्जानूपं पिशितलवणं शुष्कशाकं नवान्नं गौडं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम् । धानावल्लूरं समशनमथो गुर्वसात्म्यं विदाहि स्वप्नं चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनं च" ( च. चि. अ. १२ ) इति । अत्र च प्रभृतिग्रहणगृहीतानां नवधान्यादिवद्दोषकर्तृत्वमिति । तक्रान्त—इत्यादि । दोषसंजनन इति व्रणदोषजननः, व्रणदोषश्च व्रणदुष्टिरेव । यदि तु वातादयोऽत्र दोषा विवक्षितास्तदा भूयसां वातादिजनकानां विद्यमानत्वात् प्रतिनियतनवधान्याद्यभिधानं स्यात् । व्रणदुष्टिरपि यद्यपि दोषदुष्टिपूर्विकैव भवति, तथाऽपि द्रव्यमहिम्ना यानि द्रव्याणि व्रणदुष्टिलक्षणव्याधिकारीणि तानीहोच्यन्ते । तेन नवधान्यादीनामिह व्रणदुष्टौ कर्तव्यायां दोषानन्तरीयकतया दुष्टेर्दोषकरणमपि भवति । यथा—मृत्

---

१ कटुकशब्दस्ताडपत्रपुस्तके न पठ्यते । २ अयं पाठो मु-पुस्तके न पठ्यते ।

पाण्डुरोगे, विरुद्धाशनं कुष्ठे, अत्यशनमजीर्णे कर्तव्ये दोषमपि तन्नान्तरीयकतया करोति। तदुक्तं तन्त्रयुक्तिषु मांसादीनां व्रणदुष्टिकर्तृत्वं, यथा—"मृत्पिण्डोऽद्भिः क्रियते एवं माषतिलदुग्धप्रभृतिभिर्व्रणः" (उ. त. अ. ६५) इति। तथाहि द्रव्यप्रभावे चरकः—"किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्। स्वस्थवृत्तौ मतं किंचिद्द्रव्यं त्रिविधमुच्यते" (च. सू. अ. १) इति ॥ १६ ॥ १७ ॥

**मद्यपश्च मैरेयारिष्टासवसीधुसुराविकारान् परिहरेत् ॥ १८ ॥**

**मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णं च वीर्यतः ॥**
**आशुकारि च तत् पीतं क्षिप्रं व्यापादयेद्व्रणम् ॥ १९ ॥**

मद्यस्य नवधान्यादिवर्गे साक्षात् प्रभृतिशब्दाद्वा निषेधेऽपि भूरिदोषकर्तृतया पुनर्निषेधः। मैरेयादयो द्रवद्रव्ये व्याकरणीयाः ॥ १८ ॥ १९ ॥

**वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टभोजनश्रवणदर्शनेर्ष्यामर्षभयशोकध्यानरात्रिजागरणविषमाशनशयनोपवासवाग्व्यायामस्थानचङ्क्रमणशीतवातविरुद्धाध्यशनाजीर्णमक्षिकाद्या बाधाः परिहरेत् ॥ २० ॥**

**व्रणितस्योपतप्तस्य कारणैरेवमादिभिः ॥**
**क्षीणशोणितमांसस्य भुक्तं सम्यङ्न जीर्यति ॥ २१ ॥**
**अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत् ॥**
**ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥ २२ ॥**

व्रणितस्येत्यादौ उपतप्तस्येति कारणैरित्यनेन संबध्यते। पवनादीनां विभ्रमः प्रकोपः; तत्र वाताच्छोथरुजः, कफात् स्रावः, पित्ताद्दाहपाकौ ज्ञेयौ ॥ २०—२२ ॥

**सदा नीचनखरोम्णा शुचिना शुक्लवाससा[1] शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यमिति। तत् कस्य हेतोः? हिंसाविहाराणि हि महावीर्याणि रक्षांसि पशुपतिकुबेरकुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति, सत्कारार्थं जिघांसूनि वा कदाचित् ॥ २३ ॥**

**तेषां सत्कारकामानां प्रयतेतान्तरात्मना ॥**
**धूपबल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत् ॥ २४ ॥**

**ते तु संतर्पिता आत्मवन्तं न हिंस्युः। तस्मात् सततमतन्द्रितजनपरिवृतो नित्यं दीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृते वेश्मनि संपन्नमङ्गलमनोऽनुकूलाः कथाः शृण्वन्नासीत ॥ २५ ॥**

**संपदाद्यनुकूलाभिः[2] कथाभिः प्रीतमानसः ॥**
**आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात् ॥ २६ ॥**

१ 'शुचिवाससा' इति ता.। २ 'संपन्नमङ्गलयुक्ताभिः' इति ता.।

**ऋग्यजुःसामाथर्ववेदाभिहितैरपरैश्चाशीर्विधानैरुपाध्याया भिषजश्च सन्ध्ययो रक्षां कुर्युः ॥ २७ ॥**

हिंसाविहाराणीति हिंसैव विहारः क्रीडा येषां तानि तथा । एतेन क्रीडा प्रयोजनं रक्षोभिद्रवणस्योक्तम्, अन्ते च 'सत्कारार्थं जिघांसूनि च' इत्यनेन अभ्यर्चनं तथा हिंसा चेति फलद्वयं वक्तव्यं, तेन मिलित्वा फलत्रयमिहापि चरकोक्तमुक्तं भवति । तदुक्तं हि— "त्रिधा त्वाघातप्रयोजनं भवति—रतिरभ्यर्चनं हिंसा च" ( च. नि. अ. ७ ) इति । रक्षांसीत्यादौ बहुवचनमाद्यर्थे; पशुपत्यनुचररक्षोयक्षौ त्यक्त्वा अतिरिक्ता देवादयः षट् । रक्षोग्रहणमादावुपघातकत्वात् । कुबेरानुचरा यक्षाः, कुमारानुचरा नैगमेषादयो नव वक्ष्यमाणाः । क्षतजनिमित्तमिति शोणितस्य व्रणे प्रादुर्भावात् । प्रयोजनान्तरमाह— सत्कारार्थमित्यादि । शोणितार्थोपसरणं सत्कारे हिंसायां वाऽन्तर्भवतीति न राक्षसाद्युपदर्शने त्रिविधप्रयोजनातिक्रमः । सत्कारकामानामित्यभिधानेन हिंसार्थिनोऽसाध्याः सूच्यन्ते; तन्त्रान्तरे हि हिंसार्थगृहीता असाध्या उक्ताः । न हिंस्युरिति वचनेन सत्कारार्थे गृहीतेऽपि यदा बल्यादिना सत्कारा न क्रियन्ते तदा तेऽपि हिंसन्तीति दर्शयति । सत्कारेण च क्रीडार्थिनोऽपि कृतकृत्या निवर्तन्ते । अन्ये तु सत्कारेण त्रिविधप्रयोजनानामपि राक्षसादीनां निवृत्तिं वदन्ति ॥ २३–२७ ॥

**सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च ॥**
**द्विरह्नः कारयेद्धूपं दशरात्र[1]मतन्द्रितः ॥ २८ ॥**

**छत्रामतिच्छत्रां लाङ्गू(ङ्ग)लीं जटिलां ब्रह्मचारिणीं गुहामतिगुहां लक्ष्मीं वचामतिविषां शतवीर्यां सहस्रवीर्यां सिद्धार्थकांश्च शिरसा धारयेत् ॥ २९ ॥**

**[2]व्यज्येत बालव्यजनैर्व्रणं न च विघट्टयेत् ॥**
**न तुदेन्न च कण्डूयेच्छयानः परिपालयेत् ॥ ३० ॥**
**अनेन विधिना युक्तमादावेव निशाचराः ॥**
**वनं केसरिणाऽऽक्रान्तं वर्जयन्ति मृगा इव ॥ ३१ ॥**

सर्षपेत्यादि । छत्रातिछत्रे द्रोणपुष्पीद्वयं; लाङ्गलकी प्रसिद्धा, मर्कटमूलीत्यन्ये; ब्रह्मचारिणी ब्रह्मयष्टिका, अलम्बुषेत्यन्ये; जटिला मांसी; गुहा शालपर्णी; अतिगुहा पृश्निपर्णी; लक्ष्मी लक्ष्मणा, विष्णुक्रान्तेत्यन्ये; शतवीर्या दूर्वा, शतावरीत्यन्ये; सहस्रवीर्या श्वेतदूर्वा ॥ २८—३१ ॥

**जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥**
**भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ ३२ ॥**
**तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः ॥**

---

१ 'सप्तरात्रमतन्द्रितः' इति ता. । २ 'बालोशीरैर्व्रणं वीजेन्न चैनं परिघट्टयेत्' इति ता. ।

वालमूलकवार्ताकपटोलैः कारवेल्लकैः ॥ ३३ ॥
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः ॥
अन्यैरेवंगुणैर्वाऽपि मुद्गादीनां रसेन वा ॥
शक्तून् विलेपीं कुल्माषाञ्जलं चापि शृतं पिबेत् ॥ ३४ ॥
दिवा न निद्रावशगो निवातगृहगोचरः ॥
व्रणी वैद्यवशे तिष्ठन् छीघ्रं व्रणमपोहति ॥ ३५ ॥
( व्रणे श्वयथुरायासात् स च रागश्च जागरात् ॥
तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात्[1] ॥ )
एवंवृत्तसमाचारो व्रणी संपद्यते सुखी ॥
आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥ ३७ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने व्रणितोपासनीयो नामैकोनविंशोऽध्यायः ॥ १९ ॥

जीर्णेत्यादि । जीर्णशाल्योदनशब्देन नवधान्यनिषेधात् पुराणत्वेऽपि प्रपुराणस्याप्यतिलघुतया ग्रहणम् । द्रवादुत्तरो द्रवोत्तरः, द्रवहीन इत्यर्थः; न तु द्रवप्रधानः, येन "व्रणे च मधुमेहे च पानीयं मन्दमाचरेत्" ( सू. अ. ४५ ) इत्युक्तं; भोजेऽपि— "व्रणोदरास्थापनपीडितानां प्रमेहिणां छर्द्यतिसारिणां च । द्रवं न दद्यादथवाऽपि कोष्णमल्पं हितं भेषजसंयुतं च" इत्युक्तम् । किंवा द्रवमुत्तरं श्रेष्ठमान्तरीक्षादि; तच्चाल्पमेव वचनान्तराज्ज्ञेयम् । सैन्धवमिह निषिद्धलवणापवादरूपम् । मुद्गादीनामित्यत्रादिशब्दाद्वनमुद्गादीनामनिषिद्धानां ग्रहणम् । रसेनेति यूषेण । सक्तूनित्यादि केचित् पठन्ति; तच्च व्यक्तम् । अध्यायान्ते यथोक्ताहाराचारफलावधारणपरं श्लोकद्वयं केचित् पठन्ति— दिवेत्यादि ॥ ३२—३७ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने व्रणितोपासनीय एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशतितमोऽध्यायः ।

अथातो हिताहितीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

पूर्वाध्याये पुराणरक्तशाल्यादि हितमुक्तं, नवधान्यादि चाहितं, तत्र हिताहिते विवादनिषेधेन स्वमतस्थापनार्थं हिताहितीयोऽभिधीयते ॥ १ ॥ २ ॥

'यद्वायोः पथ्यं तत् पित्तस्यापथ्यम्' इत्यनेन हेतुना न किंचिद्द्रव्यमेकान्तेन हितमहितं वाऽस्तीति केचिदाचार्या ब्रुवते, तत्तु न सम्यक्; इह

---

१ अयं श्लोकस्ताडपत्रपुस्तके न पठ्यते ।

**खलु यस्माद्द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति ॥ ३ ॥**

अत्रैकीयमतमाह—यद्वायोरित्यादि । एतद्दूषयति–तत्त्वित्यादि । स्वभावत इति प्रकृतेः, प्रकृतिश्च जातिप्रतिबद्धस्वरूपं, यथा–रक्तशाले रक्तशालित्वं, तथा तत्र प्रतिबद्धं च लघुत्वत्रिमलापहत्वादि । संयोगो द्रव्याणां मेलकः, स चेह द्रव्यप्रकृत्यतिरिक्तकार्यकारको ज्ञेयः, यथा–मधुघृतसमानसंयोगादिः, प्रकृत्यनुगुणसंयोगस्तु प्रकृतिकार्येणैव गृहीतः । संयोगेन चेह संबन्धमात्राभिधायिना देशकालसंस्कारमात्राणां चातिरिक्तफलानां ग्रहणम्, एतदुदाहरणानि विरोधिवर्गे दर्शयिष्यामः ॥ ३ ॥

**तत्र, एकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि; एकान्ताहितानि तु दहनपचनमारणादिषु प्रवृत्तान्यनलक्षारविषादीनि, संयोगतस्त्वपराणि विषतुल्यानि भवन्ति; हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ४ ॥**

तत्रैकान्तेत्यादिना एकान्तहिताहितहिताहितेति राशित्रयविवरणम् । जातिसात्म्यादिति मनुष्यजातिसात्म्यात् । एकान्ताहितानि स्वभावात् संयोगाच्च जात्यसात्म्यत्वादेव भवन्ति । तत्राग्न्यादीनि स्वभावाद्विरुद्धानि; मधुघृतादीनि च वक्ष्यमाणानि संयोगाद्विरुद्धानि; एतदेवैकान्ताहितानीत्यादिना प्राह । अग्निक्षारविषादीनीत्यादिशब्दाल्लकुचमन्दकादि गृह्यते । विषतुल्यानीति विषवदनर्थकारित्वात् । स्वभावतश्च संयोगतश्च हिताहितान्याह—हिताहितानीत्यादि । यद्वायोरुष्णत्वाम्लत्वादिना पथ्यं मातुलुङ्गं तत्तेनैव पित्ते समानगुणतयाऽपथ्यम्, एवमादि स्वभावतो हिताहितं; तथा संयोगतश्च यन्मांसं तैलतक्रादिसंस्काराद्वायोः पथ्यं तत् पित्तस्यापथ्यमित्याद्युदाहार्यम् ॥ ४ ॥

**अतः सर्वप्राणिनामयमाहारार्थं वर्ग उपदिश्यते; तद्यथा—रक्तशालिषष्टिककङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकासनपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमयववैणवैणहरिणकुरङ्गमृगमातृकाश्वदंष्ट्राकरालक्रकरकपोतलावतित्तिरिकपिञ्जलवर्तीरवर्तिकामुद्गवनमुद्गमकुष्टकलायमसूरमङ्गल्यचणकहरेण्वाढकीसतीनाश्चिल्लिवास्तुकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः, गव्यं घृतं, सैन्धवं, दाडिमामलकमित्येष वर्गः सर्वप्राणिनां सामान्यतः पथ्यतमः ॥ ५ ॥**

अनेन च प्रकरणेन यत् प्रायः स्वास्थ्यानुवृत्तिकरं तदेकान्तहितं, यत्तु स्वास्थ्यविरुद्धं तदेकान्ताहितं; यत्तु स्वास्थ्याविहितं रोगावस्थानियतोपयोगं तद्धिताहितं, तच्चैकदोषहरं त्रिदोषहरं व्याधिहरं वा तत्तदवस्थामात्रहिततया स्वास्थ्याहिततया च हिताहितम् । न

---

१ 'खलु द्रव्याणि' इति ता. । २ 'सर्वव्रणिभ्यः' इति ता. ।

हि दशमूलं त्रिदोषहरमपि स्वस्थे हितं, यत्तु रक्तशाल्यामलकादि त्रिदोषहरं स्वास्थ्यहितं च तदपि स्वास्थ्ये हिततयैकान्तहितमेव, एवं घृतं कफकरमपि सुस्थैकान्तहिततयैकान्तहितमेवोक्तम्, एवमन्यान्यपि अर्शआदौ हितमपि स्वास्थ्याहिततया एकान्ताहितमेव पठितं; तदेवमेकान्तहितत्वादीहोक्तप्रयोजनेन पारिभाषिकमेवेति न क्वचिदहितत्वाद्युपन्यासेन विरोध उद्भावनीयः । उक्तमेकान्तहितत्वादि प्रपञ्चेनाह—अत इत्यादि । सर्वप्राणिनामिति सर्वमनुष्याणाम् । एतच्च रक्तशाल्यादीनां सात्म्यत्वमभ्यासापेक्षं, तेनानभ्यासात्तद्देशविशेषे यदापाततोऽहितत्वं तन्नोद्भावनीयम् । एतेषां च नामान्यन्नपानवक्तव्यानि, तथाऽन्नपानोक्तधान्यसूपादिवर्गप्रधानैरूपरक्तशाल्यादय एतेऽनुसर्तव्याः ॥ ५ ॥

**तथा ब्रह्मचर्यनिवातशयनोष्णोदकस्नाननिशास्वप्नव्यायामाश्चैकान्ततः पथ्यतमाः ॥ ६ ॥**

आचारहितमाह—ब्रह्मचर्यमित्यादि । ब्रह्मचर्यमुपस्थनियमः, तस्य हितत्वे वचनान्तरं "आयुष्यं भोजनं जीर्णे वेगानां चाविधारणम् । ब्रह्मचर्यमहिंसा च साहसानां च वर्जनम्" इति । यत्तूपस्थितहर्षस्य विघाते शुक्राश्मरीसंभवादिहाब्रह्मचर्यमित्यकारप्रश्लेषो व्याख्यायते तन्न, तथाविधाब्रह्मचर्यस्य वेगानां चाविधारणमित्यनेनैव लब्धार्थत्वात् । व्यायामश्चेहोचितप्रमाण एव ज्ञेयः, यदुक्तं **चरके**—"शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धनी । देहव्यायामसंख्याता मात्रया तां समाचरेत्" ( च. सू. अ. ७ ) इति । चकाराद्वेगाविधारणग्रहणम् ॥ ६ ॥

**एकान्तहितान्येकान्ताहितानि तु प्रागुपदिष्टानि, हिताहितानि तु यद्वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ७ ॥**

प्रागुपदिष्टानीति अग्निक्षारविषादीनि ॥ ७ ॥

**संयोगतस्त्वपराणि विषतुल्यानि भवन्ति । तद्यथा-वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैलविरोहिपिष्टशुष्कशाकाजाङ्गलमांसमद्यजाम्बवचिलिचिममत्स्यगोधावराहांश्च नैकध्यमश्नीयात्**

---

१ 'स्वास्थ्यहितत्वादि प्रपञ्चेनाह' इति **मु.** । २ '°प्रधानपर°' इति **मु.** । ३ '°निवातशरण°' इति **ता.** ।

४ मूले संनिवेशितोऽयं पाठः ( ९-१६ ) अस्याध्यायस्यान्ते डल्हणेन स्वव्याख्यायां **गयदास**संमतत्वेनोद्धृतः, ताडपत्रपुस्तकेऽप्ययमेव पठ्यते, **चक्रे**णाप्ययमेव व्याख्यात इत्यस्माभिर्मूले सन्निवेशितः; वर्तमानमुद्रितपुस्तकेषु पठ्यमानो **डल्हणे**न व्याख्यातश्च पाठो यथा—

"रोगं सात्म्यं च देशं च कालं देहं च बुद्धिमान् ।
अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तेः प्रयोजयेत् ॥ ९ ॥

**पयसा प्राक् पयसोऽन्ते वा । कपोतांश्च सर्षपतैलभृष्टान्नाद्यात् । कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्वग्निसिद्धा एरण्डतैलसिद्धा वा । मधुघृते समधृते । मधु चान्तरीक्षोदकानुपानम् । कांस्यभाजने दशरात्रपर्युषितं सर्पिः । मधु चोष्णमुष्णेन वा, दधि मद्यं वा । पित्तेन चाममांसम् । सुराकृशरापायसांश्च नैकध्यमश्नीयात् । सौवीरकेण सह तिलशष्कुलीः । तक्रेण सह मधुघृतधानापृषतमांसानि । मधुना गोधाम् । मत्स्यान् क्षौद्रासवेन, पृषतमांसं वा तेनैव । तथा मैरेयमा-**

---

अवस्थान्तरबाहुल्याद्रोगादीनां व्यवस्थितम् ।
द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे ॥ १० ॥
द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः ।
दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम् ॥ ११ ॥
एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु ।
एकान्तहिततां विद्धि वत्स सुश्रुत नान्यथा ॥ १२ ॥

अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः—नवविरूढधान्यैर्वसामधुपयोगुडमाषैर्वा ग्राम्यानूपौदकपिशितादीनि नाभ्यवहरेत्; न पयोमधुभ्यां रोहिणीशाकं जातुकशाकं वाऽश्नीयात्, बलाकां वारुणीकुल्माषाभ्यां, काकमाचीं पिप्पलीमरिचाभ्यां; नाडीभङ्गशाककुक्कुटदधीनि च नैकध्यं; मधु चोष्णोदकानुपानं; पित्तेन चाममांसानि; सुराकृशरापायसांश्च नैकध्यं; सौवीरकेण सह तिलशष्कुलीं; मत्स्यैः सहेक्षुविकारान्; गुडेन काकमाचीं, मधुना मूलकं, गुडेन वाराहं मधुना च सह विरुद्धं; क्षीरेण मूलकम्, आम्रजाम्बवश्वाविच्छूकरगोधाश्च; सर्वांश्च मत्स्यान् पयसा, विशेषेण चिलिचिमं; कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा; लकुचफलं पयसा दध्ना माषसूपेन वा, प्राक् पयसः पयसोऽन्ते वा ॥ १३ ॥

अतः कर्मविरुद्धान् वक्ष्यामः—कपोतांश्च सर्षपतैलभृष्टान्नाद्यात्; कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्; कांस्यभाजने दशरात्रपर्युषितं सर्पिः, मधु चोष्णैरुष्णे वा, मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीं, तिलकल्कसिद्धमुपोदिकाशाकं, नारिकेलेन वराहवसापरिभृष्टां बलाकां, भासमङ्गारशूल्यं नाश्नीयादिति ॥ १४ ॥

अतो मानविरुद्धान् वक्ष्यामः—मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्; स्नेहौ मधुस्नेहौ जलस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ ॥ १५ ॥

अत ऊर्ध्वं रसद्वन्द्वानि रसतो वीर्यतो विपाकतश्च विरुद्धानि वक्ष्यामः—तत्र मधुराम्लौ रसवीर्यविरुद्धौ मधुरलवणौ च, मधुरकटुकौ च सर्वतः, मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ च, अम्ललवणौ रसतः, अम्लकटुकौ रसविपाकाभ्याम्, अम्लतिक्तावम्लकषायौ च सर्वतः, लवणकटुकौ रसविपाकाभ्यां, लवणतिक्तौ लवणकषायौ च सर्वतः, कटुतिक्तौ रसवीर्याभ्यां, कटुकषायौ च तिक्तकषायौ रसतः ॥ १६ ॥"

१ 'सर्षपतैलसिद्धान्' इति ता. । २ 'पृषतमांसं मैरेयमाध्वीकाभ्याम्' इति ता. ।

**ध्वीकाभ्यां वालोपोदक्या वा मत्स्यान् । नेक्षुविकृतीः सर्वा मत्स्यैः सह । सर्पिर्गुडकाकमाचीमधुमूलकानि नैकध्यम् । मधुना वाराहं, दध्ना कौक्कुटं, मद्येन बलाकां, तिलकल्केन चोपोदिकां सिद्धाम् । न पिप्पलीं मत्स्यवसया । प्रियङ्ग्वनुलिप्तो न पायसमश्नीयात् ॥ ८ ॥**

संयोगादेकान्ताहितानि प्रपञ्चेनाह—संयोगतस्त्वित्यादि । अत एव च विरुद्धा इह प्रपञ्चाभिधेयाः, अन्यत्रानभिहितत्वात् । वल्लीफलं कूष्माण्डादि । कैरकं[2] छत्रकम् । चिलचिमो मत्स्यविशेषः । तत्र **चरक**श्चिलचिमे "स पुनः सफरी सर्वतो लोहितराजी रोहिताकारः प्रायो भूमौ चरति" (च. सू. अ. २६) । एतानि चेह व्यस्तसमस्तानि पयसा सह विरुद्धानि; एतत् संयोगेन विरुद्धं; वल्लीफलादीनामादावन्ते च पयः कालविशेषापेक्षसंयोगविरुद्धमेव । संस्काररूपसंयोगविशेषविरुद्धमाह—कपोतांश्चेत्यादि । कपिञ्जलाद्यपि संस्कारविरुद्धम् । मधुघृते समधृते इति मात्राप्रधानसंयोगविरुद्धम् । देशकालविशेषवत्संयोगविरुद्धं कांस्यभाजन इत्यादि । उष्णेनेति उष्णार्तेन पुरुषेण; यदुक्तं **चरके**—"मधु चोष्णमुष्णार्तेन च" ( च. सू. अ. २६ ) इति । पित्तेन चाममांसमिति पित्तेन युक्तमाममांसम्, अत्रामस्यानुपयोगादाममिवासम्यक्पकम् । तिलप्रधाना शष्कुली तिलशष्कुली । धाना भृष्टयवाः । सर्वा इति विशेषणेनात्र गुडादीनां मिलितानामेव विरुद्धत्वम् । वाराहमिति वराहमांसम्; एवं कौक्कुटं मांसमेव । प्रियङ्ग्वनुलिप्त इत्यादिना च परंपरासंयोग एवोच्यते ॥ ८ ॥

**तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत् ॥ ९ ॥**

विशेषगुणयोगेन विरुद्धमाह—तरतमेत्यादि । तरतमयोर्योगो यस्मिन् स तरतमयोगः, अतिशयमित्यर्थः; तेनातिशयेन गुणवर्तिना युक्तान्; भावानिति द्रव्याणि, तेनेह वीर्यसंज्ञा अष्टौ अतिरूक्षानित्याद्यनन्तरनिर्दिष्टा विवक्षिताः । एवमादीनित्यनेनातिपिच्छिलातितीक्ष्णादीनां गुरुलध्वोश्च ग्रहणम्, अन्ये अतिमधुरादीनामपि ग्रहणं वदन्ति । एते चातिरूक्षादयो गुणाः संस्काराद्याहिता एवात्र विवक्षिता इति पश्यामः, नैसर्गिकगुणानां संयोगप्रकरणेऽनधिकारात्, तथा हिताहितपक्षे तेषामविरुद्धत्वाच्च ॥ ९ ॥

**भवन्ति चात्र—**

**विरुद्धान्येवमादीनि वीर्यतो यानि कानिचित् ॥**
**तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम् ॥ १० ॥**

एकान्ताहितसंयोगविरुद्धमुपसंहरति—विरुद्धानीत्यादि । वीर्यत इति स्वभावतः; स च स्वभावो द्रव्यरसवीर्यविपाकाश्रयो ज्ञेयः । यदुक्तं "येन कुर्वन्ति तद्वीर्यम्" ( सू. अ. ४१ ) इति । अत्रादिग्रहणाच्चरकादितन्त्रान्तरोक्तान्यपि विरुद्धानि संगृहीतानि । हिताहितमाह—

---

१ 'गुडं काकमाच्या, मधुना मूलकानि' इति ता. । २ 'कवकं' इति मु. ।

शेषमित्यादि । शेषमेकान्तहितैकान्ताहितादन्यत् सर्वम् । विरुद्धं तु प्रभावादेव समाने[1]-गुणतया प्रतीयमानमपि कार्यतो विरुद्धं[2] भवितुमर्हति । ततश्चैकान्ताहितमिति शास्त्रादेवावधार्यते ॥ १० ॥

**व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति ॥**
**विरुद्धरसवीर्याणि भुञ्जानोऽनात्मवान्नरः ॥ ११ ॥**

विरुद्धानां कार्यमाह—व्याधिमित्यादि । "षाण्ढ्यान्ध्य-वीसर्प-दकोदराणां" ( च. सू. अ. २६ ) इत्यादिना **चरको**क्तव्याधिम् । नियच्छति प्राप्नोति । विरुद्धरसवीर्याणीति अत्र वैरोधिकत्वेनोक्तान्येव विरुद्धरसानि विरुद्धवीर्याणि च यथायोग्यतयोहनीयानि । यदुक्तं **चरके** "न मत्स्यान् पयसा सहाभ्यवहरेत्, उभयं ह्येतन्मधुरं मधुरविपाकं महाभिष्यन्दि-शीतोष्णादिविरुद्धवीर्यत्वाच्छोणितप्रदूषणं, महाभिष्यन्दित्वान्मार्गोपरोधाय" ( च. सू. अ. २६ ) इति । न तु विरुद्धत्वेनानुक्तेऽपि विरुद्धरसत्वादिकल्पना, तथा हि सति पयोऽपि शीतमुष्णेन मधुना विरुद्धं स्यात्, विपाकादि च मधुराम्लरसं रसविरोधाद्विरुद्धं स्यात् । 'विरुद्धरसवीर्यादीन्' इति पाठेऽपि आदिशब्देन विपाकोऽपि गृह्यते ॥ ११ ॥

**यत्किंचिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् ॥**
**रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥ १२ ॥**

व्याधिहेतुप्रकरणाद्धिताहितमपि यथा व्याधिहेतुर्भवति तथाऽऽह—यदित्यादि । दोषानुत्क्लेश्येति दोषान् क्षोभयित्वा । निर्हरेदित्यनेन दोषहारकमदनत्रिवृतादिभ्यो हितेभ्यो व्यावर्तयति । भुक्तमित्यधिकृतम्; एतच्चोपलक्षणं, तेन विहारोऽप्येवंलक्षणो ज्ञेयः । यदुक्तं **चरके** "यत् किंचिद्दोषमास्रुभ्य न निर्हरति कायतः । आहारजातमन्यद्वा तत् सर्वमहितं स्मृतम्" ( च. सू. अ. २६ ) इति । रसादिष्वयथार्थमिति रसादिष्वननुगुणं, रसादि-दूषकमिति यावत्; किंवा रसादिष्वयथार्थमिति रसवीर्यविपाकेष्वेवायथार्थं विरुद्धमित्यर्थः । केचिदेनमपि श्लोकं विरुद्धाहारलक्षणपरमेव वदन्ति, येन हिताहितत्वेन व्याधिकराभिधान-पक्षे सामान्येन दोषकरं व्याधिकरं चाभिधातुं न युज्यत इति कृत्वा ॥ १२ ॥

**विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ॥**
**वमनं शमनं वाऽपि पूर्वं वा हितसेवनम् ॥ १३ ॥**

अत्र चिकित्सामाह—विरुद्धाशनजानित्यादि । प्रतिहन्तीति प्रतिपक्षं सत् हन्ति, तेन कुष्ठादिप्रतिपक्षविरेचनं कुष्ठादि हन्ति, एवं वमनशमनयोरपि प्रत्यर्थो व्याख्येयः । पूर्वं वा हितसेवनं पूर्वं महाप्रभावरसायनादिसेवया न प्रभवन्त्येवंभूता व्याधय इत्यर्थः । अयं च श्लोक**श्चरकेऽ**पि पठ्यते ॥ १३ ॥

**सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च ॥**
**स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ १४ ॥**

---

१ 'असमानगुणतया' इति **मु.** । २ 'अविरुद्धं' इति **मु.** ।

अथ वातगुणान् वक्ष्यामः—

पूर्वः समधुरः स्निग्धो लवणश्चैव मारुतः ।
गुरुर्विदाहजननो रक्तपित्ताभिवर्धनः ॥ १५ ॥
क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये ॥
तेषामेव विशेषेण सदा रोगविवर्धनः ॥ १६ ॥
वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् ॥
मधुरश्चाविदाही च कषायानुरसो लघुः ॥ १७ ॥
दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्धनः ॥
रक्तपित्तप्रशमनो न च वातप्रकोपणः ॥ १८ ॥
विशदो रूक्षपरुषः खरः स्नेहबलापहः ॥
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ॥ १९ ॥
सद्यः प्राणक्षयकरः शोषणस्तु शरीरिणाम् ॥
उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च ॥ २० ॥
कषायानुरसः शीतो दोषाणां चाप्रकोपणः ॥
तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्धनः ॥ २१ ॥
क्षीणक्षयविषार्तानां विशेषेण तु पूजितः ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने हिताहितीयो नाम विंशोऽध्यायः ॥ २० ॥

विरुद्धाशनं यतो व्याधिकरं न भवति तदाह—सात्म्यत इत्यादि । सात्म्यत इत्यभ्याससात्म्यतया । अल्पं हीनशक्तित्वादभिभूतं न करोति कार्यम् । तरुणस्य प्रत्यग्रबलवत्त्वाद्वितथं भवति । स्निग्धव्यायामबलिन इति स्निग्धस्य स्रोतःसु न तिष्ठति दोषः, तथा च दोषविगमाद्विरुद्धं वितथं भवति; व्यायामिनश्च व्यायामेनैव दोषक्षयः । तदुक्तं "व्यायामं कुर्वतो नित्यं विरुद्धं वितथं भवेत्" ( चि. अ. २४ ) इति; बलिनस्तु बलाभिभूता एव दोषा न जायन्ते न कुर्वन्ति वा कार्यम् । यदुक्तं—"बलं ह्यलं निग्रहाय" ( च. चि. अ. ३ ) इति । केचिदत ऊर्ध्वं विरुद्धानित्यादिना रसवीर्यविपाकविरोधिद्वन्द्वान् पठन्ति; तन्न, यतः सर्वरसाभ्यवहारो विहितः शास्त्रेष्वेकरसाभ्यवहारश्च निषिद्धः; तथाहि "आदौ मधुरमश्नीयात्ततोऽम्ललवणौ रसौ" ( सू. अ. ४६ ) इत्यादिवचनाद् विरुद्धेनात्रोक्तरसस्यैवाभिधानम् । विरोधस्तु रसादीनां परस्परविरुद्धजनकत्वेन विवक्षित एव । यद्वक्ष्यति—"अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः । व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषग्" इति । न तु घृतमधुवन्मेलकविरुद्धत्वं रसादीनाम् । उक्तवैरोधिकेष्वेव रसादयोऽपि विरुद्धा भवन्त्येव, तदर्थमेवोक्तं यत्—विरुद्धरसवीर्या-

१ 'विरुद्धानां कुतो व्याधिकरत्वं न भवति' इति मु. ।

णीति । केचिद्धिताहितप्रकरणागततया वायोरपि दिग्विशेषपरिग्रहाद्धिताहितत्वादिगुणं पठन्ति 'पूर्वः सलवणः' इत्यादि; एतच्च पाठपक्षे व्यक्तार्थमेव ॥ १४–२१ ॥—

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यटीकायां भानुमत्यां सूत्रस्थाने हिताहितीयो नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशतितमोऽध्यायः ।

**अथातो व्रणप्रश्नमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

व्रणितोपासनीये व्रणोऽधिकृतः; तस्य प्रसङ्गेन हिताहितीयाभिधानानन्तरमधिकृतं व्रणमेव व्रणकारणवातादिनिरूपणेनाभिधातुं व्रणप्रश्नोऽभिधीयते, अत्रोत्पन्नस्य छस्य लुक्; व्रणमाश्रित्य प्रश्नो व्रणप्रश्नः, तेन कारणवातादिप्रश्नोऽपि व्रणप्रश्न एव; वातादींश्च सर्वथाभिधायाध्यायान्ते व्रणस्य वैभवं दर्शयिष्यति—वृणोति यस्माद्रूढेऽपीत्यादिना । प्रश्नेन चेह तद्विषयतया व्रणकारणवातादयोऽभिधीयन्ते; किंवा प्रश्नेन प्रश्नकारणं जीप्सोच्यते; तया च जीप्साविषयव्रणकारणवाताद्यभिधानं; किंवा, अत्र शिष्यस्योहनीयो व्रणप्रश्नोऽस्ति, तदधिकृत्याध्यायकरणं ज्ञेयम् ॥ १ ॥ २ ॥

**वातपित्तश्लेष्माण एव देहसंभवहेतवः । तैरेव चाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यतेऽगारमिव स्थूणाभिस्तिसृभिः, अतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्रलयहेतवः । तदेभिरेव शोणितचतुर्थैः संभवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति ॥ ३ ॥**

उक्तव्याख्याक्रमेणाधिकृतान् वातादीनाह—वातपित्तेत्यादि । एवकारो भिन्नक्रमः, तेन संभव एवेत्यर्थः; तेनापरेषामपि शुक्रशोणितजीवानां संभवहेतुत्वमविरुद्धम् । तत्र वातादयः शुक्रशोणितगताः प्रकृतिस्थतया गर्भसंभवहेतवो भवन्ति; एतदेव रजःशुद्धौ शारीरे ( शा. अ. २ ) प्रपञ्चेन वक्ष्यति; तथा "द्वितीये मासे शीतानिलोष्णैरभिपच्यमानो घनः संजायते" ( शा. अ. ३ ) इति वचनात् कफपित्तानिलानां कारणत्वमुक्तम्; अन्ये तु शुक्रशोणितयोः सौम्याग्नेयत्वात् कफपित्ते वायुश्च संयोजक इति संभवहेतुतां वदन्ति, तत्र शुक्रशोणितेन कफपित्तग्रहणमसुख्यग्रहणत्वान्नाद्रियामहे । उत्पत्तौ हेतुतां प्रतिपाद्य देहस्थितौ हेतुत्वमाह—तैरेव चेत्यादि । अव्यापन्नैरित्यविकृतैः । अधोमध्योर्ध्वसंनिविष्टैरिति यथाक्रमं, तच्च स्थानमग्रे वक्ष्यमाणम् । अतश्च त्रिस्थूणमिति भिन्नक्रमचकारपाठात् त्रिस्थूणं चात इत्यर्थः । तदुक्तं तन्त्रान्तरे—"ऊर्ध्वमूलमधःशाखं त्रिस्थूणं

---

१ 'विवृतः' इति मु. ।

पञ्चदैवतम्" इति। वातादीनां विनाशेऽपि विकृत्युपाधिभेदेन कारणत्वमाह—त एवेत्यादि। प्रलय इति देहनाशे। रक्तस्यापि शल्यशास्त्रप्रधानव्रणाधिष्ठानस्य परमार्थतो दूष्यस्यापि हेतुलिङ्गचिकित्सितविशेषप्रयोजकतया प्राधान्यख्यापनार्थं दोषतुल्यतया संभवादिहेतुत्वं नियमयन्नाह—तदेभिरित्यादि। अविरहितमिति कारणतया अविरहितं, शोणितस्य देहकारणत्वमार्तवकारणतया व्यक्तमेव; शोणितस्य देहकारणत्वादि चोक्तं शास्त्रे, यथा—"देहस्य रुधिरं मूलं रुधिरेणैव धार्यते" (सू. अ. १४) इति। साक्षाच्चास्य वातादिवत् प्रपञ्चानभिधानेन पारमार्थिकीं दोषतां प्रतिक्षिपति, यदि रक्तं वातादिवद्दोषः स्यात्तदा तेनापि प्रकृतिः स्यादित्यादि दूषणमनुसर्तव्यम् ॥ ३ ॥

**भवति चात्र—**

**नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् ॥**
**शोणितादपिवा नित्यं देह एतैस्तु धार्यते ॥ ४ ॥**

उक्तमर्थं सुखग्रहणार्थं श्लोकेनाह—नर्ते इत्यादि। अत्रादौ प्राकृतकफस्याधिकगुणतया प्राधान्यख्यापनार्थं कफ उक्तः। अत एव चोर्ध्वमूलमित्युक्तं, तथा "विसर्गादानविक्षेपैः" इत्यत्रापि कफ आदावुद्दिष्टः। अस्तीति भवत्युत्पद्यत इत्यर्थः। अपिवाशब्देन शोणितस्यात्राभिमुख्यतां दर्शयति। धार्यत इत्यनेन स्थितिहेतुत्वमुक्तं, प्रलयहेतुत्वमनुक्तमनुगम्यमेव ॥ ४ ॥

**तत्र 'वा' गतिगन्धनयोः, इति धातुः, 'तप' संतापे, 'श्लिष' आलिङ्गने, एतेषां कृद्विहितैः प्रत्ययैर्वातः पित्तं श्लेष्मेति च रूपाणि भवन्ति ५**

वातादीनां निरुक्त्या चिकित्सोपयोगिरूपमाह—तत्रेत्यादि। तत्र निरुक्त्या वातस्य चलत्वं, पित्तस्य तापकत्वं, कफस्य उपश्लेषकत्वमुक्तं भवति। कृद्विहितैरिति उणादिकैरत्र साधनं ज्ञेयम् ॥ ५ ॥

**दोषस्थानान्यत ऊर्ध्वं वक्ष्यामः—तत्र समासेन वातः श्रोणिगुदसंश्रयः; तदुपर्यधो नाभेः पक्वाशयः, पक्वामाशयमध्यं पित्तस्य; आमाशयः श्लेष्मणः ॥ ६ ॥**

वातादीनां सर्वशरीरचराणामपि विशिष्टं प्रधानस्थानमाह—तत्रेत्यादि। समासेनेति व्यक्ष्यमाणपञ्चस्थानात् संक्षेपेण। अनेन च वक्ष्यमाणस्थानेभ्योऽप्येतत् स्थानप्रामाण्यं तत्रैव विशेषेण चिकित्सार्थमुच्यते। पक्वामाशयमध्यमिति पक्वाशयादुपर्यामाशयाधोभागः। आमाशय इति आमाशयोर्ध्वभागः ॥ ६ ॥

**अतः परं पञ्चधा विभज्यन्ते। तत्र वातस्य वातव्याधौ वक्ष्यामः; पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्वोक्तं च; श्लेष्मण उरः शिरः कण्ठो जिह्वामूलं सन्धय इति पूर्वोक्तं च; एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम् ॥ ७ ॥**

उक्ताद्विस्तरेण स्थानान्याह—अतः परमित्यादि । विभज्यन्ते 'स्थानानि' इति शेषः । वातव्याधाविति वातव्याधिनिदाने, प्राणादिपञ्चवायूनां पञ्चस्थानविभागेन । यकृत्प्लीहानावधिकं रञ्जकपित्तस्थानम् । पूर्वोक्तमित्यनन्तरोक्तम् । **चरके** तु "स्वेदो रसो लसीका रुधिरमामाशयश्च" ( च. सू. अ. २० ) इति यत् पित्तस्थानमुक्तं, तदनेन सहाविरुद्धमेव; तत्र हि स्वेदलसीकाशब्दाभ्यां तदधिष्ठानं सूच्यते, उक्तं हि तत्र—"यच्चोष्मणाऽनुबद्धं लोमकूपेभ्योऽभिनिष्पतत् स्वेदशब्दमाप्नोति" ( च. शा. अ. ७ ) इति; तथाऽवस्थाविशेषे स्वेदमुदकमधिकृत्योक्तं—"यत् सर्वशरीरचरं बाह्यां त्वग् बिभर्ति, यत् त्वगन्तरे व्रणगतं लसीकाशब्दं लभते" ( च. शा. अ. ७ ) इति; रसशब्देन च रसस्थानं हृदयं साधकपित्तस्य स्थानमुक्तं, रुधिरेण च तत्स्थानं यकृत्प्लीहानौ, आमाशयशब्देन चामाशयाधोभाग उच्यते; चकारेण तत्र दृष्टिरप्युक्तेति न विरोधः । श्लेष्मण उर आदि व्यक्तम् । अव्यापन्नानां वातादीनां यद्यपि कृत्स्नमपि शरीरं स्थानं, यदुक्तं **चरके**—"सर्वशरीरचरास्तु वातपित्तश्लेष्माणोऽविकृताऽविकृता" ( च. सू. अ. २० ) इति, तथाऽप्यव्यापन्नानामितिवचनेन व्यापन्नानां श्रोणीगुदादिवदुन्मार्गगामितया स्थानान्तरमपि प्रधानं भवतीति दर्श्यते ॥ ७॥

**भवति चात्र—**

**विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ॥**
**धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ ८ ॥**

उक्तमर्थं लोकप्रसिद्धदृष्टान्तेन दर्शयन्नाह—विसर्गेत्यादि । विसर्गः सौम्यांशविसर्जनं चन्द्रस्य कफस्य च । आदानं सौम्यांशशोषणं सूर्यस्य पित्तस्य च । विक्षेपश्च बहिरन्तश्चोचितधातुव्यूहनादिर्वायोः साधारणम् ॥ ८ ॥

**तत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निः ? आहोस्वित् पित्तमेवाग्निरिति ? । अत्रोच्यते-न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहनपचनादिष्वभिप्रवर्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति; क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगात्, अतिवृद्धे शीतक्रियोपयोगात्, आगमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति ॥ ९ ॥**

ननु कथं पित्तमादत्ते ? येनाग्निरेव तेजोरूपतया सूर्यवदादत्त इति शङ्कायां पित्ताग्न्योरविरुद्धत्वं सविमर्शं प्रतिपादयन्नाह—तत्र जिज्ञास्यमित्यादि । न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यत इत्यनेन पित्ताग्न्योर्भेदप्रतिपादकप्रमाणाभावं दर्शयति; यत्तु "तीक्ष्णः पित्तेनाग्निः" ( सू. अ. ३५ ) इत्यादिभेदावभासकं वचनं तद्यथाश्रुतार्थं न भवतीति भावः । एतदेव पित्तमेवाग्निरितिव्यपदेशं सोपपत्तिकमाह—आग्नेयत्वादित्यादि । पित्ताग्न्योर्भेदे प्रमाणाभावं दर्शयित्वा स्वपक्षसाधकमभेदेऽनुमानमाह—क्षीणे हीत्यादि । अग्नेर्गुणोऽग्न-

१ '॰मभेदमाह' इति मु. ।

पाचकत्वलक्षित ऊष्मा, तस्मिन् क्षीणे, तत्समानं पित्तसमानं कटुतीक्ष्णोष्णं नागरादि। अतिप्रवृद्ध इत्यग्निगुणे एव। शीतक्रियोपयोगादित्यनेनापि पित्तप्रत्यनीकक्रियातः प्रशमनं दर्शयति। एतेनाग्नित्वेन व्यवह्रियमाणं तेजः पित्तावयवैरूपं, पित्तवर्धनपित्तक्षयकरैर्वृद्धि-ह्रासयोगित्वात् प्रदेशान्तरस्थपित्तावयववदित्यनुमानं दर्शितं भवति। अत्रैव साध्ये आगमं प्रमाणमाह—आगमाच्चेति। आगमश्च यथा "कानकं राजतं ताम्रं कृष्णायस्त्रपु-सीसकम्। चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात्" (सू. अ. २६) इति। तथा "षष्ठी कला पित्तधरा" (शा. अ. ४) इत्यादिना अग्न्याधारा ग्रहण्युक्ता। भोजेऽपि "तस्मात्तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान्" इत्यागमादभेदो ज्ञेयः। (अनेन प्रपञ्चेन पित्तोष्मरूपतया पित्तादभेदो वह्नेर्धर्मधर्मिणोरभेदविवक्षया साधितो ज्ञेयः।[२]) पारमार्थि-काभेदे हि तीक्ष्णः पित्तेनाग्निरिति कार्यकारणभावो न स्यात्, तथा "कट्वजीर्णविदाह्यम्ल-क्षाराद्यैः पित्तमुल्बणम्। आप्लावयद्धन्त्यनलम् (च. चि. अ. १५) इति चरकवचनविरोधः, तथा "पित्तशमनमपि घृतमग्निमेधे करोति" (सू. अ. ४५) इत्युक्तमसङ्गतं स्यात्; तथा "समदोषः समाग्निः" इति वचनमसंयुक्तं स्यात्। यदप्यभेदसाधकं "पित्ततेजःप्रतापनात्" (सू. अ. २६) इति वचनं, तथा "पित्तोष्मा यः स पक्तिमान्" तदपि पित्ताद्भिन्नस्य तत्कर्मणस्तेजसो[३]ऽग्नित्वं वदति, यत्त्वनुमानं पित्तस्य पित्तशमने शमनं[४] पित्तवर्धनैर्वर्धनं तद् घृतस्य पित्तशमकस्याग्निवर्धकत्वेन तथा कट्वजीर्णविदाह्यम्लस्य च पित्तजननावान्तर-व्यापारस्याग्न्युपघातकत्वेन प्रसिद्धत्वादसिद्धं, तस्माद्धर्मधर्मिरूपतयैवात्राभेद आचार्यस्य विवक्षितः। तद्वक्ष्यति "औदर्यो[५] भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तुं न च शक्यते" (सू. अ. ३५) इति। सौक्ष्म्यं हि पित्तेऽनुपपन्नम्, ऊष्मणि तूपपन्नम्। यत् "षष्ठी कला पित्तधरा" (शा. अ. ४) इति वचनं तदग्नावौपचारिक-पित्तशब्दप्रयोगात्। धर्मधर्म्यभेदोपचारदर्शनं च पित्तवर्धनैः प्रायो वर्धनमग्नेस्तच्छमनैश्च प्रायः क्षपणमिति प्रतिपादनार्थम्। पित्ततेजोरूपतायां च वह्नेस्तेजोविपरीतपित्तद्रवांश-वर्धकाजीर्णविदाह्यम्लादिभिर्व्यम्लीभूतपित्तजननादग्नेर्निर्वापणं युक्तमेव ॥ ९ ॥

**तच्चादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्विधमन्नपानं पचति, विवेचयति च दोषरसमूत्रपुरीषाणि; तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्मणाऽनुग्रहं करोति, तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा; यत्तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा, स रसस्य रागकृदुक्तः; यत् पित्तं हृदयस्थं तस्मिन् साधकोऽग्निरिति संज्ञा, सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः; यद्दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा, स रूपग्रहणाधिकृतः; यत्तु त्वचि पित्तं**

१ 'पित्तानुमेयरूपं' इति मु.। २ अयं पाठो मुद्रितपुस्तके नोपलभ्यते। ३ 'तद्धर्मिणः' इति मु.। ४ 'यच्छमनं पित्तस्य पित्तक्षपणैः' इति मु.। ५ 'जाठरः' इति मु.।

**तस्मिन् भ्राजकोऽग्निरिति संज्ञा, सोऽभ्यङ्गपरिषेकावगाहालेपनादीनां क्रियाद्रव्याणां पक्ता छायानां च प्रकाशकः ॥ १० ॥**

पाचकस्य व्यापारमाह—तच्चेत्यादि। अग्नेः शरीरादहनं तथाऽन्नपचनं रसमूत्रादिविवेचनादि च कार्यं दृष्टेनानुपपन्नं पश्यन्नदृष्टकारणतां दर्शयन्नाह—अदृष्टहेतुकेन विशेषेणेति। देहजनकादृष्टेन हि बाह्यादग्नेर्विशिष्टोऽयमग्निरारभ्यते, येनैवंविधमन्नपचनरसमलादिविवेचनाऽभ्यन्तरानुग्रहशरीररक्षणादि करोतीति भावः। शेषाणां पित्तस्थानानामिति तथा शरीरस्य चाग्निकर्मणेति पञ्चभूताग्निसप्तधात्वग्निकर्मणा। यदुक्तं **चरके**—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" (च. चि. अ. १५) इति। तथा "सप्तभिर्देहधातारो धातवो द्विविधं पुनः। यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत्" (च. चि. अ. १५) इति। एवं रञ्जकादावप्यदृष्टानुग्रहो बोद्धव्यः। सोऽभिप्रार्थितसाधनकृदुक्त इति योगवशाद्वशित्वलाभेऽभीष्टसाधनं साधकेनाग्निना भवतीत्यागमः। एतच्च परं साधककार्यं; तेन शौर्यादि च तस्य कार्यं ज्ञेयं; यदुक्तं **चरके**—"अग्निरेव[1] शरीरे पित्तान्तर्गतः कुपिताऽकुपितः शुभाऽशुभानि करोति; तद्यथा—"पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः प्रकृतिविकृतिवर्णौ शौर्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चापराणि द्वन्द्वानि" (च. सू. अ. १२) इति। क्रियाद्रव्याणामिति क्रियोपनीतानां बहिःपरिमार्जनद्रव्याणाम्। छायानां चेति चकारात् प्रभाणां च; छायाप्रभे च छायाविप्रतिपत्त्यध्याये व्याकरणीये ॥ १० ॥

**भवति चात्र—**

**पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ॥**
**उष्णं कटु सरं चैव विदग्धं चाम्लमेव च ॥ ११ ॥**

इदानीं पित्तस्य चिकित्सोपयोगिस्वरूपमाह—पित्तं तीक्ष्णमित्यादि। सरतीति सरम्। विदग्धं चाम्लमिति विदाहिभिरम्लादिभिर्द्रव्यैरुष्णैश्च विरुद्धपाकार्थमम्लरसं च भवति अम्लधर्मतया सस्नेहत्वमपि स्वीकृतमेवात्र चरकोक्तम्। तेन कटुकोष्णादिभिरेव तैजसैस्तन्मते प्राकृतं कटुरसं च जन्यते (द्रवतायामपि[2] चोष्णगोमूत्रादाग्नेयत्वं)। चरके तु प्राकृतपित्तमपि कट्वम्लरसं सस्नेहं च स्वीकृतम्। यदुक्तं—"सस्नेहमुष्णं तीक्ष्णं च सरमम्लं द्रवं कटु। पित्तं" (च. सू. अ. १) इति। तेन या पित्तस्याविदग्धतावस्था इहोक्ता सा चरकेऽपि प्राकृतीकृत्योच्यत इति नास्ति वस्तुगतविरोधः ॥ ११ ॥

**अत ऊर्ध्वं श्लेष्मस्थानान्यनुव्याख्यास्यामः। तत्र, आमाशयः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्ध्वगतित्वात्तेजसश्चन्द्र इव आदित्यस्य, चतुर्विधस्याहारस्याधारः; स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरो भवति ॥ १२ ॥**

---

१ 'अग्निरेव पित्तान्तर्गतो विकृताविकृतः पक्तिमपक्तिं दर्शनादर्शनं भयं शौर्यं रागारागमुष्मणोऽतिमात्रत्वमित्यादि करोति' इति ह.। २ अयं पाठो मुद्रितपुस्तके नोपलभ्यते।

**माधुर्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च ॥**
**आमाशये संभवति श्लेष्मा मधुरशीतलः ॥ १३ ॥**

अत ऊर्ध्वमित्यादौ अनुव्याख्यास्याम इति यथोक्तानुक्रमेण व्याख्यास्यामः । कफप्रधान-स्थानमामाशयमेवादृष्टकृतेन स्वरूपेण श्लेष्मसंबन्धानुगुणेन[1] चाह—तत्रामाशय इत्यादि । तत्प्रत्यनीकत्वादिति तेजोरूपपित्तप्रत्यनीकत्वात्, तथोर्ध्वगतित्वाच्च तेजस इति जाठराग्नेः; एतेन शरीरादृष्टेन श्लेष्माधारतयोर्ध्वगपित्तदाहप्रतिबन्धार्थमामाशयो[2] निवेशितः । चन्द्र इवादित्यस्येति दृष्टान्तता विषयसाधर्म्यमात्रेण । तत्रेत्यादौ औदकैर्गुणैरिति द्रवस्नेहादिभिः; यदुक्तं चरके—"तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ।" ( च. चि. अ. १५ ) इति; आशये चौदकगुणाविर्भाव औदकश्लेष्माधारामाशयमहिम्ना ज्ञेयः ॥ १२ ॥ १३ ॥

**स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्मणाऽनुग्रहं करोति; उरःस्थस्त्रिकसन्धारणमात्मवीर्येणान्नरससहितेन हृदयावलम्बनं च करोति; कण्ठस्थो[3] जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्तते; शिरःस्थः स्नेहसंतर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्येणानुग्रहं करोति; सन्धिस्थः सर्वसन्धिसंश्लेषात् सर्वसन्ध्यनुग्रहं करोति ॥ १४ ॥**

**भवति चात्र—**

**श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च ।**
**मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः ॥ १५ ॥**

आत्मशक्त्येति अदृष्टाहितप्रभावेण । अनुग्रहश्चाप्लवनेन । त्रिकमिह पृष्ठास्थिबाहुद्वय-संधिस्थानम् । आत्मवीर्येणेति स्नेहादिना । कण्ठस्थ इत्यादौ जिह्वेन्द्रियस्य रसज्ञाने श्लेष्मा सौम्यत्वाद्वर्तत इति कारणं भवति । इन्द्रियाणि हि स्वस्वजातीयाभिव्यक्तमेव विषयं गृह्णन्ति; यथा—तैजसं चक्षुरालोकसहकृतमेव रूपं गृह्णाति, एवमाप्यं रसनं कण्ठगत-श्लेष्माभिव्यक्तमेव रसं गृह्णातीत्यर्थः । स्नेहने तर्पणे चाधिकृत इति स्नेहतर्पणाधिकृतः; श्लेष्मणा शिरःस्थेनेन्द्रियाधिष्ठानानुग्रहादिन्द्रियाण्यात्मकार्यं कुर्वन्तीति वाक्यार्थः । श्लेष्मा श्वेत इत्यादौ चकारान्मृदुः स्थिरश्च । विदग्धो लवण इति विदग्धान्नरसाद्विदग्धः । दोषाणां च लक्षणकथनं दोषविपरीतभेषजदोषसमानगुणनिदानाद्यर्थम् ॥ १४ ॥ १५ ॥

**शोणितस्य स्थानं यकृत्प्लीहानौ, तच्च प्रागभिहितं; तत्रस्थमेव शेषाणां शोणितस्थानानामनुग्रहं करोति[4] ॥ १६ ॥**

---

१ 'श्लेष्मसमुद्धानुगुणेन' इति ह. । २ 'श्लेष्माधारतया च पाचकाग्नेरूर्ध्वगतेस्तेजसा संबन्धार्थं चोर्ध्वं निर्मित इति भावः' इति ह. । ३ 'जिह्वामूलकण्ठस्थः' इति ड. । ४ 'शोणित-स्थानं प्रागभिहितम्' इति ताडपत्रपुस्तके पठ्यते । अयमेव पाठश्चक्रसंमत इति प्रतीयते ।

**भवति चात्र—**

**अनुष्णशीतं मधुरं स्निग्धं रक्तं च वर्णतः ॥**
**शोणितं गुरु विस्रं स्याद्विदाहश्चास्य पित्तवत् ॥ १७ ॥**

रक्तस्यापि दोषतया निर्देशात् स्थानान्याह—शोणितस्थानमित्यादि । प्रागिति शोणितवर्णनीये । अनुष्णशीतमिति सौम्याग्नेयत्वाच्छोणितस्य । विदाहश्चास्य पित्तवदिति दुष्टपित्तवदित्यर्थः । तद्दर्शितं हि तन्त्रान्तरवचनं प्रपञ्चेन शोणितवर्णनीये "विदग्धं चोष्णमेव" इत्यन्तम् ॥ १६ ॥ १७ ॥

**एतानि खलु दोषस्थानानि; अत्र[1] संचीयन्ते दोषाः । प्राक् संचयहेतुरुक्तः । तत्र संचितानां खलु दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति । तत्र प्रथमः क्रियाकालः ॥ १८ ॥**

एतानीति प्राधान्येन एतानि । अत्र संचीयन्त इति प्रकर्षेण चीयन्ते यथास्थानं दोषाः । तेनान्यत्रापि त्वगादौ बाह्यदुष्टजलादिना चयः कारणसंबन्धाद्भवति, सोऽल्पतया नेह कथ्यते । अन्ये त्वत्रैव नियतं चयं वदन्ति, तन्मते बाह्यलेपादिना दोषवृद्धिः कुतोऽस्येति विचार्याः । प्राक् संचयहेतुरुक्त इति ऋतुचर्ये "वर्षास्वौषधयः" ( सू. अ. ६ ) इत्यादिग्रन्थेन । एतच्च संचयकारणकथनमुक्तोदाहरणानुगुण्यात्, न तु तत्संचयकारणनियमात्; येन मधुरस्निग्धाद्याहारादिना कफादिचय इतरेष्वर्तुष्वपि दुर्निवार एव । संचितदोषलक्षणं त्वत्र कर्तव्यचिकित्साविधानार्थमाह—संचितानामित्यादि । अत्र स्तब्धपूर्णकोष्ठता वाते संचिते, पीतावभासता पित्ते, शेषं कफस्य; सर्वमेव वा सर्वस्य । अन्ये 'चयकारणद्वेषश्च' इति पठन्ति । प्रथमः क्रियाकाल इति आद्यचिकित्साकालः । यदुक्तमग्रे "संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः" इति । केचिदत्र चयप्रकोपयोर्लक्षणभेदं पठन्ति ॥ १८ ॥

**अत ऊर्ध्वं प्रकोपणानि[2] वक्ष्यामः । तत्र बलवद्विग्रहातिव्यायामव्यवायाध्ययनप्रपतनप्रधावनप्रपीडनाभिघातलङ्घनप्लवनप्रतरणरात्रिजागर[3]णभारहरणगजतुरगरथपदातिचर्या[4]कटुकषायतिक्तरूक्षलघुशीतवीर्यशुष्कशाकवल्लूरवरकोद्दालककोरदूषश्यामाकनीवारमुद्गमसूराढकीहरेणुकलायनिष्पावानशनविषमाशनाध्यशनवातमूत्रपुरीषशुक्रच्छर्दिक्षवथूद्गारबाष्पवेगविघातादिभिर्विशेषैर्वायुः प्रकोपमापद्यते ॥ १९ ॥**

स्वस्थे चयपूर्वकोऽपि प्रकोपो भवतीति तदनन्तरं प्रकोपकारणं लक्षणं चाह—अत इत्यादि । प्रशब्दोऽयमादिकर्मणि, तेन प्रथमः कोपः प्रकोपः । बलवद्विग्रहादय उक्ताः । आदिशब्दात् क्षुद्विघातादिग्रहणम् ॥ १९ ॥

---

१ 'एषु' इति ड. । २ 'प्रकोपकारणानि' इति ता. । ३ '°प्रजागरण°' इति ता. ।
४ '°हयगजरथप्रयाण°' इति ता. ।

**स शीताभ्रप्रवातेषु घर्मान्ते च विशेषतः ॥**
**प्रत्यूषस्यपराह्णे च जीर्णान्ते च प्रकुप्यति ॥ २० ॥**

काले काले वातप्रकोपणं पृथगाह—स शीतेत्यादि । शीतेति शीतकाले; तदुक्तं **चरके**—"शीते शीतानिल°" इत्यादिना "वायुः शीतः शीते प्रकुप्यति" ( च. सू. अ. ६ ) इत्यन्तेन । अत्र प्रवाते इति प्रवातलक्षिते वर्षाकाले । घर्मान्त इति प्रावृषि । आहारस्य जीर्णतारूपोऽन्तो जीर्णान्तः । अत्र बलवद्विग्रहादयो वातं जनयन्तः प्रकृष्टमेव जनयन्तीति कोपहेतवो मन्दमन्दोपयुक्तहेतुचितदोषकोपकाश्च भवन्ति, न पुनः पूर्वमृतुचर्योक्तचयहेतुचितानामेते प्रकोपकाः; तथा सत्येतद्व्यतिरेकेणार्तवचयस्य कोपो न स्यात्; आर्तवचयं विना चैषां वातविकारहेतुता सर्वदृष्टा न घटिता । तस्माद्बलवद्विग्रहादिभिः प्रबलतया दोषो जन्यमानो न प्रकोपहेत्वन्तरमपेक्षते, स्तोकस्तोकसेवितरूक्षादिकारणजनिताश्च दोषा आशये लीनत्वात् प्रकोपकारणमपेक्षन्त एवेति ऋतुचर्येऽपि व्युत्पादितम् । एवं पित्तप्रकोपहेतुष्वपि व्याख्येयम् ॥ २० ॥

**क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्णलघुविदग्धतिलतैलपिण्याककुलत्थसर्षपातसीहरितकशाकगोधामत्स्याजाविकमांसदधितक्रकूर्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वरप्रभृतिभिः पित्तं प्रकोपमापद्यते ॥ २१ ॥**

क्रोधेत्यादि । पित्तप्रकोपहेतौ भयशोकौ **चरके**—"कामशोकभयाद्वायुः" ( च. चि. अ. ३ ) इत्यनेन वातकारणतयोक्तत्वान्न पठन्ति । पाठपक्षे तु पूर्वसंचितपित्तस्य प्रकोपकत्वं तयोर्ज्ञेयम् । विदग्धमिति नपुंसके भावे क्तः । एतेन शोथरोगोक्ताहारादिकृतं विदग्धम् । सुराविकारा मद्यभेदाः । कट्वरं ससरं मथितं दधि । प्रभृतिशब्दाच्छुक्तादीनां ग्रहणम् ॥ २१ ॥

**तदुष्णैरुष्णकाले च घनान्ते च विशेषतः ॥**
**मध्याह्ने चार्धरात्रे च जीर्यत्यन्ने च कुप्यति ॥ २२ ॥**

उष्णकाले ग्रीष्मे । घनान्ते शरदि ॥ २२ ॥

**दिवास्वप्नाव्यायामालस्यमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधेत्कटमाषगोधूम-तिल-पिष्ट-विकृतिदधिदुग्धकृशरापायसेक्षु-विकारानूपौदकमांसवसाबिसमृणालकसेरुकशृङ्गाटकमधुर-वल्ली-फलसमशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ॥ २३ ॥**

दिवेत्यादि । कफप्रकोपहेतुषु हायनकादयोऽन्नपाने ज्ञेयाः । कृशरा तिलतण्डुलमाषयवागूः । मधुरफलं नारिकेलादि, वल्लीफलम् अलाबू[2]प्रभृति । समशनं पथ्यापथ्ययोर्मेलकेन भोजनम्; अध्यशनमजीर्णे भोजनम् ॥ २३ ॥

---

१ "°वराह°" इति ता. । २ 'सुवासकादि' इति ह. ।

स शीतैः शीतकाले च वसन्ते च विशेषतः ॥
पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥ २४ ॥

शीतकाल इति हेमन्ते; एतच्च हेत्वन्तरचितस्य कफस्य वर्धकतया प्रकोपणं, न त्वार्तवचयप्रकोपकत्वमस्य, तत्र[१] चयहेतुत्वेनैवोक्तत्वात्; किंवा शीतकालो दुर्दिनादिः ॥ २४ ॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिराहारैर्दिवास्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिर्विशेषैरसृक् प्रकोपमापद्यते ॥ २५ ॥

रक्तप्रकोपहेतुषु पित्तप्रकोपणैरिति दुष्टस्य रक्तस्य पित्ततुल्यत्वादुक्तम् ॥ २५ ॥

यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति ॥
तस्मात्तस्य यथादोषं कालं विद्यात् प्रकोपणे ॥ २६ ॥

रक्तस्य परमार्थतो दोषेणैव दुष्टेर्दोषप्रकोपकालेनैव दुष्टिविशेषेण प्रकोपकालानाह—यस्मादित्यादि । शरत्कालप्रकोपश्च रक्तस्य वैशेषिकोऽप्यल्पतया नोक्तः । यदुक्तं "शरत्कालस्वभावाच्च शोणितं संप्रकुप्यति" ( च. सू. अ. २४ ) इति ॥ २६ ॥

तेषां प्रकोपात् कोष्ठतोदसंचरणाम्लीकापिपासापरिदाहान्नद्वेषहृदयोत्क्लेदा जायन्ते । तत्र द्वितीयः क्रियाकालः ॥ २७ ॥

वातादिप्रकोपलक्षणमाह—तेषामित्यादि । अत्र कोष्ठतोदसंचरणे वातस्य, अम्लीकापिपासा-परिदाहाः पित्तस्य, शेषं कफस्य । क्रियाकालानां द्वितीयादिसंख्याप्रदर्शनमुत्तरोत्तरं गरीयस्त्वप्रदर्शनार्थं; यदुक्तं—"ते तूत्तरासु गतिषु भवन्ति बलवत्तराः" इति ॥ २७ ॥

अत ऊर्ध्वं प्रसरं वक्ष्यामः–तेषामेभिरातङ्कविशेषैः प्रकुपितानां पिष्टकिण्वोदकसमवाय इवोद्रिक्तानां प्रसरो भवति । तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये । स हि रजोभूयिष्ठः, रजश्च प्रवर्तकं सर्वभावानाम् । यथा–महानुदकसंचयोऽतिवृद्धः सेतुमवदार्यापरेणोदकेन व्यामिश्रः सर्वतः प्रधावति, एवं दोषाः[२] कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वाऽनेकधा[३] प्रसरन्ति । तद्यथा—वातः, पित्तं, श्लेष्मा, शोणितं, वातपित्ते, वातश्लेष्माणौ, पित्तश्लेष्माणौ, वातशोणिते, पित्तशोणिते, श्लेष्मशोणिते, वातपित्तशोणितानि, वातश्लेष्मशोणितानि, पित्तश्लेष्मशोणितानि, वातपित्तकफाः, वातपित्तकफशोणितानीति; एवं पञ्चदशधा प्रसरन्ति ॥ २८ ॥

---

१ 'तत्र हेतुत्वेनैव' इति मु. । २ 'दोषा एकैकशः' इति ता. । ३ 'अनेकधा प्रसरन्ति' इति ता. पुस्तके न पठ्यते ।

क्रमागतं प्रसरमाह—अत इत्यादि । आतङ्कविशेषैरिति यथोक्तबलवद्विग्रहादिभिः कारणविशेषैः, आतङ्केनातङ्ककारणं बलवद्विग्रहादय उच्यन्ते । पिष्टकिण्वोदकसमवाय इवेति मद्यसन्धाने यथा पिष्टादि कालाहितोद्रेकं प्रसरति, तथा दोषा अपि हेतुबलादुद्रिक्ताः प्रसरन्ति, देशान्तरे चलन्ति; एतेन प्रकोपभेद एव प्रसरः, अत एवास्य पृथग्घेतुर्नोक्तः । प्रसरणहेतुरिति प्रसारकः । प्रवर्तकमिति अत्र प्रवृत्तिस्वभावं प्रवर्तयति । प्रसरं दोषाणां प्रत्येकमन्यसहितानां चाह—यथेत्यादि । अपरेणोदकेन व्यामिश्र इत्यत्र वाशब्दो द्रष्टव्यः, तेन दोषान्तरसहितस्य प्रसरे अयं पक्षः; केवलप्रसरे तु तत् सेतुमवदार्य, इत्यन्त एव दृष्टान्तः । शोणितसहिता वेति पश्चाद्वचनाच्छोणितस्य कार्यवशादेव दोषशब्दवाच्यतां दर्शयति ॥२८॥

**कृत्स्नेऽर्धेऽवयवे वाऽपि यत्राङ्गे कुपितो भृशम् ॥**
**दोषो विकारं नभसि मेघवत्तत्र वर्षति[1] ॥ २९ ॥**
**नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति ॥**
**निष्प्रत्यनीकः कालेन हेतुमासाद्य कुप्यति ॥ ३० ॥**

दोषाणां कृत्स्नदेहादिप्रसरं कृत्स्नदेहादिविकारेण[2] दर्शयति—कृत्स्न इत्यादि । अत्र भृशं कुपित इति प्रभूत इत्यर्थः । प्रकोपभेदत्वादेव प्रसरस्य प्रसरत एव दोषास्याबलवत्तया क्वचिदवस्थानमाह—नात्यर्थमित्यादि । लीनत्वे प्रबलविकारकारितां निषेधयति । निष्प्रत्यनीक इति अवस्थानहेतुः । यदि हि तत्र भेषजं प्रत्यनीकं भवेत्तस्य लीनस्य नाश एव स्यात् । हेतुमासाद्येति पुनः समानं प्रवर्तकं हेतुं प्राप्य । एतदेवोक्तं **चरके**—"तत्रस्थाश्च विलम्बन्ते कदाचिन्न समीरिताः । नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः" ( च. सू. अ. २८ ) इत्यादि ॥ २९ ॥ ३० ॥

**तत्र वायोः पित्तस्थानगतस्य पित्तवत् प्रतीकारः, पित्तस्य च कफस्थानगतस्य कफवत्, कफस्य च वातस्थानगतस्य वातवत्; एष क्रियाविभागः ॥ ३१ ॥**

इदानीं प्रसरेणान्यदोषस्थानगतस्य दोषस्य चिकित्सामाह—तत्र वायोरित्यादि । अत्रैवार्थे **चरकः**—"दोषस्थानगतं दोषं स्थानिवत् समुपाचरेत्" ॥ ३१ ॥

**एवं प्रकुपितानां प्रसरतां वायोर्विमार्गगमनाटोपौ, ओषचोषपरिदाहधूमायनानि पित्तस्य, अरोचकाविपाकाङ्गसादाश्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति; तत्र तृतीयः क्रियाकालः ॥ ३२ ॥**

प्रसरलक्षणे विमार्गगमनाटोपौ वातस्य, दाहधूमायने पित्तस्य, शेषं कफस्य ॥ ३२ ॥

**अत ऊर्ध्वं स्थानसंश्रयं वक्ष्यामः । एवं प्रकुपितास्[3]तांस्तान् शरीरप्रदेशानागम्य तांस्तान् व्याधीन् जनयन्ति । ते यदोदरसन्निवेशं कुर्वन्ति**

---

१ 'सृजति मेघो वृष्टिमिवाम्बरे' इति ता. । २ 'कृत्स्नदोषा°' इति मु. । ३ 'प्रसृताः' इति ता. ।

**तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीञ्जनयन्ति; बस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन्; मेढ्रगता निरुद्धप्रकशोपदंशशूकदोषप्रभृतीन्[1]; गुदगता भगन्दरार्शःप्रभृतीन्; वृषणगता वृद्धीः; ऊर्ध्वजत्रुगतास्तूर्ध्वजान्, त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च; मेदोगता ग्रन्थ्यपच्यर्बुदगलगण्डालजीप्रभृतीन्; अस्थिगता विद्रध्यनुशयीप्रभृतीन्; पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन्; सर्वाङ्गगता ज्वरसर्वाङ्गरोगप्रभृतीन्[2]; तेषामेवमभिसंनिविष्टानां पूर्वरूपप्रादुर्भावः, तं[3] प्रतिरोगं वक्ष्यामः। तत्र पूर्वरूपगतेषु चतुर्थः क्रियाकालः ॥ ३३ ॥**

अत ऊर्ध्वमित्यादिना स्थानसंश्रयं प्रतिज्ञाय स्थानसंश्रयविशेषस्य व्याधिविशेषगम्यमानतया व्याधीनेव स्थानसंश्रय[4]रोगविशेषजन्यतया सामान्येन एवमित्यादिना जनयन्तीत्यन्तेनाभिधाय विशेषेणापि ते यदोदरेत्यादिना प्राह । स्थानसंश्रय इति दोषदूष्यस्य संश्रयः । अत्रापि बलवद्विग्रहादय एव व्याधिहेतुतारूपप्रभावयुक्ताः कारणमिति न हेत्वन्तरमत्र वर्णितं; योऽपि हि संप्राप्तिभेदः स्थानसंश्रयभेदे रोगविशेषजनके कारणं सोऽपि बलकृत एव, हेत्वाहितदोषोत्तरकालसेवितक्रियादिविशेषसहकारिदोषकृतो वा ज्ञेयः । उदरसंनिवेशे साधारणेऽपि गुल्मविद्रध्यादिकार्यभेदादत्रापि स्थानसंश्रयभेदः सूक्ष्मो ज्ञेयः, न ह्येकस्मात् स्थानसंश्रयादेकजातिदोषकृताद्भिन्नरोगा भवितुमर्हन्ति; एवमन्यत्रापि व्याख्येयम् । संश्रयस्य'सं'शब्देन च गच्छतो मार्गे संबन्धमात्रस्य व्याधिहेतोर्निरासः । अग्निसादोऽग्निमान्द्यम् । अत्र मज्जाशुक्रगतरोगाणामस्पष्टतयाऽल्पतया चानभिधानम् । सर्वाङ्गरोगाः सर्वाङ्गवातव्याधिक्षयपाण्डुरोगादयः। स्थानसंश्रयभेदमाह—तेषामेवमित्यादि । पूर्वरूपमेव स्थानसंश्रयलिङ्गं, यदुक्तं—"स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम् । दोषाः कुर्वन्ति यल्लिङ्गं पूर्वरूपं तदुच्यते" इति । तच्च दोषगमकं, भाविव्याधिगमकं च; यद्वक्ष्यति ज्वरगमकपूर्वरूपमभिधाय "सामान्यतो, विशेषतस्तु जृम्भाऽत्यर्थं समीरणात्" (उ. तं. अ. ३९) इत्यादि । तथा "व्याधेर्जातिर्बुभूषा च पूर्वरूपेण लक्ष्यते । भावः किमात्मकत्वं च लक्ष्यते लक्षणेन तु" इति । एतच्च निदाने प्रपञ्चयिष्यामः । पूर्वरूपाणां बहुत्वेनातिदेशमाह—तं प्रतिरोगमित्यादि । पूर्वरूपगतेष्विति पूर्वरूपावस्थागतेषु दोषेषु व्याधिजननोन्मुखेषु ॥ ३३ ॥

**अत ऊर्ध्वं व्याधेर्दर्शनं वक्ष्यामः–शोफार्बुदग्रन्थिविद्रधिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातीसारप्रभृतीनां च। तत्र पञ्चमः क्रियाकालः ॥ ३४ ॥**

---

१ 'परिवर्तिकोपदंश°' इति ता. । २ 'एवमन्येष्वपि स्थानेषु रोगाणां दोषसन्निवेशं जानीयात्' इति ता. पुस्तकेऽधिकः पाठ उपलभ्यते । ३ 'तत्र चतुर्थः क्रियाकालः' इति ता. । ४ 'स्थानसंश्रयभेदे रोग°' इति मु. ।

क्रमागतां व्याधिव्यक्तिमाह—अत ऊर्ध्वमित्यादि । व्याधिदर्शनमिति व्याधेर्दर्शनं, यतो व्यक्तलिङ्गता भवति तद् व्याधिदर्शनम् । तदेव व्याधिदर्शनमाह—शोफेत्यादि । शोफश्चेह व्रणशोथ उच्यते, उत्तरकालमस्यावदीर्णताभिधानात् । प्रव्यक्तलक्षणता व्याधीनां व्यक्तिरित्यर्थः, प्रव्यक्तलक्षणैर्हि व्याधिरुत्पन्नो व्यज्यते; किंवा लक्षणान्येव मिलितानि व्याधिः; सा च व्याधिव्यक्तिः व्याध्यारम्भकदोषलिङ्गवती तथा प्रातिस्विकव्याधिलिङ्गवती च, दोषलिङ्गस्यैव व्याधिरूपत्वात् । अत्र शोथादीनां तथा ज्वरादीनां चेति भेदेनाभिधानं शोथादीनां प्रव्यक्ततया ज्वरादीनां च लक्षणीयतया भेदप्रतिपादनार्थं; शोथादीनां मुख्यशल्यविषयतया ज्वरादीनां च कायचिकित्साविषयत्वेन भेदप्रतिपादनार्थं वा ॥ ३४ ॥

**अत ऊर्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः, ज्वरातिसारप्रभृतीनां च दीर्घकालानुबन्धः । तत्राप्रतिक्रियमाणेऽसाध्यतामुपयान्ति ॥ ३५ ॥**

व्यक्तिमभिधाय भेदमाह—अत ऊर्ध्वमेषामित्यादि । एषामिति शोथार्बुदादीनाम् । व्रणभावमापन्नानां षष्ठः क्रियाकाल इत्यनेन शोथादीनां व्रणभावो भेदः, तत्र षष्ठः क्रियाकाल इत्युपदर्शितं भवति । भेदो हि विशेषः, स च प्रथमोत्पन्नकालान्तरभाविचिकित्साविशेषप्रयोजनकत्वाद्विवक्षितः । यस्तु शोथादीनां ज्वरादीनां स्वाभाविकवातिकपैत्तिकादिविस्तरलक्षणशोथाद्यपेक्षयाऽविशेषरूपो भेदः स सहोत्पन्नतया पञ्चमक्रियाकालविषय एव, तेषां शोथादीनां व्रणत्वमुत्तरकालविशेषो भेदः । तथा हि द्वितीयपक्षे निर्दिष्टानां भेदमाह—ज्वरेत्यादि । दीर्घकालानुबन्ध इति ज्वरादीनां दीर्घकालानुबन्धेनैव जीर्णत्वादिना चिकित्साभेदप्रयुक्तः क्रियाकालभेदो भवति । एतच्च भेदोदाहरणमात्रं, तेन पूर्वोक्तशोथादीनां पच्यमानतादि च तथा ज्वरादीनां निरामयुक्तादिभेदो ज्ञेयः । अन्यैस्तु विदीर्णता भेदशब्दार्थ इति व्याख्यातं, तन्न मां धिनोति । अस्यामवस्थायां[1] प्रतीकारस्यावश्यकर्तव्यतामाह—तत्रेत्यादि । असाध्यतामिति कालान्तरेण येऽप्रतिक्रियया कुष्ठादयोऽसाध्यतां यान्ति ते ज्ञेयाः ॥ ३५ ॥

**भवन्ति चात्र—**

**संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् ।**
**व्यक्तिं भेदं च यो वेत्ति दोषाणां स भवेद्भिषक् ॥ ३६ ॥**

उक्तं संक्षिप्याह—संचयं चेत्यादि । दोषाणामित्यनेन व्यक्तिभेदावपि दोषाणां दूष्यविशेषादिसहितानामवस्थाभेदौ; येन दोष एव हि दूष्यविशेषसंमूर्छितो व्याधिः, तथा तद्भेदोऽपि दोषभेद एवेति सुष्ठूक्तं—यो वेत्ति दोषाणामिति ॥ ३६ ॥

**संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ।**
**ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥ ३७ ॥**

१ 'तस्यामवस्थायां' इति ह. ।

क्रियाकालानामुत्तरोत्तरगरीयस्त्वमाह—संचयेऽपहृता दोषा इत्यादि । बलवत्तरा इति पूर्वापेक्षया द्वित्वविवक्षया निर्देशः ॥ ३७ ॥

**सर्वैर्भावैस्त्रिभिर्वाऽपि द्वाभ्यामेकेन वा पुनः ॥**
**संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति ॥ ३८ ॥**

इदानीं प्रसरोद्दिष्टसंसर्गे संनिपाते च क्रियाभेदमुपदर्श्य चिकित्साभेदमाह—सर्वैर्भावैरित्यादिना संनिपाते तथैव चेत्यन्तेन । भावैरिति स्वरूपैः । तत्र वायो रूक्षत्वादयो भावाः, पित्तस्योष्णत्वादयः, कफस्य स्नेहादयः । तत्र वायुः सर्वैर्भावैः कषायेण वर्धते, पित्तं कटुना, कफो मधुरेण । यद्वक्ष्यति रसविज्ञानीये–"तस्य वातस्य समानयोनिः कषायरसः" ( सू. अ. ४२ ) इत्यादिना । एवं कटुकादिभिर्यथायोग्यं त्रिभिर्भावैर्द्वाभ्यां भावाभ्यामेकेन भावेन वा वातादीनां वृद्ध्युदाहरणमूह्यम्[1] । तथाऽयं सर्वभावादिप्रकोपः प्रकर्षेण मध्यविधया न्यूनतया च कोपेन कोपविशेषग्रहणाज्ज्ञेयः । संसर्गे इति द्वन्द्वे । कुपितः क्रुद्धमिति विशेषणद्वयेनात्रानुगम्यानुगमकयोर्द्वयोरपि दोषयोः स्वतन्त्रव्यक्तलिङ्गत्वलक्षणमनुबन्ध्यत्वं दर्शयति, अत एवानुबन्ध्यद्वयदोषमेलके 'संसर्ग' इति संज्ञा कृता । यदुक्तं **चरके**—"तत्र द्वयं चेदनुबन्ध्यलक्षणप्राप्तं तत् संसर्गमित्याचक्षते, त्रयं तु संनिपातम्" ( च. वि. अ. ६ ) इति । अनुबन्ध्यानुबन्धलक्षणे **चरकः**—"तत्र स्वतन्त्रो व्यक्तलिङ्गः[2]स्वचिकित्साशमनीयोऽनुबन्ध्यः, तद्विपरीतलक्षणश्चानुबन्धः" ( च. वि. अ. ६ ) इति । अन्ये त्वत्र द्विभावैकभावकुपितं दोषमनुबन्धमुदाहरन्ति, तद्योगेन [3]तत्संज्ञामिच्छन्ति; ये त्वत्र क्षीरकुपितस्य कफस्य क्षीरशैत्येन कुपितो वातोऽनुबन्धो भवतीति ब्रुवते, तन्नागतं नानुमतं नापि दृष्टम् । शैत्यं तु क्षीरस्य स्नेहमाधुर्यगौरवादिना च वातजये कर्तव्ये प्रतिपक्षमपि न भवति । यदुक्तं—"विरुद्धगुणसंनिपाते हि भूयसाऽल्पमवजीयते" ( च. वि. अ. १ ) इति ॥ ३८ ॥

**संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ॥**
**शेषदोषाविरोधेन संनिपाते तथैव च ॥ ३९ ॥**

उक्तसंसर्गभेदे चिकित्साभेदमाह—संसर्ग इत्यादि । गरीयानित्यभिधानेन भूयसा प्रकोपगरीयस्त्वं च चिकित्साभेदप्रयोजकं दर्शयति । उपक्रम्यः स इति प्राधान्येनोपक्रम्यः, तदितरस्त्वप्राधान्यान्नोपक्रम्यः । एतदेवाह—शेषदोषाविरोधेनेति । संनिपातेऽपि सर्वैर्भावैरित्यादिग्रन्थोक्तमर्थमतिदिशन्नाह—संनिपाते तथैव चेति । संनिपातशब्देन चेह शोणितयोगाच्चतुर्दोषमेलकोऽपि ज्ञेयः; दूष्यत्वेनैव वा शोणितग्रहणम् ॥ ३९ ॥

---

१ 'ऊहनीयं' इति मु. । २ वर्तमानचरकपुस्तकेषु 'यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यः' इति पाठ उपलभ्यते । ३ 'च संसर्गमिच्छन्ति' इति मु. ।

वृणोति यस्माद्रूढेऽपि व्रणवस्तु न नश्यति ॥
आदेहधारणात्तस्माद्व्रण इत्युच्यते बुधैः ॥ ४० ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने व्रणप्रश्नो नामैकविंशोऽध्यायः ॥ २१ ॥

संप्रति व्रणप्रश्नोत्कीर्तितस्य व्रणस्य निरुक्तिस्वरूपमाह—वृणोतीत्यादि। वृणोति छादयति। आदेहधारणादिति उत्पन्नो व्रण आदेहधारणमावृणोति । कथं वृणोतीत्याह—यस्माद्रूढेऽपि व्रणवस्तु व्रणकिणमादेहधारणान्न नश्यति, तेन व्रणकार्येण किणेन धारणप्रकर्षाद् व्रण- संज्ञेति फलति ॥ ४० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने व्रणप्रश्नो नामैकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशतितमोऽध्यायः ।

**अथातो व्रणस्रावविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये विदीर्णतया व्रणस्योक्तस्य स्रावादीनां चिकित्सोपयुक्तविशेषज्ञानार्थं व्रणस्राव- विज्ञानीयोऽभिधीयते । अत्रादिशब्दलोपादत्र वक्तव्यगन्धवर्णवेदनानां ग्रहणं; किंवा स्रावमधिकृत्येत्यधिशब्देनैव गन्धादयोऽपि चात्र एव लभ्यन्ते ॥ १ ॥ २ ॥

**त्वङ्मांससिरास्नाय्वस्थिसन्धिकोष्ठमर्माणीत्यष्टौ व्रणवस्तूनि । अत्र सर्वव्रणसंनिवेशः ॥ ३ ॥**

व्रणाधिष्ठानविशेषेणापि स्रावा भवन्तीति व्रणव(वा)स्तून्येवाह—त्वङ्मांसेत्यादि । व्रणव- (वा)स्तूनीति व्रणस्थानानि । कथमष्टामेव व(वा)स्तूनीत्याह—अत्र सर्वव्रणसंनिवेश इति । एतद्व्यतिरेकेण यस्मान्न व्रणः प्रायो दृश्यते तेनाष्टावेवेत्यर्थः । यदपि रक्तमेदोमज्जादि व्रणेऽव- दृश्यते तदपि सिरास्नाय्वाश्रयत्वेनैव व्रणे भवति न तु तदधिकरक्ताद्याश्रयत्वेनेत्येके; अन्ये तु सिरया रुधिरं, स्नायुसंबन्धेन मेदः, अस्थ्ना च तात्स्थ्यान्मज्जा गृह्यत इति वदन्ति । अष्टावेवैतानि लक्षणचिकित्साभेदकतया व(वा)स्तूनि भवन्तीत्यागम एवात्र नः प्रमाणं; तथा चिकित्सितेऽपि 'त्वक्सिरा' ( च. चि. अ. २५ ) इत्यादिनाऽष्टावेव व्रणस्थानान्य- भिधास्यति ॥ ३ ॥

**तत्र, आद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचरः, शेषाः स्वयमव- दीर्यमाणा दुरुपचाराः ॥ ४ ॥**

---

१ 'जन्तोर्व्रणस्तस्मान्निरुच्यते' इति ता. ।

वास्तुभेदेन व्रणसुखसाध्यत्वादि दर्शयन्नाह—तत्राद्येत्यादि । आद्यत्वेन त्वचि लब्धायामेकग्रहणं मांसादिगतव्रणानामपि पाककाले त्वग्विदरणेनाद्यत्वगाश्रयत्वस्य लब्धस्य निरासार्थम् । एतदेवाह—त्वग्भेदीति; त्वचमेवैकां विशेषेण भेत्तुं शीलमस्येति त्वग्भेदी । एतच्च त्वगाद्याश्रयत्वं व्रणानां वैशेषिकदुष्ट्या ज्ञेयं; तेन सर्वत्रैव—"पचत्यतः शोणितमेष पाकः" ( सू. अ. १७ ) इत्यनेन रक्तपाकाभिधानं सर्वसाधारणं सर्वगामितया रक्तस्य युक्तम् । स्वयमवदीर्यमाणा इति आलेपाद्युपक्रममन्तरेण पच्यमानाः, दुरुपचारा इति गम्भीरत्वेन त्वगाश्रयव्रणापेक्षया दुरुपचारा इति ज्ञेयम् ॥ ४ ॥

**तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः, शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति ॥ ५ ॥**

वास्तुभेदेन व्रणस्य सुखासुखत्वमुक्त्वा प्रसङ्गेनाकृत्याऽपि सुखासुखत्वमाह—आयत इत्यादि । शेषा इति अर्धचन्द्रस्वस्तिकाद्याकृतयः । विकृताकृतय इति विकृते व्रणे भवन्तीति विकृताकृतयः । एतच्च हेतुगर्भविशेषणं, तेनाधिकास्त्वितो नोद्भावनीयाः ॥ ५ ॥

**सर्वे एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिश्चोपक्रान्ताः; अनात्मवतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति, प्रवृद्धत्वाच्च दोषाणाम् ॥ ६ ॥**

एतत्प्रसङ्गेन रोगिवैद्ययोश्च गुणं दोषं च सुखासुखत्वकारणमाह—सर्वे एवेत्यादि । आत्मवतामिति निर्देशाच्छयावौष्ठत्वादिरोगगुणयुक्तत्वेन प्रशस्तात्मवताम् । व्रणदुष्टिकारणमाह—प्रवृद्धत्वाच्चेत्यादि । अत्र चकारात् प्रवृद्धमेदआदीनां दूष्यविशेषभूयस्त्वादपि दुष्टिं समुच्चिनोति ॥ ६ ॥

**तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोपद्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि । तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतीकारे प्रयतेत ॥ ७ ॥**

एतद्दुष्टिप्रसङ्गाद्दुष्टेष्वेव व्रणेषु प्रायः स्रावसंभवाद्दुष्टव्रणानामाकृतीराह—तत्रातीत्यादि । तत्रातिसंवृतातिकठिनातिमात्रावसन्नात्यर्थतोदादिवेदनावानिति वातेन, अतिविवृतात्युष्णकृष्णपीतरक्तपूतिमांससिरास्नायुप्रतिपूर्णः पूतिपूयास्राव्यमनोज्ञदर्शनगन्धोऽत्यर्थदाहपाकरागवानिति पित्तेन, शेषाः कफेन । अवसन्नो निम्नः । उन्मार्गी मुखान्मुखान्तरवान् । उत्सङ्गः कोटरः । चकाराच्चरकोक्तरोप्यादिदुष्टव्रणावरोधः; यदुक्तं—"रोप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश स्मृताः" ( च. चि. अ. २५ ) इति । अत्र चिकित्सासूत्रे यथास्वमिति व्यस्तसमस्तवातादिषु यद्धितं तत् कर्तव्यमित्यर्थः ॥ ७ ॥

अत ऊर्ध्वं सर्वस्रावान् वक्ष्यामः-तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटे भिन्ने विदारिते वा सलिलप्रकाशो भवत्यास्रावः किंचिद्विस्रः पीतावभासश्च; मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च; सिरागतः सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः पक्वासु च तोयनाडीभिरिव तोयागमनं पूयस्य, आस्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च; स्नायुगतः स्निग्धो घनः सिङ्घाणकप्रतिमः सरक्तश्च; अस्थिगतोऽस्थन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति, आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च; संधिगतः पीड्यमानो न प्रवर्तते, आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति, आस्रावश्चात्र पिच्छिलोऽवलम्बी सरुधिरोन्मथितश्च; कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति; मर्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते । तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मारुताद्भवन्ति; पित्ताद्गोमेदकगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि; पित्तवद्रक्तादतिविस्रत्वं च; कफान्नवनीतकासीसमज्जपिष्टतिलनालिकेरोदकवराहवसासन्निभत्वानि; सन्निपातान्नालिकेरोदकैर्वारुकरसकाञ्जिकप्रसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषसवर्णत्वानीति ॥ ८ ॥

इदानीं व्रणदुष्टिं स्रावकारणतयाऽभिधाय प्रकृतान् स्रावानाह—अत इत्यादि । अत्र सर्वशब्दस्त्वागन्तोस्तथा वास्तुभेदकृतस्य तथा दोषकृतस्य वक्ष्यमाणस्रावस्य ग्रहणार्थम् । तत्र घृष्टासु च्छिन्नास्वित्यागन्तोः । भिन्नास्विति स्वयं शारीरव्रणभिन्नासु यत्नविदारितासु वा । अत्र सलिलप्रकाशता स्रावस्य त्वचामुदकस्य रसस्य वाऽऽधारतया । मांसगतेऽप्यागन्तौ सर्पिःप्रकाशता स्रावस्य, शेषं तु निजस्य वदन्ति । स्नायुगतस्रात्र एवंवर्णो ज्ञेयः । एवमन्यत्रापि विशेषानभिधाने साधारणत्वं स्रावस्य ज्ञेयम् । सन्धिगतः पूर्वोद्दिष्टोऽप्यस्थ्नामेव सन्धिरूपतयाऽस्थिगतात् पश्चादुच्यते । अस्थिगते शुक्तिधौतत्वं तथाऽस्थिसारस्रवणं च दोषकृतं, शेषस्तु स्रावः साधारणः । शुक्तिधौतमिति मयूरादिपाठात् पूर्वनिपाताद्व्यत्ययेन धौतशुक्तिवदित्यर्थः । अवलम्बीति अवलम्बनशीलः । उन्मथित इति रक्तादिमथित इव । कोष्ठगतस्तु यथाप्रत्यासत्ति पुरीषादि स्रवति । अत्र रक्तस्रुतिः कोष्ठाश्रयप्लीहाधिष्ठानतया, उदकस्रावस्तु उपयुक्तपानीयस्य सरणात्मकत्वप्रभावात् । मर्मणां त्वगाद्यव्यतिरेकात् त्वग्गतादिस्रावेणैव त्वगादिमर्मस्रावग्रहणमाह—मर्मगतास्त्वित्यादि । त्वगाद्याश्रयाणामाश्रयप्रभावकृतस्रावविशेषमभिधाय दोषविशेषेण तेष्वेव स्रावविशेषानाह—तत्र त्वगादीत्यादि । यथाक्रममिति यथासंख्यम् । अत्र मर्मवर्जितेषु त्वगादिषु सप्तसु यथाक्रमं वातपित्तकफशोणितसंनिपातानां सप्तसप्तास्रावा यथोक्ता भवन्ति; शोणिते तु यद्वि-

स्रुत्वमधिकमुक्तं तत् सर्वत्वगाद्याश्रयानुगामि । अन्ये तु यथासंख्यमत्र नेच्छन्ति । संनिपातेनेह ये नारिकेलादिवर्णा उक्तास्ते विकृतिविषमसमवायकृता ज्ञेयाः; अन्यथा हि वातादिकृतवर्णमेलकेनैव संनिपातवर्णोऽप्युक्तः स्यात् ॥ ८ ॥

श्लोकौ चात्र भवतः—

पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ॥
क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात् स्रवन् ॥ ९ ॥
आमाशयात् कलायाम्भोनिभश्च त्रिकसन्धिजः ॥
स्रावानेतान् परीक्ष्यादौ ततः कर्माचरेद्भिषक् ॥ १० ॥

असाध्यस्रावानाह—पक्वाशयादित्यादि । पुलाको गवेधुकार्थः; अन्ये तुच्छधान्यमाहुः । रक्ताशयादिति आमाशयादित्यस्य विशेषणं, तेनामाशयगतयकृत्प्लीहस्रावः क्षारोदकनिभोऽसाध्यः । एवं कलायाम्भोनिभश्च स्रावस्त्रिकसन्धिजः कोष्ठमार्गेण स्रवन्न साध्यः, यदुक्तं भोजे—"पुलाकोदकवर्णस्तु यदा कोष्ठात् प्रवर्तते । आमाशयात् स्रवत्येवं तं भिषक् परिवर्जयेत् ॥ क्षारोदकसवर्णस्तु यदा कोष्ठात् प्रवर्तते । रक्ताशयात् स्रवत्येवं तं भिषक् परिवर्जयेत् ॥ त्रिकसन्धेस्तु विवरात्[२] कलायोकसंनिभः । कोष्ठं भित्त्वा विनिर्याति तं भिषक् परिवर्जयेत्" इति ॥ ९ ॥ १० ॥

**अत ऊर्ध्वं सर्वव्रणवेदना वक्ष्यामः—तोदनभेदनताडनच्छेदनायामनमन्थनविक्षेपणचुमुचुमायननिर्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणस्तम्भनपूरणस्वप्नाकुञ्चनाङ्कुशिकाः संभवन्ति, अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्; ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनाविशेषास्तं पैत्तिकमिति विद्यात्; पित्तवद्रक्तसमुत्थं जानीयात्; कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यं च यत्र तं श्लैष्मिकमिति विद्यात्; यत्र सर्वासां वेदनानामुत्पत्तिस्तं सान्निपातिकमिति विद्यात् ॥ ११ ॥**

व्रणे वातादिवेदनानतिक्रमेण वातादिज्ञानमाह—तत्र तोदेत्यादि । अत्र लोकप्रसिद्ध्यैव वेदनाविशेषा व्याकर्तव्याः । अङ्कुशिका खल्वी, किंवा अङ्कुशाकृष्टस्येव वेदनाऽङ्कुशिका । चोषः पार्श्वस्थितेनेव वह्निनोपतपनं, पिपासेत्यन्ये ॥ ११ ॥

**अत ऊर्ध्वं व्रणवर्णान् वक्ष्यामः—भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य; नीलः पीतो हरितः श्यावः कृष्णो रक्तः पिङ्गलः**

---

१ 'पक्वाशयात्' इति पाठश्चेत् साधु । २ 'विवराद्यदा बन्धूकसन्निभः' इति ह. ।

**कपिल इति रक्तपित्तसमुत्थयोः; श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य; सर्ववर्णोपेतः सान्निपातिक इति ॥ १२ ॥**

अत इत्यादिना दोषकृतवर्णभेदेन व्रणावधारणम् । सवर्णोपेतत्वं प्रदेशभेदेन सर्ववर्णप्रबलतया वा ॥ १२ ॥

**भवति चात्र—**

**न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः ॥**
**सर्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक् ॥ १३ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने व्रणास्रावविज्ञानीयो नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥**

व्रणोक्तवर्णं वेदनां च सर्वशोथरूपविकारेष्वतिदिशन्नाह—न केवलमित्यादि ॥ १३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने व्रणस्रावविज्ञानीयो नाम द्वाविंशतितमोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशतितमोऽध्यायः ।

**अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये स्रावादिना साध्यासाध्यव्रणस्य लेशतोऽभिधानात्तत्प्रसङ्गेन प्रपञ्चेन साध्यासाध्यव्रणविज्ञानार्थं कृत्याकृत्यविधिरभिधीयते । कृत्याश्चिकित्सारूपक्रियार्हाः साध्याः, तद्विपर्ययेणाकृत्या असाध्याः, तयोर्विधिर्भेदः; स च साध्यस्य सुखसाध्यत्वादिः, असाध्यस्य याप्यत्वसद्यःप्राणहरत्वादिः । अत्र प्रत्ययादि पूर्ववत् । याप्ये यद्यपि यापनार्था क्रियाऽस्त्येव, तथाऽपि सा याप्यव्याधौ न विशेषं करोति, किं तु याप्यव्याधेर्वृद्धिं निषेधयति; तेन याप्यस्य वर्धमानाधिकारः; साध्यो निवर्तते न तु याप्यः, तेन तस्य स्वरूपेण चिकित्साया अविषयतयाऽकृत्य इति चासाध्य इति च संज्ञा भवति । तदुक्तं—"असाध्यं द्विविधं विद्याद्याप्यं यच्चानुपक्रमम्" ( च. सू. अ. १० ) इति । अन्ये कृत्यश्च कृत्यश्च इत्येकशेषादेकं कृत्यशब्दं वदन्ति । तेनैकेनावश्यके विहितेन कृत्यप्रत्ययेन साध्यग्रहणं द्वितीयेन त्वर्हार्थविहितकृत्यप्रत्ययेन याप्यस्येति वदन्ति । किं त्वसाध्यभेद एव याप्यः शास्त्रसंमतः; असाध्याकृत्यशब्दौ च तुल्यार्थावेव ॥ १ ॥ २ ॥

**तत्र वयःस्थानां दृढानां प्राणवतां सत्त्ववतां च सुचिकित्स्या व्रणाः; एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः । तत्र, वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति; दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादिविशेषान्न प्राप्नोति; प्राणवतां**

**वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते; सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति; तस्मादेतेषां सुखसाधनीयतमाः ॥ ३ ॥**

तत्रातुरगुणभेदेन सुखसाध्यताभेदानाह—वयःस्थानामित्यादि । एकस्मिन्नित्यादिना सर्ववयःस्थत्वादिगुणपञ्चकमेलकेन सुखसाध्यतमत्वं दर्शयन् मध्यविधया द्वित्रादिगुणेन सुखसाध्यतरत्वं यथोत्तरं दर्शयति । वयःस्था अत्र युवानः, बालानां वेदनासहत्वाभावात् । सत्त्ववतां चेति प्रशस्तसत्त्वगुणानाम् । अत्र चकारेणातुरोपक्रमणीयोक्ता आतुरगुणाः समुच्चीयन्ते । प्रत्येकं वयःस्थत्वादिगुणविवरणं व्यक्तम् ॥ ३ ॥

**त एव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः ॥ ४ ॥**

उक्तविपर्ययेण कृच्छ्रताभेदानाह—त एवेत्यादि । कृशशब्देनात्र दृढविपर्यय उच्यते । एकद्वित्रादिगुणवैपरीत्येन चात्रापि कृच्छ्र-कृच्छ्रतर-कृच्छ्रतमभेदा ज्ञेयाः ॥ ४ ॥

**स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः ॥ ५ ॥**

पुनरवयवविशेषेण सुखसाध्यत्वाद्याह—स्फिगित्यादि । अत्र चाधिकरणमहिम्नैव सुखसाध्यत्वादिविशेषो भवति ॥ ५ ॥

**अक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः, अधोभागाश्चोर्ध्वभागनिर्वाहिणो, रोमान्तोपनखमर्मजङ्घास्थिसंश्रिताश्च, भगन्दरमपि चान्तर्मुखं सेवनीकुटकास्थिसंश्रितम् ॥ ६ ॥**

**कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥**
**व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ॥ ७ ॥**

अधोगताश्चोर्ध्वनिर्वाहिण इति अधोगतानामूर्ध्वमुखेनासम्यक्पूयनिर्गमात् कृच्छ्रत्वम् । अन्तःशल्यादीनां सफेनेत्यादिविशेषणं कृच्छ्रत्वहेतुः । रोमान्तः केशान्तः; उपनखं नखसमीपम् । अन्तर्मुखमित्यन्तर्गुदगतमुखं; कुटकास्थिसंश्रितमिति श्रोणीकाण्डास्थिस्थितं; कक्ष्युपास्थितपाठपक्षेऽपि स एवार्थः । कुष्ठ्यादीनामतिशयदुष्टदूष्यतया व्रणकृच्छ्रत्वम् । विषदुष्टा इह दूषीविषार्ताः ॥ ६ ॥ ७ ॥

**अवपाटिकानिरुद्धप्रकशसन्निरुद्धगुदजठरग्रन्थिक्षतक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते, शर्करा सिकतामेहो वातकुण्डलिकाऽष्ठीला दन्तशर्करोपकुशः कण्ठशालूकं निष्कोषणदूषिताश्च दन्तवेष्टा विसर्पास्थिक्षतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः ॥ ८ ॥**

असाध्यभेदान् याप्यान् स्वरूपतो व्याधीनाह—अवपाटिकेत्यादि । ग्रन्थिगतक्षतजाश्च क्रिमयो ग्रन्थिक्षतक्रिमयः; तथा प्रतिश्यायजास्तथा कोष्ठव्रणजास्तथा त्वग्दोषादिक्षतजाः

क्रिमयो याप्याः । वातकुण्डलिकाष्ठीले मूत्राघातविशेषौ । अवपाटिकादयः स्वप्रकरणव्याकृता एव । निष्कोषणः[1] सविषो दन्तरञ्जनार्थं शाणोऽभिधीयते, व्रणयुक्तो ग्रन्थिर्व्रणग्रन्थिः । अत्रावपाटिकादीनां साध्यतयाभिधानात् कृच्छ्रेण सिध्यन्तीत्यनेनावपाटिकादयो दन्तवेष्टान्ता योजनीयाः; विसर्पास्थीत्यादिना तु याप्यमुच्यत इति युक्तं पश्यामः ॥ ८ ॥

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ॥
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥ ९ ॥

चिकित्साव्यतिरेकेण साध्यादीनां स्वरूपादिक्रममाह—साध्या याप्यत्वमित्यादि । असाध्याश्च घ्नन्ति प्राणानिति कालान्तरप्राणहराः सद्यःप्राणहरा भवन्ति ॥ ९ ॥

यापनीयं विजानीयात् क्रिया धारयते तु यम् ॥
क्रियायां तु निवृत्तायां सद्य एव विनश्यति ॥ १० ॥
प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम् ॥
प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः ॥ ११ ॥

याप्ये चिकित्साफलमाह—प्राप्तेत्यादि । प्राप्तेति उचिता । विष्कम्भः स्थूणा । क्रियायामिति सम्यक्क्रियायाम् ॥ १० ॥ ११ ॥

अत ऊर्ध्वमसाध्यान् वक्ष्यामः—मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूयवेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः, केचित् कठिना गोशृङ्गवदुद्गतमृदुमांसप्ररोहाः, अपरे दुष्टरुधिरास्राविणस्तनुशीतपिच्छिलास्राविणो वा मध्योन्नताः, केचिदवसन्नशुषिरपर्यन्ताः शणतूलवत् स्नायुजालवन्तो दुर्दर्शनाः, वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः, पीतासितमूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः, त एवोभयतोभागव्रणमुखेषु पूयरक्तनिर्वाहिणः, क्षीणमांसानां च सर्वतोगतयः, अणुमुखा मांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकण्ठस्थाः, क्षीणमांसानां च पूयरक्तनिर्वाहिणोऽरोचकाविपाककासश्वासोपद्रवयुक्ताः, भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति ॥ १२ ॥

अत इत्यादिना प्रत्याख्येयानाह । मांसपिण्डेत्यादिना उद्वृत्तौष्ठा इत्यन्तेनैकोऽसाध्यव्रणः । प्रसेकिनः स्रावबहुलाः । अश्वापानं वडवायोनिः, तेन वडवायोनिवदुद्वृत्तौष्ठ इत्यर्थः । केचिदित्यादिना अपरोऽसाध्यः । अपर इत्यादिना अपरः । अत्र मध्योन्नतेन तनुपिच्छिलास्रावित्वं वैकल्पिकमसाध्यलक्षणम् । केचिदित्यादिना दुर्दर्शना इत्यन्तेनापरं लक्षणम् । वसेत्यादिना अपरम् । अत्र वसादि प्रत्येकं दोषसमुत्थव्रणेऽसाध्यतालक्षणं "वसां मेदोऽथ" इत्यादि श्लोकेनावधार्यते । पीतासितेत्यादिना अपरम् । त एवेत्यादिना अपरम् । गुदवदनरूपोभयमार्गाभ्यां व्रणमुखे च पूयरुधिरनिर्वाहणं निःसरणं ज्ञेयम् ।

---

१ 'निष्कुकणः' इति ह. ।

क्षीणेत्यादिना लक्षणान्तरं, सर्वतो गतय इति त्वगादिव्रणवास्तुदूषकाः । अणुमुखा इत्यादिना कण्ठस्था इत्यन्तेनाऽपरः । अत्र शिरःस्था वा कण्ठस्था वा । क्षीणेत्यादिना अपरोऽसाध्योऽरोचकादियुक्तः । भिन्ने वेत्यादिना त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा; तत्र कासश्वासाभ्यां मस्तुलुङ्गदर्शनमसाध्यम् ॥ १२ ॥

भवति चात्र—

**वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥**
**आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसंभवः ॥ १३ ॥**

उक्तमर्थं च किञ्चिच्छ्लोकेनाह—वसामित्यादि । वसा मांसस्नेहः । अत्रागन्तोः साध्यत्वमदुष्टत्वाद्व्रणदेशस्य ॥ १३ ॥

**अमर्मोपहिते देशे सिरासन्ध्यस्थिवर्जिते ॥**
**विकारो योऽनुपर्येति तदसाध्यस्य लक्षणम् ॥ १४ ॥**

सामान्येनैव विकाराणामसाध्यतालक्षणमाह—अमर्मेत्यादि । अमर्मोपहिते इति मर्मवर्जिते; देशे इति शरीरप्रदेशे, तस्यैव विशेषणं सिरेत्यादि । अत्रादिशब्दं लुप्तमिच्छन्ति । तेन स्नाय्वादिवर्जिते त्वचीति लभ्यते, अन्यत्र मांसादौ सिरादीनां विद्यमानत्वात् । विकारो योऽनुपर्येतीति धात्वन्तरेणावगाहते कुष्ठवातरक्तादिस्तदसाध्यलक्षणं; तदुक्तं—"एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः । क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः" ( नि. अ. ५ ) इति । अन्ये तु विकारोऽनुपर्येतीत्यनेन प्रतिक्रियाकरणेऽपि यथोक्तसुखसाध्यदेशभूतोऽपि विकारोऽनुपर्येति वर्धते तद्बलवदहष्टारब्धतया असाध्यलक्षणमिति वदन्ति, न हि यथोक्तदेशजातस्य विकारस्य बलवदसाध्यताकारकादृष्टं विना वृद्धिर्युक्तेति ॥ १४ ॥

**क्रमेणोपचयं प्राप्य धातूननुगतः शनैः ॥**
**न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः ॥ १५ ॥**
**स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च ॥**
**निहन्त्यौषधवीर्याणि मन्त्रान् दुष्टग्रहो यथा ॥ १६ ॥**

साध्यस्याप्युपेक्षया धात्ववगाहनेनासाध्यत्वं दर्शयन्नाह—क्रमेणेत्यादि । उपचयं प्राप्त इति धात्ववगाहने हेतुगर्भं विशेषणम्; उपचयश्चाप्रतीकारादेव ज्ञेयः । शनैरित्यनेन चिरेण सम्यग्धात्ववस्थानं दर्शयति । अथ तत्र पुनः पुनर्बहुधौषधं कस्मात् साधकं न भवतीत्याह—स स्थिरत्वादित्यादि । स्थिरत्वादिति अचाल्यत्वात् । स्थिरत्व एव हेतुद्वयं—महत्त्वाद् धात्वनुक्रमणेन चेति । तत्र बलवत्यपि व्याधौ महत्त्वेन महादोषत्वं, धात्वनुक्रमणेन तु गम्भीरत्व-स्थिरत्वानुच्छेद्यत्वमुच्यते । एतेनासाध्यत्वादेवौषधवीर्यहननमत्र ज्ञेयम् । एतच्च क्रमेणेत्यादिना विकारगततयाऽसाध्यत्वकारणत्वं यदुक्तं तेनापरसर्वासाध्येष्वऽपि महत्त्वं [1]प्राभाविकं कर्मकृतं चासाध्यताकारणमत्र ज्ञेयम् ॥ १५ ॥ १६ ॥

---

१ 'प्रभावाधिकं' इति मु. ।

अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते ॥
अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः ॥ १७ ॥

क्षुपकः स्वल्पबालवृक्षः ॥ १७ ॥

त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडकी समः ॥
अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते ॥ १८ ॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥ १९ ॥
रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥
त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ॥ २० ॥
दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः ॥
हर्षात् क्रोधाद्भयाद्वाऽपि व्रणो रूढोऽपि दीर्यते ॥ २१ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने कृत्याकृत्यविधिर्नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

कृत्याकृत्यभेदमभिधाय प्रकृतस्य शुद्धस्य तथा रोहतो रूढस्य च क्रमेण लक्षणान्याह—त्रिभिर्दोषैरित्यादि। दोषैरिति दोषकार्यैः स्राववर्णादिभिः; किंवा दोषत्रयकार्यगन्धादिविरहेण न वातादिदोषत्रयाणां क्रमणं भवति, शोणितं तु पित्तलिङ्गतयैव गृहीतमिति सूक्तं—त्रिभिर्दोषैरिति। ये तु 'त्रिभिर्द्वन्द्वैः' इति पठन्ति, तन्मतेऽपि द्वन्द्वस्य दुःखकारणतया दोषा एव द्वन्द्वा इति व्याख्येयं; शीतोष्णादिद्वन्द्वानां तु बहुत्वेन त्रित्वेनाग्रहणमिति तद्व्याख्यानं नेष्यते। श्यावौष्ठत्वमत्र रोहन्मांसस्य कषायादियोगात्, न वातदुष्ट्या। व्रणरोहन्मांसाङ्कुराः पिडकाः। अवेदन इति वातादिवेदनाशून्यतया; सामान्यव्रणवेदना तु व्रणप्रशमे 'अरुजं' इत्यनेन वक्तव्या विद्यमानाऽप्यल्पतया न व्यपदिश्यते। सम इति निम्नोन्नतरहितः। रोहद्व्रणे कपोतवर्णः पाण्डुधूसरः। चिपिटिका चर्मचेलिका, सा च विशुष्यमाणत्वादेव व्रणस्य भवति। रूढलक्षणे रूढवर्त्मानमिति रूढमांसं, रूढव्रणस्थानमिति यावत्। अग्रन्थिमिति अनुच्छूनदृढमांसम्। समतलमिति निम्नोन्नततया समं तलेन करस्येति समतलः ॥ १८—२१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने
कृत्याकृत्यविधिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशतितमोऽध्यायः।

अथातो व्याधिसमुद्देशीयमध्यायं व्याख्यास्यामः ॥ १ ॥
यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥

**द्विविधास्तु व्याधयः—शस्त्रसाध्याः, स्नेहादिक्रियासाध्याश्च। तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते, स्नेहादिक्रियासाध्येषु शस्त्रकर्म न क्रियते। अस्मिन् पुनः शास्त्रे सर्वतन्त्रसामान्यात् सर्वेषां व्याधीनां यथास्थूलमवरोधः क्रियते॥ ३॥**

पूर्वाध्यायेऽसाध्यत्वमुक्तं, तच्च व्याधीनां स्नेहादिना वा शस्त्रेण वा भवतीति तद्भेदप्रतिपादनार्थं प्रवृत्तः स्नेहशस्त्रविषयान् सर्वानेव व्याधीनवश्यप्रतिपादयितव्यान् प्रतिपादयितुं व्याधिसमुद्देशीयमाह। अत एव प्राधान्येन व्याधिसमुद्देशीयेनाध्यायसंज्ञां विधायापि द्विविधास्त्वित्यादिना स्नेहशस्त्रकृत्यानेवाह। स्नेहादीत्यादिशब्देन स्वेद-वमन-विरेचनादिग्रहणम्। शस्त्रकर्म न क्रियत इति ज्वरादीनां स्नेहादिसाध्यानां शस्त्राविषयत्वात्। येष्वप्यर्शआदिषु स्नेहादिसाध्यत्वं शस्त्रसाध्यत्वं च संभवति, तत्रापि स्नेहादौ साधके सति शस्त्रं महात्ययत्वान्न क्रियते। सर्वतन्त्रसामान्यादिति सर्वतन्त्रविषयव्यापकत्वात्; यदुक्तं—"यत् किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम्। व्याप्तान्यङ्गान्यतोऽनेन शल्यज्ञानेन भूरिणा" इति। यथास्थूलमिति अतिसूक्ष्मव्याधीनां प्रपञ्चाभिधानेन दुःखकरत्वादिति भावः॥ १-३॥

**प्रागभिहितं 'तद्दुःखसंयोगा व्याधय' (सू. अ. १) इति; तच्च दुःखं त्रिविधम्—आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकमिति। तत्तु सप्तविधे व्याधावुपनिपतति। ते पुनः सप्तविधा व्याधयः—आदिबलप्रवृत्ताः, जन्मबलप्रवृत्ताः, दोषबलप्रवृत्ताः, संघातबलप्रवृत्ताः, कालबलप्रवृत्ताः, दैवबलप्रवृत्ताः, स्वभावबलप्रवृत्ताश्चेति॥ ४॥**

तानेव व्याधीन् बोधयति—प्रागित्यादि। प्रागिति प्रथमाध्याये; एतदर्थश्च तत्रैव व्याकृतः। व्याध्युपाधिदुःखमेव व्याधिभेदाद्भेदयन्नाह—तच्च दुःखमित्यादि। तत्रात्मशब्देन शरीरं भण्यते; आत्मनि अधिवर्तेत इत्यध्यात्मं शारीरमानसा दोषाः, तत्र भवमाध्यात्मिकं; दोषा हि शारीरमानसा ज्वरादिकामादिविकारव्यापारा दुःखजनका भवन्ति। भूतानि बाह्यानि व्याडादीनि पृथिव्यादीनि च, देवा देवयोनयो देवासुरादयः, तेषु भूतेषु, तथा देवेषु चाधिवर्तेत इति अधिभूतं तथाधिदैवतं च; तत्र तेन निमित्तेन भूतमाधिभौतिकं तथा आधिदैविकं च दुःखं ज्ञेयम्। एतदेवोक्तं सांख्ये—"दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ" (सां. का. १) इति। दुःखमुपदिश्य तत्संबन्धेन व्याधिभेदानाह—तत्त्वित्यादि। वक्ष्यमाणसप्तविधे व्याधौ तद्दुःखं[1] यथासंभवमुपनिपततीति उपगतं भवति, व्याधिकार्यतयेत्यर्थः। सप्तव्याधीनेवाह—ते पुनरित्यादि। आदिर्जीवोपक्रमः, स च शुक्रशोणितमेलकः, तस्य बलं प्रकरणाद्व्याधिजनिका शक्तिः, सा च शुक्रशोणितगतदोषरूपैव, तेनादिबलेन भूता आदिबलप्रवृत्ताः। एवं जन्मनि गर्भजन्मनि बलं जन्मबलं पूर्वजन्मव्यवस्थिता दोषा एवेत्यादि पूर्ववद्व्याख्येयम्। संहननं संघातं[2] आगन्तुहेतुसंबन्धः, तद्बलप्रवृत्ताः। एतेन शेषं व्याख्यातम्॥ ४॥

---

१ 'तद्दुःखप्रसरं' इति मु.। २ 'संहतिः' इति मु.।

तत्र, आदिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः; तेऽपि द्विविधाः—मातृजाः, पितृजाश्च। जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्गुजात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते; तेऽपि द्विविधाः—रसकृताः, दौर्हृदापचारकृताश्च। दोषबलप्रवृत्ता ये आतङ्कसमुत्पन्ना, मिथ्याहाराचारकृताश्च; तेऽपि द्विविधाः—आमाशयसमुत्थाः, पक्वाशयसमुत्थाश्च; पुनश्च द्विविधाः—शारीरा, मानसाश्च। त एते आध्यात्मिकाः। संघातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात्; तेऽपि द्विविधाः-शस्त्रकृता, व्यालकृताश्च। एते आधिभौतिकाः। कालबलप्रवृत्ता ये शीतोष्णवातवर्षातपप्रभृतिनिमित्ताः; तेऽपि द्विविधाः—व्यापन्नर्तुकृताः, अव्यापन्नर्तुकृताश्च। दैवबलप्रवृत्ता ये देवद्रोहादुपसर्गजाः;[1] एते द्वि(त्रि)विधाः अभिचाराभिशापाभिषङ्गजाः, अथर्वणकृता उपसर्गजाश्च; तेऽपि द्विविधाः—विद्युदशनिकृताः, पिशाचादिकृताश्च; पुनश्च द्विविधाः—संसर्गजा, आकस्मिकाश्च। एते[2] आधिदैविकाः। स्वभावबलप्रवृत्ता ये क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः; तेऽपि द्विविधाः—कालजा, अकालजाश्च; तत्र परिरक्षणकृताः कालजाः, अपरिरक्षणकृता अकालजाः; एते आध्यात्मिकाः।[3] अत्र सर्वव्याध्यवरोधः[4] ॥ ५ ॥

तत्रेत्यादिना यथोद्देशं तान् व्याकरोति। कुष्ठार्शःप्रभृतय इति कुष्ठार्शःप्रकारा ये बीजदोषास्ते भवन्ति। मातृजा इति आर्तवदोषजाः, पितृजाः शुक्रदोषजाः। ये मातुरपचारादिति गर्भाभिव्यक्त्यनन्तरकृतमात्रपचारजाः। दौर्हृदं गर्भचतुर्थमासात् प्रभृति गर्भहृदयेन समं मातुः प्रार्थना विषयेषु, तत्र प्रार्थितालाभे दौर्हृदापचारः, स गर्भे विकृतिं जनयति। दोषबलप्रवृत्ता इति जन्मप्रभृतिभूतदोषजा उच्यन्ते। आतङ्काद्रोगादेव समुत्थानं येषां ते तथा; यथा—ज्वरसंतापाद्रक्तपित्तं, रक्तपित्तात् कास इत्याद्युक्ताः; मिथ्याहाराचारकृतास्तद्व्यतिरिक्ता गोबलीवर्दन्यायाज्ज्वरादय उच्यन्ते। आमाशयसमुत्था

---

१ 'देवद्रोहादभिशप्तका अथर्वणकृताः' इति ड.। २ अस्माभिस्तु चक्रव्याख्यानमनुसृत्य मूलपाठः किञ्चित्परिवर्तितः। 'एते आधिदैविकाः' इति पाठो डल्हणासंमतः। ३ 'आधिदैविकाः' इति ड.। ४ 'दोषबलप्रवृत्ता नाम ये आतङ्का अपचारकृताः, ते द्विविधाः—शारीरा मानसाश्च। कालबलप्रवृत्ता नाम ये शीतोष्णवातवर्षाप्रभृतिभिः समुत्पन्नाः। तेऽपि द्विविधाः—व्यापन्ना अव्यापन्नाश्च। संघातबलप्रवृत्ता य आगन्तव आधिभौतिकाः; ते द्विविधाः—दुर्बलस्य बलवद्विग्रहाच्छस्त्रादिकृताश्च। दैवबलप्रवृत्ता ये औपसर्गात्; ते द्विविधाः—अभिचाराभिषङ्गजाः। स्वभावबलप्रवृत्ता नाम क्षुत्पिपासाजरामृत्युनिद्राप्रभृतय इति; तेऽपि द्विविधाः—कालकृता अकालकृताश्च; तत्र परिरक्षणकृताः कालकृताः, अपरिरक्षणकृता अकालकृताः। अत्र सर्वं व्याध्युपरोधः' इति ता.।

नाभेरुपरिजा वा कफपित्तजन्या वा; पक्काशयसमुत्था नाभ्यधोगता वातजन्या वा। मानसाः क्रोधादयो मानसरजस्तमोदोषजन्याः। उक्ततया व्याधीनां त्रिविधदुःखव्याप्यत्वोपदर्शनार्थमाह—त एते इत्यादि। त एते आध्यात्मिकदुःखोपभोगादाध्यात्मिका इत्यर्थः। संघातबलप्रवृत्तव्याकरणे य आगन्तव इति आगन्तुविशेषा इत्यर्थः, अपरागन्तूनां भूतादिजानामाधिदैविकेऽभिधानात्। दुर्बलस्य बलवद्विग्रहादित्यागन्तुविशेषकारणोपलक्षणं, तेन पतनादिव्याडादिजन्यानामपि ग्रहणम्। एतद्वैविध्यानभिधानेऽपि शस्त्रकृता इत्यत्र शस्त्रस्य हिंसकमात्रोपलक्षणतया व्याडव्यतिरिक्ताभिघातपीडनादिकृताश्च गृह्यन्ते। एते च संघातबलप्रवृत्ता आधिभौतिकाः, दैवव्यतिरिक्तबाह्यस्थावरजङ्गमभूतत्वादिति ज्ञेयम्। कालबलप्रवृत्तेषु शीतादिना कालविशेषकृतेन कृतत्वात् कालबलप्रवृत्तत्वम्। व्यापन्नर्तुकृता ऋतुव्यापत्तिकृताः; अव्यापन्नर्तुकृतास्तु कालस्वभावकृतपित्तादिचयादिक्रमकृताः। दैवबलप्रवृत्तप्रव्याकरणे देवादीनां द्रोहो हिंसकत्वं, ततो देवादिद्रोहकारणात्। उपसर्गा इत्याकस्मिकरोगाः; ते हि क्रुद्धदेवाद्यभिघाताद्युपसृष्टस्य भवन्तीत्युपसर्गा उच्यन्ते। यदुक्तं "औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम्" (नि. अ. ५) इति। एते द्वि(त्रि)विधा इत्युक्तं व्याकरोति-अभिचाराभिशापाभिषङ्गजा इति।—अभिचारः कृत्या, अभिशापो गुरुवृद्धसिद्धाचार्यादिभिरभिशपनम्, अभिषङ्गो देवादीनां विपर्ययेणानुप्रवेशः। यदुक्तं **चरके**—"देवादयः स्वैर्हि गुणप्रभावैरदूषयन्तः पुरुषस्य देहम्। विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्यकान्तौ" (च. चि. अ. ९) इति। एतेऽभिचारादयः प्राक्तनाशुभकर्मपाकवशादेव पुरुषमुपघ्नन्ति। यदुक्तं **चरके**—"रक्षोगणादिभिर्वा विविधैर्भूतसंघैस्तमधर्ममन्यद्वाऽप्यपचारान्तरमुपलभ्याभिहन्यन्ते" (च. वि. अ. ३); "तथाऽभिशापप्रभवस्याप्यधर्म एव हेतुः" (च. वि. अ. ३) इत्यादि। तेन दैवं प्राक्तनं कर्माभिवर्तत इत्यधिदैवं, तत्र भूतमित्याधिदैविके व्युत्पत्तिमिच्छामः। तस्यैव भेदमाह—आथर्वणकृता इत्यादि। अथर्वणवेदविहितमारणादिकारकमन्त्रकर्मणा कृताः, तद्व्यतिरिक्ता देवादिकृता औपसर्गिकाः; अभिशापजाश्चाथर्वण एव तत्तुल्यतयाऽन्तर्भावनीयाः। उपसर्गकृतानेव द्वैविध्येनाह—विद्युदशनीत्यादि। अत्र पिशाचादिकृतेन जनपदोद्ध्वंसनभवाश्चान्तर्भावनीयाः। पुनराधिदैविकानामपि भेदान्तरमाह—संसर्गजा आकस्मिकाश्चेति। अत्र संसर्गजा औपसर्गिकरोगिसंसर्गजाताः, ये तु कुष्ठादिसंसर्गजास्ते शारीरदोषजतया दोषबलप्रवृत्ता एव; औपसर्गिकरोगसंसर्गजास्त्वधर्मभूता एवेत्याधिदैविकेऽन्तर्भवन्ति। आकस्मिकाः संसर्गजव्यतिरिक्ता आधिदैविका अपरिदृश्यमानहेतुतया आकस्मिका उच्यन्ते। एते आधिदैविका इति व्याख्यातमेव। स्वभावो मानुषशरीरस्य जातिप्रतिबद्धोऽदृष्टकृतो भावः। इह मृत्युः स्वाभाविकः (युगनियतकालमृत्युः स्वाभाविकः)। अकालकृता इत्यनुचितकालभूता ज्वरादयः। अपरिरक्षणं सुस्थविहिताचारानुष्ठानं, ततो हि शीघ्रं ज्वरादयो भवन्ति। यदुक्तं—"जीर्यतश्चोत्तमाङ्गेषु जरा न लभते बलम्" (च. सू. अ. ५) इत्यादि। एते च शरीरसहजदोषारब्धतया आध्यात्मिका व्यक्ता एवेत्याध्यात्मिकत्वेनोक्ताः। अन्ये तु आध्यात्मिका इत्यादि न पठन्त्येव। 'अत्र सर्वव्याध्यवरोधः' इत्यनेनैव

ग्रन्थेन यथायोग्यतया आध्यात्मिकाद्यन्तर्भावमादिबलप्रवृत्तादीनां व्याख्यानयन्ति; अस्मिन्नपि पक्षे यथोक्त एवाध्यात्मिकादिविभागो ज्ञेयः; प्रथमपक्षे त्वत्र ह्युक्ते सप्तविधे प्रकारे यावत्संभवं व्याध्यवरोध इत्यर्थः ॥ ५ ॥

**सर्वेषां च व्याधीनां वातपित्तश्लेष्माण एव मूलं; तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च। यथा हि कृत्स्नं विकारजातं वैश्वरूप्येणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तन्ते। दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पः। दोषदूषितेष्वत्यर्थं धातुषु संज्ञा—रसजोऽयं, शोणितजोऽयं, मांसजोऽयं, मेदोजोऽयं, अस्थिजोऽयं, मज्जजोऽयं, शुक्रजोऽयं व्याधिरिति ॥ ६ ॥**

संप्रति यथोक्तसप्तकारणभूतानामपि व्याधीनां प्रथमतः कालानुबन्धाच्च वातादिदोषहेतुतया वाताद्यव्यतिरेकं शारीरविकाराणामाह—सर्वेषामित्यादि। मूलमिति कारणम्। नन्वागन्तुकारणे मानसे च कथं वातादिमूलत्वमित्याह—तल्लिङ्गत्वादिति; वातादिलिङ्गयुक्तत्वात्। आगन्तावपि हि वातादिलक्षणं शरीरक्षोभादवश्यं भवति, परं तत् कियन्तमपि कालं वातादिचिकित्साप्रयोजनकं न भवति; यदुक्तं—"तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्" (च. चि. अ. ३) इत्यादि। तथा "आगन्तुरन्वेति निजं विकारं" (च. सू. अ. १९) इति; मानसेऽपि कामादौ दोषकोपो भवत्येव; तदुक्तं—"कामशोकभयाद्वायुः" (च. चि. अ. ३) इत्यादि। दृष्टफलत्वादिति वातादिक्रियया सर्वविकारेषु साध्येषूपशयरूपफलदर्शनात्, आगन्तावपि कालानुबन्धाद्दोषक्रियया फलं भवति। आगमाच्चेति "नास्ति रोगो विना दोषैः" (हा. सं. स्था. ३, अ. २) इत्यादि। **चरके**ऽप्युक्तं—"विकारो धातुवैषम्यम्" (च. सू. अ. ९) इति। अत्र दृष्टान्तमाह—यथा हीत्यादि। विकारजातमिति महदादीनि सप्त, तथैकादशेन्द्रियाणि, पञ्चार्थाः, तथा तद्विकाराश्च गोघटादयः। वैश्वरूप्येणेति स्थावरादिविश्वरूपतया; सत्त्वरजस्तमसामेव हि प्रकृतिरूपाणां महदादि सर्वं परिणाम इति सांख्यनयः। विश्वरूपेणेति ज्वरातिसारव्रणादिरूपेण; अन्ये त्वाध्यात्मिकानामेव विकाराणामेतद्वातादिमूलत्वमिति व्याख्यानयन्ति। ननु यदि वातपित्तकफजन्यत्वं सर्वविकाराणां तत् कथं कारणत्रयभूतानामप्येषामतिबहुलप्रपञ्चनं[1] विकाराणामित्याह—दोषेत्यादि। दोषादीनां व्यस्तसमस्तसंसर्गस्य बहुत्वाद्बहवो विकल्पा भवन्ति। यथा दोषाणां धातुसंसर्गाद् रसजज्वर-रक्तपित्त-वातरक्तादयः, तथा दोषाणां मलस्य संसर्गादतीसारमूत्रकुण्डलिकादयः, दोषधातुमलसंसर्गात् प्रमेहादयः; तथा दोषाणामेवायतनस्याधिष्ठानभेदाद्व्याधिभेदो भवति, यथा—सप्तस्वोष्ठजिह्वादिस्थानेषु पञ्चषष्टिमुखरोगा भवन्तीत्यादि। निमित्ततश्च व्याधिभेदो यथा—चत्वारो यक्ष्माणो वेगसन्धारणादिजाः, तथाऽऽगन्तुरष्टमो ज्वर इत्यादि। दोषजत्वे एवं व्यवस्थिते व्याधीनां रस-

१ 'अतिबहुत्वप्रपञ्चादिकरणं' इति मु.।

जत्वादिव्यपदेशं समादधान आह—दोषदूषितेष्वित्यादि । संज्ञा क्रियत इति भाषया अत्रापि रसादिदूषककार्यत्वमेव व्याधीनां, दोषाणामेव दूषणात्मकत्वात्; न रसादिकार्यत्वं, तेषां साधारणत्वात्; व्यपदेशस्तु घृतदग्धतैलदग्धव्यपदेशवज्ज्ञेयः । रसजादिव्यपदेशस्तु आश्रययुक्तचिकित्साविशेषार्थमिति भावः ॥ ६ ॥

**तत्र, अन्नाश्रद्धारोचकाविपाकाङ्गमर्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालजवलीपलितदर्शनप्रभृतयो रसदोषजा विकाराः; कुष्ठविसर्पपिडकामषकनीलिकातिलकालकन्यच्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्बुदाङ्गमर्दासृग्दररक्तपित्तप्रभृतयो रक्तदोषजाः, गुदमुखमेढ्रपाकाश्च; अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डिकालजीमांससंघातौष्ठप्रकोपगलगण्डगण्डमालाप्रभृतयो मांसदोषजाः; ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः; अध्यस्थ्यधिदन्तास्थितोदशूलकुनखप्रभृतयोऽस्थिदोषजाः; तमोदर्शनमूर्च्छाभ्रमपर्वस्थूलमूलारुर्जन्मनेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः; क्लैब्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषाः; (त्वग्दोषाः) सङ्गोऽतिप्रवृत्तिरयथाप्रवृत्तिर्वा मलायतनदोषाः; इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः; इत्येष समासः, विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्यामः ॥ ७ ॥**

संप्रति प्रकरणागताञ्चिकित्साविशेषप्रयोजनकान्[1] व्याधीन् क्रमेणाह—तत्रान्नाश्रद्धेत्यादि । अन्नाश्रद्धा अन्नद्वेषः । अरोचकस्त्वाहारेच्छायां सत्यामन्नस्य मुखप्रवेशनेऽभ्यवहरणाकारकः । तृप्तिर्येन तृप्तमिवात्मानं मन्यते । रक्तजेषु न्यच्छो मुखादन्यत्र, व्यङ्गस्तु मुखे वैवर्ण्यम् । नीलिका नीलवर्णोदयः । कोठो वरटीदंशाकारः शोथः । गुल्मोऽत्र रक्तगुल्मः । अधिमांसम् अधिकं मांसवृद्धिः । उपकुशादयो मुखरोगे वक्तव्याः । मांससंघातो मांसतानो मुखरोग एव । अधिकमस्थि अध्यस्थि; एवमधिदन्तोऽपि । स्थूलमूलारुर्जन्मेति तदुक्तं **चरके**—"अरुषां स्थूलमूलानां पर्वजानां च दर्शनम्" ( सू. अ. २८ ) इति । एवं 'शुक्रदोषा' इत्यन्तेन दोषधातुसंसर्गजविकारानभिधाय दोषाणामायतनजव्याध्युदाहरणमाह—सङ्गो हीत्यादि । मलायतनदोषेण मलदोषोऽपि लभ्यते । सङ्गोऽप्रवर्तनम् । इन्द्रियाणामायतनविशेषेण रोगविशेषोदाहरणमाह—इन्द्रियाणामित्यादि । इन्द्रियायतनं चक्षुर्गोलकादि । यथोक्तोदाहरणस्य संक्षेपाभिधानतां दर्शयन् तद्विस्तरं तथा निमित्ततश्चेत्यनेन सूचितव्याधिभेदमुत्तरत्र सकारणं दर्शयन्नाह—एष समासो विस्तरमित्यादि वक्ष्याम इत्यनेन ॥ ७ ॥

---

१ '°प्रभाजकान्' इति ह. ।

भवति चात्र—

कुपितानां हि दोषाणां शरीरे परिधावताम् ॥
यत्र सङ्गः खवैगुण्याद्व्याधिस्तत्रोपजायते ॥ ८ ॥

संप्रति रसादिषु तथैवायतनादिषु यथा विकारकारको दोषः स्थितो भवति तदाह—कुपितानामित्यादि। खवैगुण्यादिति स्रोतोवैगुण्यात्; वैगुण्यं च रोधोऽप्रेरणं वा ॥ ८ ॥

**भूयोऽत्र जिज्ञास्यं, किं वातादीनां ज्वरादीनां च नित्यः संश्लेषः परिच्छेदो वा? इति; यदि नित्यः संश्लेषः स्यात्तर्हि नित्यातुराः सर्व एव प्राणिनः स्युः; अथाप्यन्यथा वातादीनां ज्वरादीनां च, 'अन्यत्र वर्तमानानामन्यत्र लिङ्गं न भवति' इति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति तन्न। अत्रोच्यते—दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति; अथ च न नित्यः संबन्धः; यथाहि विद्युद्वाताशनिवर्षाण्याकाशं प्रत्याख्याय न भवन्ति, सत्यप्याकाशे कदाचिन्न भवन्ति, अथ च निमित्ततस्तत एवोत्पत्तिरिति; तरङ्गबुद्बुदादयश्चोदकविशेषा एव; वातादीनां ज्वरादीनां च नाप्येवं संश्लेषो न परिच्छेदः शाश्वतिकः, अथ च निमित्तत एवोत्पत्तिरिति ॥ ९ ॥**

संप्रत्युक्तक्रमेण वातादीनां संबन्धे प्रतिपादिते संबन्धस्य नित्यतां निरस्यन्नाह—भूयोऽत्रेत्यादि। अत्र शल्यतन्त्रतया व्रणप्राधान्येऽपि व्रणस्यागन्तुतया तथाविधदोषसंबन्धाभावाज्ज्वरादीनेव प्राधान्येन दोषजन्यानुदाहरति। परिच्छेद इति विनादोषं ज्वरादयो ज्वरादींश्च विना दोषा भवन्तीति। दूषयति—यदीत्यादि। सुस्थेऽपि वातादीनां सामान्यावस्थितत्वेन ज्वरादिभिरपि तत्र भवितव्यमिति भावः। अथाऽपीत्यादि पक्षान्तरदूषणम्। तत्र यदि वातादिव्यतिरेकेण ज्वरादयोऽन्यत्र व्यवस्थितास्तदा नासंबन्धे वातादीनां ज्वरादौ वातादिलिङ्गानि भवन्तीति भावः। ज्वरादयो वातादिकार्यं, कार्यं च समवायिकारणेन नित्यसंबद्धं, कारणं तु नावश्यं कार्येण संगतं, तेन[1] पटस्तन्तुष्वेव, तन्तवस्तु विनापटमित्येवमाकाराज्ज्वरादयोऽन्यत्र व्यवस्थिता दोषेषु, दोषास्तु विनाऽपि ज्वरादीनामिति दर्शयन्नाह—अत्रोच्यते दोषान् प्रत्याख्यायेत्यादि। अत्र दृष्टान्त आकाशं, प्रत्याख्येयेतिवचनमकारणस्याकाशस्य विद्युदादिव्यापकतयोक्तम्। तरङ्गबुद्बुदादयश्चोदकविशेषा इति दोषव्याधिवत् कार्यकारणतया तुल्य एव दृष्टान्तः। निमित्तत एवेति ज्वरादिजनकवातादिकारणाज्ज्वरो भवन् तत एव वातादेर्भवति नान्यतश्चेत्येवकारार्थः ॥ ९ ॥

भवति चात्र—

विकारपरिमाणं च संख्या चैषां पृथक् पृथक् ॥
विस्तरेणोत्तरे तन्त्रे सर्वा बाधाश्च वक्ष्यते ॥ १० ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने व्याधिसमुद्देशीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

१ 'यथा तन्तुस्त्वनुत्पाद्यैव पटं भवितुमर्हति न पुनस्तन्तुं विना पटः' इति मु.।

एतत्संक्षेपोक्तेर्यत्र विस्तरो भवति तदाह—विकारेत्यादि । विकारपरिमाणं "व्याधीनां तु सहस्रं यच्छतं विंशतिरेव च" ( उ. तं. अ. ६६ ); "षडर्शांसि" ( नि. अ. २ ) इति । एषामिति वातादीनां, तच्च "द्विषष्टिर्दोषभेदा ये" ( उ. तं. अ. ६६ ) इत्यादि वक्तव्यम्; अथवा विकारपरिमाणं पृथक् पृथगिति वीप्सायां समुदायसंख्या तथा प्रत्यवयवसंख्या चोच्यते । साऽपि सहस्रमित्यादिना समुदायसंख्या; शतं विंशतिरित्यनेन अवयवसंख्या चोक्तेति व्याख्येयम् । सर्वा बाधाश्चेत्युत्तरतन्त्रे वक्तव्या व्याधयः । चकारो भिन्नक्रमः, तेनेह च तन्त्रे वातव्याध्यादयो वक्ष्यन्त इत्यर्थः ॥ १० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने व्याधिसमुद्देशीयो नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशतितमोऽध्यायः ।

**अथातोऽष्टविधशस्त्रकर्मीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये "स्नेहसाध्याः शस्त्रसाध्याश्च" ( सू. अ. २४ ) इत्युक्तं, तत्रैतत्तन्त्रस्य शस्त्रकर्मप्राधान्यादुक्ताच्छस्त्राग्निक्षारादवशिष्टशस्त्रकर्मणोऽष्टविधस्य छेद्यादेरुपदर्शनार्थमष्टविधशस्त्रकर्मीयोऽभिधीयते ॥ १ ॥ २ ॥

**छेद्यास्तु[1] भगन्दरार्शोर्बुददुष्टव्रणनाडीतिलकालकचर्मकीलमेदोग्रन्थयः श्लेष्मनिमित्तश्चामस्तथा मांससिरास्नायुकोथमांसकन्द्यो मांसास्थिगतमपि च शल्यमुत्तमशतपोनकौ मांससंघाताधिमांसकौ गलशुण्डिका जतुमणिर्मषकवल्मीके इत्येवमादयो विकाराः[2] ॥ ३ ॥**

तत्र पूर्वं छेद्यकर्मण एवाग्रे दर्शितत्वात्तद्विषयानेवाह—छेद्यास्त्वित्यादि । केचिदत्र छेद्यादीञ्छ्लोकैः पठन्ति । तिलकालकः क्षुद्ररोगपठितो नतु शूकदोषोक्तः, तस्यासाध्यत्वात् । चर्मकीलः पायुपार्श्ववर्ती मांसाङ्कुरः । श्लेष्मजश्चाम इति ग्रन्थिरेव । कोथः पूतिभावः, स च मांसादिभिः संबध्यते; मांसकन्दी दुरूढव्रणे उच्छूनमांसम् । उत्तमशतपोनकौ

---

१ 'केचिदत्र छेद्यादीञ्छ्लोकैः पठन्ति' इति चक्रवचनादेतन्निश्चीयते यच्चक्रपाणिसंमतः पाठो गद्यात्मक एव; ताडपत्रपुस्तकेऽस्माभिर्गद्यात्मकः पाठ उपलब्धः, स च चक्रव्याख्यया संवदतीत्यस्माभिर्मूले संनिवेशितः; वर्तमानमुद्रितपुस्तकेषूपलभ्यमानः पद्यपाठस्तु डल्हणेन व्याख्यातत्वाद् डल्हणसंमतपाठतयाऽधष्टिप्पण्यां दत्तः ।

२ 'छेद्या भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकः ॥ व्रणवर्त्मार्बुदान्यर्शश्चर्मकीलोऽस्थिमांसगम् ॥ ३ ॥ शल्यं जतुमणिर्मांससंघातो गलशुण्डिका ॥ स्नायुमांससिराकोथो वल्मीकं शतपोनकः ॥ ४ ॥ अध्रुषश्चोपदंशाश्च मांसकन्द्यधिमांसकः ॥' इति ड. ।

शूकदोषे । मांससंघाताधिमांसकौ गलशुण्डिका च मुखरोगे । जतुमणिमषकवल्मीकाः क्षुद्ररोगभेदेषु ॥ ३ ॥

**भेद्यास्तु सर्वजमृते विद्रधयोऽनुशयीविदारिके प्रमेहपिडका विसर्पास्तथा ग्रन्थयश्चादितस्त्रयस्त्रयो वृद्धयोऽवमन्थपुष्करिके नाड्यः स्तनरोगाश्च सहोपदंशैः शोफाश्चासर्वसराः प्रायशः क्षुद्ररोगास्तालुपुप्पुटतुण्डिकेरीगिलायुप्रभृतयोऽन्तःपूयशल्याः पञ्च मेदःसमुत्थाना अश्मरीहेतोर्बस्तिश्च[1] ॥ ४ ॥**

भेद्या इत्यादि । अनुशयीविदारिके क्षुद्ररोगे । प्रमेहपिडकाः शराविकाद्या वक्ष्यमाणाः । विसर्पास्तथा ग्रन्थयश्चादितस्त्रय इति उक्ताः पृथक् त्रयो वातादिजाः । अवमन्थपुष्करिके शूकदोषोक्ते । तालुपुप्पुटकतुण्डिकेरीगिलायवो मुखरोगे । अन्तः पूयं वा शल्यं येषां ते तथा । पञ्च मेदःसमुत्थाना इति गलगण्डग्रन्थ्यपच्यर्बुदवृद्धयः । अश्मरीहेतोर्बस्तिरिति अश्मरीव्यतिरेकेण बस्तिभेदे मरणमित्यर्थः ॥ ४ ॥

**लेख्याश्चतस्रो रोहिण्यो व्रणनेत्रवर्त्मार्शोऽधिजिह्वोपजिह्वामांसोच्छ्रयकिलासा दन्तवैदर्भः पञ्च मेदोजाश्च[2] ॥ ५ ॥**

लेख्येषु चतस्रो रोहिण्य इति वातादिशोणितजाः । व्रणस्य नेत्रस्य च वर्त्म व्रणनेत्रवर्त्म । दन्तवैदर्भो मुखरोगे । अत्रापि मांसोच्छ्रयादीनां पचनावस्थायां लेख्यत्वोपदर्शनार्थं वा(?), एवमन्यत्रापि व्याख्येयम् ॥ ५ ॥

**वेध्यास्तु सिरोदरवृद्धिप्रभृतयः[3] ॥ ६ ॥**

वेध्येषु वृद्धिः मूत्रवृद्धिः; उदरं दकोदरम्; एवं तच्चिकित्सादर्शनात् सामान्योक्तिरपि विशेषे व्यवस्थापनीया ॥ ६ ॥

**एष्यास्तु गतिमन्तो नाड्यः[4] शल्यानि च ॥ ७ ॥**

एष्येषु शल्यमेष्यमल्पास्थित्वादि[5]प्रतीत्यर्थम् ।

---

१ 'भेद्या विद्रधयोऽन्यत्र सर्वजाद्ग्रन्थयस्त्रयः ॥ ५ ॥ आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः ॥ प्रमेहपिडकाः शोफः स्तनरोगोऽवमन्थकः ॥ ६ ॥ कुम्भीकाऽनुशयी नाड्यो वृन्दौ पुष्करिकाऽलजी ॥ प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥ ७ ॥ तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिणः ॥ बस्तिस्तथाऽश्मरीहेतोर्मेदोजा ये च केचन ॥ ८ ॥' इति ड. ।

२ 'लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका ॥ मेदोजो दन्तवैदर्भो ग्रन्थिर्वर्त्माधिजिह्विका ॥ ९ ॥ अर्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा ॥' इति ड. ।

३ 'वेध्याः सिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥ १० ॥' इति ड. ।

४ 'एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये ॥' इति ड. ।

५ '॰मस्थित्वादि॰' इति मु. ।

**आहार्यास्तु दन्तान्तःशर्कराऽश्मरीमूढगर्भकर्णमलशल्यानि पादशर्करा च[1] ॥ ८ ॥**

आहार्येषु केचित् 'तिस्रः शर्कराः' इति पठन्ति; तेनाश्मरीशर्करा, दन्तशर्करा, पादशर्करा च गृह्यन्ते ॥ ८ ॥

**स्राव्या विद्रधयः पञ्च भवेयुः सर्वजादृते ॥**
**कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः ॥ ९ ॥**
**पाल्यामयाः श्लीपदानि विषजुष्टं च शोणितम् ॥**
**अर्बुदानि विसर्पाश्च ग्रन्थयश्चादितश्च ते ॥ १० ॥**
**त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ॥**
**सौषिरो गलशालूकं कण्टकाः कृमिदन्तकः ॥ ११ ॥**
**दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ॥**
**पित्तासृक्कफजाश्चौष्ठ्याः क्षुद्ररोगाश्च भूयशः ॥ १२ ॥**

विस्राव्येषु वायुः सरुज इति रक्तावसेचनेन वायुः सरुज इति ज्ञेयः, प्रत्येकं वायो रुजायाश्च(श्चा)स्राव्यत्वात् । सौषिर-कण्टक-शीतादादयो मुखरोगाः; कण्टको जिह्वागतकण्टकः । औष्ठ्या इति ओष्ठरोगाः ॥ ९-१२ ॥

**सीव्या मेदःसमुत्थाश्च भित्त्वा सुलिखिता गदाः ।**
**कफग्रन्थिरल्पपालिः कर्णः सद्योव्रणाश्च ये ॥ १३ ॥**

सीव्येषु सुलिखिता इति "समं लिखेत् सुलिखितं लिखेन्निरवशेषत" ( चि. अ. १ ) इति वक्ष्यमाणलक्षणलिखिताः ॥ १३ ॥

**शिरोललाटाक्षिकूटकर्णौष्ठनासागण्डकृकाटिकाबाहूदरस्फिक्पायुप्रजननमुष्कादिषु प्रदेशेष्वचलेषु मांसवत्सु च सीव्येत् । जानुकूर्परजङ्घादिषु प्रचलेष्वल्पमांसेषु न सीव्येत्, वातनिर्वाहिणोऽन्तर्लोहितशल्यान् सविषांश्च । तत्र सीव्यं व्रणमभिसमीक्ष्य चलास्थिपांसुतृणरोमशुष्करक्तादिकमाकृष्यापोह्योत्कृत्य यथास्थानं स्थापयित्वा[2], स्नायुसूत्रबालानामन्यतमेन सीव्येच्छणाश्मन्तकमूर्वातसीनां वल्कलैर्वा । सूचयस्तु तिस्र उपदिश्यन्ते—द्व्यङ्गुला, त्र्यङ्गुला, धनुर्वक्रेति । तत्र मांसलेष्ववकाशेषु त्र्यस्रा त्र्यङ्गुला च, सन्धिस्वल्पमांसेषु च द्व्यङ्गुला वृत्ता च, पक्वामाशयमर्मसु धनुर्वक्राऽर्धतृतीयाङ्गुला च । गोफणिका, तुन्नसेवनी, वेल्लितकमृजुग्रन्थिबन्धश्चेति समासेन सेवनविकल्पाः । तेषां नामभि-**

१ 'आहार्याः शर्करास्तिस्रो दन्तकर्णमलोऽश्मरी ॥ ११ ॥ शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे ॥' इति ड. ।

२ 'विच्छिन्नप्रविलम्बितं मांसं सन्ध्यस्थीनि च यथास्थानं स्थापयित्वा' इत्यष्टाङ्गसंग्रहे पाठः ।

**रेवाकृतयः प्रायेण व्याख्याताः। तेषां प्रहारमासाद्योपयोगं बुद्ध्वा नातिसन्निकृष्टां नातिविप्रकृष्टामनल्पग्राहिणीमनतिग्राहिणीं वा सूचीं पातयेत्[२] ॥ १४ ॥**

संप्रति छेद्यादिसप्तकर्मणां पूर्वमेव प्रपञ्चेनोक्तत्वादवशिष्टं सीव्यं प्रपञ्चेन दर्शयन्नाह—शिरोललाटेत्यादि। वातनिर्वाहिणो निर्गच्छद्वाताः। आकृष्येति संलग्नमस्थ्यादि, असंलग्नमपोह्य, सहजलग्नं तु बलादुत्कृत्य। स्नायुसूत्रबालादिभिर्यथायोग्यतया सीव्येदिति योज्यम्। अश्मन्तकोऽम्ललोटकसदृशो वृक्षः, वल्कलैरिति वल्कलतन्तुभिः। सूच्यो वक्ष्यन्त इति पूर्वोक्तमतमाह—सूच्यस्तिस्र इत्यादि। त्र्यस्रत्वं बृहत्त्वं च मांसलावकाशस्य दूरवेध्यत्वात्, सन्ध्यादीनामल्पवेध्यतया वृत्तत्वमल्पत्वं च, पक्वाशयादावन्तःप्रवेशकतया वक्रा। यथा स्फुटितं वस्त्रं सूचिका संदधाति, तथा तुन्नसेवनी; वेल्लितबन्धवद्वेल्लितकम्; ऋजुग्रन्थिसदृशो बन्धो यस्मिन् सेवने तदृजुग्रन्थिबन्धनम् ॥ १४ ॥

**भवति चात्र—**

**दूरे निपतिता बाधं सन्निकृष्टे विलुञ्चनम् ॥**
**अल्पग्रहात्तद्वदेव व्रणे कुर्यादतस्त्यजेत्[२] ॥ १५ ॥**

पूर्वोक्तं संग्रहं[३] सुखग्रहणाय श्लोकेनाह—दूर इत्यादि। दूरत्वं चात्र गाम्भीर्येणापि ज्ञेयम्। तेन चतुर्विधस्यापि दोष उक्तो भवति। विलुञ्चनं छेदः ॥ १५ ॥

**सम्यक्सीवितमवेक्ष्य मधुघृतयुतैरञ्जनमधुकरोध्रप्रियङ्गुशल्लकीफलरसाञ्जनक्षौममसीचूर्णैः प्रतिसार्य बन्धेनोपचरेत्[४] ॥ १६ ॥**

---

१ 'सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः ॥ १२ ॥ सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रिताः ॥ न क्षाराग्निविषैर्जुष्टा न च मारुतवाहिनः ॥ १३ ॥ नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ॥ पांशुरोमनखादीनि चलमस्थि भवेच्च यत् ॥ १४ ॥ अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ॥ रुजश्च विविधाः कुर्युस्तस्मादेतान् विशोधयेत् ॥ १५ ॥ ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥ सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा ॥ १६ ॥ शणजक्षौमसूत्राभ्यां स्नाय्वा बालेन वा पुनः ॥ मूर्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥ १७ ॥ सीव्येद्गोफणिकां वाऽपि सीव्येद्वा तुन्नसेवनीम् ॥ ऋजुग्रन्थिमथो वाऽपि यथायोगमथापि वा ॥ १८ ॥ देशेऽल्पमांसे सन्धौ च सूची वृत्ताऽङ्गुलद्वयम् ॥ आयता त्र्यङ्गुला त्र्यस्रा मांसले चाऽपि पूजिता ॥ १९ ॥ धनुर्वक्रा हिता मर्मफलकोशोदरोपरि ॥ इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः ॥ २० ॥ कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः ॥' इति ड. ।

२ 'नातिदूरे निकृष्टे वा सूचीं कर्मणि पातयेत् ॥ २१ ॥ दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम् ॥ २२ ॥' इति ड. ।

३ 'न चातिसंनिकृष्टामित्यादिग्रन्थार्थं' इति ह. ।

४ 'अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् ॥ प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः ॥ २३ ॥ शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः ॥ ततो व्रणं यथायोगं बद्ध्वाऽऽचारिकमादिशेत् ॥ २४ ॥' इति ड. ।

सीवनोत्तरकर्माह—सम्यगित्यादि। अत्र व्रणरोहे क्रमेण सूत्रच्छेदोऽपि ज्ञेयः। यदुक्तं भोजे—"यदा मन्येत संश्लिष्टां पेश्यां पेशीं त्वचा त्वचम्। तदा बन्धनमेकं द्वे त्रीणि वा मोक्षयेत् क्रमात्"—इति ॥ १६ ॥

**भवन्ति चात्र श्लोकाः—**

**एतदष्टविधं कर्म समासेन प्रकीर्तितम्[1] ॥**
**चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥ १७ ॥**

संख्येयनिर्देशादेव संख्यायां सिद्धायां 'एतदष्टविधं' इति वचनं चरकोक्ताधिकशस्त्रकर्मनिरासार्थम्। चिकित्सितेषु विस्तरो यथाप्रकरणं कर्मणां भविष्यति ॥ १७ ॥

**हीनातिरिक्तं तिर्यक् च गात्रच्छेदनमात्मनः ॥**
**एताश्चतस्रोऽष्टविधे कर्मणि व्यापदः स्मृताः ॥ १८ ॥**

अत्र सामान्येन व्यापदमाह—हीनेत्यादि ॥ १८ ॥

**अज्ञानलोभाहितवाक्ययोगभयप्रमोहैरपरैश्च भावैः ॥**
**यदा प्रयुञ्जीत भिषक् कुशस्त्रं तदा स शेषान् कुरुते विकारान् ॥ १९ ॥**
**तं क्षारशस्त्राग्निभिरौषधैश्च भूयोऽभियुञ्जानमयुक्तियुक्तम् ॥**
**जिजीविषुर्दूरत एव वैद्यं विवर्जयेदुग्रविषाहितुल्यम् ॥ २० ॥**

हीने कारणमाह—अज्ञानेत्यादि। जानन्नपि चिरमातुरस्य प्रवर्तनं प्रदर्श्य वैद्येऽपेक्षा भवत्विति लोभात्, अहितवाक्यं शत्रुवचनं, प्रमोहो ज्ञानवतोऽपि कर्मसमये संमोहः। अपरैरिति व्यग्रत्वादिभिः। तमिति अशेषविकारकारकम् ॥ १९–२० ॥

**तदेव युक्तं त्वति मर्मसन्धीन् हिंस्यात् सिराः स्नायुमथास्थि चैव ॥**
**मूर्खप्रयुक्तं पुरुषं क्षणेन प्राणैर्वियुञ्ज्यादथवा कदाचित् ॥ २१ ॥**

अतिशस्त्रयोगमाह—तदेवेत्यादि। अत्राप्यज्ञानादि कारणं योज्यम्। यद्यप्यतिच्छेद्यं त्वङ्मांसादि[2] तथाऽपि तच्छेदे न व्यापन्महती भवतीति तन्नोदाहृतम्। मूर्खप्रयुक्तमित्यत्र शस्त्रमिति संबन्धः ॥ २१ ॥

**भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं संलपनोष्णते च ॥**
**स्रस्ताङ्गता मूर्च्छनमूर्ध्ववातस्तीव्रा रुजो वातकृताश्च तास्ताः ॥ २२ ॥**
**मांसोदकाभं रुधिरं च गच्छेत् सर्वेन्द्रियार्थोपरमस्तथैव ॥**
**दशार्धसंख्येष्वपि विक्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम् ॥ २३ ॥**

तत्र मर्मक्षणने सामान्यलक्षणमाह—भ्रम इत्यादि। प्रमोहो बुद्धिसंमोहः। मूर्च्छा तु निश्चेष्टता। दशार्धसंख्येष्विति पञ्चसु सिरास्नायुसन्ध्यस्थिमांसमर्मसु ॥ २२ ॥ २३ ॥

---

१ 'अष्टकं च' इति ह.। २ 'दुष्टमांसादि' इति मु.।

सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेद्वै क्षततश्च वायुः ॥
करोति रोगान् विविधान् यथोक्तांश्छिन्नासु भिन्नास्वथवा सिरासु ॥२४॥
कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च ॥
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं मनुजं व्यवस्येत् ॥ २५ ॥
शोफातिवृद्धिस्तुमुला रुजश्च बलक्षयः पर्वसु भेदशोफौ ॥
क्षतेषु सन्धिष्वचलाचलेषु स्यात् सन्धिकर्मोपरतिश्च लिङ्गम् ॥ २६ ॥
घोरा रुजो यस्य निशादिनेषु सर्वास्ववस्थासु न शान्तिरस्ति ॥
तृष्णाऽङ्गसादौ श्वयथुश्च रुक् च तमस्थिविद्धं मनुजं व्यवस्येत् ॥ २७ ॥

सिराक्षतलिङ्गे यथोक्तानिति शोणितवर्णनीयोक्तान्छिरोरोगादीन् । कौब्ज्यमित्यादि । स्नायुविद्धमित्यत्र तमिति कर्मान्तरस्याप्युपलक्षणम् । एवमस्थिविद्धमपि व्याख्येयम् । सन्धिक्षतलक्षणं शोथातिवृद्धिरित्यादि । एतदेवाममर्मसन्ध्यादिक्षतलक्षणम् ॥ २४–२७ ॥

यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वभिताडितेषु ॥

पूर्वोक्तसामान्यक्षतलक्षणसहितं प्रत्येकं सन्ध्यादिमर्मक्षतलक्षणमतिदेशेनाह—यथास्वमित्यादि ॥—

स्पर्शं न जानाति विपाण्डुवर्णो यो मांसमर्मण्यभिताडितः स्यात् ॥२८॥

अवशिष्टमांसमर्मक्षतविशेषलक्षणमाह—पाण्डुरित्यादि ॥ २८ ॥

आत्मानमेवाथ जघन्यकारी शस्त्रेण यो हन्ति हि कर्म कुर्वन् ॥
तमात्मवानात्महनं कुवैद्यं विवर्जयेदायुरभीप्समानः ॥ २९ ॥

आत्मानमित्यादि आत्मच्छेददोषाविष्करणम् । जघन्यकारीति निन्दितकर्मकारी । आत्महनम् आत्महिंसकम् ॥ २९ ॥

तिर्यक्प्रणिहिते शस्त्रे दोषाः पूर्वमुदाहृताः ॥
तस्मात् परिहरन् दोषान् कुर्याच्छस्त्रनिपातनम् ॥ ३० ॥

तिर्यक्छेदे दोषाः पूर्वमुदाहृता इति अग्रोपहरणीये "तत्र भ्रुगण्ड" इत्यादिना "मांसकन्दीप्रादुर्भावश्च" ( सू. अ. ५ ) इत्यन्तेन ॥ ३० ॥

मातरं पितरं पुत्रान् बान्धवानपि चातुरः ॥
अप्येतानभिशङ्केत वैद्ये विश्वासमेति च ॥ ३१ ॥
विसृजत्यात्मनाऽऽत्मानं न चैनं परिशङ्कते ॥
तस्मात् पुत्रवदेवैनं पालयेदातुरं भिषक् ॥ ३२ ॥
धर्मार्थौ कीर्तिमित्यर्थं सतां ग्रहणमुत्तमम् ॥
प्राप्नुयात् स्वर्गवासं च हितमारभ्य कर्मणा ॥ ३३ ॥

पूर्वमज्ञानेत्यादिना वैद्यदोषे लोभाहितवाक्ये ज्ञानवतोऽप्यातुरस्य व्यापत्तिकारणतयोक्तेः, तयोः सर्वं च वैद्यस्य परिहर्तव्यतामाह—मातरमित्यादि ॥ ३०–३३ ॥

**कर्मणा कश्चिदेकेन द्वाभ्यां कश्चित्त्रिभिस्तथा ॥**
**विकारः साध्यते कश्चिच्चतुर्भिरपि कर्मभिः ॥ ३४ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थानेऽष्टविधशस्त्रकर्मीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥**

उक्तच्छेद्यादिकर्मणां विषयविशेषे मेलकविशेषानाह—कर्मणेत्यादि । अत्रापिशब्दात् पश्चादिकर्ममेलकोऽपि क्वचिद्भवतीति सूचयति । अन्ये तु क्षारोऽग्निश्चेति पूर्वमुक्तः, एतच्चोक्तं शस्त्रकर्म तृतीयं, चतुर्थं स्नेहादीति चतुष्टये कर्मणा कश्चिदेकेनेत्यादिना निर्देश इति वदन्ति । छेद्यादिकर्मजातीयतया तु स्नेहस्वेदादिष्वप्ययं ग्रन्थार्थः सूचयतीति युक्तम् ॥ ३४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थानेऽष्टविधशस्त्रकर्मीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशतितमोऽध्यायः ।

**अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायेऽन्तःशल्यमित्युक्तम्, अतस्तेषामन्तःस्थितशल्यानां ज्ञानार्थं प्रणष्टशल्यविज्ञानीयोऽभिधीयते । प्रणष्टमापाततोऽनुपलभ्यमानम् ॥ १ ॥ २ ॥

**'शल' हिंसायां, धातुः; तस्य शल्यमिति रूपम् ॥ ३ ॥**

तत्र शल्यनिरूपणमेव प्रथमं दर्शयितुमुद्यतो निरुक्त्या शल्यस्वरूपमाह—शल हिंसायामित्यादि । अत्र शलधातोश्चौरादिकण्यन्तात् 'एरच्' ( पा. अ. ३।३।५६ ) इत्यचा 'शल' इति रूपं, तेन शलनं हिंसनं शलः, तथा च शलस्य हिंसाया निमित्तं संयोगो यस्य तत् शल्यं; "तस्य निमित्तं संयोगोत्पातौ" ( पा. अ. ५।१।३८ ) इत्यनुवर्तमाने "गोद्यचोऽसंख्यापरिमाणाश्वादेर्यत्" ( पा. अ. ५।१।३९ ) इति यत्प्रत्ययात् शल्यमिति रूपसिद्धिः ॥ ३ ॥

**तद्द्विविधं—शारीरमागन्तुकं च ॥ ४ ॥**

अस्य च द्वयी प्रवृत्तिरेका निरुक्त्या शल्यं सर्वव्याधीनाह, यदुक्तं—"यत् किंचिदाबाधकरं तत् सर्वं शल्यसंज्ञितम्" इति; अथवा तु रूढ्या शरादौ वर्तते । तत्र निरुक्त्यर्थमेव परिगृह्याह—द्विविधमित्यादि । अस्यैव विवरणं—शारीरमित्यादि ॥ ४ ॥

**सर्वशरीराबाधकरं शल्यं, तदिहोपदिश्यत इत्यतः शल्यशास्त्रम् । तत्र शारीरं दन्तनखरोमादि धातवोऽन्नमला दोषाश्च दुष्टाः; आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति । अधिकारो हि**

---

१ 'तस्य यत्प्रत्ययस्य शल्यमिति रूपसिद्धिः' इति ता. ।

**लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु; तत्रापि विशेषतो लोहेष्वेव, विशसनार्थमुपपन्नत्वाल्लोहस्य; लोहानामपि निर्वाहित्वादणुमुखत्वाद्दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः। स च द्विविधः-कर्णी, श्लक्ष्णश्च; प्रायेण विविधवृक्षपत्रपुष्पफलाकृतयो व्याख्याताः, व्यालमृगपक्षिवक्त्रसदृशाश्च ॥ ५ ॥**

इत्यतः शल्यशास्त्रमिति। अस्मिन् शास्त्रे निरुक्त्यर्थमेव शल्यस्य परिगृहीतत्वा सर्वाबाधविषयतया उपदेश इति भावः। तत्रेत्यादि। शारीरशल्यविवरणे दन्त-नख-रोमादीनामादौ ग्रहणं; दन्तादिषु रूढ्यर्थशल्यशब्दस्य तु योगात्; तथा हि–दन्तश्चलितः शारीरं शल्यम्, अन्यगात्रप्रविष्टं मुख्यं शल्यं च भवति; एवमुभयरूपो नखः; तथा अक्षिप्रतीपं[1] रोम शारीरं शल्यम्, अन्यत्र शरीरप्रदेशे व्रणान्तर्गतं मुख्यं च शल्यमिति। अन्नं दुष्टं शल्यमेवाबाधकरत्वादेव। धात्वादयोऽपि दुष्टाः शल्यम्। आगन्तुशल्योदाहरणे शारीरशल्यव्यतिरेकेण मानसशोकादिशल्यस्यापि ग्रहणम्। मुख्यशल्यशब्दविषयं चिकित्साभेदार्थं पृथक्कुर्वन्नाह—अधिकारो हीत्यादि। अधिकारो मुख्यत्वेनाधिकारः। विशसनार्थमिति मारणार्थम्। अत्रैतिह्यं–यद्ब्रह्मणा दानवविनाशार्थं लौहमुत्पादितमिति। निर्वाहित्वादिति शरीरप्रवेशशीलत्वात्; 'निर्वासित्वात्' इति पाठे कालान्तरावस्थायित्वादित्यर्थः। अणुमुखत्वं च दूरप्रवेशे हेतुः। दूरप्रयोजनकरत्वं[2] दूरस्थेन धानुष्केण शरेण वेदनानिष्पादनादित्यर्थः। तस्याहरणे विशेषकारकं भेदमाह—स द्विविध इत्यादि। वृक्षपत्रपुष्पफलाकृतय इति शरस्य फले अग्रे वृक्षपत्रादिसादृश्यमित्यर्थः। व्यालमृगपक्षिवक्त्रसदृशा इत्यनेन उन्नतदंष्ट्राकृतिता शरस्येत्युच्यते ॥ ५ ॥

**शरीरे सर्वशल्यानां गतयः पञ्चधा स्मृताः ॥**
**ऋज्वागतमवाचीनं तिर्यगूर्ध्वमधोगतम्[3] ॥ ६ ॥**

शल्यानां शरीरे गतिभेदमाह—शरीरे इत्यादि। ऋज्वागतं संमुखागतम्, अवाचीनं पृष्ठादागतं, तिर्यक् पार्श्वयोरागतम्, अधस्तादागतमूर्ध्वगतम्, ऊर्ध्वागतमुपरिष्टादागतमधोगतम्। **विश्वामित्रेण** तु, अग्रपृष्ठादागतावुभावपि ऋजुशब्देनोक्तौ, तथाऽपरश्चैषां पातानां व्यामिश्रत्वेन संकीर्णः पात उक्तः। यदुक्तं—"कीर्तिताः पञ्च शल्यानां गतयः शल्यचिन्तकैः। ऊर्ध्वाधस्तिरश्चीनर्जुसंकीर्णपातभेदतः" इति। तत्र संकीर्णपाता उक्तेष्वन्तर्भवन्तीति न संख्याधिक्यम् ॥ ६ ॥

**तानि वेगक्षयात् प्रतिघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु; तत्र शल्यलक्षणमु-**

---

१ 'प्रतिपक्ष्म रोम' इति **मु.**। २ 'दूरे स्थितेन च धात्ववगाहकेन शरेण' इति **मु.**।
३ 'सर्वशल्यानां तु महतामणूनां वा पञ्चविधो गतिविशेष ऊर्ध्वमधोऽर्वाचीनस्तिर्यगृजुरिति' इति **ड.**।

च्यमानमुपधारय। तद्द्विविधं—सामान्यं, वैशेषिकं च। श्यावं पिडकाचितं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्त्राविणं बुद्बुदवदुन्नतं मृदुमांसं च व्रणं जानीयात् सशल्योऽयमिति; सामान्यमेतल्लक्षणमुक्तम्। वैशेषिकं तु—त्वग्गते विवर्णः शोफो भवत्यायतः कठिनश्च; मांसगते शोफाभि(ति)वृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च; पेश्यन्तरस्थे[1]ऽप्येतदेव चोषशोफवर्जं; सिरागते सिराध्मानं सिराशूलं सिराशोफश्च; स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च; स्रोतोगते स्रोतसां स्वकर्मगुणहानिः; धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्दः पिपासा हृल्लासश्च; अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च; अस्थिविवरगतेऽस्थिपूर्णताऽस्थिनिस्तोदः[2] संहर्षो बलवांश्च; सन्धिगतेऽस्थिवच्चेष्टोपरमश्च; कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखात्; मर्मगते मर्मविद्धवच्चेष्टते[3]। सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥ ७ ॥

प्रतिघातादिति अस्थ्यादिभिर्वेगप्रतिबन्धात्; वेगक्षयस्तु स्वत एव। पेशीशब्देन पेश्योर्मध्यम्, अत एव व्रणवास्तुगृहीतमांसादस्य भेदः। प्रभृतिग्रहणात् सिराभ्यन्तरग्रहणम्। तत्र शल्यलक्षणमित्यादि। श्यावमित्यादि सामान्येन सशल्यव्रणलक्षणम्। विशेषतस्त्वित्यादि त्वगादिगतशल्यस्य विशिष्टलक्षणं, तच्च सामान्यलक्षणयुक्तं सर्वं ज्ञेयम्। चोषः पार्श्वस्थाग्निनेव शोषः। स्वकर्मगुणहानिरिति यथा रसवहस्रोतसो रसवहनकर्महानिस्तथास्ववर्णहानिः। अत्र स्रोतोधमन्योर्व्रणवास्तुगृहीतसिराप्रभेदत्वेन सिराग्रहणेन ग्रहणं; किंवा प्रभृतिशब्दग्रहणात्तद्गतशल्यलक्षणाभिधानम्। संहर्षः संघट्टनम्। चेष्टोपरमश्चलसन्धिषु ज्ञेयः। आटोपः सशब्दवायुक्षोभः। मर्मविद्धवदिति पूर्वाध्यायोक्तपञ्चक्षतमर्मलक्षणवत् सामान्यसशल्यमर्मलक्षणमित्यर्थः ॥ ७ ॥

मृदून्यल्पानि[4] वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति, विशेषतः कण्ठस्रोतःसिरात्वक्पेश्यस्थिविवरेषु; दोषप्रकोपव्यायामाभिघाताजीर्णेभ्यः प्रचलितानि पुनर्बाधन्ते ॥ ८ ॥

संप्रति शल्यव्रणस्य रोहणे हेतुमाह—मृदूनीत्यादि। अनुलोमसंनिविष्टानीति रसादिगमनाविरोधस्थितानि। एषां कालान्तरप्रकोपे हेतुमाह—दोषेत्यादि। एतदेव च कालान्तरकोपित्वमन्विष्याहरणे इह वक्तव्ये कारणं ज्ञेयम् ॥ ८ ॥

तत्र, त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयमृदितायां[5] त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्, स्त्यान-

---

१ 'मांसानां पेश्यन्तरस्थे' इति ता.। २ 'अस्थिचूर्णपूर्णता संहर्षो वेगवांश्च' इति ता.। ३ 'मर्मविद्धवदाचक्षेत' इति ता.। ४ 'महान्त्यल्पानि' इति ड.। ५ 'मृद्गोमयप्रमृदितायां' इति ता.।

घृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणाऽऽशु विसरति घृतमुपशुष्यति चालेपो यत्र तत्र शल्यं विजानीयात्; मांसप्रणष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्, कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भं वेदनां वा जनयति तत्र शल्यं विजानीयात्; कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवमेव परीक्षेत; सिराधमनीस्रोतःस्नायुप्रणष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायात्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्; अस्थिप्रणष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपाचरेत्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्; सन्धिप्रणष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसरणाकुञ्चनबन्धनपीडनैर्भृशमुपाचरेत्, यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात्; मर्मप्रणष्टे त्वनन्यभावान्मर्मणामुक्तं परीक्षणं भवति ॥ ९ ॥

संरम्भः शोथरागादिसंभवः । स्नेहस्वेदोपपन्नान्यस्थीनीति बाह्य एव प्रायः स्नेहस्वेदप्रयोगः । मर्मणां सिरादिपञ्चरूपत्वात् सिरादिप्रणष्टलक्षणमेव तत्रापीति दर्शयन्नाह—मर्मेत्यादि । अनन्यभावादिति सिरामांससन्ध्यस्थिस्नाय्वन्तर्गतत्वादित्यर्थः ॥ ९ ॥

सर्वस्थानगते सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्लवनप्रतरणव्यायामैर्जृम्भोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं विजानीयात् ॥ १० ॥

सर्वस्थानगते इत्यादौ लक्षणमिति ज्ञानोपायः ॥ १० ॥

भवन्ति चात्र—

यस्मिंस्तोदादयो देशे सुप्तता गुरुताऽपि च ॥
घट्टते बहुशो यत्र शूयते रुज्यतेऽपि च ॥ ११ ॥
आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति ॥
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्दिशेत् ॥ १२ ॥

तोदादीञ्छ्लोकेन प्रपञ्चयन्नाह—यस्मिन्नित्यादि । संवाह्यमान इति संमर्द्यमानः ॥ ११ ॥ १२ ॥

अल्पाबाधमशूनं च नीरुजं निरुपद्रवम् ॥
प्रसन्नं मृदुपर्यन्तं निराघट्टमनुन्नतम् ॥ १३ ॥
एषण्या सर्वतो दृष्ट्वा यथामार्गं चिकित्सकः ॥
प्रसाराकुञ्चनान्नूनं निःशल्यमिति निर्दिशेत् ॥ १४ ॥

---

१ '°मवेदनम्' इति ता. ।

अल्पाबाधमित्यादि निःशल्यलक्षणम् ॥ १३ ॥ १४ ॥

**अस्थ्यात्मकं भिद्यते तु शल्यमन्तश्च शीर्यते ॥**
**प्रायो निर्भुज्यते[1] शार्ङ्गमायसं चेति निश्चयः ॥ १५ ॥**

संप्रत्याहरणोपयोगिनीं नष्टशल्यानामवस्थामाह—अस्थ्यात्मकमित्यादि । भिद्यत इति विदीर्णं भवति । शीर्यत इत्यनेकावयवं भवति । यत्तु विषाणेत्यादिना अस्थ्यात्मकं न विशीर्यत इति वक्तव्यं, तत्र क्षयं न यातीत्यर्थभेदान्न विरोधः । अन्ये त्वत्रापि विशीर्यत इति क्षयं यातीत्यर्थः, किञ्चिदस्थि क्षयं यातीति; चकारात् कोमलास्थ्यपरिणामादविरोधं वदन्ति । निर्भुज्यते कुब्जं भवति ॥ १५ ॥

**वार्क्षवैणवतार्णानि निर्ह्रियन्ते तु नो यदि ॥**
**पचन्ति रक्तं मांसं च क्षिप्रमेतानि देहिनाम् ॥ १६ ॥**
**कानकं राजतं ताम्रं रैतिकं[2] त्रपुसीसकम् ॥**
**चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात् ॥ १७ ॥**
**स्वभावशीता मृदवो ये चान्येऽपीदृशा[3] मताः ॥**
**द्रवीभूताः शरीरेऽस्मिन्नेकत्वं यान्ति धातुभिः ॥ १८ ॥**
**विषाणदन्तकेशास्थिवेणुदारूपलानि तु ॥**
**शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि च ॥ १९ ॥**

पित्ततेजः जाठराग्निरूपपित्ततेजःसहकृतो देहोष्मा । स्वभावशीता मृदवो ये चान्ये रीत्यादयः । शीतत्वेनात्र तत्सहचरितं द्रवत्वं नैमित्तिकमुच्यते । मृदव इत्यनेन चातिकठिनाल्लोहाद् व्यावृत्तिः । अनेन च नष्टशल्यावस्थाकथनेनास्थ्यात्मकमवयवान्तरमन्विष्याहर्तव्यं, शार्ङ्गादि ऋजूकृत्वा हर्तव्यं, वार्क्षादि शीघ्रमाहर्तव्यं, कानकादीनां प्रमादभयादनाहरणेऽपि न दोष इत्यादि प्रयोजनमूह्यम् ॥ १६ ॥ १९ ॥

**द्विविधं पञ्चगतिमत्त्वगादिव्रणवस्तुषु ॥**
**यो वेत्त्यधिष्ठितं शल्यं स राज्ञः कर्तुमर्हति ॥ २० ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने प्रणष्टशल्यविज्ञानीयो नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥**

अत्राध्यायपिण्डार्थं दर्शयन् तज्ज्ञं वैद्यं स्तौति—द्विविधमित्यादि । द्विविधं शारीरागन्तुभेदेन । त्वगादिवस्तुष्वधिष्ठितं विविधत्वेन नष्टानष्टत्वेनावस्थितम् ॥ २० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने प्रणष्टशल्यविज्ञानीयो नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

१ 'भज्यते' इति ड. । २ 'कृष्णायस्त्रपुसीसकम्' इति ता. । ३ '॰न्येवमादयः' इति ता. ।

## सप्तविंशतितमोऽध्यायः ।

**अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायोक्तविधिना ज्ञातस्य निर्हरणार्थं शल्यापनयनीयोऽभिधीयते ॥ १ ॥ २ ॥

**शल्यं द्विविधम्—अवबद्धम्, अनवबद्धं च ॥ ३ ॥**

द्विविधं शल्यम्—अवबद्धम्, अनवबद्धं च ॥ ३ ॥

**तत्र समासेनानवबद्धशल्योद्धरणार्थं पञ्चदश हेतून्[1] वक्ष्यामः । तद्यथा—स्वभावः, पाचनं, भेदनं, दारणं, पीडनं, प्रमार्जनं, निर्ध्मापनं, वमनं, विरेचनं, प्रक्षालनं, प्रतिमर्शः, प्रवाहणम्, आचूषणम्, अयस्कान्तो, हर्षश्चेति ॥ ४ ॥**

अत्रास्थ्यादिविदष्टमवबद्धम्, इतरस्यानवबद्धस्य सुखोपायतयैवोपायानाह—तत्रेत्यादि । स्वभावशब्देनेह स्वभावप्रवृत्ता अश्रुक्षवथ्वादयः कारणशब्देन गौण्या वृत्त्योच्यन्ते ॥ ४ ॥

**तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति[2], मांसावगाढं शल्यमविदह्यमानं पाचयित्वा प्रकोथात्तस्य पूयशोणितवेगाद्गौरवाद्वा पतति[3], पक्वमभिद्यमानं भेदयेद्दारयेद्वा । भिन्नमनिरस्यमानं पीडनीयैः पीडयेत् पाणिभिर्वा । अणून्यक्षिशल्यानि परिषेचनाध्मापनै[4]र्बालवस्त्रपाणिभिः प्रमार्जयेत्[5] । आहारशेषश्लेष्महीनाणुशल्यानि[6] श्वसनोत्कासनप्रधमनैर्निर्धमेत् । अन्नशल्यानि वमनाङ्गुलिप्रतिमर्शप्रभृतिभिः । विरेचनैः पक्वाशयगतानि । व्रणदोषाशयगतानि प्रक्षालनैः । वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम्[7] । मारुतोदकस्तविषरुधिरदुष्टस्तन्येष्वाचूषणमास्येन[8] विषाणैर्वा । अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन । हृद्यवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति ॥ ५ ॥**

---

१ 'नव हेतून् वक्ष्यामः—स्वभावः, पाचनं, प्रमार्जनं, निर्धमनं, प्रतिमर्शः, प्रवाहणं, आपूषणम्, अयस्कान्तः, हर्षणं चेति' इति **ता.** । २ 'पतति एतत् स्वभावो नाम' इति **ता.** । ३ 'पतति एतत् पाचनं नाम' इति **ता.** । ४ 'परिषेचनोपधमन°' इति **ता.** । ५ 'प्रमार्जयेदेतत् प्रमार्जनं नाम' इति **ता.** । ६ 'आहारशेषं कण्ठगतं श्लेष्मसिङ्घाणकं निश्वासोत्कसनाभ्यां निर्धमेत्, एतन्निर्धमनं नाम । अन्नशल्यानि वमनाङ्गुलिस्पर्शनप्रभृतिभिः प्रमृज्योद्धरेत्, एष प्रतिमर्शो नाम' इति **ता.** । ७ 'प्रवाहणेनोद्धरेदेतत् प्रवाहणं नाम' इति **ता.** । ८ 'मारुतोदकस्तन्यरुधिरविषशल्यान्याचूषणेनोद्धरेदास्येन विषाणेन वा, एतदाचूषणं नाम' इति **ता.** ।

एतेषां विवरणं-तत्रेत्यादि । नयनादिभ्यः पततीत्यत्र 'यच्छल्यं तत्र स्वभावो हेतुः' इत्यध्याहार्य योजना कार्या, एवमन्यत्राप्यूहनीयम् । मांसावगाढमित्यनेन नातिबद्धत्वात् तदनवबद्धमेव शल्यमुच्यते । प्रमार्जनविषयमाह—अणूनीत्यादि । अक्षशल्यानि अक्षिगतशल्यादीनि । हीनानां देहान्निर्गतानामल्पस्थितावयवा हीनाणुशल्यानि निश्वसनोत्कसनाभ्यां प्रेरयेत् । निर्ध्मापनं प्रधमनं ज्ञेयम् । प्रतिमर्शो विघर्षणं, स च वमने अङ्गुल्या कण्ठघर्षणमिहोक्तः । प्रवाहणम् अधःप्रेरणम् । विरेचनैरिति विरेचनमपि अधःप्रवाहणम् । मारुतेत्यादिना चूषणविषयः । अयस्कान्तो लोहस्य कर्षकः । शोकोऽपि मानसशल्यमिति प्रागुक्तमेव, शोकभयाद्यपि हर्षाहरणीयमत्र ज्ञेयम् । अन्ये तु पञ्चदश हेतून् पठन्ति । भेदन-दारण-पीडन-वमन-विरेचन-प्रक्षालनानि प्रक्षिप्यावशिष्टानि ये पठन्ति तेषां भेदन-दारणे पाचनोत्तरकर्मतया पाचने, पीडनं प्रमार्जने, वमनं प्रतिमर्शे, विरेचनं प्रवाहणे, प्रक्षालनं परिषेकेऽन्तर्भवति ॥ ५ ॥

**सर्वशल्यानां तु महतामणूनां वा द्वावेवाहरणहेतू भवतः—प्रतिलोमोऽनुलोमश्च । तत्र प्रतिलोममर्वाचीनमपनयेत्, अनुलोमं पराचीनम्[1] । अनुलोममनुत्तुण्डितं[2] छेदयित्वा च्छेदनीयमुखम्; अच्छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावंक्षणपर्शुकान्तरपतितानि हस्तशक्यं यथामार्गं हस्तेनैवापहर्तुं प्रयतेत; हस्तेनापहर्तुमशक्यं विशस्य शस्त्रेण यन्त्रेणापहरेत् ॥ ६ ॥**

सर्वशल्यानां द्वैविध्यमाह—सर्वेत्यादि । येन यथा शल्यं प्रविष्टं तेनाह्रियमाणं प्रतिलोमं, परामुखेनाह्रियमाणमनुलोमम् । प्रतिलोमविषयोऽर्वाचीनं नातिदूरप्रविष्टं, तत् प्रवेशमार्गेणैवाहरणीयम्, एवं च प्रतिलोमहरणं भवति । पराचीनं तु परानिर्गतमुखं तन्मुखेनैवाहर्तव्यं, तथा चानुलोमं भवति; एतस्य पुनः प्रवेशमार्गेणानयनेन स्थूलशल्याग्रेण पुनर्बहुदेशघट्टनं भवतीत्यभिप्रायः । अनिर्गतमुखमपि यथाऽनुलोमं पराचीनमाह्रियते तदाह—अनुलोममनुत्तुण्डितमित्यादि[3] । छेदनीयमुखं छेदनार्हदेशमुखम् । एतच्च छेदयित्वाऽपहरणं कर्णवतः शल्यस्य ज्ञेयम् । तद्धि प्रवेशमार्गेणाह्रियमाणं बहु

---

१ 'अस्याग्रे 'तिर्यग्गतं यतः सुखाहार्यं भवति ततश्छित्त्वाऽपहरेत्' इत्यधिकं पठ्यतेऽष्टाङ्गसंग्रहे । २ 'उत्तुण्डितं छित्त्वा निर्घातयेच्छेदनीयमुखम्; छेदनीयमुखान्यपि कुक्षिकक्षावंक्षणपर्शुकान्तरपतितानि च' इति ड. । वाग्भटेन त्वयमेवार्थो वैपरीत्येनोक्तः; यथा—''शल्यं न निर्घात्यमुरःकक्षावंक्षणपार्श्वगम् । प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुखं च यत्'' इति ( वा. सू. अ. २८ ) । ''उत्तुण्डितं दृश्यमानमुखं, तद्विपरीतमनुत्तुण्डितं; छेद्यं छेदनीयमुखम् । 'न निर्घात्यम् अहार्यम्'' इत्यरुणदत्तः । 'निर्घातयेदिति इतस्ततश्चालयेद्धस्तेन मुद्गरादिना वा' इति डल्हणः । अस्माभिस्तु चक्रपाणिव्याख्यानुसारेण मूले पाठः किञ्चित्परिवर्त्य संनिवेशितः । ३ 'अनुलोममुत्तुण्डितमित्यादि' इति मु. ।

शरीरप्रदेशं कर्णावष्टब्धं छेदयित्वा हन्ति; तेन परागभागमेव स्तोकं छेदयित्वा निर्ह्रियते; तेन कर्णवतः शल्यस्याल्पोपघातेन निर्गमो भवति । यानि त्वकर्णवन्ति पराङ्निर्गतमुखानि तानि छेदनीयमुखान्यपि प्रवेशमार्गेणैव प्रतिलोमं हर्तव्यानि । यदुक्तं **भोजे**— "अतुण्डितानि शल्यानि छेदनीयमुखानि च । अनिर्घात्यानि जानीयाद् बहुच्छेदानुबन्धतः" इति । कर्णवतोऽप्यच्छेद्यमुखस्य प्रतिलोमं प्रवेशमार्गेणाहरणमाह—अच्छेदनीयमुखानीत्यादि । एतेषां मुखच्छेदे महती व्यापन्मरणं वा भवति; तेन प्रवेशमार्गेणैव कर्णमर्दनं कृत्वा यन्त्रेण वा कर्णं यन्त्रयित्वा छेदनीयप्रच्छेदनं च कृत्वा प्रतिलोममेव हरणमत्रेत्यर्थः । शल्याहरणं हस्तेनैव योग्यतया प्रायः कर्तव्यं, तेनाशक्ये यन्त्रेणेत्याह—हस्तेनेत्यादि । विशस्येति यन्त्रप्रदेशनिरोधकं प्रदेशं शस्त्रेण छित्त्वा ॥ ६ ॥

**भवति चात्र—**

**शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत् ॥**
**संरक्षेदस्य मर्माणि मुहुराश्वासयेच्च तम् ॥ ७ ॥**

अत्र व्यापच्चिकित्सामाह—शीतलेनेत्यादि । मर्मसंरक्षणं पानीयघृताभ्यङ्गतर्पणादिना ॥ ७ ॥

**ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृतप्रभृतिभिः संस्वेद्यावदह्य तर्पयित्वा प्रदिह्य सर्पिर्मधुभ्यां बद्ध्वाऽऽचारिकमुपदिशेत् ॥ ८ ॥**

स्वेदार्हं संस्वेद्याग्निनाऽवदह्य घृतेन तर्पयित्वेति योज्यम् । अत्रातिस्रुतरक्ता घृततर्पणीयाः; तत्र **भोजः**—"अग्निकृत्या व्रणा ये तु तेष्वग्निमवचारयेत् । स्वेदयेत् सक्तुपिण्डिभिः स्वेदकृत्यान् समन्ततः ॥ तर्पयेत्तर्पणीयं तु सुखोष्णेन तु सर्पिषा" इति ॥ ८ ॥

**हृदयमभितो वर्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गं; दुरपहरमन्यतोऽपवाध्यमानं पाटयित्वाऽपहरेत् ॥ ९ ॥**

हृदयमभित इति हृदयसमीपे पार्श्वे इत्यर्थः । हृदयोद्वेजनं च शल्यकार्यपीडापरिज्ञानार्थमित्येके । हृदयोद्वेजनेन लीनस्य यन्त्रस्य (?) संबन्धो न भवतीत्यर्थः । यथामार्गेण दुरुपहरं छेदेन मुखं विशालं कृत्वा हर्तव्यं, तत्र तथा छेदनं कर्तव्यं यथा सिरादिक्षणनेनान्यतो देशादपबाधो न भवतीत्युक्तं—दुरपहरमित्यादि ॥ ९ ॥

**अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य पादाभ्यां यन्त्रेणापहरेत्, अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं**

---

१ अस्याग्रे केषुचित्पुस्तकेषु 'सिरास्नायुविलग्नं शलाकादिभिर्विमोच्यापनयेत्; श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं, दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा' इत्यधिकः पाठ उपलभ्यते । परमसौ डल्हणचक्रपाणिभ्यामख्यातत्वान्न मूले सन्निवेशितः । वाग्भटेन तु संगृहीतोऽयं पाठः । यथा—'सिरास्नायुविलग्नं तु चालयित्वा शलाकया । बद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत्' इति ।

**प्रविभुज्य गुणेन बद्ध्वैकतश्चास्य पञ्चाङ्ग्यामुपसंयतस्याश्वस्य वक्त्रकविके बध्नीयात्, अथैनं कशया ताडयेद्यथोन्नामयञ्छिरोवक्रं वेगेन शल्यमुद्धरति; दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्बद्ध्वोद्धरेत्**[1] ॥१०॥

अस्थिविदष्टाहरणमाह—अस्थीत्यादि । गुणेनेति धनुर्गुणेन । अश्ववक्त्रकटके बद्धा तुरगस्ताडनीयः, तेन च शिरोवक्रमुन्नामयञ् शल्यमपहरति । पञ्चाङ्गी वृक्षशाखा; अधऊर्ध्वं विस्तृतप्रत्यासन्नवृक्षशाखाः; तत्राह—"बन्धो नमन्त्यां चोन्नमन्त्यां च, प्रधानशाखायां बन्धे न चलति" ॥ १० ॥

**अदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव ॥ ११ ॥**

अदेशेत्यादि । अदेशोत्तुण्डितमिति पक्षे अच्छेदनीयदेशोत्तुण्डितमित्यर्थः । 'अस्थिदेशोत्तुण्डितं' इत्यन्ये; अत्रास्थिरोधोऽस्थ्युत्तुण्डितत्वम् ॥ ११ ॥

**यन्त्रेण विमृदितकर्णानि कर्णवन्ति । अनाबाधकरदेशोत्तुण्डितानि पुरस्तादेव ॥ १२ ॥**

विमृदितकर्णानि कर्णवन्तीति अच्छेदनीयमुखपतितानि । छेदनीयमुखे तु देशे कर्णवतामनुलोममेव छेदयित्वा हरणमाह—अनाबाधकरेत्यादि ॥ १२ ॥

**जातुषे कण्ठासक्ते कण्ठे नाडीं प्रवेश्याग्नितप्तां च शलाकां, तयाऽवगृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतं शल्यमुद्धरेत् । अजातुषं तु जतुमधूच्छिष्टप्रलिप्तया शलाकया पूर्वकल्पेनेत्येके ॥ १३ ॥**

जातुषं जतुमयं शल्यं; किंवा शरादिलग्नजतवयवहरणोपदेशोऽयं—जातुष इत्यादि । तया तप्तशलाकया गृहीतं जतुशल्यं तत्क्षणाज्जलेन निर्वापितं स्थिरीभवतीत्यर्थः ॥ १३ ॥

**अस्थिशल्यमन्यद्वा तिर्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकदीर्घसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठात्, पूर्णकोष्ठं च वामयेत्, वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्; मृदुना वा दन्तधावनकूर्चकेनापहरेत् प्रणुदेद्वाऽन्तः । क्षतकण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत्, त्रिफलाचूर्णं वा मधुशर्कराविमिश्रम् ॥ १४ ॥**

कण्ठलग्नकण्टकाद्याहरणोपायमाह—अस्थिशल्यमित्यादि । केशोण्डुकं बालवित्तिका, दन्तधावनकूर्चः आपोथिताग्रं करञ्जादिदन्तकाष्ठम् । प्रणुदेच्चान्तरिति कोष्ठं प्रवेशयेत् ॥ १४ ॥

---

१ 'एवमशक्यं गुणेन परिवेष्ट्य बद्धाऽश्ववक्त्रकटकेऽश्वं कशया ताडयेत्, यथोन्नामयञ् शिरोवक्रं वेगेन शल्यमपहरति; पञ्चाङ्ग्या वृक्षशाखायां वा बद्धा पूर्ववदुद्धरेत्' इति ता. । अयमेव पाठश्चक्रपाणिसंमतः स्यात् ।

उदकपूर्णोदरमवाक्शिरसमवपीडयेद्धुनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखात् ॥ १५ ॥

ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धं स्कन्धे मुष्टिनाऽभिहन्यात्, स्नेहं मद्यं पानीयं वा पाययेत् ॥ १६ ॥

बाहुरज्जुलतापाशैः कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि, लालास्रावं फेनागमनं संज्ञानाशं चापादयति; तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं विदध्याद्रसं च वातघ्नं दद्यादिति ॥ १७ ॥

पानीयप्रवेशादिनाऽतिपीतजलाहरणोपायानाह—उदकेत्यादि ॥ १५—१७ ॥

भवन्ति चात्र—

शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान् ॥
तथा यन्त्रपृथक्त्वं च सम्यक् शल्यमथाहरेत् ॥ १८ ॥

शल्यानां तथा तत्स्थानानां तथा तदाकर्षणयन्त्राणां च भूयस्त्वं प्रतिपादयन् वैद्यस्य स्वबुद्ध्याऽऽहरणे विधानान्तरकल्पनमाह—शल्याकृतिविशेषानित्यादि । सम्यगिति अव्यापत्तिर्यथा भवति तथाऽऽहरेत् ॥ १८ ॥

कर्णवन्ति तु शल्यानि दुःखाहार्याणि यानि च ॥
आददीत भिषक् तस्मात्तानि युक्त्या समाहितः ॥ १९ ॥

कर्णवच्छल्याहरणे महदवधानं कर्तव्यमित्याह—कर्णवन्तीत्यादि ॥ १९ ॥

एतैरुपायैः शल्यं तु नैव निर्यात्यते यदि ॥
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत् ॥ २० ॥
शोथपाकौ रुजश्चोग्राः कुर्याच्छल्यमनाहृतम् ॥
वैकल्यं मरणं चापि तस्माद्यत्नाद्विनिर्हरेत् ॥ २१ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने शल्यापनयनीयो
नाम सप्तविंशोऽध्यायः ॥ २७ ॥

अनुक्तोपायानुक्तयन्त्रकरणे सूत्रमाह—एतैरित्यादि । यन्त्रयोगैरित्यनुक्तैश्चेत्यर्थः । अत्रान्ते केचित् 'अल्पतायां' इत्याद्यशल्यव्रणलक्षणं पठन्ति, तैस्तु पूर्वमिदं पठनीयम् ॥ २० ॥ २१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने
शल्यापनयनीयो नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

## अष्टाविंशतितमोऽध्यायः ।

**अथातो विपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायैः समासविस्तराभ्यां व्रणानुद्दिश्यातुरोपक्रमणीयाध्याये चिकित्सा सूत्रयितव्या, सा तु सारिष्टत्वाद्गतायुषि न सिध्यति, अतोऽरिष्टज्ञानार्थं रिष्टप्रतिपादकाध्यायेषु सामान्यारिष्टस्वरूपाभिधायकतया विपरीतव्रणविज्ञानीयोऽभिधीयते । विपरीतो व्रणः साध्यादन्यः सरिष्टतया विवक्षितः । छप्रत्ययादि पूर्ववद् व्याख्येयम् ॥ १ ॥ २ ॥

**फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ॥**
**ख्यापयन्ति भविष्यत्त्वं तथा रिष्टानि पञ्चताम् ॥ ३ ॥**

अत्र मरणपूर्वता रिष्टस्य लक्षणमित्याह—फलाग्नीत्यादि । पुष्पं फलस्य, धूमो वह्नेः, अम्बुदो जलवृष्टेः । पुष्पादिह कालान्तरानियतफलसंबन्धो दृष्टान्तत्वेन ज्ञेयः, किंवा भविष्यत्ख्यापकत्वमात्रेणापि दृष्टान्तः; तेन न पुष्पादिषु फलादिव्यतिरेकेण रिष्टस्यापि मरणव्यभिचारः; यदुक्तं—"ध्रुवं त्वरिष्टे मरणम्" इति; **चरके**ऽपि—"अप्येवं तु भवेत् पुष्पं फलेनानुबन्धि यत् । न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते"–( च. इं. अ. २ ) इति । यत्तु **चरके** "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" ( च. इ. अ. ९ ) इत्यनेनानियतमुक्तं, तत्र हि मरणं नियतमेव परं यावत्कालं जीवति तावदपि संशयगृहीतमेवेति भङ्ग्या प्रतिपद्यते; किंवा, तद्यदि संदिग्धमरणख्यापकं तदा रिष्टत्वमपि तस्य संदिग्धमेवोच्यते, इति न निश्चितरिष्टभावानां मरणव्यभिचारित्वम्; अन्ये त्वातुरगतं रिष्टमसाध्यं दोषजन्यं प्राहुः । यदुक्तं—"क्रियापथमतिक्रान्ताः केवलं देहमाश्रिताः । दोषाः कुर्वन्ति यल्लिङ्गं तदरिष्टं निरुच्यते" ( च. इं. अ. ११ ) इति यावत्, यत्तु भूतादिगतं तन्मरणव्यभिचारि, तदन्तर्हतायुर्जन्यं हि रिष्टमिति रिष्टाख्यापकलक्षणं; तच्च शारीरे रिष्टे पच्यमानमारककर्मप्रयुक्तक्रियापथाक्रान्तदोषजन्यं, भूतादौ पच्यमानमारककर्मजन्यं, तत् कथं मरणं व्यभिचरिष्यति । यत्तु स्वप्नाधिकारेऽभिहितं "इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् । अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते" ( च. इं. अ. ५ ) इति; तत्र रोगिदृष्टतथाविधस्वप्नानामेव रिष्टत्वम्; एवं भूताधिकारादावपि मरणव्यभिचारसामग्रीनियोगा मरणं व्यभिचरन्ति, न तानि रिष्टपदैरुच्यन्ते । यत् कालमृत्यौ परं रिष्टं भवति नाकालमृत्यौ, येनाकालमृत्यौ आयुर्विहितानाचरणैः परं मृत्युर्भवति, तेनानरिष्टे अकालमृत्यौ पक्षविभागाचरणं भवति तदा न मृत्युना भवितव्यं; तन्न, अकालमृत्योरपि यदा क्रियापथातिक्रान्तता दोषाणां भवति, तदा रिष्टत्वेन भवितव्यमेव । यदुक्तं—"मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" ( च. इं. अ. २ ) इति । यश्चैवं न स्वीकरोति तस्याकालमृत्यावसाध्यत्वव्युत्पत्तिरपि न स्यात् । अनया दिशा मरणरिष्टयोः परस्पर-

१ 'रिष्टानि मरणं तथा' इति ता. । 'रिष्टानि' 'अरिष्टानि' इत्युभयमपि समानार्थकमेव ।

नियतयोर्विरोधदर्शनं समाधेयम् । धूम इह काष्ठमन्थनजन्यो वह्नेश्च पूर्वभावी विवक्षितो भाविवह्निगमकतया ॥ ३ ॥

**तानि सौक्ष्म्यात् प्रमादाद्वा तथैवाशु व्यतिक्रमात् ॥**
**गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसंभवात् ॥ ४ ॥**
**ध्रुवं तु मरणं रिष्टे ब्राह्मणैस्तत् किलामलैः ॥**
**रसायनतपोजप्यतत्परैर्वा निवार्यते ॥ ५ ॥**

अरिष्टस्य मरणादवश्यं प्राग्भावमाह—तानि सौक्ष्म्यादित्यादि । सौक्ष्म्यात् कण्टकादि सदपि सूक्ष्मजिज्ञासां विना नोपलभ्यते, तथा प्रमादेनानवहितैः सदपि नोपलभ्यते । आशु व्यतिक्रमादिति भूत्वा क्षणेन नाशात्, एतदपि सर्वथाऽवधानं विना नोपलभ्यते, यथा विद्युदादि क्षणमात्रस्थायि भूतमपि नोपलभ्यते । न त्वसंभवादित्यनेन मरणेऽवश्यं-भावित्वमुक्तम् । चरकेऽप्युक्तं—"मरणं चापि तन्नास्ति यन्नारिष्टपुरःसरम्" ( च. इं. अ. २ ) इति । तथा रिष्टेऽपि मरणनियममाह—ध्रुवमित्यादि । रिष्टे मरणस्य ध्रुवता, किन्त्वस्यापवादमलौकिकेनोपायेनाह—ब्राह्मणैरित्यादि । ब्राह्मणैरित्यादिना यन्मरणनिवारणं तन्नैतच्छास्त्रव्यवहारविषयः; तथा हि—महेश्वरो भस्मीकृतं कामं जीवयतिस्म; रामतपःप्रभावात् सूतोऽपि ब्राह्मणपुत्रं जीवयतिस्म; नन्दी त्वरिष्टप्राप्तोऽपि मन्त्रजपाद-मितमायुराप्तवानिति ॥ ४ ॥ ५ ॥

**नक्षत्रपीडा बहुधा यथा कालं विपच्यते ॥**
**तथैवारिष्टपाकं च ब्रुवते बहवो जनाः ॥ ६ ॥**

अथ रिष्टं चेन्मारककर्मजनितं तत् किमिति तद्दर्शनेऽपि संवत्सरादिकालविलम्बेन मरणं भवतीत्याह—नक्षत्रेत्यादि । नक्षत्रपीडेति जन्मकालस्थितग्रहविशेषैर्नक्षत्रपीडा यथा कालान्तरभाविमरणसूचिका कालान्तरेणैव पच्यमानमदुष्टमरणं गमयति, तथा रिष्टान्यपि कानिचिच्चिरकालपच्यमानमारककर्मजन्यानि चिरभाविमरणव्यञ्जकानीति वाक्यार्थः । रिष्टपाकमिति रिष्टकारणमारककर्मप्रपाकम् ॥ ६ ॥

**असिद्धिमाप्नुयाल्लोके प्रतिकुर्वन् गतायुषः ॥**
**अतोऽरिष्टानि यत्नेन लक्षयेत् कुशलो भिषक् ॥ ७ ॥**

अरिष्टाज्ञानदोषमाह—असिद्धिमित्यादि । चरकेऽप्युक्तं "अर्थ-विद्या-यशोहानि-मुपक्रोशमसङ्ग्रहम् । प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत्" ( च. सू. अ. १० ) इति ॥ ७ ॥

**गन्धवर्णरसादीनां विशेषाणां स्वभावतः ॥**
**वैकृतं यत् तदाचष्टे व्रणिनः पक्वलक्षणम् ॥ ८ ॥**

---

१ 'कालात्' इति पा० ।

व्रणस्यैवात्र तन्त्रेऽधिकृतत्वात् प्रथमं तदन्तर्गतरिष्टमाह—गन्धेत्यादि । आदिशब्दाच्छेषेन्द्रियार्थस्पर्शादीनां ग्रहणं; स्पर्शादिषु यदरिष्टं तत् पूर्वमुक्तं; स्वभावतो वैकृतमित्यनेनास्वाभाविकस्य विकृतस्यापि नारिष्टत्वमिति दर्शयति । एतच्च वैकृतमदृश्यमानहेतुकमारककर्मकृतमेव रिष्टं ज्ञेयम् । पक्वः पातोन्मुखो मरणोन्मुख इति यावत् ॥ ८ ॥

कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः ॥
लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः ॥ ९ ॥
लाजातसीतैलसमाः किंचिद्विस्राश्च गन्धतः ॥
ज्ञेयाः प्रकृतिगन्धाः स्युरतोऽन्यद्गन्धवैकृतम् ॥ १० ॥
मद्यागुर्वाज्यसुमनापद्मचन्दनचम्पकैः ॥
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥ ११ ॥
श्ववाजिमूषिकध्वाङ्क्षपूतिवल्लूरमत्कुणैः ॥
सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥ १२ ॥

प्रकृतिविपर्ययेण विकृतिज्ञानार्थं प्राकृतगन्धानाह—कटुरित्यादि । कटुगन्धस्य कटुद्रव्यगन्धेन लक्षणम्, एवं तीक्ष्णत्वमपि । लाजेत्याद्यपि पक्षान्तरेण यथासंख्यं वातादिगतम् । अतसीतैलं तिलतैलम् (?) । किञ्चिद्विस्रता रक्तेन । विकृतगन्धानाह—मद्येत्यादि । सगन्धा इति समानगन्धाः । मत्कुणः उद्दंशः ॥ ९–१२ ॥

कुङ्कुमध्यामकङ्कुष्ठसवर्णाः पित्त[1]कोपतः ॥
न दह्यन्ते न चू[2]ष्यन्ते भिषक् तान् परिवर्जयेत् ॥ १३ ॥
कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः ॥
दूयन्ते वाऽपि दह्य[3]न्ते भिषक् तान् परिवर्जयेत् ॥ १४ ॥
कृ[4]ष्णास्तु ये तनुस्रावा वातजा मर्मतापिनः ॥
स्वल्पामपि न कुर्वन्ति रुजं तान् परिवर्जयेत् ॥ १५ ॥

वर्णगतमरिष्टमाह—कुङ्कुमेत्यादि । ध्यामं गन्धतृणं, किंवाऽतिपक्वेष्टका; तत्र पित्तकृतवर्णेऽपि तद्विरुद्धोदाहरणत्वं रिष्टत्वम्; एवमन्यत्रापि परस्परविरुद्धत्वं ज्ञेयम् । अत्र रसवैकृतरिष्टमनुमानगम्यतया साक्षान्नोक्तं, तेन वातादिषु सहजकषायादिरसान्यथात्वं पिपीलिकाद्युपसर्पणादिना रिष्टमूह्यम् ॥ १३–१५ ॥

क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः ॥
त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये ॥ १६ ॥
ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः ॥

---

१ 'पित्तजाश्च ये' इति ता. । २ 'शुष्यन्ति' इति ता. । ३ 'दह्यन्ते वेदावन्तो' इति ता. । ४ 'कृष्णा ये स्वरुणस्रावा' इति ता. ।

आदिशब्दगृहीतं शब्दरिष्टमाह—क्ष्वेडन्तीत्यादि । क्ष्वेडनं शब्दविशेषः, वेदनाविशेषो वा ॥ १६ ॥

दह्यन्ते चान्तरत्यर्थं बहिः शीताश्च ये व्रणाः ॥ १७ ॥
दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥

दह्यन्त इत्यादि स्पर्शरिष्टम् ॥ १७ ॥

शक्तिध्वजरथाः कुन्तवाजिवारणगोवृषाः[1] ॥ १८ ॥
येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ॥
चूर्णावकीर्णा इव ये भान्ति चानवचूर्णिताः ॥ १९ ॥

शक्तीत्याद्याकृतिरिष्टम् ॥ १८ ॥ १९ ॥

प्राणमांसक्षयश्वासकासारोचकपीडिताः ॥
प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥ २० ॥

प्राणेत्याद्युपद्रवरिष्टम् ॥ २० ॥

क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ॥
वर्जयेत्तानपि प्राज्ञः संरक्षन्नात्मनो यशः ॥ २१ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने विपरीतव्रणविज्ञानीयो नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥

भेषजविकारयुक्तौ रिष्टमाह—क्रियाभिरित्यादि । चरके उपद्रवाश्च भेषजविकारयुक्तिश्च रिष्टाधिकरणतयोक्ताः ॥ २१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने विपरीतव्रणविज्ञानीयो नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशत्तमोऽध्यायः ।

**अथातो विपरीताविपरीतदूतस्वप्ननिदर्शनीयमध्यायं व्याख्यास्यामः १**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

विपरीतव्रणाभिधानप्रसङ्गेन विपरीताविपरीतदूतस्वप्ननिदर्शनीयोऽभिधीयते । प्रधानभूतदूतस्वप्ननिदर्शनमधिकृत्य विहितच्छप्रत्ययेनैव तदधिकारनक्षत्रवेलादिवैपरीत्याभिधानमप्यत्राभिधेयं सूचितं भवति ॥ १ ॥ २ ॥

दूतदर्शनसंभाषा वेषाश्चेष्टितमेव च ॥
ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥ ३ ॥

---

१ '°वारणपक्षिणः' इति ता. ।

देशो वैद्यस्य वाग्देहमनसां च विचेष्टितम् ॥
कथयन्त्यातुरगतं शुभं वा यदि वाऽशुभम् ॥ ४ ॥

निमित्तं पूर्णकुम्भादि, शकुनः पक्षी, देशो वैद्यस्य, तथा वाग्देहमनसां च चेष्टितं वैद्यस्येति योजना ॥ ३ ॥ ४ ॥

पाख(ष)ण्डाश्रमवर्णानां सवर्णाः[2] कर्मसिद्धये ॥
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ ५ ॥
नपुंसकं स्त्री बहवो नैककार्या असूयकाः ॥
गर्दभोष्ट्ररथप्राप्ताः प्राप्ता वा[3] स्युः परम्पराः ॥ ६ ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥

पाष(ख)ण्डेत्यादि । पाष(ख)ण्डा वेदबाह्याश्रमस्थाः सौगतादयः । आश्रमा ब्रह्मचारि-गृहस्थ-वानप्रस्थ-यतिनः, वर्णा ब्राह्मणादयः । सवर्णा इति सदृशाः, तेन पाष(ख)ण्डस्य पाष(ख)ण्डः, ब्रह्मचारिणो ब्रह्मचारीति ज्ञेयम् । एतच्च विपरीतभूतदर्शनार्थमेवेति नोत्क्रमाशङ्का कर्तव्या, येन शुक्लवासा इत्यादिना पश्चादेवाविपरीतभूतमभिधास्यति प्रपञ्चेन । असूयका इति परस्परं कलहायन्तः । परम्पराः पङ्क्तीः ॥ ५ ॥ ६ ॥—

पाशदण्डायुधधराः पाण्डुरेतरवाससः[4] ॥ ७ ॥
आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवाससः ॥
न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ॥ ८ ॥

पाशेत्यादि । पाण्डुरेतर इति शुक्लेतरः कृष्णः । रौद्ररूपिणो भयावहरूपिणः ॥७॥८॥

रूक्षनिष्ठुरवक्तारस्त्वमङ्गल्याभिधायिनः ॥

रूक्षं लसितविपरीतं; निष्ठुरं पेशलविपरीतम् ॥—

छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ॥ ९ ॥
वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः ॥
स्रोतोवरोधहृद्गण्डमूर्धोरःकुक्षिपाणयः ॥ १० ॥
कपालोपलभस्मास्थितुषाङ्गारकराश्च ये ॥
विलिखन्तो महीं किंचिन्मुञ्चन्तो लोष्टभेदिनः ॥ ११ ॥
तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ॥
फलं पक्वमसारं वा गृहीत्वाऽन्यच्च तद्विधम् ॥ १२ ॥
नखैर्नखान्तरं वाऽपि करेण चरणं तथा ॥
उपानच्चर्महस्ता वा विकृतव्याधिपीडिताः ॥ १३ ॥

---

१ 'गेहे' इति ता. । २ 'सपक्षाः' इति ड. । ३ 'रुदन्तः सन्ध्ययोस्तथा' इति ता. ।
४ 'शुक्लेतरनिवाससः' इति ता. ।

वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः[1] ॥
याम्यां दिशि प्राञ्जलयो विषमैकपदे स्थिताः ॥ १४ ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥

तद्विधमिति पक्कमसारं वा। याम्या दिग् दक्षिणा ॥ ९-१४ ॥—

दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ॥
ज्वलयन्तं पचन्तं वा क्रूरकर्मणि चोद्यतम् ॥ १५ ॥
नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ॥
प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव वा ॥ १६ ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥
वैद्यस्य पैत्र्ये दैवे वा कार्ये चोत्पातदर्शने ॥ १७ ॥
मध्याह्ने चार्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ॥
आर्द्राश्लेषामघामूलपूर्वासु भरणीषु च ॥ १८ ॥
चतुर्थ्यां[2] वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १९ ॥

वैद्यस्य पैत्र्ये कार्य इति पिण्डदानादौ, दैव इति होमादौ; तदुक्तं **चरके**—"जुहुत्यग्निमथो पिण्डान् पितृभ्यो निर्वपत्यपि" (च. इ. अ. १२) इति। पूर्वास्विति पूर्वाषाढादिषु। सन्धिदिनममावस्या ॥ १५-१९ ॥

स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ॥
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥ २० ॥
त एव कफरोगेषु कर्मसिद्धिकराः स्मृताः।
एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत्तु[3] तत् ॥ २१ ॥
रक्तपित्तातिसारेषु प्रमेहेषु तथैव च।
प्रशस्तो जलरोधेषु दूतवैद्यसमागमः ॥ २२ ॥
विज्ञायैवं विभागं तु शेषं बुध्येत पण्डितः ॥

एतेन शेषं व्याख्यातमिति व्याधिसमानगुणे देशादौ दूतदर्शनं विगर्हितं, विपरीतगुणे च प्रशस्तं; तेन वातरोगे प्रवातादि निन्दितं, निवातादि प्रशस्तमित्याद्युक्तमित्यर्थः। उक्तं हि **चरके**—"विकारसामान्यगुणे देशे कालेऽथवा भिषक्। दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत्" (च. इं. अ. १२) इति ॥ २०-२२ ॥—

शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः ॥ २३ ॥
स्वस्यां जातौ स्वगोत्रो वा दूतः कार्यकरः स्मृतः ॥

---

१ 'विवृतेक्षणाः' इति ता.। २ 'नवम्यामथ षष्ठ्यां वा पक्षसन्धिदिनेषु च' इति ता.।
३ 'स्वबुद्ध्या विभजेद्भिषक्' इति ता.।

गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः ॥ २४ ॥
स्मृतिमान् विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान् ॥
अलङ्कृतो मङ्गलवान् दूतः कार्यकरः स्मृतः ॥ २५ ॥
स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम् ॥
उपसर्पति यो वैद्यं स च कार्यकरः स्मृतः ॥ २६ ॥

अविपरीतदूतादीनि दर्शयन्नाह—शुक्लवासा इत्यादि । स्वगोत्रः स्वज्ञातिः । गोयानं गोवाह्यशकटः, एतच्च प्रशस्ततरत्वादुक्तं, तेनानिषिद्धाश्वादियानमप्यविरुद्धमेव; यदुक्तं प्रशस्तदूताधिकारे चरकेऽपि—"अनुष्ट्रखरयानस्थमसंध्यास्वग्रहेषु च" (च. इं. अ. १२) इति ॥ २३-२६ ॥

मांसोदकुम्भातपत्रविप्रवारणगोवृषाः ॥
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ २७ ॥
स्त्री पुत्रिणी सवत्सा गौर्वर्धमानमलङ्कृता ॥
कन्या मत्स्याः फलं चामं स्वस्तिकं मोदका दधि ॥ २८ ॥
हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः ॥
अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा ॥ २९ ॥
ब्रह्मदुन्दुभिपुण्याहशङ्खवेणुरथस्वनाः ॥
सिंहगोवृषनादाश्च ह्रेषितं गजबृंहितम् ॥ ३० ॥
शस्तं हंसरुतं नृणां कौशिकं चैव वामतः ॥
प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः ॥ ३१ ॥
पत्रपुष्पफलोपेतान् सक्षीरान्नीरुजो द्रुमान् ॥
आश्रिता वा नभोवेश्मध्वजतोरणवेदिकाः ॥ ३२ ॥
दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः ॥
वामा वा दक्षिणा वाऽपि शकुनाः कर्मसिद्धये ॥ ३३ ॥
शुष्केऽशनिहतेऽपत्रे वल्लीनद्धे सकण्टके ॥
वृक्षेऽथवाऽश्मभस्मास्थिविट्तुषाङ्गारपांशुषु ॥ ३४ ॥
चैत्यवल्मीकविषमस्थिता दीप्तखरस्वराः ॥
पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः ॥ ३५ ॥
पुन्नामानः खगा वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥
दक्षिणाद्वामगमनं प्रशस्तं श्वशृगालयोः ॥
वामं नकुलचाषाणां नोभयं शशसर्पयोः ॥ ३६ ॥

---

१ 'धृतिमान्' इति ता. । २ 'मङ्गलवाग्दूतः' इति ता. । ३ 'मांसकुम्भोदच्छत्र°' इति ता. । ४ '°जीमूत' इति ड. ५ 'सिंहमेघनिनादाश्च' इति ता. ।

भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥
दर्शनं वा रुतं वाऽपि न गोधाकृकलासयोः ॥ ३७ ॥
दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ॥
कुलत्थतिलकार्पासतुषपाषाणभस्मनाम् ॥ ३८ ॥
पात्रं नेष्टं तथाऽङ्गारतैलकर्दमपूरितम् ॥
प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ॥ ३९ ॥
शवकाष्ठपलाशानां रूक्षाणां पथि सङ्गमाः ॥
नेष्यन्ते पतितान्त्यदीनान्धरिपवस्तथा ॥ ४० ॥

अविपरीतदूतप्रसङ्गादविपरीतमेव तावन्निमित्तादि दर्शयन्नाह—मांसेत्यादि । **मांस**मिति अपक्वं मांसम्, उदकुम्भं च उदकपूर्णः कुम्भः; तदुक्तं **चरके**—"रत्नानां पूर्णकुम्भानां" ( च. इं. अ. १२ ) इत्यादि । केचिदुदकार्थचलितरिक्तकुम्भमप्यत्रेच्छन्ति । उक्तं हि **निमित्तग्रन्थे**—"चिकित्सकस्य चौरस्य तथैवाध्ययनार्थिनः । प्रशस्तो यदि दृश्येत जलार्थे रिक्तको घटः" इति । वर्धमाना इति शरावाः, ते च स्वलङ्कृता इति आलेपादिना मण्डिताः । केचिदलङ्कृता इति कन्याविशेषणं वदन्ति; अन्ये लङ्कारोपितं कुमारं कुमारीं वा वर्धमानमाहुः । मोदकास्तिलमोदकादयः । हिरण्यं सुवर्णम् । अक्षतम् अक्षतयवादि । सुमनः पुष्पम् । चाषः सुवर्णावृतः पक्षिविशेषः । ब्रह्मादिभिः प्रत्येकं स्वनशब्दः संबध्यते । ब्रह्मस्वनो वेदध्वनिः, पुण्याहशब्दो मङ्गलार्थः प्रणवादिध्वनिः । हेषितं तुरगानां, गजबृंहितं गजकण्ठरवः । मन्त्रेत्यादि शकुननिदर्शनम् । दिक्षु शान्तास्विति पूर्वासूत्तरासु च । चैत्यो ग्रामप्रधानतरुः । दिक्षु दीप्तास्विति आग्नेय-याम्य-नैर्ऋतीषु । पुंसंज्ञा इति पुंशब्दाभिधेयाः हंसकारण्डवादयः । एवं कोकिलादयः स्त्रीसंज्ञाः । दक्षिणादित्यादिना अविपरीतनिमित्तकथनम् । दक्षिणाद् वामगमनं प्रशस्तमिति श्वशृगालयोर्मार्गच्छेदं कृत्वाऽपि च गमनं प्रशस्तमित्यर्थः । चाषकुक्कुटयोर्नैवं वामाद्दक्षिणगमनं प्रशस्तमित्यर्थः । नोभयमिति दक्षिणगमनं वामगमनं वा न प्रशस्तमित्यर्थः । रूक्षाणामिति पुराणानां, केचिदत्र स्थाने 'शुष्कानां' इति पठन्ति ॥ २७–४० ॥

मृदुः शीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः ॥
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ॥ ४१ ॥
ग्रन्थ्यर्बुदादिषु सदा च्छेदशब्दस्तु पूजितः ॥
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥ ४२ ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ॥
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥ ४३ ॥
तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ॥
छर्द्यां वातपुरीषाणां शब्दो वै गर्दभोष्ट्रयोः ॥ ४४ ॥

प्रतिषिद्धं तथा लैग्नं क्षुतं स्खलितमाहतम् ॥
दौर्मनस्यं च वैद्यस्य यात्रायां न प्रशस्यते ॥ ४५ ॥

रोगचिकित्सानुकूलं शब्दविशेषं निमित्तरूपं दर्शयन्नाह—ग्रन्थ्यादिष्वित्यादि । एतेन शेषं व्याख्यातमिति यस्मिन् रोगे या चिकित्सा विधेया तदभिधायकमाकस्मिकं दैवनिर्मितं वचनं शुभमित्यर्थः; उच्यते हि निमित्तशास्त्रे—"प्रथमं चरति दैं(दे)वेषु पश्चाद्गच्छति मानुषान् । नाचोदिता वाग्भवति सत्या ह्येषा सरस्वती" इति । प्रतिषिद्धमिति 'मा गा' इत्याकस्मिकनिषेधवचनम् । लग्नमिति कण्टकादौ वस्त्रादिलग्नता ॥ ४१–४५ ॥

प्रवेशेऽप्येतदुद्देशादवेक्ष्यं च तथाऽऽतुरे ॥
प्रतिद्वारं गृहे चास्य पुनरेतन्न गण्यते ॥ ४६ ॥
केशभस्मास्थिकाष्ठाश्मतुषकार्पासकण्टकाः ॥
खट्वोर्ध्वपादा मद्यापो वसा तैलं तिलास्तृणम् ॥ ४७ ॥
नपुंसकव्यङ्गभग्ननग्नमुण्डासिताम्बराः ॥
प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥ ४८ ॥

उक्तं विधिमातुरगृहप्रवेशादावप्यतिदिशन्नाह—प्रवेश इत्यादि । प्रतिद्वारमिति विबन्धद्वारम् ॥ ४६–४८ ॥

भाण्डानां संकरस्थानां स्थानात् संचारणं तथा ॥
निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा ॥ ४९ ॥
वैद्यासनावसादो वा रोगी वा स्यादधोमुखः ॥
वैद्यं संभाषमाणोऽङ्गं कुड्यमास्तरणानि वा ॥ ५० ॥
प्रमृज्याद्वा[2] धुनीयाद्वा करौ पृष्ठं शिरस्तथा ॥
हस्तं चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि ॥ ५१ ॥
यो वैद्यमुन्मुखः पश्यन्नुन्मार्ष्टि स्वाङ्गमातुरः ॥
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥ ५२ ॥
भवने पूज्यते वाऽपि यस्य वैद्यः स सिध्यति ॥
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च ॥ ५३ ॥
आतुरस्य ध्रुवं तस्माद्दूतादीन् लक्षयेद्[3]भिषक् ॥

अतिदिष्टादन्यच्च विपरीतं दर्शयन्नाह—भाण्डानामित्यादि । सङ्करस्थानामिति मिलितस्थितानाम् । अङ्गादिमार्जनमधोमुखस्य विपरीतम् । संमुखस्य प्रश्नस्तु शुभफलः ॥ ४९–५३ ॥—

स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च ॥ ५४ ॥
सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ॥

१ 'मग्नं' इति पा० । २ 'प्रमृध्याद्वा' पा० । ३ 'संपरीक्षयेत्' इति ता. ।

स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः ॥ ५५ ॥
वराहैर्महिषैर्वाऽपि यो यायाद्दक्षिणामुखः ॥
रक्ताम्बरधरा कृ[1]ष्णा हसन्ती मुक्तमूर्धजा ॥ ५६ ॥
यं चाकर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ।
अन्तावसायिभिर्यो वाऽऽकृष्यते दक्षिणामुखः ॥ ५७ ॥
परिष्वजेरन् यं वाऽपि प्रेताः प्रव्रजितास्तथा ॥
मुहुराघ्रायते यस्तु श्वापदैर्विकृताननैः ॥ ५८ ॥
पिबेन्मधु च तैलं च यो वा पङ्केऽवसीदति ॥
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥ ५९ ॥
निरम्बरश्च यो रक्तां धारयेच्छिरसा स्रजम् ॥
यस्य वंशो नलो वाऽपि तालो वोरसि जायते ॥ ६० ॥
यं वा मत्स्यो ग्रसेद्यो वा ज[2]ननीं प्रविशेन्नरः ॥
पर्वताग्रात् पतेद्यो वा श्वभ्रे वा तमसाऽऽवृते ॥ ६१ ॥
ह्रियेत स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ॥
पराजीयेत ब[3]ध्येत काकाद्यैर्वाऽभिभूयते ॥ ६२ ॥
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ॥
यः पश्येद्देवतानां वा प्रकम्पम[4]वनेस्तथा ॥ ६३ ॥
यस्य च्छर्दिर्विरेको वा दशनाः प्रपतन्ति वा ॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ॥ ६४ ॥
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ॥
कार्पासतैलपिण्याकलोहानि लवणं तिलान् ॥ ६५ ॥
लभेताश्नीत वा पक्वमन्नं यश्च पिबेत् सुराम् ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥ ६६ ॥

स्वप्नभेददर्शनार्थमाह—स्वप्नानत इत्यादि । सुहृदो यांश्च पश्यन्तीति सुहृदोऽप्यातुरमेव स्वप्ने स्नेहाभ्यक्तादिना पश्यन्ति । अन्तावसायिनः चाण्डालादयः । आघ्रायत इति चुम्ब्यते, भक्ष्यत इत्यन्ये । श्वापदा हिंस्राः पशवः । मौण्ड्यमिति मुण्डताम् । तारकादीनामित्यादिशब्दाच्चन्द्रादिग्रहणम् । यूपमिति यूपकाष्ठम् । पक्वमिति सिद्धम् । एते च स्वप्ना रोगिदृष्टा एव रिष्टरूपा भवन्ति; स्वस्थदृष्टास्तु रोगोत्पादनसूचकाः ॥ ५४–६६ ॥

यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतस्तथा ॥
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥ ६७ ॥

---

१ 'रक्तकृष्णाम्बरधरा' इति ता. । २ 'ज्वलनं' इति ता. । ३ 'पराजयेत युद्धे वा' इति ता. । ४ 'प्रकम्पं पतनं तथा' इति ता. ।

यथास्वमित्यादि । प्रकृतिस्वप्न इति पित्तप्रकृतिः "कनक-पलाश-कर्णिकारान् पश्येत्" (शा. अ. ४) इत्यादि, तथा कफप्रकृतिः "सुप्तः सन् कलहंस-चक्रवाकान् संपश्येत्" (शा. अ. ४) इत्यादि । विहत इति शुभफलोऽशुभफलेन पश्चाद्दृष्टेन बाध्यते । तदुक्तं **चरके**—"अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः । पश्येत् सौम्यं शुभस्वप्नं तस्य विद्यात् शुभं फलम्" (च. इं. अ. ५)। तथा विहतशब्देनैव तन्त्रान्तरे विफलत्वेनैव कथिता अतिदीर्घस्वप्नादयो ग्राह्याः । उक्तं हि **चरके**—"दिवा स्वप्नमतिह्रस्वमतिदीर्घं तथैव च । दृष्टः प्रथमयामे यः स्वप्नः सोऽप्यफलो भवेत्" (च. इं. अ. ५) इति । चिन्ताकृतशब्देन दृष्टश्रुतानुभूतप्रार्थितकल्पितानां पञ्चानामपि विकल्पानां ग्रहणम्, एतद्व्यतिरिक्तस्य तु भाविफलसंबन्धस्यैव ग्रहणमिह (स्वप्नो निद्रायमाणस्य विषयानुभवरूपः कैश्चिदुक्तः)। स च स्वप्नो रिष्टरूपो मनोवहस्रोतसामतिबलैस्त्रिभिरेव दोषैः पूरितत्वाद् दृश्यते । यदुक्तं **चरके**—"मनोवहानां दुष्टत्वाद्दोषैरतिबलैस्त्रिभिः । स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे" (च. इं. अ. ५) इति । ईदृशश्च दारुणो दोषप्रकोपः पच्यमानमारकादृष्टकृत एव ज्ञेयः । एवं शुभफलोऽपि स्वप्नः पच्यमानशुभकर्मजन्य एव ज्ञेयः । ([२]सकृद्दृश्यमानस्तु स्वफलः स्वप्नः पच्यमानदैवकृत एव सन्नरिष्टं भवति, ) यथा—भूतनिमित्तादि पच्यमानदैवकृतमेव शुभाशुभसूचकं भवति । यच्च कैश्चित् भूतादि विपरीतं मृत्युनिमित्तमात्रं नावश्यं मरणख्यापकमुच्यते, तद्रिष्टानां ध्रुवं मरणगमकतयैव प्रत्युक्तम् । अत्र च ये **चरके** दोषजशब्देन वृद्धवातादिजन्याश्च विकारसूचकाः कथितास्तेऽपि वातप्रकृत्यादिषु प्रकृ[३]तिगुणा एव बोद्धव्याः, वृद्धदोषजनितत्वात् । **चरके**ऽपि वातप्रकृत्यादिस्वप्ना दोषजग्रहणगृहीता एव । यदुक्तं—"दृष्टश्रुतानुभूतं च कल्पितं प्रार्थितं तथा । भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः" (च. इं. अ. ५) इति । तत्र भाविकमिति भाविफलसूचकम् ॥ ६७ ॥

**ज्वरितानां शुना सख्यं कपिसख्यं तु शोषिणाम् ॥**
**उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्तनम् ॥ ६८ ॥**

---

१ अयं पाठो **मु.**पुस्तके नोपलभ्यते । २ अयं पाठो ह.पुस्तके न पठ्यते । ३ 'स्वेष्वेवावरोद्धव्याः' इति **मु.** । ४ अस्याग्रे हस्तलिखितपुस्तके "यदुक्तं—"वातप्रकृतिः स्फुटितकरचरणोऽनवस्थितचित्तवृत्तिः" इत्यादि, एवं कफप्रकृतौ जलाशयाद्यालोकनरूपादि, पित्तप्रकृतीनामपि भ्रान्तिमत्प्रेक्षणादीत्यादिना नानाविधस्वप्नः प्रकृतिभेदेनावस्थितस्वरूपविपर्ययश्च रोगभेदेन यथा राजयक्ष्मणि—"स्वप्नेऽपि काकशुकशल्लकिनीलकण्ठगृध्रास्तथैव कपयः कृकलासकाश्च । तं वाहयन्ति स नदीर्विजलाश्च पश्येच्छुष्कांस्तरून् पवनधूमदवार्दितांश्च"—इत्यादि व्याधिमहिम्नाऽपि प्रकृतिरूपविपर्ययो दृश्यते; यथा—अरूपवातातीसारादाविवारुण्यम् । तथा साध्यासाध्यलक्षणान्यपि त्रिरात्रपञ्चरात्राद्यनुबन्धीनि व्याधिभेदेन प्रकृतिभेदेनावस्थाभेदेन चाशेषप्रकाराणि दृश्यन्ते; यथा—क्षुद्ररोगे अग्निरोहिणी मासेन प्राणहन्त्री भवति, क्वचिददृष्टवशाद्यथायुःशेषो विद्यत एव तदा यमिका, हिक्कामोहतृष्णावतोऽपि सद्यः प्राणहृदित्यादि विचित्रा हि प्रतिरोगं स्वभावा इत्युक्तं" इत्यधिकं पठ्यते ।

मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम् ॥
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे, मूर्ध्नि शिरोरुजि ॥ ६९ ॥
शष्कुलीभक्षणं छर्द्यामध्वा श्वासपिपासयोः ॥
हारिद्रं भोजनं चापि यस्य स्यात् पाण्डुरोगिणः ॥ ७० ॥
रक्तपित्ती पिबेद्यस्तु शोणितं स विनश्यति ॥
स्वप्नानेवंविधान् दृष्ट्वा प्रातरुत्थाय यत्नवान् ॥ ७१ ॥
दद्यान्माषांस्तिलांल्लोहं विप्रेभ्यः काञ्चनं तथा ॥
जपेच्चापि शुभान् मन्त्रान् गायत्रीं त्रिपदां तथा ॥ ७२ ॥
दृष्ट्वा तु प्रथमे यामे स्वप्याद् ध्यात्वा पुनः शुभम् ॥
जपेद्वाऽन्यतमं वेदं ब्रह्मचारी समाहितः ॥ ७३ ॥
न चाचक्षीत कस्मैचिद्दृष्ट्वा स्वप्नमशोभनम् ॥
देवतायतने चैव वसेद्रात्रित्रयं तथा ॥
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रविमुच्यते ॥ ७४ ॥

व्याधिनियतान् स्वप्नरिष्टानाह—ज्वरितानामित्यादि । प्रेतैः सख्यमिति योजना । स्थावरोत्पत्तिर्वृक्षोत्पत्तिः । अध्वा अध्वगमनम् ॥ ६८–७४ ॥

अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ॥
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥ ७५ ॥
समिद्धमग्निं साधूंश्च निर्मलानि जलानि च ॥
पश्येत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७६ ॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च ॥
लभेत धनलाभाय व्याधेरपगमाय च ॥ ७७ ॥
महाप्रासादसफलवृक्षवारणपर्वतान् ॥
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ ७८ ॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ॥
तरेत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७९ ॥
उरगो वा जलौको वा भ्रमरो वाऽपि यं दशेत् ॥
आरोग्यं निर्दिशेत्तस्य धनलाभं च बुद्धिमान् ॥ ८० ॥
एवंरूपाञ् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः ॥
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥ ८१ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने विपरीताविपरीतदूतस्वप्न-
निदर्शनीयो नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

शुभस्वप्नानाह—अत ऊर्ध्वमित्यादि । देवानित्यादि । यदा च भूतादीनां विपरीतानामेव ज्ञानं भवति तदा मरणावधारणम् । यदा शुभाशुभलक्षणभूतादिमेलकस्तदा पच्यमानशुभाशुभमेलकरूपाणामिति ब्रुवते ॥ ७५ ॥ ८१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां विपरीताविपरीतदूतस्वप्ननिदर्शनीयो नामैकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

---

## त्रिंशत्तमोऽध्यायः ।

**अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

रिष्टं द्विविधं—बाह्यं भूतादिगतम्, आन्तरं शरीरगतम् । तत्र वैद्येन प्रथममुपस्थितं भूतादिगतमेव परीक्ष्यत इति पूर्वाध्यायेनोक्तं, तदनु चातुरगृहगतेनान्तरगतं परीक्षणीयमिति आतुरगतरिष्टज्ञानार्थं पञ्चेन्द्रियार्थविप्रतिपत्तिरध्यायोऽभिधीयते । पञ्चेन्द्रियार्थाः शब्दादयः, तेषु विरुद्धा प्रतीतिस्तथा तेषामन्यथाभावो विप्रतिपत्तिः ॥ १ ॥ २ ॥

**शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ॥**
**तदरिष्टं समासेन, व्यासतस्तु निबोध मे ॥ ३ ॥**

अत्र प्रथमतः शारीरसकलरिष्टलक्षणमेव तावदाह—शरीरशीलयोरित्यादि । शरीरं प्राणिकायः; शीलं मनोवृत्तिः, शीलेन च मनो लक्ष्यते; तेन शरीरमनसोरित्यर्थः । अनयोः प्रकृतिः स्वभावः; सा च जात्यादीनुपाधीन् षडपेक्षते । तदुक्तं **चरके**—"प्रकृतिर्जातिप्रसक्ता च, कुलप्रसक्ता च, देशानुपातिनी च, कालानुपातिनी च, वयोऽनुपातिनी च, प्रत्यात्मनियता च" ( च. इ. अ. १ ) इति । विकृतिरन्यथाभावः, सा च प्रकृतेरेवार्थाद्भवतीत्यर्थलभ्यायामेव प्रकृतौ पुनः प्रकृतेरितिवचनमनुपलभ्यमानव्यक्तकारणां प्रकृतेरेव सकाशाद् विकृतरिष्टरूपतां दर्शयितुम् । या तु वातादिप्रकोपहेतुकृता विकृतिस्तथा शरीरे कर्मनिबद्धलक्षणकृता च शुभाशुभफलशुभोपचयमरणादिरूपा विकृतिः सा न रिष्टं, किं तु याऽसौ अनिमित्ता पच्यमानकर्मकार्या सा रिष्टम् । तदुक्तं **चरके**—"विकृतिः पुनर्लक्षणनिमित्ता च, लक्ष्यनिमित्ता च, निमित्तानुरूपा च । तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति दैवात्, लक्षणानि हि कानिचिच्छरीरोपनिबद्धानि भवन्ति, यानि तस्मिंस्तस्मिन् काले तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति; लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तं निदानेषु; निमित्तानुरूपा तु निमित्तार्थकारिणी या, तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां यामायुषोऽन्तगतस्य ज्ञानार्थमुपदिशन्ति धीराः" ( च. इ. अ. १ ) इति । तदरिष्टमिति सा विकृतीरिष्टम् । समासेनेति संक्षेपेण; व्यासतस्तु विस्तरतः ॥ ३ ॥

शृणोति विविधाञ् शब्दान् यो दिव्यानामभावतः ॥
समुद्रपुरमेघानामसंप्राप्तानपि निःस्वनान् ॥ ४ ॥
तान् स्वनान्नावगृह्णाति मन्यते चान्यशब्दवत् ॥
ग्राम्यारण्यस्वनांश्चापि विपरीताञ् शृणोति च ॥ ५ ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ॥
न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥ ६ ॥
यस्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत् ॥
संजातशीतपिडको यश्च दाहेन पीड्यते ॥ ७ ॥
उष्णगात्रोऽतिमात्रं च यः शीतेन प्रवेपते ।
प्रहारान्नाभिजानाति योऽङ्गच्छेदमथापि वा ॥ ८ ॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ॥
वर्णान्यता वा राज्यो वा यस्य गात्रे भवन्ति हि ॥ ९ ॥
स्नातानुलिप्तं यं चापि भजन्ते नीलमक्षिकाः ॥
सुगन्धि वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥ १० ॥

पञ्चेन्द्रियार्थविप्रतिपत्तिच्छायाविप्रतिपत्त्योरध्यायरूपतया सामान्येन शारीरमानसरिष्टलक्षणमभिधायाध्यायप्रतिज्ञातं रिष्टमाह—शृणोतीत्यादि । विविधानिति गन्धर्वशब्दान् । असंप्राप्तानिति अविद्यमानान् । यस्तूष्णमित्यादि स्पर्शेन्द्रियविप्रतिपत्तिः । संजातशीतपिडको यश्च दाहेन पीड्यत इति अत्र शीतपिडकोचितां शीतवेदनां न वेत्ति दाहं चानुचित्तं वेत्तीति इन्द्रियविप्रतिपत्तिररिष्टं, तथा शीतपिडकोचितं शैत्यं न भवति दाहश्चानुचितो भवतीति स्पर्शान्यथाभावोऽपि रिष्टम्; एवमुष्णगात्र इत्यादावपि यथायोग्यतया इन्द्रियस्यार्थस्य वा विप्रतिपत्तिर्व्याख्येया । स्नातानुलिप्तमित्यादौ रिष्टे गन्धस्य रसस्य चान्यथाभावो रिष्टम् । नीलमक्षिका हि अत्यन्तमधुरे दुर्गन्धे च पतन्ति । यदुक्तं **चरके**—"अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः । अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वतः" (च. इं. अ. २) इति । स्नातानुलिप्तत्वविशेषणं बाह्यमलजनितदुर्गन्धताशङ्कानिरासार्थम् । सुगन्धि वातीति सुगन्धिगन्धमुद्वहति; 'वा' गतिगन्धनयोः, इत्यस्य वातीति गन्धनार्थे रूपम् ॥ ४-१० ॥

विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ॥
उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥ ११ ॥
यस्य दोषाग्निसाम्यं च कुर्युर्मिथ्योपयोजिताः ।
यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते ॥ १२ ॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् ॥
गृह्णीते वाऽन्यथा गन्धं शान्ते दीपे च नीरुजः ॥ १३ ॥
यो वा गन्धं न जानाति गतासुं तं विनिर्दिशेत् ॥

द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा ॥ १४ ॥
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति ॥ १५ ॥
रात्रौ सूर्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् ॥
अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान् ॥ १६ ॥
तडित्वतोऽसितान् यो वा निर्मले गगने घनान् ॥
विमानयानप्रासादैर्यश्च संकुलमम्बरम् ॥ १७ ॥
यश्चानिलं मूर्तिमन्तमन्तरिक्षं च पश्यति ॥
धूमनीहारवासोभिरावृतामिव मेदिनीम् ॥ १८ ॥
प्रदीप्तमिव लोकं च यो वा प्लुतमिवाम्भसा ॥
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ॥ १९ ॥
न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम् ॥
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम् ॥ २० ॥
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति ॥
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम् ॥ २१ ॥
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ॥
पिशाचोरगनागानां भूतानां विकृतामपि ॥ २२ ॥
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ॥
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥ २३ ॥

इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने पञ्चेन्द्रियार्थविप्रतिपत्तिर्नाम त्रिंशोऽध्यायः ॥ ३० ॥

उपयुक्त इत्यादौ रसान्यथाभावो रिष्टम् । सुगन्धमित्यादि । निर्मले गगन इति मेघरहिते । अनिलं मूर्तिमन्तमिति शरीरिणम् । अष्टापदाकारामिति सारिकाकाराम् । ज्योत्स्नादौ उष्णशब्देनातपप्रदीपयोर्ग्रहणं; यदुक्तं **चरके**—"ज्योत्स्नायामातपे दीप्ते सलिलादर्शयोरपि" (च. इं. अ. ७) इत्यादि । विकृतां वेति हीनत्वाधिकत्वादिविकृतियुक्ताम् । मयूरकण्ठाभमिति मयूरकण्ठाभधूमवन्तम् । सुस्थः स लभते व्याधिमित्यत्र सोऽपि व्याधिर्मरणाय भवतीति ज्ञेयम्, अन्यथा मरणव्यभिचारेण रिष्टत्वानुपपत्तिः स्यात् ॥ ११-२३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने पञ्चेन्द्रियार्थविप्रतिपत्तिर्नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशत्तमोऽध्यायः ।

**अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्याये "छायां यश्चन पश्यति ( सू. अ. ३० ) इत्युक्तं, तेन प्रतिच्छायाविषयेणापि छायाशब्देन समानशब्दतया छाया स्मर्यते, सा च रिष्टाश्रया वक्तव्या, अतश्छायाविप्रतिपत्तिरभिधीयते; छायाविप्रतिपत्त्येह छायावैकृतं लक्ष्यते, तदधिकृत्य कृतोऽध्यायः छायाविप्रतिपत्तिः; तेन ह्रीश्रीस्मृत्यादिविकृतिरपि ज्ञाता भवति । छाया चेयं स्वतन्त्रे शरीरे त्वचां परिसंख्याने पञ्चविधोक्ता; यथा—"प्रथमाऽवभासिनी नाम, या सर्ववर्णानवभासयति, पञ्चविधां च छायां प्रकाशयति" ( शा. अ ४ ) इति । तथा **चरके**ऽप्युक्तं—"खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः । नाभसी निर्मला नीला सस्नेहा सप्रभेव च ॥ रूक्षा श्यावाऽरुणा या च वायवी सा हृतप्रभा । विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ शुद्धवैडूर्यविमला सुस्निग्धा चाम्भसी मता । स्थिरा श्लक्ष्णा घना स्निग्धा श्यावा श्वेता च पार्थिवी" ( च. इं. अ. ७ ) इति । इयं च छाया चरकोक्तसप्तविधप्रभायाश्च भिन्ना चरक एवोक्ता; यथा—"स्यात्तैजसी प्रभा सर्वा सा तु सप्तविधा मता" ( च. इं. अ. ७ ) इत्यादि । अत्रापि च "ह्रीश्रियौ नश्यतो यस्य ओजस्तेजः स्मृतिः प्रभा" इति वचनाच्छायातो भिन्नैव प्रभा, तथा च **चरके** छायाप्रभयोर्भेदकं लक्षणमुक्तं; यथा—"वर्णमाक्रामति च्छाया भा तु वर्णप्रकाशिनी । आसन्ना लक्ष्यते छाया प्रभा दूरात्तु लक्ष्यते" ( च. इं. अ. ७ ) इति ॥ १ ॥ २ ॥

**श्यावा लोहितिका नीला पीतिका वाऽपि मानवम् ॥**
**अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥ ३ ॥**

तदेवं व्यवस्थिते छायागतं रिष्टमाह—श्यावा लोहितिकेत्यादि । एताश्च प्रकृतिच्छायोपमर्देन भवन्त्य एव रिष्टम् । तत्र श्यावा वायव्या, लोहिता आग्नेयी, नीला तु नाभसी तथा आम्भसी च, पीतिका तु पार्थिवी; सा च यद्यपि **चरके** "श्यावा श्वेता" ( च. इं. अ. ७ ) पठिता, तथाऽपीह सैव छाया श्यावश्वेतवर्णमेलकरूपा पीतिकेत्युच्यते । एतेन श्यावादिवर्णचतुष्कग्रहेणैव विकृत्याऽपि[1] भवन्त्यः पञ्चैव छाया यथोक्ता गृहीता भवन्ति । अत्र च श्यावा प्रथममुक्ता, तस्या एव प्रायो विकृत्याद्युत्पादात्[2] । यदुक्तं **चरके**—"वायव्या तु विनाशाय क्लेशाय महतेऽपि वा" ( च. इं. अ. ७ ) इति । तत्र प्राकृती वायव्या महते क्लेशाय, वैकृती विनाशायेति योजना ॥ ३ ॥

**ह्रीरपक्रमते यस्य प्रभास्मृतिधृतिश्रियः ॥**
**अकस्माद्यं भजन्ते वा स गतासुरसंशयम् ॥ ४ ॥**

ह्रीर्लज्जा; प्रभाऽत्रैव व्याहृता ॥ ४ ॥

---

१ 'अभिका अपि' इति मु. । २ 'विकृतितापायात्' इति ह. ।

यस्याधरौष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः ॥
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ ५ ॥
आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा ॥
खञ्जनप्रतिमा वाऽपि तं गतायुषमादिशेत् ॥ ६ ॥
कृष्णा स्तब्धाऽवलिप्ता वा जिह्वा शूना च यस्य वै ॥
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥ ७ ॥
कुटिला स्फुटिता वाऽपि शुष्का वा यस्य नासिका ॥
अवस्फूर्जति भग्ना वा न स जीवति मानवः ॥ ८ ॥
संक्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने ॥
स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥ ९ ॥
केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ ॥
लुण्ठन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥ १० ॥
नाहरत्यन्नमास्यस्थं न धारयति यः शिरः ॥
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥ ११ ॥
बलवान् दुर्बलो वाऽपि संमोहं योऽधिगच्छति ॥
उत्थाप्यमानो बहुशस्तं पक्वं भिषगादिशेत् ॥ १२ ॥
उत्तानः सर्वदा शेते पादौ विकुरुते च यः ॥
विप्रसारणशीलो वा न स जीवति मानवः ॥ १३ ॥
शीतपादकरोच्छ्वासश्छिन्नोच्छ्वासश्च यो भवेत् ॥
काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्जयेत् ॥ १४ ॥
निद्रा न छिद्यते यस्य यो वा जागर्ति सर्वदा ॥
मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता ॥ १५ ॥
उत्तरौष्ठं च यो लिह्यादुत्कारांश्च करोति यः ॥
प्रेतैर्वा भाषते सार्धं प्रेतरूपं तमादिशेत् ॥ १६ ॥

यस्येत्यादि । जाम्बवाभासाविति पक्वजम्बूफलोपमौ । श्यावदन्तत्वमिह सामान्येन रिष्टं, विसूच्यन्ते यच्छयावदन्तत्वं तत्तत्र प्रायोभावित्वात् पुनर्वक्तव्यम् । खञ्जनं मर्दनादिनाऽऽगारधूमादि मर्दितमुच्यते; अन्ये खञ्जनं खञ्जरीटमाहुः । अवलिप्तत्वमनिमित्तं सद् रिष्टं; तेन प्रमेहपूर्वरूपे जिह्वा मलोपलिप्ता न रिष्टं, सनिमित्तत्वात् । केशाः सीमन्तिन इति क्वचिद्भ्रुविसीमन्तं वदन्ति, अविशेषेण च भ्रूकेशे सीमन्तो रिष्टमिह । यदुक्तं **चरके**—"भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्तकान् बहून् । अपूर्वानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत्" ( च. इं. अ. ८ ) । सीमन्तादयश्च ये सामान्येन श्रूयन्ते ते पुनर्ज्वरादौ विशेषेण श्रूयमाणास्तत्र ज्वरादौ प्रायःप्रादुर्भावाज्ज्ञातव्याः । शीतेत्यादि-शीतपादकरोच्छ्वासता मिलितैव रिष्टम् । विप्रसारणम् उत्क्षेपणम् ॥ ५–१६ ॥

खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्तते ॥
पुरुषस्याविषार्तस्य सद्यो जह्यात् स जीवितम् ॥ १७ ॥
वाताष्ठीला तु हृदये यस्योर्ध्वमनुयायिनि ॥
रुजान्नविद्वेषकरी स परासुरसंशयम् ॥ १८ ॥
अनन्योपद्रवकृतः शोफः पादसमुत्थितः ॥
पुरुषं हन्ति, नारीं तु मुखजो, गुह्यजो द्वयम् ॥ १९ ॥
अतिसारो ज्वरो हिक्का छर्दिः शूनाण्डमेढ्रता ॥
श्वासिनः कासिनो वाऽपि यस्य तं क्षीणमादिशेत् ॥ २० ॥
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ॥
बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशयः ॥ २१ ॥
श्यावा जिह्वा भवेद्यस्य सव्यं चाक्षि निमज्जति ॥
मुखं च जायते पूति यस्य तं परिवर्जयेत् ॥ २२ ॥
वक्त्रमापूर्यतेऽश्रुभिः स्विद्यतश्चरणावुभौ ॥
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ २३ ॥
अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि वा ॥
यस्याकस्मात् स विज्ञेयो गन्ता वैवस्वतालयम् ॥ २४ ॥
पङ्कमत्स्यवसातैलघृतगन्धांश्च ये नराः ॥
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् ॥ २५ ॥
यूका ललाटमायान्ति बलिं नाश्नन्ति वायसाः ॥
येषां चापि रतिर्नास्ति यातारस्ते यमालयम् ॥ २६ ॥
ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः ॥
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ॥ २७ ॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ॥
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥ २८ ॥
प्रवाहिका शिरःशूलं कोष्ठशूलं च दारुणम् ॥
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ २९ ॥

खेभ्य इत्यादि । वाताष्ठीलासदृशी अन्यैवेयं हृदयस्थानत्वात्, वातव्याधौ तु या वाताष्ठीला सा हृदयादधो भवति । अनन्योपद्रवकृत इति अनन्योपद्रवाः शोथस्यैवोपद्रवाः, तैः कृतः; शोथोपद्रवाश्चात्रोक्ताः—"श्वासः पिपासा दौर्बल्यं ज्वरश्छर्दिररोचकः । हिक्कातिसारकासाश्च शोथिनं क्षपयन्ति हि" ( चि. अ. २३ ) इति । किंवा अन्योपद्रवतया न कृतः अनन्योपद्रवकृतः स्वतन्त्र इत्यर्थः । यस्त्वर्शःपाण्डुरोगाद्युपद्रवकृतः स

---

१ 'नेत्रे चास्रेण पूर्येते' इति ता. । २ 'शेषः' इति मु. ।

पादादिगतो न रिष्टम् । अपराण्यप्यत्र बहूनि व्याख्यानानि सन्ति, तान्यवाचिकतया न लिखितानि । अत्र **क्षारपाणिः**—"ऊर्ध्वगामी नरं पद्भ्यामधोगामी मुखात् स्त्रियम् । उभयं बस्तिसंजातः शोथो हन्ति न संशयः" इति । तदिहापि पादाद्युत्थितस्याङ्गव्याप्तिव्याख्या कर्तव्या । क्षीणमिति क्षीणायुषमादिशेत् । वक्रमित्यादि । वक्रमापूर्यतेऽश्रुभिरित्यादौ चरणे खेदादियुक्तस्याश्रुणो रिष्टत्वं, नेत्ररोगं विनाऽश्रु प्रवर्तत इति तु केवलमित्याशयः । बलिं नाश्नन्ति वायसा इति अशारीरलक्षणान्तरयुक्ततया इह प्रस्तावे पठितम् । ज्वरातीसारशोथाश्च यस्यान्योन्यावसादिन इति अस्यायमर्थः—ज्वरातीसारान्तभावी शोथो रिष्टं, तथा शोथान्तभाविनौ ज्वरातीसारौ रिष्टमिति । यदुक्तमन्यत्र—"ज्वरातिसारौ शोथान्ते शोथो वाऽपि तयोः क्षये । दुर्बलस्य विशेषेण नरस्यान्ताय जायते" ( च. इं. अ. ६ ) इति । बलमिह क्रियागम्यं शक्तिरूपम् ॥ १७–२९ ॥

**विषमेणोपचारेण कर्मभिश्च पुराकृतैः ॥**
**अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥ ३० ॥**

यदेतद्रिष्टं मरणसंगतमुच्यते तत् किं मरणकारकमुत गमकं; गमकत्वे वा कुतस्तन्मरणं भवतीत्याह—विषमेणेत्यादि । त्रिविधं मरणम्—एकमपचारकृतम्, अपरं नियतकर्मजन्यम्, अपरं प्राणिस्वभावसंगतं यत्तद्युगनियतायुर्वर्षशताद्यवसानभवम् । तत्र प्रथमं 'विषमेण' इत्यादिनोक्तं; द्वितीयं 'कर्मभिश्च' इत्यनेनोक्तम्, अत्र कर्मभिरिति कालपाकनियतैः कर्मभिः; यत्तु युगनियतायुःपर्यवसानभावि तत् 'अनित्यत्वाच्च' इत्यनेनोक्तम् ॥ ३० ॥

**प्रेता भूताः पिशाचाश्च रक्षांसि विविधानि च ॥**
**मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥ ३१ ॥**
**तानि भेषजवीर्याणि प्रतिघ्नन्ति जिघांसया ॥**
**तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषाम् ॥ ३२ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने छायाविप्रतिपत्तिर्नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥**

ननु कथं विषमोपचारादयो मारयन्ति, येन मरणकरदोषादिप्रत्यनीकं भेषजमस्त्येव, तच्च तदाऽपि दोषादिपरिपन्थिस्वभावतया प्रतीकाराय भविष्यतीत्याह—प्रेता इत्यादि । प्रेता मृतप्राण्यन्तरावस्थपितृभेदाः । भूताः पिशाचभेदाः । उपसर्पन्तीत्यत्र ओजोभक्षणान्विताः । स्वभावश्च हेतुः । मोघा इति निष्फलाः; एतेन दृष्टारिष्टवैद्येन उपेक्षा कर्तव्येति शिक्षयति ॥ ३१ ॥ ३२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने छायाविप्रतिपत्तिर्नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशत्तमोऽध्यायः।

**अथातः स्वभावविप्रतिपत्तिमध्यायं व्याख्यास्यामः ॥ १ ॥**

**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायाभ्यामुक्तां शरीरविकृतिमवयवप्रविभागेन दर्शयितुं स्वभावविप्रतिपत्तिरारभ्यते। तेनाधिकारानुवृत्तिरेवाध्यायसंबन्धः ॥ १ ॥ २ ॥

**स्वभावप्रसिद्धानां शरीरैकदेशानामन्यभावित्वं[1] मरणाय। तद्यथा—शुक्लानां कृष्णत्वं, कृष्णानां शुक्लता, रक्तानामन्यवर्णत्वं, स्थिराणां मृदुत्वं, मृदूनां स्थिरता, चलानामचलत्वम्, अचलानां चलता, पृथूनां संक्षिप्तत्वं, संक्षिप्तानां पृथुता, दीर्घाणां ह्रस्वत्वं, ह्रस्वानां दीर्घता, अपतनधर्मिणां पतनधर्मित्वं, पतनधर्मिणामपतनधर्मित्वमकस्माच्छैत्यौष्ण्यस्नैग्ध्यरौक्ष्यप्रस्तम्भवैवर्ण्यावसादनं[2] चाङ्गानाम् ॥ ३ ॥**

स्वभावविप्रतिपत्तिमेव विस्तरेण वक्ष्यमाणां संक्षेपेण दर्शयन्नाह—स्वभावप्रसिद्धानामित्यादि। स्वभावेन प्रकृत्या प्रसिद्धानामिति स्वभावप्रसिद्धानाम्। एतदेवाध्यायपिण्डसूत्रं प्रपञ्चयन्नाह—तद्यथा शुक्लानामित्यादि। शुक्लानामिति लोचनान्तदन्तादीनाम्। कृष्णानामिति लोचनमध्यानाम्। रक्तानामिति जिह्वाताल्वादीनाम्। स्थिराणां कठिनानामस्थिदन्तादीनाम्। मृदूनामिति मांसमेदआदीनाम्। चलानामिति सन्ध्यादीनाम्। अचलानामिति नासाकर्णमांसादीनाम्। पृथूनामिति विपुलानां शिरोललाटादीनाम्। संक्षिप्तानामिति दृष्टिमण्डलादीनाम्। अपतनधर्मिणः केशनखादयः। पतनधर्मिणः स्वेद-मूत्र-पुरीषादयः। अकस्मादिति पूर्वेण तथोत्तरेण च शैत्यादिना योजनीयम्, अनिमित्ताया एव विकृतेररिष्टत्वात्। एतच्चाधिकृतमपि व्यवहिततया पुनः स्मरणायोच्यते। प्रस्तम्भः प्रस्तब्धता, अवसदनमवसादः ॥ ३ ॥

**स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामवभ्रंशोत्क्षिप्तभ्रान्तावक्षिप्तपतितविमुक्तनिर्गमप्रतिगमनगुरुलघुत्वानि[3][4], प्रवालवर्णव्यङ्गप्रादुर्भावो वाऽप्यकस्मात्, सिराणां च दर्शनं ललाटे, नासावंशे वा पिडकोत्पत्तिः, ललाटे वा प्रभातकाले स्वेदः, नेत्ररोगाद्विना वाऽश्रुप्रवृत्तिः, गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयनं वा कपोतकङ्ककाकप्रभृतीनां, मूत्रपुरीषवृद्धिरभुञ्जानानां, तत्प्रणाशो वा भुञ्जानानां, स्तनमूलहृदयोरःसु च शूलोत्पत्तयः, मध्ये शूनत्वमन्तेषु परिम्लायित्वं विपर्ययो वा, तथाऽर्धाङ्गे श्वयथुः शोषोऽङ्गपक्षयोर्वा, नष्टहीनविकलविकृतस्वरता वा, विवर्णपुष्पप्रादुर्भावो वा दन्तमुखनखशरीरेषु, यस्य वाऽप्सु कफपुरीषरेतांसि निमज्जन्ति, यस्य वा दृष्टिमण्डले भिन्नविकृ-**

---

१ 'अन्यथात्वं' इति ता.। २ '°पसर्पणं' इति ता.। ३ '°स्रस्तोत्क्षिप्त°' इति पा०। ४ '°निर्गतान्तर्गत°' इति पा०।

**तानि रूपाण्यालोक्यन्ते, स्नेहाभ्यक्तकेशाङ्ग इव यो भाति, यश्च दुर्बलो भक्तद्वेषातिसाराभ्यां पीड्यते, कासमानश्च तृष्णाभिभूतः, क्षीणश्छर्दिभक्तद्वेषयुक्तः सफेनपूयरुधिरोद्वामी हतस्वरः शूलाभिपन्नश्च मनुष्यः, शूनकरचरणवदनः क्षीणोऽन्नद्वेषी स्रस्तांसपिण्डिकापाणिपादो ज्वरकासाभिभूतः, यस्तु पूर्वाह्णे भुक्तमपराह्णे छर्दयत्यविदग्धमतिसार्यते वा स श्वासान्म्रियते, बस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्कः स्तब्धमेढ्रो भग्नग्रीवः प्रनष्टमेहनश्च मनुष्यः, प्राग्विशुष्यमाणहृदय आर्द्रशरीरः, यश्च लोष्टं लोष्टेनाभिहन्ति काष्ठं काष्ठेन, तृणानि वा छिनत्ति, अधरोष्ठं दशति, उत्तरोष्ठं वा लेढि, आलुञ्चति वा कर्णौ केशांश्च, देवद्विजगुरुसुहृद्वैद्यांश्च द्वेष्टि, यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीडयन्ति जन्मर्क्षं वा, यस्योल्काशनिभ्यामभिहन्यते होरा वा, गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावो वेति ॥ ४ ॥**

अवभ्रंशः स्थानादवलम्बनं; भ्रान्तता तिर्यग्गमनं; पतितत्वं शिरोग्रीवादीनां, यदुच्यते—**चरके**—"न बिभर्ति शिरोग्रीवम्" ( च. इं. अ. ८ ) इत्यादि; विमुक्तत्वं सन्धीनां; निर्गमो बहिर्निर्गमनं नेत्रादीनां; प्रतिगमनम् अन्तःप्रवेशो नेत्रादीनाम्, अत्र तन्त्रान्तरं–"पतितं हि शिरोग्रीवं विमुक्ताश्चापि सन्धयः । निर्गतातिगते नेत्रे नाशायान्तं यियासतः" इति; लघून्यक्षिपक्ष्मादीनि; गुरूणि शिरोहस्तसक्थ्यादीनि । "नीरुजं तनुकं श्यावं मुखे व्यङ्गं" ( नि. अ. १३ ) इति व्यङ्गस्वभावः, तस्य प्रवालवर्णता विकृतिः । नासावंशे च पिडका प्रवालत्वेनैव बोद्धव्या; यदुक्तं **हारीते**—"बिम्बीविद्रुमवर्णाभा शक्रगोपप्रभाऽपि वा । नासावंशे भवेद्यस्य पिडका न स सिध्यति" इति । एवं ललाटे सिरादर्शनेऽपि प्रवालवर्णता योजनीया । ललाटे प्रभातस्य शीततया तत्र स्वेदो विकृतः सन् रिष्टं भवति । गोमयचूर्णेत्यादौ **चरके** कालनियम उक्तः, "यस्य गोमयचूर्णाभं चूर्णं मूर्धनि जायते । सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम्" ( च. इं. अ. १२ ) इति । विपर्ययो वेति अन्ते शूनत्वं मध्ये परिम्लायित्वम् । विवर्णता पुष्पस्य यथोपलभ्यमानादन्यथात्वम् । कफादीनां मिलितानां जलमज्जनं रिष्टमिच्छन्ति । भिन्नानि नानाविधानि, विकृतानि हीनाङ्गाधिकाङ्गतया; एवं भिन्नविकृतानि रूपाणि नेत्रकुमारिकायां ज्ञेयानि । यदा तु 'नेत्रेऽभिन्ने विकृतानि' इति पाठस्तदा अभिन्न इति वाताद्यदूषिते; दुष्टे च नेत्रे विकृतकुमारिकादिदर्शनं सहेतुकत्वान्न रिष्टं; **चरकेऽ**प्युक्तं—"दृष्टौ यस्य विजानीयात् पन्नरूपां कुमारिकाम्" ( च. इं. अ. ७ ) इति । पन्नरूपा गतरूपा विकृतेत्यर्थः । **हारीतेऽ**प्युक्तं—"कुमारिका यस्य नेत्रे स्नेहहीना प्रकाशते । राजिभिश्चावृता मध्ये सद्यो जह्यात् स जीवितम्" इति । क्षीणश्छर्दिभक्तद्वेषयुक्त इति रिष्टम् । शूनेत्यादौ स्रस्तांसपिण्डिकापाणिपादान्तेन रिष्टाय । पूर्वाह्ण इत्यादिना श्वासान्म्रियत इत्यन्तेन रिष्टम् । बस्तवदित्यादिना प्रणष्टमेहनश्चेत्यन्तेन रिष्टम् । वक्रानुवक्रगा ग्रहा इत्याद्यरिष्टान्य-

शरीराण्यप्यत्र प्रकरणे महाफलतयाऽसंदिग्धतया च पठितानि। पूर्वराशिगमनं ग्रहाणां वक्रत्वं, पुनः स्वदेशगमने स्वदेशाप्राप्तिपर्यन्तं गमनमनुवक्रत्वम्, एवम्भूतांश्च ग्रहा महाफलाः; ते यदि गर्हितस्थाने मारकस्थाने च यथोक्तलक्षणा भवन्ति तदा मारकाः। ऋक्षं नक्षत्रं, होरा जन्मलग्नम्। गृहादिषु गर्हितलक्षणादिनिमित्तानि भौमोद्गमानि[2] ज्ञेयानि गृहादिपरीक्षाशास्त्रेषु; इह तूच्यमानानि प्रपञ्चमावहन्तीति न लिखितानि। यानं रथादि, वाहनम् अश्वादि, मणिरेव रत्नं मुक्तामाणिक्यादि, उपकरणानि घटशूर्पादीनि ॥ ४ ॥

भवन्ति चात्र—

**चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्धते ॥**
**प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ॥ ५ ॥**
**निवर्तते महाव्याधिः सहसा यस्य देहिनः ॥**
**न चाहारफलं यस्य दृश्यते स विनश्यति ॥ ६ ॥**

चिकित्स्यमान इत्यादि । सम्यक्चिकित्सया विकारोपशमः प्रकृतिः, तेन च वर्धते इति विकृतत्वाद्युक्तं रिष्टम्। महाव्याधिरिति महामूलो व्याधिः। अन्यत्र[3] हि महामूलतया क्रमेण निवर्तनं प्रकृतिः, सहसा निवर्तनं तु विकृतत्वाद् रिष्टम्। केचिन्महाव्याधीन् वातव्याध्यादीनष्टौ तथा शोषादींश्च कायचिकित्सापठितान् वदन्ति । न चाहारफलमिति उपचयशक्तिलक्षणबलजननमाहारफलं, तन्न भवति । एतच्च पूर्वेणैव संगतम्। यदुक्तं **चरके**—"यन्नरं सहसा रोगो दुर्बलं परिमुञ्चति। संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते॥ अथ चेज्ज्ञातयस्तस्य याचेरन् प्रणिपाततः। रसेनाद्यादिति ब्रूयान्न तु कुर्याद्विशोधनम्[4] ॥ मांसेनं[5] चेन्न दृश्येत विशेषस्तस्य शोभनः। अन्यैश्च बृंहणैरन्नैर्दुर्लभं तस्य जीवितम् ॥" (च. इं. अ. ९) इति ॥ ५ ॥ ६ ॥

**एतान्यरिष्टरूपाणि सम्यग् बुध्येत यो भिषक् ॥**
**साध्यासाध्यपरीक्षायां स राज्ञः संमतो भवेत् ॥ ७ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने स्वभावविप्रति-पत्तिर्नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥**

अरिष्टज्ञानफलमाह—एतानीत्यादि ॥ ७ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने स्वभावविप्रतिपत्तिर्नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

१ 'एवंदुष्टाश्च' इति ह.। २ 'भौमकेतुग्रहादीनि' इति, 'भौमकेतूद्गमादीनि' इति च मु.पुस्तके पाठान्तरद्वयमुपलभ्यते। ३ 'अस्यातिमूलतया' इति मु.। ४ 'विशोषणम्' इति ह.। ५ 'मासेन' इति मु.।

## त्रयस्त्रिंशत्तमोऽध्यायः ।

**अथातो वारणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

त्रिप्रकारा व्याधीनामसाध्यता—लिङ्गविशेषयोगात्, तथोपद्रवविशेषयोगात्, तथा रिष्टयोगाच्च; तत्र लिङ्गासाध्यता स्वभावासाध्यानां त्रिदोषविसर्पादीनामुत्पत्तिसिद्धलिङ्गैरेवासाध्यता स्वस्वविषय एव दर्शनीया, रिष्टासाध्यता च पूर्वाध्यायैरुक्ता, अवशिष्टामुपद्रवासाध्यतां यथाप्रधानव्याधि दर्शयितुं वारणीयोऽभिधीयते । यत्तु पूर्वाध्यायेषु ज्वरातिसाराद्यभिभूतः श्वासान्म्रियते, तद्यथा—"अतीसारो ज्वरो हिक्का छर्दिः शूनाङ्गमेढ्रता" ( सू. अ. ३१ ) इत्यादिना मारकत्वमुक्तं तदरिष्टरूपमेव, पच्यमानमारककर्मणा दोषं गृहीत्वा जनितत्वात् । उपद्रवासाध्यतायां तु दोषाः स्वहेतुबलप्रवृत्ता उपद्रवाञ्जनयन्ति, उपद्रवयोगाच्चासाध्यो व्याधिर्भवति । रिष्टे तु पूर्वमेव क्रियापथातिक्रमणाद्दोषाणां मारकत्वं, ततो रिष्टजन्म मारकत्वबोधकं भवति । न च वाच्यं यदेवमुपद्रवाणामरिष्टत्वेऽत्र वक्तव्योपद्रवयोगादपि व्याधेर्मारकत्वं चेद्भवति तदा विनाऽपि रिष्टं मरणं स्यादित्यपसिद्धान्तः स्यादिति । उपद्रवायोगान्मारकेऽपि व्याधौ सद्योमरणीयरिष्टपुरःसरमेव मरणम्, उपद्रवो हि लक्ष्यनिमित्तजनितत्वान्न रिष्टम्, अनिमित्तं च रिष्टम् । यदि वा उपद्रवोऽपि पच्यमानमारककर्मवशादप्यतिक्रान्तक्रियापथदोषजनितत्वेन रिष्टमपि भवति । अन्ये तु लक्ष्यनिमित्तस्याप्युपद्रवस्य मरणगमकतया रिष्टत्वं वदन्ति; तन्मते असाध्यमारकव्याधिलिङ्गानामपि रिष्टत्वं स्यात् । चिकित्सा वारणीया येषूपद्रवासाध्येषु ते वारणीया उपद्रववन्तो वातव्याध्यादयः, तानधिकृत्य कृतोऽध्यायो वारणीयः । वारणीयसंज्ञैवास्याध्यायस्य युक्ता, येनाध्ययनसंप्रदानीये 'वारणो युक्तसेनीयः' ( सू. अ. ३ ) इति पठ्यते । अन्ये त्ववारणीय इति व्याख्यातवन्तः ॥ १ ॥ २ ॥

**उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्यताम् ॥**
**रसायनाद्विना वत्स ! ताञ्शृण्वेकमना मम ॥ ३ ॥**

उपद्रवैस्त्वित्यादि । तु शब्दश्चार्थे; तेन रिष्टसाध्याः श्रुताः, उपद्रवासाध्याञ्शृणु–इति भावः । अवार्यताम् असाध्यताम् । रसायनप्रभावेणैवंभूता असाध्या अपि सिध्यन्ति; यद्वक्ष्यति चिकित्सिते—"एषौषधायस्कृतिरसाध्यं कुष्ठं मेहं वा साधयति" ( चि. अ. १० ) इत्यादि रसायनप्रभावो बोद्धव्यः ॥ ३ ॥

**वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरम् ॥**
**अश्मरी मूढगर्भश्च तथैवोदरमष्टमम् ॥ ४ ॥**
**अष्टावेते प्रकृत्यैव[2] दुश्चिकित्स्या महागदाः ॥**

---

१ 'यथाप्रधानं यथाव्याधिपु' इति मु. । २ 'महान्तः स्युर्व्याधयो दुस्तराः सदा' इति ता. ।

वातव्याधिरित्यादौ प्रथममष्टग्रहणं वक्ष्यमाणमहावातव्याध्यादिविशेषस्यात्रैवावबोधनार्थं, द्वितीयमष्टाविति पदं सर्वेषामेव दुश्चिकित्स्यत्वमहागदत्वबोधनार्थम् ॥ ४ ॥—

**प्राणमांसक्षयः शोषस्तृष्णा च्छर्दिर्ज्वरस्तथा ॥ ५ ॥**
**अतीसारश्च मूर्च्छा च हिक्का श्वासस्तथैव च ॥**
**एतैरुपद्रवैर्जुष्टान् सर्वानेव विवर्जयेत् ॥ ६ ॥**

प्राणेत्यादि । प्राणक्षयोऽत्र शक्तिक्षयः, मांसक्षयस्योक्तत्वादपचयलक्षणबलक्षयो लब्ध एव । एते च मिलिता एवोपद्रवा वातव्याध्यादीनां मारकत्वख्यापकाः, मिलितानामेव मारकत्वाभिधानात्, प्रत्येकं च व्यभिचारस्य तत्र दृष्टत्वात् । अन्ये त्वेतैरिति बहुवचनात् त्रिचतुरादिभिरपि युक्ता वर्जनीया इति वदन्ति; किंतु बहुवचनमेतत् प्रत्यासन्नसर्वोपद्रवप्रत्यवमर्षकमेव युज्यते ॥ ५ ॥ ६ ॥

**शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ॥**
**नरं रुजार्तिमन्तश्च वातव्याधिर्विनाशयेत् ॥ ७ ॥**

प्रतिव्याधि विशिष्टमुपद्रवं मरणख्यापकमाह—शूनमित्यादि । आध्मानं वातव्याधिपठितं "साटोपमत्युग्ररुजं" ( नि. अ. १ ) इत्यादिना । रुजा तोदादिलक्षणा, अर्तिः शूलं तद्भेदः । वातव्याधौ लिङ्गत्वेनापि शोथादयः पठिताः; यथा—"शैत्यशोथगुरुत्वानि तस्मिन्नेव कफावृते । हन्ति सन्धिगतः सन्धीन् शोफशूलौ करोति च" ( नि. अ. १ ) इति; अत्र शोथशूलौ लिङ्गे, "सुप्तिं चिमिचिमायनम्" ( नि. अ. १ ) इत्यत्र सुप्तिर्लिङ्गमित्यादि, तत् किमेतेऽपि मरणख्यापकाः? । मैवं, यद्यत्र लिङ्गेन पठितं व्याधिना सहोत्पन्नं तन्नोपद्रवः; यदुक्तं—"यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूलमूल एवोपद्रवसंज्ञकः ( सू. अ. ३५ ) इति; तेनोपद्रवलक्षणयुक्तानामेव मरणख्यापकत्वं; किंतु एषु शोथादिषु यदत्र लिङ्गतया पठितं, तदस्योपद्रवोत्पादयोग एव मारकं, तेनात्र त्रिभिश्चतुर्भिर्वा अधिकैर्वा यथासंभवमिह वर्जनीयत्वं वातव्याधेः ॥ ७ ॥

**यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ॥**
**पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ ८ ॥**

यथोक्तोपद्रवाविष्टमिति यस्मिन् प्रमेहे ये उपद्रवा उक्तास्तद्युक्तं सदत्रोक्तोपद्रवयुक्तं मानवं हन्तीति ज्ञेयं; ते च मक्षिकोपसर्पणादयः कफजमेहानां, पित्तजानां वृषणावदरणादयः, हृद्ग्रहादयो वातजानामुक्ता अनुसर्तव्याः ॥ ८ ॥

**प्रभिन्नप्रस्रुताङ्गं च रक्तनेत्रं हतस्वरम् ॥**
**पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥ ९ ॥**

पञ्चकर्मगुणातीतमिति पूर्वरूप[१]क्रियया सह त्वक्शोणितमांसमेदोगतेष्वेव क्रमशो यत्कर्म संशोधनालेपनादि चिकित्सिते वक्तव्यं तद्गुणैरतिवीर्यैरतीतं न साधितमित्यर्थः ॥ ९ ॥

---

१ 'पूर्वक्रियया' इति ह. ।

**तृष्णारोचकशूलार्तमतिप्रस्रुतशोणितम् ॥**
**शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥ १० ॥**
**वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च ॥**
**भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्जयेत् ॥ ११ ॥**

वातमूत्रपुरीषाणीत्यादि सर्वभगन्दरविषयम्; उक्तं हि कफभगन्दरेऽपि—"उपेक्षितस्तु वातमूत्रपुरीषरेतांसि सृजति" (नि. अ. ४) इति, क्षतजभगन्दरे तु एते पठितव्या इति ॥ १० ॥ ११ ॥

**प्रशूननाभिवृषणं रुद्धमूत्रं रुगन्वितम् ॥**
**अश्मरी क्षपयत्याशु सिकताशर्करान्विता ॥ १२ ॥**

सिकताशर्करान्वितेति सिकतारूपशर्करायुक्ता; एतच्चाश्मर्येव यस्यकस्यचिद्वातेन भेदनाद्भवति। यदुक्तं—"सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते" (नि. अ. ३) इति। तदत्राश्मरीस्थिताशर्करा चोपद्रवभूता ज्ञेया ॥ १२ ॥

**पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम् ॥**
**विरिक्तं पूर्यमाणं च वर्जयेदुदरार्दितम् ॥ १३ ॥**

विरिक्तं पुनः पूर्यमाणमिति योजनीयम् ॥ १३ ॥

**योनिसंवरणं[२] सङ्गः कुक्षौ मक्कल्ल एव च ॥**
**हन्यात् स्त्रियं मूढगर्भं यथोक्ताश्चाप्युपद्रवाः ॥ १४ ॥**

योनिसंवरणं योनिसंकोचनम्। संगो गर्भस्यैव स्थानान्तरं गत्वा संलग्नत्वम्। मक्कल्लस्तु यद्यपि "सम्यक्प्रजातायाश्च तीक्ष्णैरविशोधितं शोणितं मक्कल्लं करोति" (शा. अ. १०) इति वक्तव्यं, तथा तत्र गर्भिणीव्याकरणे प्रजातायाश्चेति चकारेण अप्रजाताया अपि गर्भाशयाच्च्युतं शोणितं मक्कल्लं करोतीति एतन्मक्कल्लोपद्रवपाठादेव व्याख्येयम्। 'गर्भकोषपरासंगः' इति केचित् पठन्ति। तत्र गर्भरूपस्य कोषस्य परः श्रेष्ठ आसङ्ग इत्यर्थः। योनिसंवरणमेक एवोपद्रवो मारकः। यदुक्तं तन्त्रान्तरे—"मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम्। कुरुते रुद्धमार्गत्वात् पुनरन्तर्गतोऽनिलः ॥ निरुणद्ध्याशयद्वारं पीडयन् गर्भसंस्थितिम्। निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते ॥ विपन्नः शूनसर्वाङ्गः सर्वाण्येवापराण्यपि। बद्ध्वा संरुद्धहृदयां नाशयत्यपि गर्भिणीम्। योनिसंवरणं त्वेनं व्याधिं विद्यात् सुदारुणम्। अन्तकप्रतिमं घोरं नारभेत चिकित्सितुम्" इति। यथोक्ताश्चाप्युपद्रवा इति आक्षेपककासश्वासभ्रमाः मूढगर्भनिदान( नि. अ. ८ )पठनीयाः ॥ १४ ॥

**यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा ॥**
**शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ १५ ॥**

---

१ 'अश्मर्येवयवस्य। २ 'गर्भकोशपरासंगो मक्कल्लो योनिसंवृतिः' इति ड.।

यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ॥
नित्यं वक्त्रेण चोच्छ्वस्यात्तं ज्वरो हन्ति मानवम् ॥ १६ ॥
हिक्काश्वासपिपासार्तं मूढं विभ्रान्तलोचनम् ॥
संततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ १७ ॥
आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च ॥
क्षीणशोणितमांसं च नरं नाशयति ज्वरः ॥ १८ ॥

कायचिकित्साव्याधीनुपद्रवासाध्यान्निदर्शयन्नाह—य इत्यादि । ताम्यतीति मुह्यति । संघातशूलवानिति सपिण्डाकारशूलवान् ॥ १५-१८ ॥

श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम् ॥
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥ १९ ॥

विशेषेण वृद्धमिति वचनादवृद्धमपि नाशयेदिति मन्यते ॥ १९ ॥—

शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥ २० ॥

बहु मेहन्तमिति बहुमूत्रं कुर्वाणम् ॥ २० ॥

श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढताः ॥
भवन्ति दुर्बलत्वं च गुल्मिनो मृत्युमेष्यतः ॥ २१ ॥

ग्रन्थिमूढतेति ग्रन्थिरूपगुल्मस्यैव लीनता ॥ २१ ॥

आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृडन्वितम् ॥
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥ २२ ॥

गुल्मसधर्मतया कायचिकित्सायामपठितोऽपि विद्रधिर्गुल्मानन्तरमुच्यते । इह बद्धनिष्यन्दमिति बद्धमूत्रम् ॥ २२ ॥

पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः ॥
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ २३ ॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ॥
लोहितोद्गारदर्शी च रक्तपित्ती विनश्यति ॥ २४ ॥

लोहितोद्गारदर्शीति लोहितोद्गारो लोहितदर्शी च; तत्र लोहितोद्गारगन्धतया लोहितोद्गारता । केचित् 'लोहिताकारदर्शी' इति पठन्ति, तच्च व्यक्तार्थमेव ॥ २३ ॥ २४ ॥

अवाक्शी वाऽप्युदक्शी वा क्षीणमांसबलो नरः ॥
जागरिष्णुरसंदेहमुन्मादेन विनश्यति ॥ २५ ॥

---

१ 'रक्तानां च दिशां द्रष्टा' इति ड. ।

**वहुशोऽपसरन्तं तु प्रक्षीणं चलितभ्रुवम् ॥**
**नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ २६ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने वारणीयो नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥**

अवाञ्ची अवाङ्मुखः, उदञ्ची उदङ्मुखः । विकुर्वाणमिति विक्रियां तिर्यक्क्षेपणादिकां कुर्वाणम् ॥ २५ ॥ २६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने वारणीयो नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशत्तमोऽध्यायः ।

**अथातो युक्तसेनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**[1]

व्याधितानां मारकमुपद्रवमभिधाय स्वस्थानामप्यागन्तोर्निमित्ताद्यतः प्रायो मरणं भवति तदुपदेष्टुं युक्तसेनीयोऽभिधीयते । अत्र हि सूत्रस्थानेऽवश्यं सूत्रणीयं वक्ष्यमाणकल्पस्थानस्य बीजभूतं स्वस्थोपद्रवभूतं विषमभिधातव्यं, तथा चान्ये चापमृत्यव एकोत्तरमित्यादिना सूत्रयितव्याः ॥ १ ॥ २ ॥

**नृपतेर्युक्तसेनस्य परानभिजिगीषतः ॥**
**भिषजा रक्षणं कार्यं यथा[2] तदुपदेक्ष्यते ॥ ३ ॥**
**विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः ॥**
**रक्षितव्यो विशेषेण विषादेव नराधिपः ॥ ४ ॥**

युक्ता नियुक्ता न्याय्या वा सेना यस्य स युक्तसेनः । अभिजिगीषत इति जेतुमिच्छतः । विजिगीषुरिति वचनाज्जेतव्याः शत्रव एव विषप्रयोगं कुर्वन्ति विशेषेणेति दर्शयति । यात्रायुक्त इत्यनेन यात्रायामपरिशीलिते देशे सम्यग्विषप्रयोगः शत्रूणां भवतीति ब्रुवते । अमात्यग्रहणं प्रधानत्वेन सेनोपलक्षणम् ॥ ३ ॥ ४ ॥

**पन्थानमुदकं छायां भक्तं यवससिन्धनम् ॥**
**दूषयन्त्यरयस्तच्च जानीयाच्छोधयेदपि ॥ ५ ॥**

शत्रूणां विषप्रयोगभेदान् ज्ञानार्थं चिकित्सार्थं चाह—पन्थानमित्यादि । अत्र छायाश्रयवृक्षादीनां दूषणाच्छायादुष्टिर्भवतीति दुष्टवृक्षादिच्छायाश्रयिणो हि वृक्षादिगतेन

---

१ अस्याग्रे 'धन्वन्तरिं महाभागं सर्वशास्त्रविशारदम् । चरणावुपसंगृह्य सुश्रुतः परिपृच्छति' इति ता. पुस्तकेऽधिकः पाठः । २ 'यथा तद् ब्रूहि मे मुने । तस्य तद्वचनं श्रुत्वा प्राब्रवीद्भिषजां वरः' इति ता. ।

विषेण पवननीतेन बाध्यन्ते । जानीयादिति ज्ञात्वा परिहारार्थं, परिहाराशक्तौ च शोधयेदपीत्युक्तं, शोधयेदिति निर्विषीकुर्यात् ॥ ४ ॥ ५ ॥

**तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥**

ज्ञानोपायं चिकित्सां चातिदिशन्नाह—तस्य लिङ्गमित्यादि ॥—

**एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते ॥ ६ ॥**
**तत्रैकः कालसंयुक्तः शेषा आगन्तवः स्मृताः ॥**
**दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ॥ ७ ॥**
**रक्षेतां नृपतिं नित्यं यत्तौ वैद्यपुरोहितौ ॥**

अथ किं विषादेव नृपती रक्ष्य उतान्यस्मादपीत्याह—एकोत्तरमित्यादि । एतेन शतमपमृत्यूनामस्ति, तेभ्यो राजा रक्षणीयः, विषात्तु विशेषेणेति प्रकरणार्थः । अथर्वाण इति अथर्ववेदविदः । तत्र गर्भवर्षेण[1] समं वर्षशतमायुरुत्सर्गतः पुरुषस्य, तत्र शतवर्षभवत्वेनाकालमृत्यवः शतमित्येके; अन्ये शतशब्दं विपुलवचनमाहुः । अन्ये तु द्विषष्टिदोषभेदाद् द्विषष्टिः; तथा मनोदोषादष्टौ, तत्र क्षीणवृद्धाभ्यां चत्वारः, द्वन्द्ववृद्धिद्वन्द्वक्षयाभ्यां द्वौ, एकवृद्धद्वन्द्वाभ्यां द्वौ, एवमष्टौ; आगन्तवश्च त्रिंशत्; एवं शतम् । तदुक्तं केनचित्—"मृत्यवोऽङ्गमनोदोषनिमित्तास्तत्र सप्ततिः । त्रिंशदागन्तवस्तेषु त्रयः स्युस्त्रिविधाश्च षट् ॥ नव चाष्टौ तथा प्रोक्ता बालभूततथागमात् । अभिचाराभिशापर्क्षग्रहाशनिजलानलैः ॥ शस्त्रपाताभिघातोत्था मृत्यवोऽपरिरक्षणात्" इति । अपरिरक्षणादित्याहारादिसेवारूपपरिरक्षणाभावात्; किंवा शस्त्रं खङ्गादि, पातः पतनम्, एवं शतं पूर्यते; तच्च शतमपरिरक्षणाद्भवति । यद्यपि कालमृत्युरपि एभिरेव दोषादिभिर्नियतकर्मबलाकृष्टैर्भवति, तेन तस्य शतत्वं प्राप्नोति, तथाऽपि तस्य नियतासाध्यत्वात्तद्भेदकथनं चिकित्साभेदाप्रयोजकमिति न क्रियते । यदुक्तं **चरकेण** "न त्वसाध्यानां नियतानां विकल्पना" ( च. सू. अ. १० ) इति । यस्मादेवं बहवो मृत्यवः सन्ति अतो नृपस्य जगत्स्थितिकारकस्य रक्षाहेतुमाह—दोषेत्यादि । रसविशारदो वैद्यः, पुरोधा मन्त्रविशारदः । रसविशारदत्वेन च रसज्ञानाधीनं वीर्यादिविज्ञानमिति कथितं भवति; तत्र दोषनिमित्तेभ्यस्तथाऽऽगन्तुनिमित्तेभ्यश्च युक्तिव्यपाश्रयचिकित्सासाध्येभ्यो वैद्यस्य प्राधान्यं, दैवव्यपाश्रयचिकित्सासाध्येभ्यस्तु मन्त्रविशारदस्य प्राधान्यम् ॥ ६ ॥ ७ ॥

**ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्वेदमभाषत ॥ ८ ॥**
**पुरोहितमते तस्माद्वर्तेत भिषगात्मवान् ॥**

वैद्यस्य पुरोहिताथर्ववेदाङ्गाध्यायित्वात् पुरोहितवशतां दर्शयन्नाह—ब्रह्मेत्यादि । वेदाङ्गमिति अथर्ववेदाङ्गम् । तस्मादिति अष्टाङ्गायुर्वेदप्रभवाथर्ववेदाभिज्ञत्वात् । पुरोधसः सर्वायुर्वेदज्ञत्वं, तेन तन्मते वर्तितव्यमित्यर्थः ॥ ८ ॥

---

१ 'गर्भवासेन' इति मु.।

संकरः सर्ववर्णानां प्रणाशो धर्मकर्मणाम् ॥
प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः[1] ॥ ९ ॥
पुरुषाणां नृपाणां च केवलं तुल्यमूर्तिता ॥ १० ॥
आज्ञा त्यागः क्षमा धैर्यं विक्रमश्चाप्यमानुषः ॥
तस्माद्देवमिवाभीक्ष्णं वाङ्मनःकर्मभिः शुभैः ॥ ११ ॥
चिन्तयेन्नृपतिं वैद्यः श्रेयांसीच्छन् विचक्षणः ॥

अथ कस्मात् सर्वमनुष्यचिकित्साक्षमेण[2] वैद्येन नृप एव विशेषेण रक्षणीय इत्याह—संकर इत्यादि । संकरो व्यतिमिश्रत्वम् । धर्मसाधनं कर्म धर्मकर्म । प्रजानामुच्छित्तिः रक्षणाद्यभावात् । पुनश्च राज्ञि आदरार्थं राजगुणानाह—पुरुषाणामित्यादि ॥ ९–११ ॥

स्कन्धावारे च महति राजगेहादनन्तरम्[3] ॥ १२ ॥
भवेत् सन्निहितो वैद्यः सर्वोपकरणान्वितः ॥
तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् ॥ १३ ॥
उपसर्पन्त्यमोहेन विषशल्यामयार्दिताः ॥
स्वतन्त्रे कुशलोऽन्येषु शास्त्रार्थेष्वबहिष्कृतः ॥ १४ ॥
वैद्यो ध्वज इवाभाति नृपतद्विधपूजितः ॥

नृपशरीरचिन्तकेन वैद्येन यथा स्थातव्यं तदाह—स्कन्धावार इत्यादि । सान्निध्यावस्थानं नृपरक्षणार्थं तथा नृपसन्निहितत्वेन लोकादरार्थं च । यशसः ख्यातिः यशःख्यातिः । ध्वजवदिति शक्रध्वजवदिति । अस्य शास्त्रस्य शल्यप्राधान्येऽपि एतदध्यायस्य विषनियततया विषस्य प्रथमनिर्देशः कृतः । वैद्यस्य यशोहेतुं गुणमाह—स्वतन्त्रे इत्यादि । अन्यशास्त्रेष्वबहिष्कृत इत्यनेन अन्यशास्त्रापेक्षया स्वशास्त्रे ज्ञानप्रकर्षवत्त्वं दर्शयति ॥ १२ ॥ १४ ॥

वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ॥ १५ ॥
एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥

चतुष्पादसाध्यायामपि चिकित्सायां वैद्यस्य प्राधान्यं दर्शयितुं चिकित्सापादानाह—वैद्यो व्याध्युपसृष्ट इत्यादि । कर्ममात्रसाध्यमारोग्यं, तेन कर्मसाधनहेतव इत्यारोग्यसाधनहेतव इत्यर्थः । चिकित्सा वैद्यादीनामारोग्यार्था प्रवृत्तिः; यदुक्तं **चरके**—"चतुर्णां भिषगादीनां शस्तानां धातुवैकृते । प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते" ( च. सू. अ. ९ ) इति ॥ १५ ॥

गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक् ॥ १६ ॥
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥

---

१ 'कृच्छ्राणि भवन्ति नृपनाशतः' इति ता. । २ '°चिकित्साकामेन । ३ 'राजवेश्मसमीपतः' इति पा० ।

**वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः ॥ १७ ॥**
**उद्गातृहोतृब्रह्माणो यथाऽध्वर्युं विनाऽध्वरे ॥**

पादचतुष्टये वैद्यस्य प्राधान्यं कर्तृतया, इतरपादानां चोपकरणतया दर्शयन्नाह—गुणवद्भिरित्यादि । पुनर्वैद्यव्यतिरेकेणासाधकतयेतरपादानां वैद्यप्राधान्यमाह—वैद्यहीना इत्यादि । उद्गाता सामवेदस्य, होता ऋग्वेदस्य, ब्रह्मा तु त्रयाणामपि पाठकः, अध्वर्युश्च ऋग्वेदविदुपाध्याय आदेष्टा सर्वेषाम् ॥ १६ ॥ १७ ॥

**वैद्यस्तु गुणवानेको यापयेदातुरं सदा ॥ १८ ॥**
**प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि ॥**

इतरपादाभावेऽपि वैद्यस्य कर्मणि साफल्यमाह—वैद्यस्त्वित्यादि । यापयेदिति व्याधिवृद्धिं निरोधयति । अत्र वैद्यस्यैकत्वमपरपादानां निर्गुणत्वेन सतामपि असत्तुल्यत्वादुक्तं, न ह्यातुरपादं विना यथाकथंचिदपि रोगयापनमसाधारणतया संभवति । प्लवमिति नौका ॥ १८ ॥

**तत्त्वोपगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती ॥ १९ ॥**
**लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥**
**प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः ॥ २० ॥**
**सत्यधर्मपरो यश्च स भिषक् पाद उच्यते ॥**

पादानां गुणबहुयुक्तं क्रमान्निर्दिशन्नाह—तत्त्वोपगत इत्यादि । तत्त्वेन याथातथ्येन उपगतमधिगतं शास्त्रमर्थश्च येन स तथा । उपस्करणं शस्त्रयन्त्रादि, प्रत्युत्पन्नमतिरिति प्रतिभावान् । धीः ऊहापोहवती बुद्धिः । व्यवसायी अध्यवसायी । विशारदः कार्याकार्यज्ञानपटुः ॥ १९ ॥ २० ॥—

**आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि ॥ २१ ॥**
**आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥**

आयुष्मानिति आयुर्लक्षणयोगाद्विशिष्टतया च साध्यरोगः । आस्तिकत्वेन वैद्योपदेशादौ श्रद्धावत्त्वं दर्श्यते ॥ २१ ॥—

**प्रशस्तदेशसंभूतं प्रशस्तेऽहनि चोद्धृतम् ॥ २२ ॥**
**अल्पमात्रं बहुगुणं गन्धवर्णरसान्वितम् ॥**
**दोषघ्नमग्लानिकरमविकारि विपर्यये ॥**
**समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥ २३ ॥**

---

१ 'तारयेदातुरं' इति ड. । २ 'परिचरन् धीरः' इति ता. । ३ 'असमर्थत्वात्' इति मु. । ४ 'द्रव्यवान्मित्रवानपि' इति ता. । ५ 'युक्तमात्रं मनस्कान्तं' इति पा० ।

अल्पमात्रं बहुगुणमिति अल्पमात्रमपि प्रशस्तगुणयोगाद्बहुगुणकरम् । गन्धवर्णरसान्वितमित्यनेन अव्यापन्नत्वं मनसः कान्तत्वं च दर्श्यते । अविकारीति अल्पविकारि अविकारि वा । समीक्ष्य दत्तमिति आतुरोपक्रमणीयोक्तायुरादीन् देशान्तान् वीक्ष्य दत्तम् । काल इति युक्ते काले ॥ २२ ॥ २३ ॥

**स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे ॥**
**वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥ २४ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने युक्तसेनीयो नाम चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥**

अजुगुप्सुः अनिन्दकः; निन्दको ह्यातुरविषादकारी । युक्त उद्युक्तः[1] ॥ २४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने युक्तसेनीयो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशत्तमोऽध्यायः ।

**अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायोक्तगुणवद्भेषजादिपादत्रययुक्तभिषजा आतुरश्चिकित्सितुमुपक्रमणीय इत्यातुरोपक्रमणीयोऽभिधीयते ॥ १ ॥ २ ॥

**आतुरमुपक्रममाणेन भिषजाऽऽयुरादावेव परीक्षितव्यं[2]; सत्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशादीन् परीक्षेत ॥ ३ ॥**

आतुरोपक्रमणं च गतायुषि निरर्थकमयशस्करं चेत्यध्यायप्रतिज्ञानन्तरमायुःपरीक्षोपदेशं करोति—आतुरमित्यादि । आयुःपरीक्षणं च रिष्टसद्भावासद्भावाभ्यां पूर्वाध्यायैर्यद्यपि कृतमेव, तथाऽपि लक्षणतो यद्दीर्घायुष्ट्वं तत्तत्र नोक्तं, तदिह प्रतिपादनीयं; यदिहोक्तपञ्चविंशतिवर्षाद्यायुःप्रमाणज्ञाने सति पञ्चविंशतिवर्षाद्युपस्थाने विनाऽपि रिष्टं चिकित्साऽकर्तव्यैव, तत्कालमायुर्लक्षणेनायुषोऽन्तर्गतस्यावचारित्वात्[3] । अथ चिकित्साप्रवृत्त्यर्थमायुरेव केवलं परीक्ष्यमथान्यदपि परीक्ष्यमस्तीत्याह—सत्यायुषि व्याधीत्यादि । आयुषि सति परं चिकित्सा संभवति; तेन तत् प्रधानतया प्रथमं परीक्ष्यं, ततो व्याध्यादीत्यर्थः । व्याध्यादीनां च यथा यथा प्रधानविवक्षा तथा तथा तदुद्देशो ज्ञेयः; तत्र व्याधिर्निर्वर्त्यत्वेन प्रधानं, तदनु ऋतवोऽग्निदेहबलादिहेतुतया[4], तदन्वग्निर्देहबलादिहेतुतया प्रधानम्, एवमाद्युन्नेयमिति ॥ ३ ॥

---

१ 'उपयुक्तः' इति मु. । २ 'तावत् परीक्ष्यम्' इति ता. । ३ 'तत्स्वलक्षणेनायुषोऽन्तर्गतस्य' इति मु. । ४ 'धातवः' इति ह. ।

**तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं, दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं, विस्तीर्णभ्रूस्तनान्तरोरस्कं, ह्रस्वजङ्घामेढ्रग्रीवं, गम्भीरसत्त्वस्वरनाभिम्, अनुच्चैर्बद्धस्तनम्, उपचितमहारोमशकर्णपार्श्वमस्तिष्कं, स्नातानुलिप्तं मूर्धानुपूर्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्विपरीतैरल्पायुः; मिश्रैर्मध्यमायुरिति ॥ ४ ॥**

अत्र च सामान्यलक्षणतः, तथाऽङ्गप्रत्यङ्गप्रमाणतः, तथा सारतश्चायुः परीक्ष्यं; तेन सामान्यायुर्लक्षणान्याह—तत्र महेत्यादि । अत्र महद्दीर्घ-विस्तीर्ण-ह्रस्व-गम्भीर-शब्दाः प्रत्येकं यथोत्तरमभिसंबध्यन्ते। महत्त्वं च ललाटादीनामत्रवक्ष्यमाणप्रशस्तप्रमाणता ततो यत्किंचिदाधिक्यं वा। प्रेक्षणं चक्षुः। भ्रुवोः स्तनयोश्चान्तरं ज्ञेयम् । ह्रस्वत्वं च जङ्घादौ हीनप्रमाणतया वक्ष्यमाणाल्पायुष्ट्वापवादकं ज्ञेयम्। गम्भीरत्वं सत्त्वस्य व्यसने चाभ्युदये चाक्षोभ्यता, स्वरस्य च गम्भीरदेशोत्थितत्वमिव गम्भीरता, नाभेस्तु निम्नत्वमेव। किंचिदुच्चनिबिडस्तनम्। उपचिता मांसला महान्तस्तथा लोमशा लोमयुक्ताः कर्णपार्श्वसंभवा मस्तिष्का यस्य स तथा, कर्णस्य पार्श्वमस्तकौ लोमशौ महान्तावित्यन्ये, अन्ये तु रोमोपचितकर्णं तथा पार्श्वमस्तिष्कशब्दं मस्तकस्थाने पठित्वा व्याख्यानयन्ति, ते च चूडास्थाने आवर्तद्वयं मस्तिष्कं वदन्ति। "मस्तिष्कशब्दो ग्रीवापश्चाद्भागे मांसले वर्तते" इत्यन्ये । स्नातानुलिप्तमानुपूर्व्या पश्चाद्विशुष्यमाणशरीरहृदयमिति स्नातं वा अनुलिप्तं वा यथा आनुपूर्व्या सलिलं वा अनुलेपनं वा शरीरे लग्नं तथैव विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयमित्यर्थः । अल्पायुषस्तथा मध्यायुषो लक्षणमतिदिशन्नाह—एभिरित्यादि। अत्र चाल्पायुष्ट्वं पञ्चविंशतिवर्षमानत्वं, तथा मध्यायुष्ट्वं सप्ततिवर्षमानत्वमप्रेवक्ष्यमाणमध्यायुषस्तथाऽल्पायुषस्तथैव माननिर्देशाद्भवति ॥ ४ ॥

**भवन्ति चात्र—**

**गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः ॥**
**उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥ ५ ॥**
**गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते ॥**
**शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः ॥ ६ ॥**

दीर्घायुर्लक्षणान्तरमाह—गूढेत्यादि। स्थिरेन्द्रियो झटित्यनुपहन्यमानेन्द्रियः। उत्तरोत्तरसुक्षेत्र इति उत्तरोत्तरदीर्घायुःपुरुषकुलजातः[2]; क्षेत्रं प्रभवस्थानमिह कुलपुरुषाः, तेषां सुष्ठुत्वं दीर्घायुष्ट्वम्। शरीरज्ञानविज्ञानैर्वर्धत इति योजना। ज्ञानमिह सहजशास्त्रादिज्ञानं[3], विज्ञानं च शिक्षाकृता बुद्धिर्ज्ञेया ॥ ५ ॥ ६ ॥

---

१ 'उपचितमहारोमशकर्ण, पश्चान्मस्तिष्कं' इति ड.। २ '°दीर्घायुःप्रकर्षकुलजातः' इति ह.। ३ 'सहजा बुद्धिः' इति मु.।

मध्यमस्यायुषो ज्ञानमत ऊर्ध्वं निबोध मे ॥
[1]अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ॥ ७ ॥
द्वे वा तिस्रोऽधिका वाऽपि पादौ कर्णौ च मांसलौ ॥
नासाग्रमूर्ध्वं च [2]भवेदूर्ध्वं लेखाश्च पृष्ठतः ॥ ८ ॥
यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ॥
जघन्यस्यायुषो ज्ञानमत ऊर्ध्वं निबोध मे ॥ ९ ॥
ह्रस्वानि यस्य पर्वाणि सुमहच्चापि मेहनम् ॥
[3]तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम् ॥ १० ॥
ऊर्ध्वं च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ॥
हसतो जल्पतो वाऽपि दन्तमांसं प्रदृश्यते ॥
प्रेक्षते यश्च विभ्रान्तं स जीवेत् पञ्चविंशतिम् ॥ ११ ॥

मध्यमस्येति उत्तमं वर्षशतमपेक्ष्य सप्ततिवर्षायुर्मध्यमं, जघन्यं तु पञ्चविंशतिवर्षम् । मेहनं मेढ्रम् । अवलीढः स्वरः अनुपचितस्वरः । एतच्च श्लोकेन मध्यस्य तथा जघन्यस्य चायुषः पुनर्लक्षणकथनं पूर्वोक्तलक्षणाद्विशिष्टत्वादेव, तेन प्रयोजनवत्त्वादनार्षत्वमस्य न वर्णनीयम् ॥ ७–११ ॥

अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः । तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि, तदवयवाः प्रत्यङ्गानीति । तत्र, स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते, प्रदेशिन्यास्तु मध्यमानासिकाकनिष्ठिका यथोत्तरं पञ्चमभागहीनाः, चतुरङ्गुलायते षट्पञ्चाङ्गुलविस्तृते प्रपदपादतले, पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः, चतुर्दशाङ्गुलायतः पादः, [4]त्रयोदशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि, [5]चतुर्विंशत्यङ्गुला जङ्घा, जानूपरिष्टाच्च द्वात्रिंशदङ्गुलम्, एते पञ्चाशत्; जङ्घायामसमावूरू; द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलभ्रूनयनान्तराणि; चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि; द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि; इन्द्रबस्तिपरिणाहांसपीठकूर्परान्तरायामो [6]विंशत्यङ्गुलः; चतुर्विंशत्यङ्गुलो हस्तः; द्वात्रिंशदङ्गुलपरिमाणौ भुजौ; द्वात्रिंशत्परिणाहावूरू; मणिबन्धकूर्परान्तरं षोडशाङ्गुलं; तलं षट्चतुरङ्गुलायामविस्तारम्; अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तर-

१ 'अधस्ताद्धस्तयोर्यस्य' इति ता. । २ 'भवेद्रेखा व्यक्ताश्च' इति ता. । ३ 'अवलीढः स्वरो यस्य' इति चक्रपाणिसंमतः पाठः स्यात् । ४ 'चतुर्दशाङ्गुलपरिणाहानि' इति ड. । ५ 'अष्टादशाङ्गुला' इति ड. । ६ 'षोडशाङ्गुलः' इति ड. ।

**मध्यमाङ्गुल्यौ पञ्चाङ्गुले; अर्धपञ्चाङ्गुले प्रदेशिन्यनामिके; सार्धऽयङ्गुलौ कनिष्ठाङ्गुष्ठौ; चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवं; त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा; नयनत्रिभागपरिणाहा तारका; नवमस्तारकांशो दृष्टिः; केशान्तमस्तकान्तरमेकादशाङ्गुलं; मस्तकादवटुकेशान्तो दशाङ्गुलः; कर्णावद्वन्तरं चतुर्दशाङ्गुलं; पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः; अष्टादशाङ्गुलविस्तारमुरः; तत्प्रमाणा पुरुषस्य कटी; सविंशमङ्गुलशतं पुरुषायाम इति ॥ १२ ॥**

अत्र ललाटादीनां यन्महत्त्वादिलक्षणमुक्तं, तच्च प्रतिप्रमाणापेक्ष्यं भवति, अतश्च वक्ष्यमाणप्रमाणवति शरीरे संपूर्णायुष्ट्वादि दर्शयितुमङ्गप्रत्यङ्गप्रमाणं सारं चाह—अथेत्यादि। अन्तराधिः शरीरमध्यं, सक्थिद्वयं, बाहुद्वयं, शिरश्चेति प्रधानं षडङ्गम्; एतदवयवाः प्रत्यङ्गानि। पादस्यैवाङ्गुष्ठः प्रदेशिनी च द्व्यङ्गुला; त्रियवोऽत्राङ्गुलः, यद्वक्ष्यति—"तत्रार्धपञ्चाङ्गुलं गुदमाहुः, तत्राध्यर्धाङ्गुलास्तिस्रो गुदवलयः, तत्र यवाध्यर्धो गुदौष्ठः, तत्र प्रथमा द्व्यङ्गुलमात्रा" ( नि. अ. २ ) इति; तत्राध्यर्धयवोऽर्धाङ्गुलं, तेन त्रियवमङ्गुलमिति फलति। पञ्चमो भागः पञ्चमभागः। षट्पञ्चाङ्गुलमिति प्रपदं षडङ्गुलविस्तारं, पञ्चाङ्गुलविस्तारं पादतलम्। गुल्फसन्धेरित्यादौ गुल्फस्योपरि चतुरङ्गुलजङ्घायास्त्रयोदशाङ्गुलानि परिणाह इत्यर्थः। जङ्घायामसमावूरू चतुर्विंशत्यङ्गुलावित्यर्थः। द्व्यङ्गुलानीत्यादौ नयनान्तरं नयनयोर्मध्यम्। चतुरङ्गुलानीत्यादौ वदनं मुखावकाशः। ग्रीवोच्छ्रायः उन्नतिरित्यर्थः। मेहनं त्वत्रापकृष्टमेव चतुरङ्गुलं ज्ञेयं, तेन यच्चरके "षडङ्गुलं शेफः" ( च. वि. अ. ८ ) इत्युक्तं तत्प्रकृष्टशेफोमानं ज्ञेयम्। दृष्ट्यन्तरं मसूरदलमात्रदृष्ट्योर्मध्यमित्यर्थः। द्वादशाङ्गुलानीत्यादौ मेहननाभ्योर्ग्रीवाहृदययोस्तथा नाभिहृदययोस्तथा स्तनयोश्चान्तरं मध्यं प्रत्येकं द्वादशाङ्गुलं, तथा मुखायामादीनि द्वादशाङ्गुलानि। मणिबन्धस्योपरि चतुरङ्गुले प्रकोष्ठोऽभिधीयते। इन्द्रबस्तीत्यादौ अंसपीठकूर्परयोरन्तरं मध्यं विंशत्यङ्गुलमित्यर्थः। कूर्परांसयोर्मध्यं भुजम्। अङ्गुष्ठेत्यादौ अङ्गुष्ठकनिष्ठयोरन्तरं तथा श्रवणापाङ्गयोरन्तरं ज्ञेयम्। चतुर्विंशतीत्यादौ चतुर्विंशत्यङ्गुलपरिणाहा ग्रीवेत्यर्थः। नासापुटमर्यादेति नासापुटं नासारन्ध्रम्। तारका नयनकृष्णभागः, तारकानवमांशा दृष्टिरिति शल्यमतेन प्रशस्तमानाभिप्रायेण च ज्ञेयं; तेनोत्तरतन्त्रे यत् "कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः" ( उ. अ. १ ) इति, तत्त्वविरोधिमतभेदादेव। केशान्तेत्यादौ मस्तकं चूडास्थानम्। अवटुः ग्रीवापश्चाद्भागोऽवटुसंज्ञितः, कर्णयोरवटुभागः अन्तरं कर्णाववद्वन्तरं; तेन कर्णयोः पश्चाद्भागान्तरमिति फलति। चतुर्विंशत्यङ्गुलमुरोविस्तारमुक्तं, तत्प्रमाणा स्त्रीश्रोणिर्ज्ञेया, अष्टादशाङ्गुलविस्तारमुरः स्त्रिया एव। सविंशमङ्गुलशतं पुरुषायाम इति पञ्चाङ्गुलायामा पार्ष्णिः, जङ्घा चतुर्विंशत्यङ्गुला, जानु चतुरङ्गुलम्, ऊरुश्चतुर्विंशत्यङ्गुलः, तथा मेहननाभ्योरन्तरं द्वादशाङ्गुलं, तथा नाभिहृदयान्तरं ग्रीवाहृदयान्तरं प्रत्येकं द्वादशाङ्गुलं, ग्रीवा

---

१ एतद्व्याख्यानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः।

चतुरङ्गुलायामा, मुखं द्वादशाङ्गुलायामं, तथा केशान्तचूडास्थानरूपमस्तकान्तरमेकादशाङ्गुलम्, एवं सविंशमङ्गुलशतमायामः पुरुषस्य । अन्ये विस्तृतबाहुपुरुषायामं सविंशमङ्गुलशतं वदन्ति । **चरके** तु चतुरशीत्यङ्गुलः पुरुषायाम उक्तः, तेनाङ्गुलमानभेदात् समस्या कर्तव्या, येनेह जङ्घा चतुर्विंशत्यङ्गुला, **चरके** "जङ्घेऽष्टादशाङ्गुले" ( वि. अ. ८ ) इत्यादिना प्रमाणभेद उक्तः ॥ १२ ॥

**भवन्ति चात्र श्लोकाः—**

**पञ्चविंशे ततो वर्षे पुमान् नारि तु षोडशे ॥**
**समत्वागतवीर्यौ तौ जानीयात् कुशलो भिषक् ॥ १३ ॥**

अत्र स्त्रीश्रोणिपुरुषोरःप्रभृतीनामङ्गानां केषांचिद्यौवन एव संपूर्णमानता भवति; तेन तदैव यथोक्तमानता ज्ञेयेत्याह—पञ्चविंशे इत्यादि । उक्तं चान्यत्र—"वर्षेऽथ च पञ्चविंशे नरः समन्वितबलः षोडशे नारी । अर्हति मानोन्मानं जीवितभागे चतुर्थे वा" इति ॥ १३ ॥

**देहः स्वैरङ्गुलैरेष यथावदनुकीर्तितः ॥**
**युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना ॥ १४ ॥**
**दीर्घमायुरवाप्नोति वित्तं च महदृच्छति ॥**
**मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम् ॥ १५ ॥**

देहः स्वैरङ्गुलैरित्यनेन नारीशरीरं नार्यङ्गुलेन, पुरुषशरीरं पुरुषाङ्गुलेन मेयं, किं च बालशरीरं बालाङ्गुलेन मेयमित्यपि सूचितं ज्ञेयम् । एतस्मिंश्च स्वाङ्गुलमाने त्रियवमानता या अङ्गुलस्योक्ता सा न सम्यक् संगता भवति, तथा स्वाङ्गुल एवात्राङ्गुलिमध्यप्रदेशमानो ज्ञेयः । **चरके** त्वङ्गुष्ठमानोऽङ्गुलिमूलमानो वाऽङ्गुलः, तेन मानभेदसमर्थनं यथाकथंचित् कर्तव्यम् ॥ १४ ॥ १५ ॥

**अथ सारान् वक्ष्यामः—स्मृतिभक्तिप्रज्ञाशौचशौर्योपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्; स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण; अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रं च मज्ज्ञा; महाशिरःस्कन्धं दृढदन्तहन्वस्थिनखमस्थिभिः; स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा; अच्छिद्रगात्रं गूढास्थिसन्धि मांसोपचितं च मांसेन; स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन; सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादिति । एषां पूर्वं पूर्वं प्रधानमायुःसौभाग्ययोरिति ॥ १६ ॥**

सारेणाप्यायुर्निर्दिशन्नाह—अथ सारानित्यादि । भक्तिरिह देवगुरुसेवा । शुक्रेण सारम्, एवं मज्ज्ञेत्यादावपि योज्यम् । कृशमुत्तमबलमिति कृशमपि महाबलम् । अच्छि-

द्रगात्रमिति अनिम्नगात्रम् । एषामिति सत्त्वादिसाराणामुक्तानां यद्यत् पूर्वं तत्तदायुःसौभाग्ययोः प्रकर्षकरम्, एवं यथा यथा द्वित्रादिसारतायोगप्रकर्षः तथा तथाऽऽयुःसौभाग्यप्रकर्षोऽपि ज्ञेयः । सौभाग्यशब्देन च कमनीयाश्वरके विस्तरप्रतिपादिताः बलसौकुमार्यधनित्वादयो गुणा गृहीतव्याः ॥ १६ ॥

**सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः ॥**
**परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्मसु ॥ १७ ॥**

उक्तं प्रकरणमुपसंहरति—सामान्यत इत्यादि । तत्र 'महाललाट' इत्यादिना 'स जीवेत् पञ्चविंशतिम्' इत्यन्तेन सामान्यत उक्तमायुः, 'अथ पुनः' इत्यादिना 'हीनैस्तथाऽवरम्' इत्यन्तेनाङ्गप्रत्यङ्गविभागतया उक्तमायुः, 'अथ सारान्' इत्यादिना 'सौभाग्ययोरपि' इत्यन्तेन तु सारत उक्तमायुर्ज्ञेयम् । सिध्यतीति सिद्धियुक्तो भवति । कर्मस्विति चिकित्सासु ॥ १७ ॥

**व्याधिविशेषास्तु प्रागभिहिताः; सर्वे एवैते त्रिविधाः—साध्या, याप्याः, प्रत्याख्येयाश्च । तत्रैतान् भूयस्त्रिधा परीक्षेत-किमयमौपसर्गिकः, प्राक्केवलः, अन्यलक्षण इति । तत्र, औपसर्गिको नाम यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति, स तन्मूल एवोपद्रवसंज्ञः; प्राक्केवलो नाम यः प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽनुपद्रवश्च; अन्यलक्षणो नाम यो भविष्यद्व्याधिख्यापकः, स पूर्वरूपसंज्ञः । तत्र, सोपद्रवमन्योन्याविरोधेनोपक्रमेत, बलवन्तमुपद्रवं वा; प्राक्केवलं यथास्वं प्रतिकुर्वीत; अन्यलक्षणे त्वादिव्याधौ प्रयतेत ॥ १८ ॥**

क्रमागतां व्याधिपरीक्षामाह—व्याधीत्यादि । प्रागभिहिता इति प्रथमाध्याये "तद्दुःखसंयोगा व्याधयः" ( सू. अ. १ ) इत्यादिना, तथा व्याधिसमुद्देशीये "आदिबलप्रवृत्ताः" ( सू. अ. २४ ) इत्यादिना प्रोक्ताः । ते तु सर्वे एव त्रिविधा इति सर्वे एव ते रोगाः साध्य-याप्य-प्रत्याख्येयभेदेषु मध्ये एकत्रावश्यं प्रविशन्तीत्यर्थः, न तु सर्वरोगाणां प्रति प्रति साध्यादित्रैविध्यमनेनोच्यते; येन रोहिणीप्रभृतयो न साध्याः, ज्वरादयो न याप्याः, तथा तिलकालकमषकादयः साध्या एव परम् । भूयस्त्रिधा इति औपसर्गिकादिभेदेन । उपव्याध्युत्पादोपपत्त्या[2] सृजतीत्युपसर्गः, उपसर्ग एव स्वार्थिकठक्प्रत्ययादादौपसर्गिकः । उपद्रवलक्षणमाह—तत्रौपसर्गिको नामेत्यादि । तत्र प्रथमोत्पन्नं ज्वरादिव्याधिं जघन्यकालजातो व्याधिरुपसृजति अनुगतो भवति, यथाऽतीसारादि[3]; स च तन्मूल एवेति पूर्वोत्पन्नव्याधिकारणकः सन् सोऽतीसारादिरुपद्रव इत्यर्थः । उपद्रवसंज्ञो भवतीत्यनेन च शास्त्रसमयसिद्धेयमुपद्रवसंज्ञेति[4] दर्शयति । अत्र पूर्वोत्पन्नमितिकृत्वा व्याधिविशेषणमजनित-

---

१ 'विशेषतः' इति ड. । २ 'व्याध्युत्पादेन' इति मु. । ३ 'योऽतिसारादिः' इति पा० । ४ 'शास्त्रे स्वनयसिद्धोऽयमुपद्रवसंज्ञो भवतीति' इति मु. ।

व्याधिदोषावस्थानिषेधार्थम् । जघन्यकालजात इति पदं व्याधिना ज्वरादिना सहोत्पन्ना-रुच्यादिलिङ्गरूपव्याधिनिरासार्थम् । यदुच्यते **चरके**—"व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः" (च. नि. अ. ८) इति । पुनर्व्याधिरिति पदं व्याध्युत्पादोत्तरकालभावि-व्याध्यवस्थानिरासार्थम् । तन्मूल एवेति स्वहेतुबलाद् व्याध्युत्तरकालोत्पन्नसंसर्गिरोग-प्रतिषेधार्थम् । यथा—श्लीपदोत्तरकालजमपि कुष्ठं यथोक्तलक्षणमपि नोपद्रव इत्यर्थः । यदुच्यते—"ज्वरसंतापाद्रक्तपित्तमुदीर्यते । रक्तपित्तादथो कासः कासात् संजायते क्षयः" (च. नि. अ. ८) इति । क्षयहेतुभूतव्याधिना सहावस्थाने रक्तपित्तादीनां तदोपद्रवत्वं यदा मूलव्याध्युपगमेऽप्यवस्थानं रक्तपित्तादीनां; यदुक्तं—"कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति । न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च" (च. नि. अ. ८) इति; तथा नोपद्रवत्वम्, उपद्रवव्याधिसंबन्धाभावादेव(?)। एवंभूतोपद्रवलक्षण-मेव **चरके** पठ्यते; यथा—"उपद्रवस्तु रोगान्तरकालजो रोगाश्रयो रोग एव, स स्थूलोऽणुर्वा पश्चाज्जायत इति उपद्रवसंज्ञः"—(च. चि. अ. २१) इति । अत्रान्तरकालज इति रोगमध्यकालजः, तेन लिङ्गव्युदासः; रोगाश्रय इत्यनेन चावस्थाव्युदासः । बहु वक्तव्यं चैतद्विस्तरभयान्न विस्तृतम् । प्राक्केवलं विवृणोति—प्राक्केवल इत्यादि । प्रागेवा-पूर्वरूपतयोत्पन्नः, तथा पश्चादप्यनुपद्रवतया केवल इत्यर्थः । मषकतिलकालका-दयोऽपूर्वरूपा एव जायन्ते, न च तेषामुपद्रवो भवतीति प्राक्केवला भण्यन्ते, एवं व्याख्यानयन्ति । किंत्वस्मिन् व्याख्याने मूलज्वरादिव्याधीनां सपूर्वरूपाणामौपसर्गिकादि-प्रकारत्रयेणापि ग्रहणं न स्यात्, मषकादीनां चाव्यक्तलिङ्गं पूर्वरूपं संभवत्येवेत्यपूर्व-रूपता तेषां दुर्घटा; तेन प्रागुत्पन्नो व्याधिरित्यनेन ज्वरादय एव व्याधयोऽभिधीयन्ते । अत्रापूर्वरूप इत्यनेन च पूर्वरूपादन्यदुच्यते, अनुपद्रव इत्यनेनापि चोपद्रवादन्यत्व-मुच्यते । अन्यलक्षणो नामेत्यनेन च सर्वरूपाभिधानम् । भविष्यद्व्याधिख्यापक इत्यनेन वर्तमानव्याधिगमकाद्व्यावृत्तिः । लिङ्गानां च प्रधानव्याधिग्रहणेनैव ग्रहणमित्युक्तमेव । रिष्टानां च मरणपूर्वरूपतया ग्रहणमिति सर्वव्याधिप्राप्तिः । अत्र चिकित्सासूत्रमाह—तत्रेत्यादि । अन्योन्याविरोधेनेति मूलव्याधेरुपद्रवस्य च यथा विरोधो न भवति तथोभय-व्याधिप्रत्यनीका चिकित्सा कर्तव्येत्यर्थः । यदा तूपद्रवो बलवान् दृश्यते तदा बलवन्त-मुपद्रवं चिकित्सेदिति पक्षः । यद्यपि तन्मूलतया व्याध्युपद्रवयोरेककारणतोक्ता, तथाऽपि तयोर्भिन्नव्याधिरूपतया व्याधिप्रत्यनीका चिकित्सा भिन्नाऽपि भवति, तदपेक्ष्यमेतद्वचनं—बलवन्तमुपद्रवं चोपचरेदिति । यथास्वमिति या यस्य ज्वरादेश्चिकित्सोक्ता तया प्रतिकुर्वीत। अन्यलक्षणे आदिव्याधौ प्रथमोत्पन्नरूपशब्दिते प्रयतेत पूर्वरूपोक्तं चिकित्सितं यथास्वं कुर्वीतेत्यर्थः । तेन "ज्वरस्य पूर्वरूपे लघ्वशनमपतर्पणं च" (च. नि. अ. १) इत्याद्युक्तं गृह्यते; अथवा आदिशब्दः प्रधानवाची, तेन भाविप्रधानव्याधिं यथाकथंचिदुन्नीय तत्रोक्तं चिकित्सितं पूर्वरूपे कुर्यात् । तेन मसूरिकादिपूर्वरूपे ज्वराङ्गमर्दादौ तदुक्तचिकित्साम-पहाय मसूरिकादिचिकित्सैव क्रियते शोधनभोजनादिरूपा ( तेनैतत् पक्षद्वयमप्यदुष्टमिति

कार्तिककुण्डः )। आदीत्यादौ आदिशब्दः प्रधानवाची; तेन व्याधाविति पूर्वरूपलक्षणीये प्रधानज्वरादिव्याधावित्यर्थः । यदुच्यते—"ज्वरस्य पूर्वरूपे हितं लघ्वशनमपतर्पणं वा" ( च. नि. अ. १ ) इत्यादि ॥ १८ ॥

**भवति चात्र—**

**नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ॥**
**अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥ १९ ॥**

उक्तानुक्तव्याधिचिकित्सासूत्रमाह—नास्तीत्यादि । अनुक्तमपीति शृङ्गग्राहिकया अनुक्तमपि; दोषाणां वातादीनां, लिङ्गैस्तोदादिभिर्ज्ञात्वा व्याधिदोषप्रत्यनीकैर्भेषजैरुपाचरेदित्यर्थः ॥ १९ ॥

**प्रागभिहिता ऋतवः ॥ २० ॥**

क्रमागतामृतुपरीक्षामृतुचर्योक्तत्वेन निर्दिशति—प्रागित्यादि । ऋतूनां चाभिधानं दोषचयादिहेतुताप्रतिपादनार्थं, तथाऽग्निक्षारादिस्नेहस्वेदवमनादिक्रियाननुगुणत्वानुगुणत्वप्रतिपादनार्थम् ॥ २० ॥

**शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम् ॥**
**कृत्वा कुर्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ २१ ॥**

तत्र दोषचयादिप्रतिपादनता ऋतूनामृतुचर्ये ( सू. अ. ६ ) एवोक्ता, अग्न्यादिचिकित्सायां तु कालस्य ऋतुरूपस्याननुगुणत्वं विधेयं तदाह—शीत इत्यादि । प्रतीकारोऽत्र कालगुणविपरीतक्रिया, तत्र यथा "अग्नि कर्म सर्वर्तुषु कुर्यादन्यत्र शरद्ग्रीष्माभ्याम्" ( सू. अ. १२ ) इत्युक्तं, तत्राप्यात्ययिके व्याधावुष्णप्रतीकारं शीतगृहशीतवातादिना कृत्वाऽग्निक्रिया कर्तव्या, एवं शीतप्रतीकारेऽपि बोद्धव्यं, वर्षप्रतीकारस्तु शीतप्रतीकारेणैव लब्धः; एवं स्नेहपानवमनादावपि बोद्धव्यम् । अथ स्थित्वाऽननुगुणकालप्राप्तावेव कस्मात् क्रिया न क्रियत इत्याह—क्रियाकालं न हापयेत् ॥ २१ ॥

**अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया ॥**
**क्रिया हीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति ॥ २२ ॥**
**या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च ॥**
**सा क्रिया, न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥ २३ ॥**

क्रियाकालहानौ दोषमाह—अप्राप्ते इत्यादि । अप्राप्ते क्रियाकाले क्रियाकरणं, प्राप्तक्रियाकालातिक्रमो वा, द्वितयमपीदं क्रियाकालप्रणयनं; तत्राप्राप्ते क्रियाकाले क्रियाविधानं यथा—वसन्त एवानुदीर्णे कफे वमनं, तथाऽऽमज्वरे भेषजविधानमित्यादि; प्राप्ते काले क्रियाया अकरणं प्राप्तकालातिक्रमेण करणात् तथा सर्वथा अकरणाच्च ज्ञेयम् ।

१ अयं पाठो हस्तलिखितपुस्तके न पठ्यते ।

क्रियाया असिद्धिप्रसङ्गेन अन्यथाऽपि क्रियाया असिद्धिताहेतुमाह—क्रिया हीनाऽतिरिक्ता वेत्यादि। यात्युदीर्णं शमयतीत्यादि केचित् पठन्ति। अत्रार्थे **चरकः** "प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत्। नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत्" ( च. नि. अ. ८ ) इति ॥ २२ ॥ २३ ॥

**प्रागभिहितोऽग्निरन्नाभिपाचकः। स चतुर्विधो भवति-दोषाभिपन्नो विक्रियामापन्नश्च त्रिविधो भवति-विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा; चतुर्थः समः सर्वसाम्यादिति। तत्र, यो यथाकालमुपयुक्तमन्नं सम्यक् पचति स समः, समैर्दोषैः; यः कदाचित् सम्यक् पचति, कदाचिदाध्मानशूलोदावर्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा, स विषमः; यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्धमानोऽत्यग्निरित्याभाष्यते, स मुहुर्मुहुः प्रभूतमप्युपयुक्तमन्नमाशुतरं पचति, पाकान्ते च गलताल्वोष्ठशोषदाहसंतापाञ्जनयति; यस्त्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति, स मन्दः ॥ २४ ॥**

क्रमागताग्निपरीक्षामाह—प्रागित्यादि। प्रागिति व्रणप्रश्ने "तत्र जिज्ञास्यं" ( सू. अ. २१ ) इत्यादिना पञ्चप्रकारो भ्राजकादिभेदेनोक्तः, तेषु परीक्षोपयुक्तं कथितत्वेनाह—अन्नाभिपाचक इति। चतुर्विध इति समो विषमस्तीक्ष्णो मन्द इति भेदात्। तत्राग्निप्रकारत्रयं दुष्टत्वेन तुल्यतया दर्शयन्नाह—दोषेत्यादि। दोषाभिपन्न इत्येतावदुच्यमाने वातादिप्रकृत्यग्नीनामपि मनाग्दुष्टानां ग्रहणं स्यादित्याह—विक्रियामापन्नश्चेति। दोषाभिपन्नत्वेनैव विक्रियापत्तौ लब्धायां यत्पुनर्विक्रियामापन्नश्चेति करोति तेन प्रतिकर्तव्यामाविर्भूतविक्रियापन्नतां दर्शयति। तेन प्राकृताग्निविक्रिया अन्या सर्वथाऽप्रतिकार्या च निरस्यते। किंवा दोषाभिपन्नत्वेनान्योन्याश्रिता[1] दुष्टिस्त्रिधा गृह्यते, विक्रियामापन्नश्चेत्यनेन चागन्तुकी वह्निदुष्टिरुच्यते। उक्तं हि **चरके**—"वातप्रकृतेर्वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः" ( च. वि. अ. ६ ) इति। त्रिविधत्वमवान्तरोक्तत्वादाह—विषमो वातेनेत्यादि। चरके यद्यपि पित्तेन मन्दत्वमपि प्रतिपादितं "कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम्। आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" ( च. चि. अ. १५ ) इति, तथाऽपीह कटुतिक्तस्य पित्तस्यानम्लस्य स्वीकारात् पित्तेन तीक्ष्णत्वमेवोक्तं; यदम्लं पित्तं विदग्धं स्निग्धोष्णसंभूतं तस्य द्रवांश एव मान्द्यकारक इति पित्तजन्यता नेहोक्ता। चतुर्विध इत्युद्देशे प्रशस्ततया प्रधानं सममेवाग्निं प्रथमं लक्षयति—तत्र यो यथेत्यादि। विषमे कदाचित् सम्यग्वा पाको वायोर्विषमकारित्वादेव भवति। तीक्ष्णत्वं तु वह्नेर्द्विविधं तीक्ष्णतीक्ष्णतरभेदेन। तत्र स एवाभिवर्धमान इत्यादिना तीक्ष्णतरस्या-

---

१ 'दोषाभिपन्नत्वेनाप्राकृती' इति **सु.**।

त्यग्न्यादिशब्दवाच्यस्य कथनम् । पाकान्त इत्युपयुक्तान्नपाकान्ते । ( सौम्यांश्च भावानिति आप्यान् पैच्छिल्यक्लेदमाधुर्यादीन् । द्रवोपेतमित्यादिना अत्यग्निप्रतीकारार्थमुपयुक्तमन्नं पुनर्दर्शयति । अन्ये तु द्रवोपेतमित्यादिना तीक्ष्णतमोऽग्निरुच्यते; तेन तीक्ष्णः, तीक्ष्णतरः, तीक्ष्णतम इति त्रिविधोऽत्राग्निरुच्यत इति व्याख्यानयन्ति । भस्मीकृत्येति सारमलविभागं विना दग्ध्वेत्यर्थः । धातुगुणानिति रसादीनां देहधारकान् गुणान् । महाभ्रंशो मरणं, तं करोतीति महाभ्रंशकरः; किंवा महतां प्राणानां भ्रंशकरः; किंवा महच्छब्देन हृदयमुच्यते, यदुच्यते **चरके**—"महच्चार्थश्च हृदयं पर्यायैरुच्यते बुधैः" ( च. सू. अ. ३० ) इति । मूर्च्छाकारित्वात् मूर्च्छक इति संज्ञा ) । यस्त्वित्यादिना मन्दलक्षणम् । महता कालेनेति उचितपाककालातिक्रमेण ॥ २४ ॥

**विषमो वातजान् रोगांस्तीक्ष्णः पित्तनिमित्तजान् ।**
**करोत्यग्निस्तथा मन्दो विकारान् कफसंभवान् ॥ २५ ॥**

विषमादीनां लक्षणान्तराणि चिकित्सोपयुक्तान्याह—विषम इत्यादि । पित्तमेव निमित्तमित्यर्थः ॥ २५ ॥

**तत्र, समे परिरक्षणं कुर्वीत; विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्वीत; तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च; एवमेवात्यग्नौ, विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिः; मन्दे कटुतिक्तकषायैर्वमनैश्च ॥ २६ ॥**

अग्निसमल(र)क्षणोपदेशपूर्वकं चिकित्सासूत्रमाह—तत्र सम इत्यादि । अत्र समरक्षणं सुस्थवृत्तानुष्ठानेन । क्रियाविशेषा इह आहारौषधरूपाः । विरेचनैश्चेति बहुपित्तविषयं, संशोधनस्य[2] बहुपित्तविषयत्वात् । एवमेवेति मधुरादिभिः । अत्यग्नाविति भस्मकाख्ये ॥ २६ ॥

**औदर्यो भगवानग्निरीश्वरोऽन्नस्य पाचकः ॥**
**सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥ २७ ॥**

संप्रत्यग्नेः प्रत्यक्षानुपलभ्यस्य प्रमाणान्तरेण स्वरूपं दर्शयन्नाह—औदर्य इत्यादि । उदरे भव औदर्यः । भगवानिति च ईश्वर इति च शब्दाभ्यां देवतारूपत्वमस्य दर्श्यते । अन्नस्य पाचक इत्यनेनान्नपाकेन कार्येण लक्ष्यते प्रत्यक्षानुपलभ्यमानोऽपीति दर्श्यते । देवतारूपतादर्शनेन च बाह्याग्निविलक्षणरसमलविवेकात् प्राणधारणकार्यकर्तृत्वमस्योपपन्नमिति दर्श्यते । एवंभूतदेवतारूपस्याग्नेर्मान्द्यादिजननं दुःखजनकप्राण्यधर्मादेव भवति, यतो देवता अपि धर्माधर्मरूपकर्मपराधीना इति । अथ कस्माद्विवेकाग्निर्नोपलभ्यत इत्याह—सौक्ष्म्यादित्यादि । सूक्ष्मत्वमिहानुद्भूतरूपत्वमनुक्षणदाहकत्वं[3] च दृष्टमेव[4]

---

१ कोष्ठस्थव्याख्यानुसारी चक्रसंमतः पाठस्ताडपत्रपुस्तकेऽनुपलब्धत्वान्न मूले सन्निवेशितः ।
२ 'अत्यग्नेश्च' इति ह. । ३ 'अन्नदाहकत्वं' इति ह. । ४ 'दृष्टकृतमेव' इति ह. ।

ज्ञेयम् । रसानाददान इति रसमलविवेकार्थमन्नरसान् गृह्णन्नित्यर्थः । रसशब्देन लक्षणया रसाधारं द्रव्यमन्नपानरूपमुच्यते । विवेक्तुमिति रुधिरादिगततया ग्रहीतुम् ॥ २७ ॥

**प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः ॥**
**ध्मायते पाल्यते चापि स्वां स्वां गतिमवस्थितैः ॥ २८ ॥**

अग्नेः स्वकार्यकरणे पवनसहायमाह—प्राणापानेत्यादि । अत्र प्राणापानाभ्यां प्रविशत्तिष्ठद्भ्यां वह्नेरुद्दीपनं भस्त्राध्मापनेनेव क्रियते, तदेतद् 'ध्याप्यते' इत्यनेनोक्तं; समानेन तु वह्निपार्श्ववर्तिना पालनं क्रियते । तदुक्तं—"समानोऽग्निसहायवान्" (नि. अ. १) इति । **चरके**ऽपि—"समानेनावधूतोऽग्निः" ( च. चि. अ. १५ ) इत्युक्तम् । सर्वत इति सर्वमग्निस्थानं व्याप्य । स्वां स्वां गतिमवस्थितैरिति अविकृतैरित्यर्थः । ( अग्नेः प्राधान्यं दर्शयन्नाह—युक्तेत्यादि । अत्रैवार्थे चरकः—"शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः । रोगी स्यात् विकृते, मूलमग्निस्तस्मान्निरुच्यते" ( च. चि. अ. १५ ) इति । मनाक्तीक्ष्णाग्निप्रशंसामाह—अतिमात्रमित्यादि । समश्नुत इति पथ्यापथ्यसहितं भुञ्जानस्य । दिवा चेति चकाराद्रात्रौ च जाग्रत इति लभ्यते ) ॥ २८ ॥

**वयस्तु त्रिविधं—बाल्यं, मध्यं, वृद्धमिति । तत्रोनषोडशवर्षीया बालाः । ते त्रिविधाः—क्षीरपाः, क्षीरान्नादा, अन्नादा इति । तेषु संवत्सरपराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतोऽन्नादा इति । षोडशसप्तत्योरन्तरे मध्यं वयः । तस्य विकल्पो—वृद्धिः, यौवनं, संपूर्णता, परिहाणिरिति । तत्र, आविंशतेर्वृद्धिः, आत्रिंशतो यौवनम्, आचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यसंपूर्णता, अत ऊर्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति । सप्ततेरूर्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते ॥ २९ ॥**

क्रमागतां वयःपरीक्षामाह—वय इत्यादि । द्विसंवत्सरपराः क्षीरान्नादा इति प्रायस्तथा दर्शनात्; तेन द्विवर्षादूर्ध्वं क्षीरान्नादत्वं भवति । अत्र सप्ततिं यावन्मध्यं वयः; **चरके**ऽपि षष्टिवर्षपर्यन्तमुक्तं, षष्टिवर्षादूर्ध्वं हानिप्रकर्षविवक्षया; इह तु तन्न विवक्षितमित्यदूरार्थता । यौवनमिति 'यु'मिश्रणे, इत्यस्माद्रूपं; तेन पूर्वाया वृद्धेस्तथा परायाश्च पूर्णताया मिश्रणं यौवनं ज्ञेयम् । यौवने मनाग्वर्धमानता, पूर्णतायां तु ताद्रूप्येणावस्थानं ज्ञेयम् । अत ऊर्ध्वमीषद्धानिः ॥ २९ ॥

**तत्रोत्तरोत्तरासु वयोवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्ति, ऋते च परिहाणेः; तत्राद्यापेक्षया प्रतिकुर्वीत ॥ ३० ॥**

---

१ कोष्ठस्थव्याख्यानुसारी चक्रसंमतपाठोऽनुपलब्धत्वान्न मूले सन्निवेशितः ।

वयोऽवस्थाभेदोपदर्शनफलमाह—तत्रोत्तरोत्तराखित्यादि । भेषजमात्राविशेषास्तन्त्रान्तरोक्ता यथा—"प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका" इत्यादि । उत्तरोत्तरा इति उत्तरोत्तरं वर्धमानाः । ऋते परिहाणेरिति सप्तर्ति विना । परितः सर्वतो धात्विन्द्रियबलादेर्हानिः परिहाणिः । ईषद्धानौ तु आचत्वारिंशतः पूर्वैव मात्रा कर्तव्या । अथ वृद्धे परिहाणिलक्षिते का भेषजमात्रेत्याह—तत्राद्यापेक्षयेति ।—आद्यं बाल्यं, तदपेक्षया भेषजमात्रा क्रमेण हीनमात्रा कर्तव्येत्यर्थः । 'अन्यापेक्षया' इति पाठपक्षेऽपि अन्यद् बाल्यमिति स एवार्थः ॥ ३० ॥

**भवन्ति चात्र—**

**बाले विवर्धते श्लेष्मा मध्यमे पित्तमेव तु ॥**
**भूयिष्ठं वर्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥ ३१ ॥**

दोषविशेषवृद्धमपि वयोवस्थालक्षणीयमाह—बाले इत्यादि ॥ ३१ ॥

**अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत् ॥**
**तत्साध्येषु विकारेषु मृद्वीं कुर्यात् क्रियां शनैः ॥ ३२ ॥**

वयोज्ञानफलं क्रियाविशेषेऽप्याह—अग्नीत्यादि । विरेकोऽत्र मलविरेचनतया वमनविरेचने । यदुक्तं **चरके**—"उभयं वा दोषमलविरेचनाद्विरेचनसंज्ञां लभते" ( च. क. अ. १ ) इति । तत्साध्येष्विति अग्न्यादिसाध्येषु । मृद्वीमिति अतीव्रां, तीव्रत्वेनाग्न्यादिक्रिया न कर्तव्यैव तावत्; तदेकसाध्ये तु अजापुरीषादिमृद्वाश्रयतया मृद्वग्निरपि[1] विधेयः, तथा क्षारोऽपि आवापप्रतीवापशून्यतया मृदुः कार्यः, विरेचनादि चतुरङ्गुलादिकृतं मृदु विधेयमित्याद्यनुसरणीयम् । शनैरिति मन्दम्; एतदपि बालवृद्धयोर्वेदनासहत्वप्रतीकारार्थं ज्ञेयम् ॥ ३२ ॥

**देहः स्थूलः, कृशो, मध्य, इति प्रागभिहितः ॥ ३३ ॥**

क्रमागतां देहपरीक्षामाह—देह इत्यादि । प्रागभिहित इति "रसनिमित्तमेव स्थौल्यं" ( सू. अ. १५ ) इत्यादिना दोषधातुमलक्षयवृद्धिविज्ञानीये ॥ ३३ ॥

**कर्शयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ ॥**
**रक्षणं चैव मध्यस्य कुर्वीत सततं भिषक् ॥ ३४ ॥**

देहविशेषविज्ञानानुष्ठेयमाह—कर्शयेदित्यादि ॥ ३४ ॥

**बलमभिहितगुणं; दौर्बल्यं तु स्वभावदोषजरादिभिरवेक्षितव्यम् । यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् ॥ ३५ ॥**

---

१ 'मृद्वग्निरेव' इति मु. ।

बलपरीक्षायामभिहितगुणमिति उक्तप्रशस्तधर्मकत्वं; गुणशब्दोऽत्र प्रशस्तधर्मवाची, तच्च "तत्र बलेन स्थिरोपचितमांसता" ( सू. अ. १५ ) इत्यादिनोक्तमनुसर्तव्यम् । बलभेदत्वादेव कारणभेदेन दौर्बल्यं निर्दिशन्नाह—दौर्बल्यं त्वित्यादि । दौर्बल्यं बलमेव क्षीणमुच्यते । स्वभावादेव कश्चिन्मातृपितृबीजदोषाद्दैवाद्वा दुर्बलो भवति, कश्चिद्दोषैः क्षयितधातुगुणतया च दुर्बलो भवति, जरया वार्धक्येन वा दौर्बल्यं भवति । आदिशब्दात् कालादीनां ग्रहणं; यदुक्तं—"आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम्" ( च. सू. अ. ५ ) इति । 'आपेक्षिकं च' इति केचित् पठन्ति व्याख्यानयन्ति च—मध्यमपेक्ष्य बालो वृद्धश्च दुर्बल इत्यादिकमपेक्षाकृतं दौर्बल्यम् । तच्च वयोगृहीतमेवेत्यत्रानुसर्तव्यम् । सबलं स्तौति—यस्मादित्यादि । क्रियाप्रतिपत्तिः क्रियासिद्धिः । चरकेऽप्युक्तं—"बलाधिष्ठानमारोग्यं" ( च. चि. अ. ३ ) इति । आरोग्याधिष्ठानानां शरीराग्निबलादीनां मध्ये एतच्च प्रकरणे प्राधान्यख्यापनं तन्त्रधर्मः, तेन वह्नेरपि स्वविषये स्तुतिर्न विरुध्यते ॥ ३५ ॥

**केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः ॥**
**तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत् ॥ ३६ ॥**

तच्च बलं व्यायामादिशक्त्या परीक्षणीयमित्याह—केचिदित्यादि । स्थिरत्वमभिघातादिभिरविचाल्यत्वं; केचित् स्थिरत्वमिति व्यस्तं पठन्ति । अत्र स्थैर्यलक्षणं बलं स्थिरत्वमिति वदन्ति ॥ ३६ ॥

**सत्त्वं तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम्[1] ॥ ३७ ॥**

क्रमागतसत्त्वपरीक्षायां सत्त्वं सत्त्वगुणो मनोगतः, तदुत्कर्षान्मनो बलवद्भवति । व्यसनं दुःखागमः, अभ्युदयः सुखागमः; क्रिया कारणं, स्थानं हेतुः; तेन व्यसनाभ्युदयक्रियास्थानेष्विति दुःखसुखोत्पादहेतुषु प्रबलशत्रुसमागमपुत्रोत्पत्तिश्रवणादिषु यदविक्लवः अविकृतत्त्वं, ततो दुःखसुखहेतौ निर्भयविकारशून्यता अविक्लवः । अवैकल्यकरमिति पाठपक्षेऽपि अयमेवार्थ उन्नेयः ॥ ३७ ॥

**सत्त्ववान् सहते सर्वं संस्तभ्यात्मानमात्मना ॥**
**राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ॥ ३८ ॥**

इममेवार्थं सविपर्ययं श्लोकेनाह—सत्त्ववानित्यादि । सर्वमिति दुःखसुखहेतुम् । संस्तभ्येति मनसो विकारोदयप्रतिबन्धं कृत्वा । उत्तमबलत्वान्मनसः सात्त्विक आत्मनैवात्मानं संस्तभ्य पीडादिदुःखं सहते । राजसस्तु मध्यबलत्वान्मनसः परैः स्तभ्यमानः पीडादि सहते । तामस इति तामसो नात्मना परेण वा स्तभ्यमानोऽपि पीडां सहत इत्यर्थः ॥ ३८ ॥

**प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः ॥ ३९ ॥**

---

१ 'अविकम्पकरम्' इति ता. ।

प्रकृतिमित्यादौ प्रकृतिः शारीरे, तद्यथा—"सप्त प्रकृतयः" (शा. अ. ४) इत्यादिना वक्तव्याः। भेषजं भूमिप्रविभागीये "सौम्यानि औषधानि" (सू. अ. ३६) इत्यादिना वक्तव्यम् ॥ ३९ ॥

**सात्म्यानि तु देशजातिरोगर्तुव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति ॥ ४० ॥**

क्रमागतां सात्म्यपरीक्षामाह—सात्म्यानीत्यादि। तत्र सात्म्यं नाम यदुपशेते सुखं करोतीत्यर्थः। उक्तं हि **चरके**—"सात्म्यार्थो ह्युपशयार्थः" (च. वि. अ. १) इति। तथा "यो रसः कल्पते यस्य सुखित्वाय निषेवितः" इत्यनन्तरमेवोक्तम्। सुखं चेहारोग्यं, यदुक्तं—"सुखसंज्ञकमारोग्यं विकारो दुःखमेव च" (च. सू. अ. ९) इति। तच्चारोग्यरूपं सुखं स्वस्थे अनागताबाधप्रतिषेधेन, तथा व्याधिते व्याध्यपनयनेन सात्म्येन क्रियते। यदपि च—"यत् प्रयाति सहात्मताम्" इति सात्म्यलक्षणं, तदप्येवम्भूतार्थमेव, येनात्मरूपताऽप्यविकारितैव। तच्च सात्म्यं संक्षेपतः पञ्चप्रकारं; यथा—देशसात्म्यं, जातिसात्म्यं, रोगसात्म्यम्, ऋतुसात्म्यम्, ओकसात्म्यं चेति। तत्र देशसात्म्यादीनि चत्वारि कण्ठोक्तान्येव; ओकसात्म्यानि "प्रकृतिविरुद्धान्यपि यान्यबाधकराणि" इत्यनेनोक्तानि। अत्र हि अभ्यासादबाधकराणीत्यर्थाल्लभ्यते, यथा विरुद्धान्यप्यभ्यासादेव परमनाबाधकराणि भवन्ति। एतत्सात्म्यं **चरके** प्रोक्तम्—"उपशेते यदौचित्यादोकसात्म्यं तदुच्यते" (च. सू. अ. ६) इति। व्यायामो देहचेष्टा। रसेन रसद्वारोपयुज्यमानं सर्वद्रव्यं गृह्यते, प्रभृतिग्रहणेन सर्वानुक्तग्रहणम्। प्रकृतिविरुद्धानीति स्वभावविरुद्धानि, अपि शब्दात् संयोगादिविरुद्धानि चानभ्यस्तानि गृह्यन्ते। अविरुद्धमपि हि अक्रमोपयुक्तमपथ्यं भवति। यदुक्तं **चरके**—"हितं क्रमेण सेवेत" (च. सू. अ. ७) इति। तत्र देशसात्म्यं व्यायामादि यद्देशगुणविपरीतं; यथा—अनूपे शीतस्निग्धे उष्णरूक्षमन्नं चेष्टितं च, तद्विपरीतं जाङ्गले ज्ञेयम्। उक्तं हि **चरके**—"देशानामामयानां च विपरीतगुणं गुणैः। सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च (च. सू. अ. ६) इति। अन्ये तु देशशब्देन देशस्थानामपि ग्रहणात् तद्देशस्थसात्म्यमपि देशसात्म्यं ग्राहयन्ति। यथा—"बाह्लीकाः पह्लवाश्चीनाः शूलिका यवनाः खशाः। मांसमाध्वीकगोधूमशस्त्रवैश्वानरोचिताः" (च. चि. अ. ३०) इति। एतच्च यदि देशगुणविपरीतं न भवति तदोकसात्म्ये प्रविष्टमेवेति पश्यामः। यदुक्तम्—"औचित्याद्यस्य यत् सात्म्यं देशस्य पुरुषस्य च" (च. चि. अ. ३०) इति। औचित्याद्देशसात्म्यं तद्देशपुरुषाणामेव भवति। जातिसात्म्यमिह मनुष्यजातिसात्म्यं दुग्धशालिघृतान्तरीक्षजलादि। उचितव्यायामरात्रिस्वप्नादि कृत्स्नशरीरसात्म्यम्, अवयवसात्म्यं च चक्षुष्यकण्ठ्यादि गृह्यते; एतच्चात्र स्वभावसात्म्यादिशब्दवाच्यम्। रोगसात्म्यं तु प्रतिरोगमभिधातव्यं व्याधिहितमन्नौषधादिसात्म्यं; सुस्थवृत्तेऽपि वक्ष्यति "यस्मिन् यस्मिन्नृतौ यो यो दोषः कुप्यति देहिनाम्। तेषु तेषु प्रदातव्या

रसास्ते ते विजानता" ( चि. अ. २४ ) इत्यादि । वातादिप्रकृतिसात्म्यं तु रोग एव प्रविशति, "वातलाद्याः सदातुरा" ( च. सू. अ. ९ ) इति वचनात् ॥ ४० ॥

**यो रसः कल्पते यस्य सुखित्वाय निषेवितः ॥**
**व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत् ॥ ४१ ॥**

सकलसात्म्यव्यापकं सूत्रमाह—यो रस इत्यादि । रसशब्देन रसद्वारोपयुज्यमानं सर्वद्रव्यं गृह्यते । सुखित्वायेति अरोगित्वाय; सुखत्वायेति पाठपक्षे सुखयोगात् सुखं शारीरं तस्य भावः; उच्यते हि—"यस्य गुणस्य हि योगाद्भावशब्दस्तथा तदभिधाने त्वतलौ" इति । व्यायामजातं व्यायामसमूहः । अन्ये त्वत्र "देशजातिरोगर्तुव्यायामोदक" इत्यादि पठन्ति, तन्मते देशजातिरोगर्तुव्यायामादय इति यथाकथंचित् समासवर्णनं कृत्वा पूर्वव्याख्यात एवार्थो नेयः ॥ ४१ ॥

**देशस्त्वानूपो, जाङ्गलः, साधारण इति त्रिविधो भवति । तत्र, बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः; आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः, उभयदेशलक्षणः साधारण इति ॥ ४२ ॥**

परिशिष्टां देशपरीक्षामाह—देशस्त्वित्यादि । तत्र बहूदकेत्यादौ बहुशब्द उदकादिभिर्गहनान्तैः प्रत्येकमभिसंबध्यते । गहनं वनम् । बहवो महान्तो वृक्षाः पर्वताश्च यस्मिन् स तथा । आकाशसम इति आवरकभूमिवृक्षशून्यतया तथा निम्नोन्नताभावेन च । प्रविरला अल्पाः कण्टकिनो वृक्षाः यस्मिन् स तथा । प्रस्रवणं निर्झरम् । उदपानं प्रस्रवणरन्ध्रं कृततडागसंज्ञम् । उभयलक्षण इति साधारणशीतोष्णवर्षतया तथा साधारणस्वल्पोदकानिम्नोन्नतादितया च ज्ञेयः ॥ ४२ ॥

**भवन्ति चात्र—**

**समाः साधारणे यस्माच्छीतवर्षोष्ममारुताः ॥**
**दोषाणां समता तेन तस्मात् साधारणो मतः[1] ॥ ४३ ॥**

त्रिविधदेशे सोपपत्तिकं साधारणस्य श्रेष्ठत्वमाह—समा इत्यादि । दोषाणां समता तेनेति साधारणाः शीतादयो दोषसाम्यहेतवो यस्मात्; तेन कारणाधीना दोषसमता साधारणे देशे भवति । अतश्चरकः—"श्रेष्ठः साधारणो देशः" ॥ ४३ ॥

**न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः ।**
**स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः ॥ ४४ ॥**

१ 'वरः' इति ता. ।

इदानीमनुगुणदेशजरोगस्य तद्विगुणदेशसंबन्धे चिकित्सितमाह—न तथेत्यादि। जलजा इति जलोपलक्षितानूपदेशजाः। स्थलाहृता इति स्थललक्षितजाङ्गलदेशजा(नी)ताः, वाशब्देन स्थलजा वा जलाहृता इति विपरीतगुणं दर्शयति। तत्रोदाहरणं यथा—अनूपदेशजं श्लीपदं जाङ्गलदेशजं(गतं) सन्महच्छ्लीपदं न भवति, आनूपगुणविपरीतजाङ्गलदेशगुणैस्तथा तद्देशीयाहाराचारैश्चानूपविपरीतैः प्रतिबाध्यमानत्वादिति भावः। न केवलं व्याधय एव परं विरुद्धदेशगता दुर्बला भवन्ति, किं तु दोषा अपि विरुद्धदेशप्राप्तिकुपिता न बलवन्त इत्याह—स्वदेशे इत्यादि। स्वदेशे इत्यनुगुणे देशे; यथा—अनूपोचितः कफः; अन्यस्मिन्निति तद्विरुद्धे जाङ्गले प्रकुपितः; एवं पित्तवातयोरप्युदाहार्यम्॥ ४४॥

**उचिते वर्तमानस्य नास्ति देशकृतं भयम्॥**
**आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति॥ ४५॥**

इदानीं देशसंबन्धस्य दुष्परिहारतया तज्जन्यरोगशङ्कायां देशसात्म्यसेवया अभयं दर्शयन्नाह—उचित इत्यादि। उचित इति देशगुणविपरीतसात्म्याहारस्वप्नचेष्टादौ वर्तमानस्य। उचितत्वमेव स्फोरयति—तद्देशस्य गुणे सतीति; तद्देशस्य विपरीतगुणे आहारादौ सतीत्यर्थः। देशकृतं भयमिति देशगुणजन्यमानरोगभयं; किंवा आहारस्वप्नचेष्टादौ व्यवस्थितगुणे तद्देशस्योचिते सतीति योजना, तथाऽपि स एवार्थः; यदि पुनराहारादावनुचिते वर्तते तदा भवत्येव भयमित्यर्थः॥ ४५॥

**देशप्रकृतिसात्म्यर्तुविपरीतोऽचिरोत्थितः॥**
**संपत्तौ भिषगादीनां बलसत्त्वायुषां तथा॥ ४६॥**
**केवलः समदेहाग्नेः सुखसाध्यतमो गदः॥**
**अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः॥ ४७॥**

इदानीमुक्तातुरादिपरीक्षाज्ञेयं[1] साध्यादिभेदलक्षणमाह—देशेत्यादि। विपरीतशब्दो देशादिभिः प्रत्येकमभिसंबध्यते। देशेन चातुरावरोधकेन दूष्यमपि गृह्यते। वचनं हि—"देशो भूमिरातुरश्च" (च. वि. अ. ८)। तथेति बलसत्त्वायुषां च संपत्तौ। केवल इति निरुपद्रव एकदोषश्च। समाग्नित्वमिह अभ्युपघातजग्रहणीदोषादीन् त्यक्त्वा ज्ञेयम्। यद्यपि—"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इत्युक्तं, तथाऽप्युत्सर्गवादोऽयमपवादविषयं परित्यज्य ज्ञेयः। अतोऽन्यथेति यथोक्तलक्षणानां वैपरीत्ये सतीति॥ ४६॥ ४७॥

**क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्॥**
**पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः॥ ४८॥**

आतुरे साध्यासाध्यताज्ञाने सत्युपक्रमरूपा क्रिया कर्तव्या; अतः क्रिया यथा कर्तव्या तदाह—क्रियायास्त्वित्यादि। गुणालाभ इति साध्यफलालाभे। पूर्वस्यां शान्तायामिति

१ 'उक्तानुवादि परीक्षाज्ञेयं' इति ह.।

वक्तव्ये यत् शान्तवेगायामिति करोति तेन दिनविश्रामं दर्शयति । सङ्करः क्रियामेलकः । अयं च पूर्वक्रियाविरुद्धगुणतया तथा पूर्वक्रियया सहातिमात्रतया अग्निवधादिहेतुत्वेन चाभिहित इति ज्ञेयम् ॥ ४८ ॥

**गुंणालाभेऽपि सपदि यदि सैव क्रिया हिता ॥**
**कर्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि ॥ ४९ ॥**
**य एवमेनं विधिमेकरूपं बिभर्ति कालादिवशेन धीमान् ॥**
**स मृत्युपाशाञ्जगतो गदौघाञ्छिनत्ति भैषज्यपरश्वधेन ॥ ५० ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने आतुरोपक्रमणीयो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥**

अथ क्रियमाणक्रियया स्तोकगुणलाभे कर्तव्यमाह—गुणलाभेऽपि कर्तव्येत्यादि । विश्रामान्तरितेति सप्ताहादूर्ध्वं विश्रामान्तरिता सैव क्रिया कर्तव्या । किं क्रमेण कर्तव्येत्याह—सैवेत्यादि । अन्यथेत्यविश्रामिता सती क्रियमाणा यस्मात् पूर्ववदग्निवधं कृत्वा संकराद्भयं 'जनयति' इति शेषः । 'गुणालाभे' इति पाठपक्षेऽपि नञ ईषदर्थेन ईषल्लाभे इत्यर्थः । सप्ताहकृता हि क्रिया सात्म्या भवति । तेन नाविश्रामेण क्रियमाणा गुणं जनयति, प्रत्युताग्निवधारोचकादीनेव जनयतीत्यत्र संकरार्थ इत्यर्थः । अयं च व्यवहारो ज्वरादौ क्रियमाणकषायपानादिविषय एव, तेन चिरक्रियमाणरसायनादौ न विरोधः । सम्यगित्यादि वैद्यभेदकदर्शकं ग्रन्थं केचित् पठन्ति, स च सुगमः ॥ ४९ ॥ ५० ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने आतुरोपक्रमणीयो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशत्तमोऽध्यायः ।

**अथातो मिश्रकमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायोक्तविधिपरीक्षितस्य रोगिणश्चिकित्सा कर्तव्या; तत्र चैतत्तन्त्रे व्रणिनः प्राधान्याद्व्रणचिकित्सामेव विम्लापन-पाटन-दारणादिकां मिश्रीकृत्य द्रव्यैस्तैस्तैर्मातुलुङ्गादिभिरभिधातुं मिश्रकोऽभिधीयते । अत्रौषधानां मिश्रीकृत्य गणरूपतयाऽभिधानान्मिश्रकसंज्ञा । यद्यपि च व्रणस्य षष्टिरूपतया चिकित्साऽभिधातव्या चिकित्सिते, तथाऽपीह यथाप्रधानविवक्षया विम्लापन-पाचन-दारण-पीडन-शोधन-रोपणावसादनोत्सादनात्मका अष्टावेवाभिधातव्याः । इमं चाध्यायमन्ये भूमिप्रविभागीयानन्तरं व्याख्यानयन्ति, तच्चोद्देशक्रमविरुद्धमिति नाद्रियामहे ॥ १ ॥ २ ॥

**मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम् ॥**

---

१ 'गुणलाभेऽपि कर्तव्या यदि सैव क्रिया हिता । विश्रामान्तरिता••• अन्यथा सङ्कराद्भयम् ।।" इति चक्रपाणिसंमतः पाठः स्यात् ।

अहिंस्रा चैव रास्ना च प्रलेपो वातशोफजित् ॥ ३ ॥
दूर्वा च नलमूलं च मधुकं चन्दनं तथा ॥
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोफहृत् ॥ ४ ॥
आगन्तुजे रक्तजे च ह्येष एव विधिः स्मृतः ॥
विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा ॥ ५ ॥
अजगन्धाऽश्वगन्धा च काला सरलया सह ॥
एकैषिकाऽजशृङ्गी च प्रलेपः श्लेष्मशोफहृत् ॥ ६ ॥
एते गणास्त्रयो लोध्रं पथ्या पिण्डीतकत्रयम् ॥
अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत् ॥ ७ ॥
स्निग्धाम्ललवणो वाते कोष्णः, शीतः पयोयुतः ॥
पित्ते, चोष्णः कफे क्षारमूत्राढ्यस्तत्प्रशान्तये ॥ ८ ॥

मातुलुङ्गेत्यादौ अहिंस्रा काकोलिः । शीतला गणा इति काकोल्याद्युत्पलादिन्यग्रोधाद्या वक्ष्यमाणाः । आगन्तुरक्तजयोरपि पित्तप्रधानतया आगन्तुज इत्यादिना अतिदेश उक्तः । उक्तं हि—"पित्तवच्छोणितजोऽतिकृष्णश्च" ( सू. अ. १७ ) इति । आगन्तुजेऽप्यादितः पित्तक्षोभाद्दूष्याभिवृद्धौ पित्तहरं लेपनं युक्तमेव पाकप्रतिबन्धार्थम् । विषजे त्वागन्तुविशेषे वक्ष्यमाणचिकित्सासहितां पित्तचिकित्सामाह—विधिरित्यादि । विषघ्नो विधिः कल्पे वक्ष्यमाणः । अजगन्धा छगलगन्धा, अन्ये यवानिकामाहुः । अजशृङ्गी कर्कटशृङ्गी, काला अहिंस्रा, एकेषिका त्रिवृत् । पिण्डीतकत्रयमिति मदनत्रयम्, एतत् शुक्ल-कृष्ण-पीतपुष्प-भेदात्त्रयं ज्ञेयम् । एते पूर्वत्र कीर्तिताः वातपित्तकफहरत्वेन मातुलुङ्गेत्यादिना गणास्त्रय उक्ताः । स्निग्धाम्लेत्यादिना दोषभेदेनावचारणे कल्पनाविशेषान् यौगिकानाह । संनिपातजे व्रणशोथेऽविरुद्धकल्पनामेलके पर्यायेण वातादिकल्पना कर्तव्येति ज्ञेयम् ॥ ३–८ ॥

शणमूलकशिग्रूणां फलानि तिलसर्षपाः ॥
सक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥ ९ ॥

शणेत्यादिना व्रणशोथपाचनमाह । अतसी 'तिसी' इति ख्याता । किण्वं सुराबीजम् । उष्णानि द्रव्याणीति अगुरुकुष्ठादीन्युष्णवीर्याणि । अत्र सक्तवो यद्यपि शीतास्तथाऽपि द्रव्यान्तरसंयोगाद्व्रणपाचना भवन्ति । यथा भेले प्रोक्तं—"शोधयेद्रोपयेच्चैव युक्तः शोधनरोपणैः" इति । सक्तूनां च स्वतन्त्रे "दधिचुक्रसुराशुक्त" ( चि. अ. १ ) इत्यादिना संयुक्तस्यैव पाचनत्वं वक्तव्यम्; चरकेऽप्युक्तं—"सतिला सातसीबीजदध्यम्ला सक्तुपिण्डिका" ( च. चि. अ. २५ ) इति । तथा शीतत्वेऽपि सक्तूनां व्रणपाचनशक्तिराचार्यवचनादेवोन्नीयते । भवति हि विषयभेदे भिन्नशक्तित्वं, यथा—काञ्जिकस्योष्णस्यापि तत्त्वतः स्पर्शेन शीतत्वं, तथा तिलस्य कफपित्तकरस्यापि व्रणविषये त्रिदोषहरत्वं; यदुक्तं—"स माधुर्यात्तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः । कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तनुत् ॥ औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः" ( चि. अ. १ ) इति ॥ ९ ॥

चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः ॥
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ १० ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥

चिरबिल्वो बृहत्करञ्जः । अग्निको लाङ्गलकी । हयमारः करवीरः । क्षारद्रव्याणि कालमुष्ककपाटलापामार्गप्रभृतीनि । क्षारो वेत्यसुकुमारविषयं दारणं, पूर्वं तु सुकुमारविषयम् ॥ १० ॥—

द्रव्याणां पिच्छिलानां तु त्वङ्मूलानि प्रपीडनम् ॥ ११ ॥
यवगोधूममाषाणां चूर्णानि च समासतः ॥

पिच्छिलानामिति शाल्मलीशेलुत्वक्प्रभृतीनाम् । पीडनं चैतन्मर्मादिसमीपस्थसूक्ष्ममुखव्रणानाम् ॥ ११ ॥—

शङ्खिन्यङ्कोठसुमनःकरवीरसुवर्चलाः ॥ १२ ॥
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥

शोधनकषायमाह—शङ्खिनीत्यादि । शङ्खिनी श्वेतबुह्मा, सुमना जाती, सुवर्चला सूर्यावर्तः । आरग्वधादिर्वक्ष्यमाणो गणः ॥ १२ ॥—

अजगन्धाऽजशृङ्गी च गवाक्षी लाङ्गलाह्वया ॥ १३ ॥
पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः ॥
कटुत्रिकं यवक्षारो लवणानि मनःशिला ॥ १४ ॥
कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा ॥
संशोधनीनां वर्तीनां द्रव्याण्येतानि निर्दिशेत् ॥ १५ ॥

शोधनवर्तिद्रव्याण्याह—अजगन्धेत्यादि । अजगन्धा फोकान्धीति ख्याता; अजशृङ्गीं विषाणिकां केचिद्वदन्ति । गवाक्षी गोरक्षकर्कटी । हरेणुः रेणुका । सुराष्ट्रजा तुवरमृत्तिका, कर्दमरसपर्पटिकेत्यन्ये ग्राहयन्ति ॥ १३–१५ ॥

एतैरेवौषधैः कुर्यात् कल्कानपि च शोधनान् ॥

एतेष्वेव द्रव्येषु शोधनकल्कमतिदिशन्नाह—द्रव्येष्वित्यादि ॥—

अर्कोत्तमां स्नुहीक्षीरं पिष्ट्वा क्षारोत्तमानि च ॥ १६ ॥
जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम् ॥
पूर्वोद्दिष्टानि चान्यानि कुर्यात् संशोधनं घृतम् ॥ १७ ॥

शोधनं घृतमाह—अर्कोत्तमामित्यादि । अर्कः अर्कमूलं, उत्तमा त्रिफला; अन्येऽर्कोत्तमशब्देन मन्दारमाहुः । क्षारोत्तमानि क्षारद्रव्ये श्रेष्ठानि । जातिमूलस्थाने जातुकन्दं ये पठन्ति ते जातुकन्दमौत्तरापथिकगुग्गुलुकनामानं द्रव्यविशेषं वदन्ति । कासीसं धातुकासीसम् । पूर्वोद्दिष्टेषु चेति अजगन्धादिष्वनन्तरोक्तेषु ॥ १६ ॥ १७ ॥

मयूरको राजवृक्षो निम्बः कोशातकी तिलाः ॥
बृहती कण्टकारी च हरितालं मनःशिला ॥ १८ ॥
शोधनानि च योज्यानि तैले द्रव्याणि शोधने ॥

मयूरकेत्यादिना शोधनतैलमुच्यते । मयूरकः अपामार्गः । कोषातकी घोषकः । शोधनानि च यानीति पूर्वोद्दिष्टानि अजगन्धादीनि ॥ १८ ॥—

कासीसे सैन्धवे किण्वे वचायां रजनीद्वये ॥ १९ ॥
शोधनाङ्गेषु चान्येषु चूर्णं कुर्वीत शोधनम् ॥

कासीसे इत्यादौ शोधनाङ्गेषु चान्येष्वित्यनेन केचिच्छोधनद्रव्यं त्रिवृतादि मदनफलादि च व्याख्यानयन्ति । अजगन्धाद्येव तु शोधनवर्त्युक्तं व्रणयौगिकमनन्तरोक्तं चात्र युज्यते ॥ १९ ॥—

सालसारादिसारेषु पटोलत्रिफलासु च ॥ २० ॥
रसक्रिया विधातव्या शोधनी शोधनेषु च ॥

रसक्रिया क्वाथ एव घनीभूतः क्रियाकल्पेऽभिधातव्यः ॥ २० ॥—

श्रीवेष्टके सर्जरसे सरले देवदारुणि ॥ २१ ॥
सारेष्वपि च कुर्वीत मतिमान् व्रणधूपनम् ॥

श्रीवेष्टको नवनीतखोटिरिति ख्यातः । सारेष्विति सालसारादि सारेषु । धूपनमिह शोधनं ज्ञेयम् ॥ २१ ॥—

कषायाणामनुष्णानां वृक्षाणां त्वक्षु साधितः ॥ २२ ॥
शृतः शीतकषायो वा रोपणार्थं प्रशस्यते ॥
सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा ॥ २३ ॥
क्षीरिप्ररोहेष्वपि च वर्तयो रोपणाः स्मृताः ॥
समङ्गा सोमसरला सोमवल्कः सचन्दनः ॥ २४ ॥
काकोल्यादिश्च कल्कः स्यात् प्रशस्तो व्रणरोपणे ॥
पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ॥ २५ ॥
काकोल्यादिश्च योज्यः स्याद्भिषजा रोपणे घृते ॥
कालानुसार्यागुरुणी हरिद्रे देवदारु च ॥ २६ ॥
प्रियङ्गवश्च रोध्रं च तैले योज्यानि रोपणे ॥
कङ्कुका त्रिफला रोध्रं कासीसं श्रवणाह्वया ॥ २७ ॥
धवाश्वकर्णयोस्त्वक् च रोपणं चूर्णमिष्यते ॥
प्रियङ्गुका सर्जरसः पुष्पकासीसमेव च ॥ २८ ॥
त्वक्चूर्णं धवजं चैव रोपणार्थं प्रशस्यते ॥

**त्वक्षु न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ॥ २९ ॥**
**रसक्रियां रोपणार्थे विदधीत यथाक्रमम् ॥**

क्रमागतं रोपणकषायादि सप्तविधं दर्शयन् कषायमेव तावदाह—कषायाणामित्यादि। कषायाणामिति कषायरसानाम् । अनुष्णानामिति शीतानां; तेन न्यग्रोधोदुम्बरादीनामिह ग्रहणम् । शृतं क्वथितम् । शीतकषायो रात्रिस्थितकषाय उच्यते । सोमः सोम एव, सोमवल्कल इत्यन्ये । काकोल्यादिर्वक्ष्यमाणो गणः । क्षीरिप्ररोहा वटादिप्ररोहाः । समङ्गा वराहक्रान्ता। सोमवल्कः कट्फलः । पृथक्पर्णी पृश्निपर्णी । आप्तगुप्ता शुकशिम्बी । सिता शर्करा । कालानुसार्या तगरम् । श्रव(म)णा अलम्बुषा ॥ २२–२९ ॥—

**अपामार्गोऽश्वगन्धा च तालपत्री सुवर्चला ॥ ३० ॥**
**उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥**

व्रणोत्सादनमाह—अपामार्गेत्यादि । तालपत्री तालमूलीति ख्याता । अत्र चोत्सादनं यद्यपि मृदुशीतद्रव्यं भवति, अपामार्गश्च तीक्ष्णः, तथाऽपि तस्य मूलमिहातीक्ष्णं गृहीतव्यं, भवति ह्यङ्गभेदेन द्रव्याणां गुणविशेषः; यथा—शोभाञ्जनं मूले फले च तीक्ष्णं, पुष्पं तु तस्य मृदु पित्ते प्रयुज्यते; तथा—"पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम्" इत्यादि। तालपत्री तु तीक्ष्णोष्णाऽपि प्रभावादेव यौगिकीति ऋषिवचनादुन्नीयते ॥३०॥—

**कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला ॥ ३१ ॥**
**कुक्कुटाण्डकपालानि सुमनोमुकुलानि च ॥**

**फले शैरीषकारञ्जे धातुचूर्णानि यानि च ॥ ३२ ॥**
**व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने ॥**

कुरुविन्दो लोहितमणिः । धातुचूर्णानि मनःशिलादिचूर्णानि ॥ ३१ ॥ ३२ ॥—

**समस्तं वर्गमर्धं वा यथालाभमथापि वा ॥ ३३ ॥**
**प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥**

## इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने मिश्रकाध्यायो नाम षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥

संप्रति अत्राध्याये कथितौषधवर्गाणां तथा द्रव्यसंग्रहणीये तथा संशोधनशमनीये च ये वर्गाः पठनीयास्तत्र सर्वालाभेऽर्धवर्गेण यथालब्धेन वा द्वित्रादिद्रव्यवर्गेण चिकित्साप्रयोगार्थं परिभाषामाह—समस्तं वर्गमित्यादि । अत्र वर्गशब्देन प्रकरणात् समानक्रियाणां द्रव्याणां समूह उच्यते । तेनात्रैवाध्यायत्रये प्रायेण समानकार्या वर्गा उक्ताः, तेष्वेवेयं परिभाषा; यत्र तु संयोगशक्त्या प्रयोगोपदर्शनं न तत्रार्धवर्गादिप्रयोगः, संयोगशक्तेरन्यतरसंयोगयपनयेनाप्यपार्थकत्वात् । न हि पानीयकल्याण-

घृतादौ यथालाभं पाको भवति; यत्र तु समानवीर्यतया एकत्र प्रयोगो गणोक्तेषु द्रव्येषु भवति, तत्रान्यतरापायेऽपि तच्छक्तीनां द्रव्याणां प्रयोगोऽर्थसाधको भवत्येव, अत एव चरकेऽप्येतद्विषय एवोक्तं—"वर्गमपि वर्गेणोपसृजेत्, उक्तमपि यदयौगिकं मन्येत तदपोद्धरेत्" (च. वि. अ. ८) इत्यादि। एतद्द्रव्यसमूहानां तुल्यवीर्यतया वा प्रयोगं तथा संयोगशक्त्या वा प्रयोगं विवेकेन ज्ञातुमुक्तमत्रापि—भिषक् प्राज्ञ इति। अत्र च यद्यप्यर्धवर्गप्रयोगो यथालाभं प्रयोगोऽपि समस्तवर्गप्रयोगतुल्यतया उक्तः, तथाऽपि समस्तवर्गप्रयोगस्यैव महाफलत्वं ज्ञेयं, तस्यैव बहुद्रव्यशक्तियोगेन महागुणत्वात्; समस्तालाभेऽर्धवर्गादिप्रयोगश्चिरेणाल्पकार्यसाधको वा ज्ञेयः; अन्यथा यदि तुल्यफलत्वं स्यात् सर्ववर्गस्यार्धादिभिः समं तदा बहुप्रयाससाध्यं सर्वमर्धवर्गादौ स्वल्पप्रयाससाध्ये समानफले सति को बालिश उपदिशेदनुतिष्ठेद्वा, तस्मात् सर्ववर्गालाभेऽर्धवर्गादिविधानमेतत् ॥ ३३ ॥—

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने मिश्रकाध्यायो नाम षट्त्रिंशत्तमोऽध्यायः ॥

---

## सप्तत्रिंशत्तमोऽध्यायः ।

**अथातो भूमिप्रविभागीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

मिश्रके भेषजद्रव्यमुक्तं, द्रव्यसंग्रहणीयादौ च वक्तव्यं, तच्च प्रशस्तभूमिजातमेव कार्यकरं भवति, अतो भेषजग्रहणार्थं प्रशस्ताप्रशस्तभूमिविभागीयोऽभिधीयते । भूमिविभागोपदर्शनाधिकारेण चान्यदपि जन्तुजग्धत्वादिभेषजगुणवर्णनमिह भविष्यति ॥१॥२॥

**श्वभ्रविषमशर्कराश्मवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधग्रहणाय परीक्षेत। तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसंबाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्येष भूमिपरीक्षाविशेषः सामान्यः ३**

श्वभ्रादिभिः प्रत्येकमनुपहतशब्दः संबध्यते। श्वभ्रः स्थूलगर्तः, विषमो वैषम्यं निम्नोन्नतत्वमिति यावत्, सिकता वालुका। श्वभ्रादयश्चाल्पवीर्यप्रतिपादकतया भेषजोपघातकाः, वल्मीकादयस्तु अप्राशस्त्येनाप्रशस्ताः, अप्राशस्त्यं च तेषां वचनादेवोन्नीयते। या तु रसायने "श्वेतकापोती वल्मीकोपरि प्रशस्ता" (चि. अ. ३०) इति वक्तव्यं, तत् प्रतिनियतौषधिविषयमपवादरूपं वचनम्। स्थिरेति अनवनता। समेति साधारणगुणयुक्ता, निम्नोन्नतत्वरहिता वा। पूर्वं तु संनिहितभूमिवैषम्यमुपघातकमुक्तम्, इदं तु भेषजदेश एव समत्वमुच्यते । आतपपवनावतियोगेनोपघातकौ; तोयसंबन्धोऽतिजलसंबन्धः । एकरसमिति वृक्षान्तरानाक्रान्तम्। अवगाढमूलमिति अनुत्तानमूलम् ॥ ३ ॥

**विशेषतस्तु तत्र, अश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा; स्निग्धा शीतलाऽऽसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा; नानावर्णा लघ्वश्मवति प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा; रूक्षा भस्मरासभवर्णा तनुवृक्षाल्परसकोटरवृक्षप्रायाऽनिलगुणभूयिष्ठा; मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा ॥ ४ ॥**

विशेषतस्त्वित्यादिना भूमिपरीक्षाविशेषः कथ्यते । अयं च वक्ष्यमाणो विशेषः "पृथिवीगुणभूयिष्ठायां भूमौ विरेचनद्रव्याण्याददीत" इत्यादौ प्रयोजनवान् । स्थिरेति कठिना । गुर्वी गुरुगुणयुक्ता । स्वगुणभूयिष्ठेति भूगुणभूयिष्ठा । नानावर्णेति तेजसो नानावर्णकारणत्वात् । प्ररोहः अङ्कुरः, स च तृणादीनाम् । रासभो गर्दभः । अव्यक्तरसं जलं यस्यां सा तथा ॥ ४ ॥

**अत्र केचिदाहुराचार्याः-प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति; तत्तु न सम्यक्, कस्मात्? सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीत, आग्नेयान्याग्नेयेषु, एवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि[1] जायन्ते । एतेन शेषं व्याख्यातम् ॥ ५ ॥**

एकीयमतमुपन्यस्य दूषयन्नाह—तत्र केचिदित्यादि । दूषणहेतुमाह—सौम्याग्नेयत्वाज्जगत इति । एवं मन्यते—द्विविधं वा जगत् ; औषधद्रव्यमपि किंचित्सौम्यं किंचिच्चाग्नेयं; तेन यत्सौम्यं तत्सौम्यगुणातिरिक्तेषु सौम्येषु ऋतुषु संपूर्णवीर्यतया ग्राह्यम्, एवमाग्नेयमाग्नेयेषु सर्वथा मूलाद्यङ्गैर्ग्राह्यम् । यत्तु ग्रीष्मादौ मूलादिग्रहणं, तदनुपपत्तिकत्वादसाधु । एतदेव व्याकरोति—तत्र सौम्येत्यादि । सौम्यानां सौम्यर्तुग्रहणे गुणातिशेषं वर्णयन् समानन्यायतया सोमगुणभूयिष्ठायां सौम्यौषधग्रहणं दर्शितवान् । शीततराणि चेति चकाराद् गुरुतराणि चेति बोद्धव्यम् । एतेन शेषं व्याख्यातमिति उष्णान्यौषधानि उष्णेषु ऋतुषु अग्निगुणभूयिष्ठायां भूमौ कटुतराणि रूक्षतराणि उष्णतराणि च भवन्तीत्यर्थः । अत्र केचिद् भूमिप्रविभागार्थं श्लोकेन पठन्ति; यथा—"गन्धवर्णरसोपेता षड्विधा भूमिरुच्यते । अत्र षड्विधेति षड्रसभेदात् । तस्माद्भूमिस्वभावेन बीजिनः षड्रसायुताः ॥ अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः ॥ रसः स एव चाव्यक्तो व्यक्तो भूमिरसाद्भवेत्[2] । सर्वलक्षणसंपन्ना भूमिः साधारणा स्मृता ॥ द्रव्याणि तत्र यानि स्युस्तद्गुणानि विशेषतः । विरुद्धैरपरामृष्टं गन्धवर्णरसादिभिः । नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत्" इति ।

---

१ 'मधुरतराणि स्निग्धतराणि, शीततराणि च भवन्ति' इति ता. । २ 'यतो भूमी रसाश्रया' इति पा० ।

अत्र रसादिभिरित्यादिशब्दाच्छब्दस्पर्शयोर्ग्रहणं, तेन पृथिव्याः पञ्चगुणत्वेन तत्कार्यं द्रव्यमपि पञ्चगुणं संभवति ॥ ५ ॥

**तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीत, अग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि, उभयगुणभूयिष्ठायामुभयतोभागहराणि, आकाशगुणभूयिष्ठायां संशमनानि, एवं बलवत्तराणि भवन्ति ॥ ६ ॥**

संप्रति विशेषतः पृथिवीगुणोत्कृष्टत्वादिनोक्तं भूमिप्रविभागमौषधविशेषग्रहणे विनियोजयन्नाह—पृथिव्यम्बुगुणेत्यादि । विरेचनमधोभागं, तदधोगामिपृथिव्यम्बुगुणभूयिष्ठायां बलवत्तरं भवति । अनिलाग्नी तूर्ध्वगौ, तेन तद्गुणभूयिष्ठायामूर्ध्वगं वमनं बलवत्तरं भवति । उभयोर्वमनविरेचनयोरनुगुणाः पृथिव्यम्ब्वनिलानलगुणा इत्यर्थः । उभयतोभागहराणि वमनविरेचनकराणि अर्कक्षीरादीनि । आकाशस्य सर्वगतत्वेन शमनौषधकारित्वं, शमनं हि सर्वगतं दोषं तत्रैव क्षपयति । संशमनं च यद्यपि वातादीनां तद्विपरीतैरेव स्निग्धमधुरादिभिः( तोयाद्युद्रेककार्यैः ) क्रियते, तथाऽपि संशमनत्वं यत्तन्मधुराधारद्रव्यस्य दशमूलादेस्तदाकाशगुणमाश्रित्य भवति, संशमनरूपताया आकाशकार्यत्वात्; यदा तु संशमनत्वमाकाशकार्यं न भवति द्रव्ये, तदा मधुरत्वादिगुणयोगेऽपि यथाभूतोद्रेकमधोभागहरत्वादि भवतीति आगमादवसीयते ॥ ६ ॥

**सर्वाण्येव चाभिनवानि, अन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः ॥ ७ ॥**

**विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् ।**
**शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् ॥ ८ ॥**

सर्वाणि चाभिनवानीत्यत्र बलवत्तराणि भवन्तीत्यनुवर्तते; अभिनवत्वमिह संपूर्णवीर्यताकालत्वं; तेन यत्तु मूलके बिल्वे वा बालावस्थायामेव प्रशस्तत्वं, तत्र तदवस्थागृहीतमेवाभिनवत्वं ज्ञेयम् । अभिनवतापवादविषयमाह—अन्यत्रेत्यादि । यत्तु मूलकशमीधान्यानां पुराणत्वं गुणोऽभिधातव्यः, तत् सुस्थवृत्ते आहारे च, भेषजे तु तेषामपि नवत्वं प्रशस्तं; किंवा धान्यमपि वचनान्तरात् पुरातनमेव मध्वादिवद् ग्राह्यम् । अमुमेवार्थं श्लोकेन **भोज**वचनपठितमत्रापि पठन्ति—विडङ्गमित्यादि । दोषवर्जितमिति क्रिम्यादिदोषवर्जितम् ॥ ८ ॥

**भवन्ति चात्र—**

**गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ॥**
**मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥ ९ ॥**

---

१ कोष्ठगतपाठो मु. पुस्तके नास्ति ।

गोपाला इत्यादि। तापसा इह वानप्रस्थाः, अन्ये वनचारिणोऽजपादयः; मूलान्याहरन्ति कार्यार्थमानयन्ति भक्षयन्ति चेति मूलाहाराः । भेषजव्यक्तिरिति भेषजाकारनामज्ञानं, यदुक्तं **चरके**—"ओषधीर्नामरूपाभ्यां जानते ह्यजपावने" ( च. सू. अ. १ ) इत्यादि। तथा नामज्ञानं निघण्टुशास्त्रात्, रसवीर्यगुणद्वारा तु भेषजव्यक्तिः शास्त्रादेव ज्ञेया ॥ ९ ॥

**सर्वावयवसाध्येषु पलाशलवणादिषु ॥**
**व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते ॥ १० ॥**
**( गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते ॥**
**तस्माद्भूमिस्वभावेन बीजिनः षड्रसायुताः ॥ ११ ॥**
**अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः ॥**
**रसः स एव चाव्यक्तो व्यक्तो भूमिरसाद्भवेत् ॥ १२ ॥**
**सर्वलक्षणसंपन्ना भूमिः साधारणा स्मृता ॥**
**द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः ॥ १३ ॥**
**विगन्धेनापरामृष्टमविपन्नं रसादिभिः ॥**
**नवं द्रव्यं पुराणं वा ग्राह्यमेवं विनिर्दिशेत् ॥ १४ ॥ )**

सर्वावयवसाध्येष्वित्यादिश्लोकं केचित् पठन्ति, अयं च श्लोकः पूर्वोक्तमूलादिग्रहणकालनियमबाधकः श्लोकप्रस्तावादत्र पठ्यते। तत्र सर्वो विधीयत इति सर्व एव कालः पलाशलवणार्थं सर्वाङ्गगृह्यमाणपलाशे गृह्यते; यदि हि कालनियमेनाङ्गग्रहणं तदा मिलितवृक्षग्राहकः कालो नास्तीति तत्प्रयोगो न स्यात् ॥ १०–१४ ॥

**जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् ॥**
**क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् ॥ १५ ॥**

वयःस्थानामिति तरुणानां, बालवृद्धयोस्तु असंपूर्णक्षीणधातुत्वादप्रशस्तत्वम् । क्षीरादीनां ग्रहणकालमाह—क्षीरेत्यादि ॥ १५ ॥

**प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् ॥**
**प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥ १६ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने भूमिप्रविभागीयो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥**

गृहीतौषधस्थापनोपायमाह—प्लोतेत्यादि। फलकं काष्ठपट्टम् । प्रशस्तायामिति पूर्वस्यामुत्तरायां वा ॥ १६ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने भूमिप्रविभागीयो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः।

**अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

भूमिप्रविभागीयोक्तन्यायेन गृहीतानां भेषजानां यत्र यत्र व्याधिप्रमशादौ कार्ये येषां भेषजानां क्षमत्वं तानि वर्गीकृत्याभिधातुं द्रव्यसंग्रहणीय उच्यते ॥ १ ॥ २ ॥

**समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति ॥ ३ ॥**

तत्रादावध्यायवक्तव्यार्थपिण्डसूत्रमाह—समासेनेत्यादि । समासेन संक्षेपेण, विस्तरस्तु चिकित्सितेषु भविष्यति; यद्वक्ष्यति इहैवाध्याये—"समासेन गुणा ह्येते प्रोक्तास्तेषां तु विस्तरम्" इत्यादि । अत्र चान्नपानादौ विदारिगन्धाशतावरीप्रभृतयः समानगुणा गणतो निर्दिष्टाः, तेषां गणरूपमेलके संयोगमहिम्ना गुणान्तरसंभावनानिरासार्थं तथा तत्राकथितगुणकर्मदर्शनार्थमिह पाठः । दृश्यते हि क्वचित् संयोगे प्रकृतिविरुद्धगुणोदयो, यथा मधु-सर्पिषोः, येषां तु जीवकादीनामन्नपानादौ न गुणनिर्देशस्तेषां गणमध्यपठितानां गणे गुणनिर्देशेन प्रत्येकमपि तद्गुणताज्ञापनार्थमभिधानम् । अत्रापि च संपूर्णगणे शक्त्युत्कर्षस्तथाऽर्धप्रयोगे यथालाभप्रयोगे वा शक्त्यपकर्षो मिश्रकोक्तन्यायाद्व्याकरणीयः ॥ ३ ॥

**तद्यथा–विदारिगन्धा विदारी विश्वदेवा सहदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डो हंसपादी वृश्चिकाल्यृषभी चेति ॥ ४ ॥**

**विदारिगन्धादिरयं गणः पित्तानिलापहः ॥**
**शोषगुल्माङ्गमर्दोर्ध्वश्वासकासविनाशनः ॥ ५ ॥**

विदारिगन्धेत्यादि । अत्र गणेषु यन्नाम प्रसिद्धं तन्न व्याकरणीयम्, अन्यत्तु व्याकर्तव्यम् । विदारिगन्धा शालपर्णी । विदारी विदारीकन्दः, स द्विविधः—एको दीर्घकन्दो बहुक्षीरः क्षीरविदारीति व्यवह्रियते; अन्यो हस्तिपादकोऽल्पक्षीरः । सहदेवा दण्डोत्पला नीलपुष्पा । विश्वदेवा श्वेतपुष्पा दण्डोत्पला, नागबलेत्यन्ये । महासहा माषपर्णी । क्षुद्रसहा मुद्गपर्णी । द्वे बृहत्यावित्येका बृहत्फला, अपरा लघुफला । वृश्चिकाली वृश्चिकपर्णी । ऋषभी शूकशिम्बी । शृगालविन्नां ये पठन्ति ते तां सिंहपुच्छीं वदन्ति । अस्य गणस्य संज्ञां गुणं चाह—विदारिगन्धादिरिति; गणसंज्ञा च शास्त्रे व्यवहारार्थं, यद्वक्ष्यति—"विदारिगन्धादिकृतं घृतं" इत्यादि बहु तत्प्रयोगं शास्त्रप्रयोगेषु । यत्रापि गणे शास्त्रे व्यवहारो नास्ति अर्कादिगणादौ तत्र वैद्यव्यवहारार्थं गणसंज्ञा ज्ञेया; यथा **चरके** पद्मकघृतादिसंज्ञा वैद्यव्यवहारमात्रा केवला कृता । एषां च गणानां यथायोगं स्वरसकल्कक्वाथघृतादिना प्रयोगो ज्ञेयः ॥ ४ ॥ ५ ॥

आरग्वधमदनगोपघोण्टाकण्टकीकुटजपाठापाटलामूर्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासीकुरुण्टकगुडूचीचित्रकशार्ङ्गेष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति ॥ ६ ॥

आरग्वधादिरित्येष गणः श्लेष्मविषापहः ॥
मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः ॥ ७ ॥

आरग्वधादौ आरग्वधः सुवर्णहलिः; मदनफलं त्रिविधमपि मिश्रकोक्तं ज्ञेयं पुष्पभेदेन; गोपघण्टा बदरीभेदः, कर्कोटकीत्यन्ये; कण्टकी विकङ्कतः; पाठा अविद्धकर्णी; मूर्वा धनुर्गुणयोज्या; दासीकुरुण्टकः पीतझिण्टी; शार्ङ्गेष्टा काकजङ्घा, काकचिञ्चीत्यपरे; द्वितीयः करञ्जः कण्टकीकरञ्जः 'नटे' इति ख्यातः । सुषवी कारवेल्लकः ॥ ६ ॥ ७ ॥

सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतिकाश्वकर्णागुरूणि कालीयकं चेति ॥ ८ ॥

सालसारादिरित्येष गणः कुष्ठविनाशनः ॥
मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥ ९ ॥

शालसारेत्यादि । अजकर्णो महाशालः, कदरः खदिरभेदः, कालस्कन्धः तमालः, क्रमुकः पूगः, मेषशृङ्गी पुत्रजीवकसदृशस्तरुः स्वनामख्यातः, तिनिशः स्यन्दनः, चन्दनमत्र श्वेतचन्दनम्, असनः प्रसिद्धः, पीतशाल इत्यन्ये; अश्वकर्णो गन्धमुण्डः, शाको बृहत्खरपत्रः, कालीयकं पीतचन्दनम्, अन्ये 'कालिआकाठ' इति प्रसिद्धमाहुः ॥ ८ ॥ ९ ॥

वरुणार्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरेयकद्वयबिम्बीवसुकवसिरचित्रकशतावरीबिल्वाजशृङ्गीदर्भा बृहतीद्वयं चेति ॥ १० ॥

वरुणादिर्गणो ह्येष कफमेदोनिवारणः ॥
विनिहन्ति शिरःशूलगुल्माभ्यन्तरविद्रधीन् ॥ ११ ॥

वरुणेत्यादि । आर्तगलः ककुभः, शिग्रु शोभाञ्जनकं, मधुशिग्रुस्तद्भेदो रक्तकुसुमः, तर्कारी जयन्ती, मोरटः अङ्कोल्लपुष्पः, हस्तिकर्णपलाश इत्यन्ये, अग्निमन्थो गणिकारिका, शैरीयकद्वयं पीतनीलपुष्पझिण्टीद्वयं, बिम्बी ओष्ठोपमफला, अजशृङ्गी आवर्तनी, दर्भः कुशः, बृहतीद्वयं कण्टकारिकया सह बृहती ॥ १० ॥ ११ ॥

वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरण्टिकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति ॥

वीरतर्वादिरित्येष गणो वातविकारनुत् ॥
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ १२ ॥

वीरतरादौ वीरतरुः शरः, 'वेल्लन्तरः' इत्यन्ये; सहचरो झिण्टीभेदः; वृक्षादनी वन्दाकः, वृक्षकलम्बुकेत्यपरे; दर्भ उलुयातृणं; गुन्द्रा गुन्द्रातृणम्; अश्मभेदः पाषाणभेदिका; मोरटमिह इक्षुमूलं केचिद्वदन्ति; वसुको 'वसुहट्ट' इति ख्यातः; वशिरः 'सूर्यावर्त' इति ख्यातः; भल्लूकः स्योनाकः; कुरुण्टिका श्रीहस्तिनी; इन्दीवरोऽपि तद्भेदो दीर्घपत्रधवलपुष्पः; कपोतवङ्का 'कडआवेन्टा' इति ख्याता शिरीषसदृशस्वल्पपत्र स्वल्पविटपा ॥ १२ ॥ १३ ॥

**लोध्रसावरलोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुकशल्लकीजिङ्गिनीकदम्बसालाः कदली चेति ॥ १४ ॥**

**एष रोध्रादिरित्युक्तो मेदःकफहरो गणः ॥**
**योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ १५ ॥**

लोध्रादौ—लोध्रः रक्तलोध्रः, सावरलोध्रः, कुटन्नटं कैवर्तमुस्तकं, कट्फला गम्भारी, एलवालुकं शल्लकीर्जिङ्गिनी च स्वनाम्ना ख्याता, कदम्बो बहुफलम् ॥ १४ ॥ १५ ॥

**अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ॥ १६ ॥**

**अर्कादिको गणो ह्येष कफमेदोविषापहः ॥**
**कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ १७ ॥**

अर्कादौ—अर्कोऽर्कपर्णः, अलर्कस्तद्भेदः, नागदन्ती दन्त्येव बहुलमूला, मयूरकोऽपामार्गः, भार्गी ब्राह्मणयष्टिका, इन्द्रपुष्पी कण्टकी कृष्णकरञ्जः, लाङ्गलकीत्यन्ये, क्षुद्रश्वेता महाश्वेता कटभीद्वयम्, अलवणा ज्योतिष्मती, तापसवृक्षः पुत्रञ्जीवकः ॥ १६ ॥ १७ ॥

**सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकुठेरककासमर्दक्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विषमुष्टिकश्चेति ॥ १८ ॥**

**सुरसादिर्गणो ह्येष कफहृत् कृमिसूदनः ॥**
**प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ १९ ॥**

सुरसादौ—सुरसः सुरभिमञ्जरिका, फणिज्झकः तीक्ष्णपर्णासः, अर्जकः श्वेतपर्णासः, भूस्तृणं गन्धतृणं, क्षवकं छिक्काकारो 'हाञ्छिया' इति ख्यातः, कासमर्दः स्वनामख्यातः, कालमालः कृष्णपुष्पः पर्णासः, कुठेरकः पर्णासभेदः खरपुष्पः क्षवकभेदः, 'मरुवक' इत्यन्ये, कट्फलो विख्यातः; सुरसी कपित्थपत्रिका, श्वेतसिन्धुवार इत्यन्ये; निर्गुण्डी नीलसिन्धुवारः, कुलाहलो मुण्डितिका; उन्दुरुपर्णी मूषिकपर्णी, दन्तीत्यन्ये; फञ्जी भार्गी; प्राचीबलो मत्स्याक्षकः, 'नदीपिप्पलिका' इत्यन्ये, 'काकजङ्घा' इत्यपरे; विषमुष्टिको बृहदलम्बुषा, 'पर्वतनिम्ब' इत्यन्ये ॥ १८ ॥ १९ ॥

मुष्ककपलाशधवचित्रकमदनवृक्षकशिंशपावज्रवृक्षास्त्रिफला चेति ॥ २० ॥

मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत् ॥
मेहार्शःपाण्डुरोगाश्मशर्करानाशनः परः ॥ २१ ॥

मुष्ककादौ—मुष्कको घण्टापाटलिः, पलाशः स्वनामख्यातः; वृक्षकः कुटजः, शिंशपा स्वनामख्याता, वज्रवृक्षः स्नुही, त्रिफला हरीतक्यामलकबिभीतकानि ॥ २० ॥ २१ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गुभार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति ॥ २२ ॥

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ॥
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ २३ ॥

पिप्पल्यादौ हरेणुः रेणुका, अजमोदा यवानिका, महानिम्बः पर्वतनिम्बः; मधुरसा मूर्वा ॥ २२ ॥ २३ ॥

एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकवालुकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकागुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरं चेति ॥ २४ ॥

एलादिको वातकफौ निहन्याद्विषमेव च ॥
वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥ २५ ॥

एलादौ एला सूक्ष्मैला, तगरं तगरपादिका, ध्यामकं गन्धतृणं, त्वक् गुडत्वक्, पत्रं तमालपत्रं, नागपुष्पं नागकेशरभेदः, व्याघ्रनखः बृहन्नखी, शुक्तिर्बदरीपत्राकारा नखी, चण्डा चोरपुष्पिकेति ख्याता, स्थौणेयकं ग्रन्थिपर्णं, श्रीवेष्टको नवनीतखोटिः, चोरकः स्वनामप्रसिद्धः, बोलो गन्धरसः, तुरुष्कः शिह्लः, कुन्दुरुः स्वनामख्यातः ॥ २४ ॥ २५ ॥

वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरं चेति ॥ २६ ॥
हरिद्रादारुहरिद्राकलशीकुटजबीजानि मधुकं चेति ॥ २७ ॥

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ ॥
आमातिसारशमनौ विशेषाद्दोषपाचनौ ॥ २८ ॥

वचादौ भद्रदारु देवदारु । हरिद्रादौ कलसी सिंहपुच्छी ॥ २६–२८ ॥

श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्यकक्रमुकपुत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्रीसुधाः सुवर्णक्षीरी चेति ॥ २९ ॥

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः ॥
आनाहोदरविड्भेदी तथोदावर्तनाशनः ॥ ३० ॥

श्यामादौ श्यामा श्याममूला त्रिवृत्; महाश्यामा वृद्धदारकः; त्रिवृदिह अरुणमूला त्रिवृत्; सप्तला चर्मकसा; शङ्खिनी श्वेतबुध्ना; तिल्वको लोध्रः; कम्पिल्लको गुण्डारोचनिका; रम्यकं पटोलमूलकं; क्रमुकं पट्टिकालोध्रं पूगफलं वा; प्रत्यक्श्रेणी दन्तीभेदः; गवाक्षी गोरक्षकर्कटी; राजवृक्षः सुवर्णहालिः; छगलान्त्री नीलबुध्ना, 'वृद्धदारक' इत्यन्ये; सुवर्णक्षीरी कङ्कुष्ठम् ॥ २९ ॥ ३० ॥

बृहतीकण्टकारिकाकुटजफलपाठा मधुकं चेति ॥ ३१ ॥
पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ॥
कफारोचकहृद्रोगमूत्रकृच्छ्ररुजापहः ॥ ३२ ॥

बृहत्यादिर्व्यक्तः ॥ ३१ ॥ ३२ ॥

पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठाः कटुरोहिणी चेति ॥ ३३ ॥
पटोलादिर्गणः पित्तकफारोचकनाशनः ॥
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥ ३४ ॥

पटोलादौ—कुचन्दनं रक्तचन्दनं, मूर्वा मधुरसा ॥ ३३ ॥ ३४ ॥

काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकं चेति ॥ ३५ ॥
काकोल्यादिरयं पित्तशोणितानिलनाशनः ॥
जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ ३६ ॥

काकोल्यादौ छिन्नरुहा गुडूची, तुगाक्षीरी वंशलोचना, पद्मकं पद्मकाष्ठं, प्रपौण्डरीकं पुण्डरीककाष्ठमिति ख्यातं चक्षुष्यं, जीवन्ती स्वनामख्याता यवनाडसदृशी ॥ ३५ ॥ ३६ ॥

ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकं चेति ॥ ३७ ॥
ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ॥
अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः ॥ ३८ ॥

ऊषकादौ—ऊषकं क्षारमृत्, तदुद्भवं वा लवणं; कासीसद्वयं धातुकासीसं पुष्पकासीसं च; तुत्थकं प्रसिद्धम् ॥ ३७ ॥ ३८ ॥

सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरं चेति ॥ ३९ ॥

सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ॥
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥ ४० ॥

शा(सा)रिवादौ—शा(सा)रिवा अनन्ता, द्वितीया उत्पलशा(सा)रिवा श्यामलतेत्याहुः, कुचन्दनं चन्दनभेदः, काश्मर्यं गाम्भारीफलम् ॥ ३९ ॥ ४० ॥

अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकं चेति ॥ ४१ ॥

अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः ॥
विषोपशमनो दाहं निहन्त्याभ्यन्तरं भृशम् ॥ ४२ ॥

अञ्जनादौ—अञ्जनं सौवीराञ्जनं; नलिनं केशरं, किंवा केशरं नागकेशरम् ॥४१॥४२॥

परूषकद्राक्षाकट्फलदाडिमराजादनकतकफलशाकफलानि त्रिफला चेति ॥ ४३ ॥

परूषकादिरित्येष गणोऽनिलविनाशनः ॥
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥ ४४ ॥

परूषकादौ—सर्वेषां फलं, तेन कट्फला गाम्भारी तस्याः फलं; राजादनं क्षीरिका; कतकफलं तोयप्रसादनं स्वनामप्रसिद्धम् ॥ ४३ ॥ ४४ ॥

प्रियङ्गुसमङ्गाधातकीपुन्नागनागपुष्पचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोजपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति ॥ ४५ ॥

प्रियङ्ग्वादौ—समङ्गा वराहक्रान्ता, धातकी धातकीपुष्पं, पुन्नागः स्वनामख्यातः, नागपुष्पं नागकेसरं, मोचरसः शाल्मलीवेष्टकः, कुम्भीकः कुम्भाह्वलता, योजनवल्ली मञ्जिष्ठा, दीर्घमूला शालपर्णी ॥ ४५ ॥

अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकबिल्वपेशिकासावररोध्रपलाशनन्दीवृक्षाः पद्मकेशराणि चेति ॥ ४६ ॥

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ॥
सन्धानीयौ हितौ पित्ते व्रणानां चापि रोपणौ ॥ ४७ ॥

अम्बष्ठादौ—अम्बष्ठा अविद्धपर्णी; कट्वङ्गः स्योनाकः; लोध्र इह ह्रस्वलोध्रः, तस्यैव ग्राहित्वात्; पलाशः किंशुकवृक्षः; नन्दीवृक्षः गन्धमुण्डः ॥ ४६–४७ ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षमधुककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयप्रियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति ॥ ४८ ॥

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः ॥
रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥ ४९ ॥

न्यग्रोधादौ—प्लक्ष इह पर्कटिरिति ख्यातः, ककुभोऽर्जुनः, जम्बूद्वयं स्वल्पजम्बूस्तथा बृहत्फला च राजजम्बूः, प्रियालः स्वनामख्यातः, वञ्जुलो वेतसः, तिन्दुकः 'केन्दू' इति ख्यातः, कदम्बो बहुफलः, नन्दीमुखो गन्धमुण्डः ॥ ४८–४९ ॥

**गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकं चेति ॥ ५० ॥**

**एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥**
**हृल्लासारोचकवमीपिपासादाहनाशनः ॥ ५१ ॥**

गुडूच्यादौ पद्मकं पद्मकाष्ठम् ॥ ५० ॥ ५१ ॥

**उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकं चेति ॥ ५२ ॥**

**उत्पलादिरयं दाहपित्तरक्तविनाशनः ॥**
**पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः ॥ ५३ ॥**

उत्पलादौ—कुमुदं 'कह्लार' इति ख्यातं, सौगन्धिकं स्वल्पसुगन्धिकेति ख्यातं, कुवलयमीषन्नीलधवलमुत्पलं, पुण्डरीकं श्वेतपद्मम् ॥ ५२ ॥ ५३ ॥

**मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकबिभीतककुष्ठहैमवतीवचापाठाकटुरोहिणीशार्ङ्गेष्टातिविषाद्राविडीभल्लातकानि चित्रकश्चेति ॥ ५४ ॥**

**एष मुस्तादिको नाम्ना गणः श्लेष्मनिषूदनः ॥**
**योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥ ५५ ॥**

मुस्तादौ शार्ङ्गेष्टा काकजङ्घा काइञ्चीति ख्याता, द्राविडी एला ॥ ५४ ॥ ५५ ॥

**हरीतक्यामलकबिभीतकानीति त्रिफला ॥ ५६ ॥**

**त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी ॥**
**चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ ५७ ॥**

त्रिफला प्रसिद्धा ॥ ५६ ॥ ५७ ॥

**पिप्पलीमरिचशृङ्गवेराणीति त्रिकटुकम् ॥ ५८ ॥**

**त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ॥**
**निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि ॥ ५९ ॥**

त्रिकटु प्रसिद्धम् ॥ ५८ ॥ ५९ ॥

**आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति ॥ ६० ॥**

**आमलक्यादिरित्येष गणः सर्वज्वरापहः ।**
**चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥ ६१ ॥**

आमलक्यादिः प्रसिद्धः । केचिदिमौ गणौ न पठन्ति ॥ ६० ॥ ६१ ॥

**त्रपुसीसताम्ररजतसुवर्णकृष्णलोहानि लोहमलश्चेति ॥ ६२ ॥**

**गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः ॥**
**पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥ ६३ ॥**

त्रप्वादौ—त्रपु वङ्गं, कृष्णलोहं लोहमेव, लोहमलं प्रसिद्धम् ॥ ६२ ॥ ६३ ॥

**लाक्षारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति ॥ ६४ ॥**

**कषायतिक्तमधुरः कफपित्तार्तिनाशनः ॥**
**कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ॥ ६५ ॥**

लाक्षादौ आरेवतः सुवर्णहलिः, अश्वमारः करवीरकः, सप्तच्छदः सप्तपर्णः, मालती जातिः, त्रायमाणा यदि पठ्यते सा स्वनामप्रसिद्धैव ॥ ६४ ॥ ६५ ॥

**पञ्च पञ्चमूलान्यत ऊर्ध्वं वक्ष्यामः ।—**
**तत्र एरण्डबृहतीद्वयपृथक्पर्ण्यो विदारिगन्धा चेति कनीयः ॥ ६६ ॥**

**कषायतिक्तमधुरं कनीयः पञ्चमूलकम् ॥**
**वातघ्नं पित्तशमनं बृंहणं बलवर्धनम् ॥ ६७ ॥**

पञ्चसु मूलेषु मूलानीति वचनान्मूलमेव परं ग्राह्यम् । द्वे बृहत्याविति कण्टकारिकया सह । चरके गोक्षुरकं च एरण्डस्थाने पठ्यते न सुश्रुतप्रयोगेषु; एवं पञ्चमूलीप्रयोगे एरण्डो गृहीतव्यः । गुणतो ज्येष्ठतमो वर्गप्रथमपाठात् ॥ ६६ ॥ ६७ ॥

**बिल्वाग्निमन्थटिण्टुकपाटलाः काश्मरी चेति महत् ॥ ६८ ॥**

**सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम् ॥**
**मधुरानुरसं चैव पञ्चमूलं महत् स्मृतम् ॥ ६९ ॥**

**अनयोर्दशमूलमुच्यते ॥ ७० ॥**

**गणः श्वासहरो ह्येष कफपित्तानिलापहः ॥**
**आमस्य पाचनश्चैव सर्वज्वरविनाशनः ॥ ७१ ॥**

बृहत्पञ्चमूले टुण्टुकः स्योनाकः ॥ ६८–७१ ॥

**विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीसंज्ञः ॥ ७२ ॥**
**करमर्दीत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः ॥ ७३ ॥**

**रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ ॥**
**सर्वमेहहरौ चैव शुक्रदोषविनाशनौ ॥ ७४ ॥**

वल्लीपञ्चमूले विदारी विदारीकन्दः, सारिवा अनन्तमूलं, रजनी हरिद्रा, अजशृङ्गी छागलकर्णीति ख्याता छागसदृशगन्धा। कण्टकसंज्ञे करमर्दी स्वल्पमधुरफला, त्रिकण्टो गोक्षुरकः, सैरीयो झिण्टिका, गृध्रनखी 'कालाकेड' इति ख्याता ॥ ७२-७४ ॥

**कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ॥ ७५ ॥**
**मूत्रदोषविकारं च रक्तपित्तं तथैव च ॥**
**अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत् ॥ ७६ ॥**

तृणसंज्ञे दर्भः 'उलुया' इति ख्यातं तृणं, काण्डेक्षुर्महती खड्गी, 'काण्ड' इति पाठपक्षे शरः ॥ ७५ ॥ ७६ ॥

**एषां वातहरावाद्यावन्त्यः पित्तविनाशनः ॥**
**पञ्चकौ श्लेष्मशमनावितरौ परिकीर्तितौ ॥ ७७ ॥**
**त्रिवृतादिकमन्यत्रोपदेक्ष्यामः ॥ ७८ ॥**

पञ्चमूलानां पुनर्गुणविशेषमाह—एषामित्यादि ॥ ७७ ॥ ७८ ॥

**समासेन गणा ह्येते प्रोक्तास्तेषां तु विस्तरम् ॥**
**चिकित्सितेषु वक्ष्यामि,**

अयं कृत्स्नोऽपि गणनिर्देशः संक्षेपतः, विस्तरस्तस्य भविष्यतीति दर्शयन्नाह—समासेनेत्यादि। विस्तरमिति विस्तरविषयतां; चिकित्सिते हि एत एव गणास्तस्मिन् तस्मिन्नध्याये वक्तव्याः। किंवा विस्तरमिति गणान्तराणि; तानि च प्रयोगा एव तत्तद्व्याधिशमनाः। ते हि प्रयोगाः प्राय एतदध्यायोक्तौषधसमूहविशेषा एव ॥—

**ज्ञात्वा दोषबलाबलम् ॥ ७९ ॥**
**एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान् ॥**
**प्रविभज्य यथान्यायं कुर्वीत मतिमान् भिषक् ॥ ८० ॥**

उक्तगणानां सविशेषां कल्पनामाह—ज्ञात्वा दोषबलाबलमित्यादि। आदिशब्दोऽत्र लुप्तनिर्दिष्टः; तेनातुरादीनां सर्वेषामेव परीक्ष्याणां ग्रहणं; किंवा दोषविशेषणतयैवातुरादिपरीक्षाऽप्यवबोद्धव्या। तत्राविष्कृताः कल्पनाः साक्षादुक्ताः; अनुक्ताश्चकारसमुच्चिताः यूषपानकचूर्णादयः ॥ ७९ ॥ ८० ॥

**धूमवर्षानिलक्लेदैः सर्वर्तुष्वनभिद्रुते ॥**
**ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम् ॥ ८१ ॥**
**समीक्ष्य दोषभेदांश्च भिन्नान् मिश्रान् प्रयोजयेत् ॥**
**पृथङ्मिश्रान् समस्तान् वा गणं वा व्यस्तसंहतम् ॥ ८२ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥**

संप्रति उक्तगणानां कार्यभेदमवेक्ष्य पृथक्प्रयोगं तथा गणद्वयत्रयादिमेलकप्रयोगं च दर्शयन्नाह—समीक्ष्येत्यादि । दोषभेदेन दोषाभिन्नो व्याधिरपि ग्राह्यः । भिन्नानिति भिन्नत्वेनोक्तान् । पृथगिति प्रत्येकम् । मिश्रानिति गणान्तरमिश्रान्, समस्तानिति द्वित्र्यादीन्; यदुक्तमन्यत्र—"वर्गमपि वर्गेण उपसंसृजेदेकमेकेनानेकेन वा" ( च. वि. अ. ८ ) इति । गणस्य स्तोकद्रव्यप्रयोगमाह—गणं वा व्यस्तसंहतमिति । व्यस्तमिति त्रिचतुरादिद्रव्यसहितम् । संहतमिति मिलितम् । अयं चार्थो मिश्रकोक्तोऽपि पुनः प्रकरणादभिधीयत इति न पौनरुक्तम् ॥ ८१ ॥ ८२ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टत्रिंशत्तमोऽध्यायः ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

**अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

द्रव्यसंग्रहणीयानन्तरं संशोधनसंशमनद्रव्यगणसामान्यात् संशोधनसंशमनीयोऽभिधीयते । संशोधनमिह वमनविरेचनशिरोविरेचनानि विवक्षितानि, बस्तिस्तु बहुप्रपञ्चत्वेन पञ्चकर्मणि न वक्तव्यः; तेन तस्य संशोधनस्यापि तत्रैवाभिधानं भविष्यतीति नेह तत्कृतं; किंवा य एव वातपित्तकफशमनवर्गास्त एव वातादिहननबस्तियोजनीयाः, एवं बस्त्युपयुक्तौषधगणाभिधानमपि भूतमेव; न च वमनविरेचनशिरोविरेचनशक्तियुक्तमदनफलादिवद् बस्त्युपयुक्तानि शक्तिविशेषवन्ति स्फुटानि द्रव्याणि सन्ति, तेन पृथग्गणेनेह साक्षान्नोपयुक्तानि, वातहरादिगणात्तु कल्प्यानि ॥ १ ॥ २ ॥

**मदनकुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षपविडङ्गपिप्पलीकरञ्जप्रपुन्नाडकोविदारकर्बुदारारिष्टाश्वगन्धाविदुलबन्धुजीवकश्वेताशणपुष्पीबिम्बीवचामृगेर्वारवश्चित्रा चेत्यूर्ध्वभागहराणि । तत्र, कोविदारपूर्वाणां फलानि, कोविदारादीनां मूलानि ॥ ३ ॥**

तत्रोत्सर्गतो वमनशक्तिपूर्वकत्वाद्विरेचनस्य वमनद्रव्यगणमाह—मदनेत्यादि । वमनं हि अवान्तस्य सम्यग्विरिक्तस्यापि अधः स्रस्तः श्लेष्मा ग्रहणीमाच्छादयतीति । जीमूतको घोषकः देवदालीति व्याकृतः; इक्ष्वाकुः कटुकालाबूः; धामार्गवः पीतघोषः; कृतवेधनस्तद्भेद एवोक्तः; कोविदारो युग्मपत्रः, स द्विविधो लोहितसितपुष्पभेदात्; विज्जलो वेतसः; श्वेता श्वेतवचा; शणपुष्पी घण्टारवा; बिम्बी ओष्ठोपमफला; मृगेर्वारुर्गोरक्षकर्कटी; चित्रा चित्रफला गोडुम्बा । कोविदारपूर्वाणामिति एडगजान्ताम् । अत्रापि कृतवेधनान्तानां वमनाध्याये प्राधान्येन प्रयोगाभिधानात् प्राधान्यं, सर्षपादीनां तु वमनद्रव्योपसर्जनत्वम् ॥ ३ ॥

**त्रिवृच्छ्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नुक्सुवर्णक्षीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्षसप्तच्छदार्का ज्योतिष्मती चेत्यधोभागहराणि । तत्र तिल्वकपूर्वाणां मूलानि, तिल्वकादीनां पाटलान्तानां त्वचः, कम्पिल्लकफलरजः, पूगादीनामेरण्डान्तानां फलानि, पूतीकारग्वधयोः पत्राणि, शेषाणां क्षीराणीति ॥ ४ ॥**

विरेचनान्याह—त्रिवृदित्यादि । त्रिवृत् अरुणमूला त्रिवृत्; दन्त्येव चीरितपत्रा द्रवन्ती; विषाणिका आवर्तनी; छगलान्त्री वृद्धदारकः; नीलिनी नीलबुध्रा; स्नुही सेहुण्डः; किणिही कटभी; शानुक्तम् (?) औत्तरापथिकं फलं; तिल्वको लोध्रः; कम्पिल्लको गुण्डारोचनिका; रम्यकं पटोलमूलं; पश्चाङ्गुलः चित्रैरण्डः; महावृक्षः स्नुहीभेदः । ज्योतिष्मती स्वनामख्याता । तिल्वकपूर्वाणां किणिह्यन्तानाम् । मूलवर्गे स्नुहीपाठान्मूलमपि स्नुह्या गृह्यते, क्षीरवर्गे पाठाच्च क्षीरमपि । कम्पिल्लकस्तु त्वग्वर्गे पाठात् त्वचा ग्राह्य एव, परं वैद्यव्यवहाराच्चरकवचनाच्च तस्य फलरजो गृह्यते; उक्तं हि **चरके**—"कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च" (च. सू. अ. १) इति । एवमारग्वधस्य पत्रं विरेचनं चरकवचनात्, फलं च । पूतीकस्य तु पत्रमिह विरेचनमुक्तम्, **चरके** तु—"पूतीकः कृष्णगन्धा च" (च. सू. अ. १) इत्यादिना त्वक् प्रधानमुक्ता; तेन साऽपि प्रयोगेषु ग्रहीतव्या ॥ ४ ॥

**कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि । एषां स्वरसा इति ॥ ५ ॥**

कोषातक्यादीनां स्वरसा उभयतोभागहराः । फलं तु कोषातकीदेवदाल्योर्वामनमुक्तमिति शेषः । देवदाली घोषाभेदः ॥ ५ ॥

**पिप्पलीविडङ्गापामार्गशिग्रुसिद्धार्थकशिरीषमरिचकरवीरबिम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मतीकरञ्जार्कालर्कलशुनातिविषाशृङ्गवेरतालीशतमालसुरसार्जकेङ्गुदीमेषशृङ्गीमातुलुङ्गीमुरङ्गीपीलुजातीशालतालमधूकलाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि । तत्र करवीरपूर्वाणां फलानि, करवीरादीनामर्कान्तानां मूलानि, तालीशपूर्वाणां कन्दाः, तालीशादीनामर्जकान्तानां पत्राणि, इङ्गुदीमेषशृङ्ग्योस्त्वचः, मातुलुङ्गीमुरङ्गीपीलुजातीनां पुष्पाणि, शालतालमधूकानां साराः, हिङ्गुलाक्षे निर्यासौ, लवणानि पार्थिवविशेषाः; मद्यान्यासुतसंयोगाः, शकृद्रसमूत्रे मलाविति ॥ ६ ॥**

पिप्पलीत्यादिना शिरोविरेचनद्रव्यमुच्यते । सिद्धार्थकः श्वेतसर्षपः; गिरिकर्णिका

अपराजिता; किणिही कटभी; अर्जकः श्वेतपर्णासः; इङ्गुदी पुत्रञ्जीवकः; मेषशृङ्गी 'मेढशिंगी' इति ख्यातः पुत्रजीवसदृशपत्रो वृक्षः; मातुलुङ्गी प्रसिद्धा; मुरङ्गी शोभाञ्जनकम्। तत्रेत्यादिना शिरोविरेचनद्रव्यविभागमाह । हिङ्ग्वादीनां मूत्रान्तानां स्वरूपकथनेन सर्वात्मप्रयोगं दर्शयति ॥ ६ ॥

**संशमनान्यत ऊर्ध्वं वक्ष्यामः-तत्र भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्तगलकच्छुराशल्लकीकुबेराक्षीवीरतरुसहचराग्निमन्थवत्सादन्येरण्डाश्मभेदकालर्कार्कशतावरीपुनर्नवावसुकवशिरकाञ्चनकभार्गीकार्पासीवृश्चिकालीपत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः ॥ ७ ॥**

संशमनानि गणीकृत्याह—संशमनान्यत इत्यादि । संशमनं नाम यद्दोषं दोषग्रहणगृहीतं च व्याधिं संशोधनं विना क्षपयति समं च नोदीरयत्यपि । वचनं हि—"न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति यः क्रुद्धान् तत् संशमनमुच्यते"—इति । बलातिबले शुक्लपीतपुष्पबलाद्वयम्; आर्तगलः ककुभः, केचित् कण्टकीफलमाहुः, एतत्स्थाने तगरमन्ये पठन्ति; कुबेराक्षी पेटिका, काष्ठपाटलेत्यन्ये; वीरतरुः शरो वा बृहद्वातो वा; वसुको वसुहट्टकः; वशिरः सूर्यावर्तभेदः; काञ्चनको धत्तूरः । प्रभृतिग्रहणादनुक्तमपि मधुरतिक्तादि गृह्यते । समासेनेति वचनादन्नपानादौ वातहरणत्वेन यदप्यन्यद्वक्तव्यं भूमिजलादि तत् सर्वं गृह्यते, एवमन्यत्रापि समासेनेति शब्दार्थो नेयः ॥ ७ ॥

**चन्दनकुचन्दनह्रीबेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवलकह्लारकुमुदोत्पलकन्द(द)लीदूर्वामूर्वाप्रभृतीनि काकोल्यादिः सारिवादिरञ्जनादिरुत्पलादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥ ८ ॥**

**कालीयकागुरुतिलपर्णीकुष्ठहरिद्राशीतशिवशतपुष्पासरलारास्नाप्रकीर्योदकीर्येङ्गुदीसुमनाकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः ॥ ९ ॥**

श्लेष्मशमनवर्गमाह—कालीयकेत्यादि । कालीयकं वर्णप्रसादनं 'कालियाकाठ' इति ख्यातं; तिलपर्णी 'तूल' इति लोके प्रसिद्धं; शीतशिवः कर्पूरं, 'शमी' इत्यन्ये; प्रकीर्यः कण्टककरञ्जः; उदकीर्या करञ्जः; इङ्गुदी पुत्रञ्जीवकः; काकादनी काकजङ्घा, 'कलावकडक' इत्यन्ये; हस्तिकर्णो हस्तिपलाशः; मुञ्जातक उत्तरापथे प्रसिद्धः, अयं च तन्त्रान्तरे वातपित्तहरः पठितस्तेन नात्र पठनीय एव अवयवभेदो वा । प्रभृतिग्रहणादनुक्तकटुतिक्तादिद्रव्यग्रहणम् । अत्र च पिप्पल्यादिगणपठितानामपि पुनः पठनं विशेषेण श्लेष्महरत्वादिप्रतिपादनार्थम् ॥ ८ ॥

**तत्र सर्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विदध्यात्। तत्र, व्याधिबलादधिकमौषधमुपयुक्तं तमुपशम्य व्याधिमन्यमावहति; अग्निबलादधिकमजीर्णं विष्टभ्य वा पच्यते; पुरुषबलादधिकं ग्लानिमूर्च्छामदानावहति संशमनम्; एवं संशोधनमतिपातयति; हीनमेभ्यो दत्तमकिंचित्करं भवति। तस्मात् सममेव विदध्यात्॥ १०॥**

इदानीमुक्तानां संशोधनसंशमनानां प्रयोगो व्याध्यादिबलापेक्षया मात्रया कर्तव्य इति दर्शयन्नाह—अत्र सर्वाणीत्यादि। सर्वाणीति संशोधनानि संशमनानि च। व्याधिशब्देनात्र दोषस्यापि ग्रहणाद्दोषबलमप्यवेक्ष्यम्। तत्र व्याधेर्दोषस्य बलवत्त्वं हेतुबाहुल्याल्लिङ्गबाहुल्याच्च, दुर्बलत्वं तद्विपर्ययात्; अग्नेर्बलवत्त्वं गुरुतृष्यादिजरणशक्त्या, उचिताहारपाकाशक्त्या दुर्बलत्वम्; देहबलं च व्यायामेन, विपर्ययेण दौर्बल्यम्; उपचयापचयाभ्यां च देहबलत्वं ज्ञेयम्; पुरुषग्रहणेन मनसो बलत्वाबलत्वेऽपि ग्राह्ये। यथोक्तबलान्यनपेक्ष्य भेषजप्रयोगेषु क्रमेण दोषानाह—व्याधिबलादधिकमित्यादि। अन्यव्याधिमिति अतियोगजन्यं व्याधिं वा दोषं वा। विष्टभ्येति चिरकालं स्थिरीभूय शूलादि कृत्वेत्यर्थः। ग्लानिमूर्च्छामदाः शरीरमनोबलभ्रंशकृता ज्ञेयाः। संशोधनमेवमिति संशोधनमपि बलाद्यनपेक्षं यथोक्तदोषं भवति। अतिपातयतीति अतिदोषपातनं करोति, किंवा अतिपातयतीति संशमनापेक्षया संशोधनमतियुक्तमतिव्यापत्तिकरं भवत्येव। व्याध्यपेक्षया हि प्राधान्येन भेषजमात्रा, सा तु सम्यक्पाकार्थमग्निबलं पुरुषबलं चापेक्षते, ([1]उक्तदोषप्रमाणानुरूपा हि भेषजमात्रा, सा तु सम्यक्पाकार्थमग्निबलं पुरुषबलं चापेक्षते;) उक्तं च "दोषप्रमाणानुरूपो हि भेषजप्रमाणविकल्पो बलप्रमाणापेक्षो भवति" (च. वि. अ. ८); ततश्च हीनमेभ्यो दत्तमिति बहुवचनमनुपपन्नम्। नैवं, बहुवचनं तावद्बलवति व्याधौ तथा बलवतोर्व्याधिपुरुषयोस्तथा बलवत्सु व्याधिपुरुषाग्निमित्यादि विकल्पबहुत्वादप्युपपन्नं; किंतु व्याधिबलमात्रसमं भेषजं बलवत्यग्नौ पुरुषे वा अल्पमात्रतया उपयुक्तं सत् तयोर्बलेनाभिभूयाल्पशक्तिकं क्रियते, तेन व्याधिमपि न तथा शमयति, तेन हीनमेभ्य इति बहुवचनमुपपन्नम्। सममेवेति व्याध्यादिबलसममेव ॥१०॥

**भवन्ति चात्र—**

**रोगे शोधनसाध्ये तु यो भवेद्दोषदुर्बलः॥**
**तस्मै दद्याद्भिषक् प्राज्ञो दोषप्रच्यावनं मृदु॥ ११॥**

संप्रति दुर्बलस्य संशोधनं निषिद्धमिह प्रदेशान्तरेऽपि; यदुक्तम्—"अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्" (सू. अ. ३५) इति; अत्र हि बालवृद्धौ दुर्बलतयैव विरेचने निषिद्धौ, तेनान्योऽपि दुर्बलो न शोध्य इति फलति, अतस्तत्प्रसवमाह—रोग इत्यादि। दोषदुर्बलमिति दोषप्रभावाद्दुर्बलं, न तु हेत्वन्तरदुर्बलम्। समीक्ष्येति सम्यग्बलं निरूप्य।

१ कोष्ठस्थः पाठो ह.पुस्तके नोपलभ्यते।

मृद्विति आरग्वधादिमृदुद्रव्यकृतमल्पमात्रं च । अत्र दोषसंबन्धे दुर्बले दोषापहरणेनैव बलं भवतीति भावः ॥ ११ ॥

**चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम् ॥**
**अव्यापद्दुर्बलस्यापि शोधनं हि तदा भवेत् ॥ १२ ॥**
**स्वयं प्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम् ॥**
**भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम् ॥ १३ ॥**

अवस्थाविशेषेऽपि दुर्बले शोधनप्रयोगमाह—चल इत्यादि । चल इति प्रचले । मृदौ कोष्ठ इति केचिद्दोषप्रबलतयैव मृदुकोष्ठतामिहेच्छन्ति । कुतो बलं नेक्षेतेत्याह—अव्यापद्दुर्बलस्यापीति । अव्यापत्तिकत्वं तु चलदोषस्यावश्याहर्तव्यस्य हरणादिति भावः ॥ १२ ॥ १३ ॥

**व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते ॥**
**विडालपदकं चूर्णं देयः कल्कोऽक्षसंमितः ॥ १४ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

संशमनद्रव्यपरिमाणपरिभाषां केचित् पठन्ति—व्याध्यादिष्वित्यादि । अञ्जलिः पलचतुष्टयम् । विडालपदकं कर्षः । एतच्च व्याध्यादौ मध्ये उक्तं; तेन उत्तमेऽधिकं, हीने हीनं ज्ञेयम् । अन्यत्राप्युक्तं—"द्रव्यप्रमाणं तु यदुक्तमस्मिन् मध्येषु तत् कोष्ठवयोबलेषु । तन्मूलमालम्ब्य भवेद्विकल्पस्तेषां विकल्प्योऽभ्यधिकोनभावः" (च. क. अ. १२) ॥ १४ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशत्तमोऽध्यायः ।

**अथातो द्रव्यरसगुणवीर्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः १ यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

पूर्वाध्यायैरागमप्रतिपादितस्वभावानां द्रव्यरसादिस्वरूपप्रतिपादनादनुमानेनापि तत्स्वभावप्रतिपादनार्थं, तत्रानुक्तद्रव्याणां च द्रव्यरसादिलिङ्गकार्येण स्वरूपज्ञानार्थं द्रव्यरसादिविज्ञानीयोऽभिधीयते । यद्यपि च द्रव्यादिस्वरूपज्ञानमेव प्रथममधिकरोति तस्य सर्वत्रोपयुक्तत्वात्, तथाऽप्यस्य शास्त्रस्य आगमप्रधानतां दर्शयितुं प्रथमं मीमांसकाध्याया उक्ताः, पश्चादनुमानप्रधाना द्रव्यादिज्ञानार्था अध्यायाः कृताः; अमुमेवार्थं दर्शयन्नध्यायान्ते करिष्यति—'अमीमांसान्यचिन्त्यानि' इत्यादि ॥ १ ॥ २ ॥

---

१ 'शक्तत्वात्' इति ह. ।

केचिदाचार्या ब्रुवते—द्रव्यं प्रधानं, कस्मात्? व्यवस्थितत्वात्, इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा—आमे फले ये रसादयस्ते पक्के न सन्ति; नित्यत्वाच्च, नित्यं हि द्रव्यमनित्या गुणाः, यथा कालादिप्रविभागात्तदेव संपन्नरसगन्धं व्यापन्नरसगन्धं वा भवति; स्वजात्यवस्थानाच्च, यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि; पञ्चेन्द्रियग्रहणाच्च, पञ्चभिरिन्द्रियैर्गृह्यते द्रव्यं न रसादयः; आश्रयत्वाच्च, द्रव्यमाश्रिता रसादयः; आरम्भसामर्थ्याच्च, द्रव्याश्रित आरम्भः, यथा—'विदारिगन्धादिमाहृत्य संक्षुद्य विपचेत्' इत्येवमादिषु न रसादिष्वारम्भः; शास्त्रप्रामाण्याच्च, शास्त्रे हि द्रव्यं प्रधानमुपदेशे योगानां, यथा—'मातुलुङ्गाग्निमन्थौ च' ( सू. अ. ३६ ) इत्यादौ न रसादय उपदिश्यन्ते; क्रमापेक्षितत्वाच्च रसादीनां, रसादयो हि द्रव्यक्रममपेक्षन्ते, यथा—तरुणे तरुणाः संपूर्णे संपूर्णा इति; एकदेशसाध्यत्वाच्च, द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते, यथा—महावृक्षक्षीरेणेति; तस्माद्द्रव्यं प्रधानं, न रसादयः, कस्मात्? निरवयवत्वात्। द्रव्यलक्षणं तु 'क्रियागुणवत् समवायिकारणम्' इति ॥ ३ ॥

अत्र द्रव्यादीनां प्रत्येकं प्राधान्यमेकीयमतेन दर्शयितुं द्रव्यप्राधान्ये प्रथमं सहेतुकमेकीयमतमाह—तत्रेत्यादि । एतच्च एकीयमतोपदर्शनं सम्यग्द्रव्यादिस्वभावज्ञानार्थं; अभिनिविष्टो हि वादी स्वपक्षसाधनार्थं सर्वं स्वरूपप्राधान्याख्यापकं दर्शयति, तेन चान्ते वक्ष्यमाणाचार्य(२सिद्धान्तसहितेन सम्यक् प्रतीतिर्भवति; एतदर्थमेव चरकेऽपि वातादिप्राधान्यादेकीयमतान्युपन्यस्य वातकलाकलीयादावाचार्य)मतमुपदर्शितम् । व्यवस्थितत्वादित्यवस्थाभेदेन रसादिभेदेऽपि द्रव्यस्य व्यवस्थितत्वात्; यथा—आम्रफलं प्रथमं कषायाम्लं, मध्येऽम्लं, ततो मधुरम्; एवं रसाव्यवस्थानेऽपि द्रव्यमाम्ररूपतया व्यवस्थितम्। हेत्वन्तरमाह—नित्यत्वादिति । नित्यत्वं रसादिनाशेऽप्यवस्थितत्वमिह ज्ञेयं; व्यवस्थितत्वं तु रसाद्यन्यथात्वे तद्रूपतया व्यवस्थितत्वमिति विशेषः । कालादीत्यत्रादिशब्देन जलवातादयो गृह्यन्ते । व्यापन्नरसगन्धमिति नष्टरसगन्धम् । अत एकस्मिन् द्रव्यप्राधान्ये साध्ये बहुहेतूपदर्शनं शास्त्रत्वादेव भवति । वादे हि द्वितीयादिहेतुकथनमसाधनाङ्गवचनमिति नोपादीयते । स्वजात्यवस्थानादिति परिणामेऽपि द्रव्यं स्वजाताववतिष्ठते न जात्यन्तरं भवति; यत् पार्थिवं तत् पार्थिवमिति, यदाप्यं तदाप्यमेवेत्यादि जात्यपरित्यागः; रसस्तु क्षीरे मधुरत्वं परित्यज्य चाम्लतां यातीत्याद्यनुसर्तव्यम् । जातिश्चेह पार्थिवत्वादिरूपा व्यवस्थिता अभिप्रेता; तेन क्षीरस्य दधित्वं, गुडस्य शर्करात्वमित्यादि जातिभेदो नोद्भावनीयः । पञ्चेन्द्रियग्रहणादित्यत्र पञ्चभिरिन्द्रियैर्द्रव्यं गृह्यत इति चक्षुषा

१ 'शास्त्रं ह्याह—'द्विविधं द्रव्यं स्थावरं जङ्गमं च' इति ता. । २ कोष्ठस्थः पाठो ह. पुस्तके नोपलभ्यते ।

**द्राक्षैयेन्द्रयववरुणस्वादुकण्टकसप्तपर्णबृहतीद्वयशङ्खिनीद्रवन्तीत्रिवृत्कृतवेधनककर्कोटककारवेल्लवार्ताककरीरकरवीरसुमनःशङ्खपुष्प्यपामार्गत्रायमाणाशोकरोहिणीवैजयन्तीसुवर्चलापुनर्नवावृश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्गः; न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादी रोध्रादिस्त्रिफलाशल्लकीजम्ब्वाम्रबकुलतिन्दुकफलानि कतकशाकफलपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायशः कुरुवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि वरकादयो मुद्गादयश्च समासेन कषायो वर्गः ॥ ११ ॥**

अत्र केचिन्मधुरादीनामाश्रयान् मधुरादिगणान् षट् पठन्ति । तत्र काकोल्यादिरित्यादि । अङ्कोल्यं चिञ्चेडकः, काश्मर्यं गम्भारीफलं, द्राक्षा मधुराऽत्र ग्राह्या, मोरटः सद्यःप्रसूतगोक्षीरं, पीलुपर्णीत्यन्ये, मधूलिका मर्कटहस्ततृणम् । दाडिमेत्यादि । भव्यं कर्मरङ्गं, पारावतः कामरूपप्रसिद्धः, तिन्तिडीकं वृक्षाम्लं, सौवीरकतुषोदके निस्तुषसतुषयवकृतसन्धाने, धान्याम्लं काञ्जिकम् । सैन्धवेत्यादि । पाक्यम् औद्भिदलवणं, रोमकं रूमानदीभवं लवणं, सामुद्रं करकचलवणं, पक्त्रिमं फुल्लालवणं पाककृतम्, उषरप्रसूतम् उषरमृत्तिकाभूतं लवणं, सुवर्चिका स्वर्जिकाक्षारः । पिप्पल्यादिरित्यादि । शीतं शिवं कर्पूरं, शुकनासा शिरीषः, अन्ये लताविशेषमाहुः । आरग्वधादिरित्यादि । स्वादुकण्टो विकङ्कतः; वैजयन्ती जयन्ती । तिन्दुकादीनि कषायवर्गपठितानि "तिन्दुकबकुलचन्दन" इत्यादिना, वनस्पतयो न्यग्रोधादयः, वरकादयः कुधान्यानि, वैदला मुद्गादयः, अत्र गणेष्वव्याकृतं नाम द्रव्यसंग्रहणीयादिव्याकृतं ज्ञेयम् ॥ ११ ॥

**तत्रैतेषां रसानां संयोगास्त्रिषष्टिर्भवन्ति । तद्यथा—पञ्चदश द्विकाः, विंशतिस्त्रिकाः, पञ्चदश चतुष्काः, षट् पञ्चकाः, एकशः षड्रसाः, एकः षट्क इति । तेषामन्यत्र प्रयोजनानि वक्ष्यामः ॥ १२ ॥**

संप्रति रसादीनां परस्परसङ्गं संख्यया निर्दिशन्नाह—तत्रैषामित्यादि । पञ्चदश द्विका इत्यादि । रसभेदाध्याये स्वयमेवाचार्यस्त्रिषष्टिरसभेदान् पठिष्यति, तदवलोक्य गणनीयं; विस्तरभयादिह न लिख्यते; **चरक**पठितास्तु द्विकादिसंग्रहश्लोकाः यथा—"स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक् । यान्ति पञ्चदशैतानि द्रव्याणि द्विरसानि तु । पृथगम्लादियुक्तस्य योगः शेषैः पृथग्भवेत् । मधुरस्य तथाऽम्लस्य मधुरस्य कटोस्तथा ॥ त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः । वक्ष्यन्ते च चतुष्केण द्रव्याणि दशपञ्च च ॥ स्वाद्वम्लौ सहितौ योगं लवणाद्यैः पृथग्गतौ ॥ योगं शेषैः पृथग्यातः चतुष्करससंख्यया । सहितौ स्वादुलवणौ तद्वत् कट्वादिभिः पृथक् ॥ युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ तथा । कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक् । यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा । युज्यते तु कषायेण सतिक्तौ लवणोषणौ । षट् तु पञ्चरसान्याहुरेकैकस्यापवर्जनात् ॥

१ '°जम्ब्वाम्रास्थितिन्दुकादीनि' इति ता. ।

षट् चैवैकरसानि स्युरेकं षड्रसमेव च" ( च. सू. अ. २६ ) इति । तेषां प्रयोजनमन्यत्रेति रसभेदाध्याये । "एकैकेनानुगमनं भागशो यदुदीरितम् । दोषाणां तत्र मतिमान् त्रिषष्टिं तु प्रयोजयेत्" ( उ. तं. अ. ६३ ) इति । द्विषष्टिदोषभेदे यथायोग्यतया द्वि(त्रि)षष्टिरसभेदा उक्ताः; सुस्थे तु षट् समुदिता रसा इति ॥ १२ ॥

**भवति चात्र—**

**भुक्ताः षडधिगच्छन्ति बलिनो वशतां रसाः ॥**
**यथा प्रकुपिता दोषा वशं यान्ति बलीयसः ॥ १३ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने रसविशेषविज्ञानीयो नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥**

इदानीं रसानामुपयोगे बलवानेव रसः कार्यं करोतीति सदृष्टान्तमाह—भुक्ता इत्यादि । भुक्ता इत्युपयोगोपलक्षणं, तेन नस्याञ्जनादिप्रयोगो विज्ञेयः । यो रसो वीर्येणोपचयेन वा बलवान् तस्येतरे निर्वीर्या हीना वा रसा वशतां यान्ति, तानभिभूय बलवानेव रसः कार्यं करोतीत्यर्थः । दृष्टान्तेऽपि बलवाननुबन्ध्यरूपलक्षणप्राप्तो दोषोऽनुबन्धमप्रधानं तिरस्कृत्य कार्यं करोति । अत एवोक्तं—"सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः" ( च. चि. अ. ३ ) इति । अन्ये तु बलिनः पुरुषस्य रसा अत्यन्ताभ्यासेऽपि बलवदग्नितया वशतां यान्ति न दोषं कुर्वन्ति; त(य)था दोषाश्च बलवतः पुरुषस्य अग्निबलदेहबलाभिभूतत्वान्न विकारं कुर्वन्तीति श्लोकार्थं वर्णयन्ति ॥ १३ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने रसविशेषविज्ञानीयो नाम द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशत्तमोऽध्यायः ।

**अथातो वमनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

संशोधनसंशमनीयोक्तवमनद्रव्याणां मदनफलादीनामन्तरा प्रकरणाध्यायगताध्यायत्रयाभिधानानन्तरं विस्तरेण प्रयोगान् वक्तुं वमनद्रव्यविकल्पविज्ञानीयोऽभिधीयते । वमनद्रव्यादीनां मदनफलादीनां विकल्पो विविधः कल्पः प्रयोगो वमनद्रव्यविकल्पः ॥ १ ॥ २ ॥

**वमनद्रव्याणां फलादीनां मदनफलानि श्रेष्ठतमानि भवन्ति । अथ मदनपुष्पाणामातपपरिशुष्काणां चूर्णप्रकुञ्चं प्रत्यक्पुष्पासदापुष्पीनिम्बकषायाणामन्यतमेनालोड्य मधुसैन्धवयुक्तां पुष्पचूर्णमात्रां पाययित्वा वामयेत् । मदनशलाटुचूर्णान्येवं वा बकुलरम्यकोपयुक्तानि मधुलवणयुक्तान्यभिप्रतप्तानि; मदनशलाटुचूर्णसिद्धां वा तिलतण्डुल-**

---

१ 'व्यञ्जनादि°' मु. । २ मदनफलादीनामूर्ध्वभागहरणत्वमुक्त्वा, तदभिधानान्तरं— इति मु. ।

यवागूम् । निर्वृत्तानां वा नातिहरितपाण्डूनां कुशमूढावबद्धमृद्गोमयप्रलिप्तानां यववु(तु)षमुद्गमाषशाल्यादिधान्यराशावष्टरात्रोषितक्लिन्नभिन्नानां फलानां फलपिप्पलीरुद्धृत्यातपे शोषयेत्, तासां दधिमधुपललविमृदितपरिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टिमुष्णे यष्टीमधुककषाये कोविदारादीनामन्यतमे वा कषाये प्रमृद्य रात्रिपर्युषितं मधुसैन्धवयुक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखः प्राङ्मुखमातुरं पाययेदनेन मन्त्रेणाभिमन्त्र्य—

"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानलानिलाः ॥
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु ते ॥ १ ॥
रसायनमिवर्षीणां देवानाममृतं यथा ॥
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ २ ॥"

विशेषेण श्लेष्मज्वरप्रतिश्यायान्तर्विद्रधिषु; अप्रवर्तमाने वा दोषे पिप्पलीवचागौरसर्षपकल्कोन्मिश्रैः सलवणैरुष्णाम्बुभिः पुनः पुनः प्रवर्तयेदासम्यग्वान्तलक्षणादिति । मदनफलमज्जचूर्णं वा तत्क्वाथपरिभावितं मदनफलकषायेण; मदनफलमज्जसिद्धस्य वा पयसः सन्तानिकां क्षौद्रयुक्तां, मदनफलमज्जसिद्धं वा पयः, मदनफलमज्जसिद्धेन वा पयसा यवागूम्, अधोभागास्रक्पित्तहृद्दाहयोः; मदनफलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा कफप्रसेकच्छर्दिमूर्च्छातमकेषु; मदनफलमज्जरसं स्नेहं वा भल्लातकस्नेहवदादाय फाणितीभूतं लेहयेत्, आतपपरिशुष्कं वा तमेव जीवन्तीकषायेण, पित्ते कफस्थानगते; मदनफलमज्जक्वाथं वा पिप्पल्यादिप्रतीवापं, तच्चूर्णं वा निम्बरूपिकाकषाययोरन्यतरेण संतर्पणकफजव्याधिहरं, मदनफलमज्जचूर्णं वा मधूककाश्मर्यद्राक्षाकषायेण । मदनफलविधानमुक्तम् ॥ ३ ॥

फलादीनामित्यत्रादिशब्देन कुटजजीमूतकेक्ष्वाकुधामावक्तवेधनानां संशोधनसंशमनीयोक्तानां ग्रहणम् । सर्षपादीनां तु कोविदारादीनां च तत्रोक्तानामपि मदनफलादिप्रयोगोपकरणतया वक्ष्यमाणत्वान्नेह प्राधान्येन ग्रहणम्; अतश्च मदनादीनां षण्णामेवात्र प्रयोगाः प्रपञ्चेन वक्तव्याः । तेष्वपि मदनफलप्राधान्यमाह—मदनफलानि श्रेष्ठतमानीति; श्रेष्ठत्वं चानपायित्वात् । तदुक्तं **चरके**—"मदनफलानि श्रेष्ठान्याहुरनपायित्वात्" ( च. क. अ. १ ) इति । अत्र पक्षे मदनफलयोगस्यैवानपायित्वाद् बहुविषयत्वाच्च यद्यपि प्राधान्यं, तत्प्राधान्यादेव च तत्प्रयोगे सर्ववमनप्रयोगसाधारणं मन्त्राभिमन्त्रणं दर्शितं; तथाऽपि मदनफलस्य पुष्पादिपूर्वकत्वात् पक्वमदनफलस्य तत्प्रयोगस्य बलवत्त्वात् तत्पुष्पादिप्रयोगानेव क्रमेणाह—तत्र मदनेत्यादि । प्रकुञ्चः पलम् । परिशुष्कत्वमिह आतपे-

१ 'वामकत्वात्' इति मु. ।

नैव, यथा कुर्वन्ति स उपाय इतिन्यायात् । प्रत्यक्पुष्पी अपामार्गः, तस्येह मूलम् । पुष्पाणां कषायत्रयेण प्रयोगास्त्रयः । शलाटुः आमफलम् । एवमिति पृथक् पूर्वोक्तकषायत्रयेण । अत्र चातिप्रतप्ते मधुप्रक्षेपो न विरुध्यते । तदुक्तं—"उष्णेन मधु संयुक्तं वमनेष्ववचारितम् । अपाकादनवस्थानान्न विरुध्येत पूर्ववत्" ( सू. अ. ४५ ) इति । मदनशलाटुचूर्णसिद्धामित्यत्र चूर्णस्य पूर्वोक्तप्रकुञ्चो मात्रा; इयं च मात्रा मध्यविषया; तेनात्रापकर्षोत्कर्षश्च बलाद्यपेक्षया न्यायसिद्धः कर्तव्य एव; यदुक्तमन्यत्र—"द्रव्यप्रमाणं तु यदुक्तमत्र मध्येषु तत् कोष्ठवयोबलेषु । तन्मूलमालक्ष्य भवेद्विकल्पस्तेषां विकल्प्योऽभ्यधिकोनभावः" ( च. क. अ. १२ ) इति । एतेषां च विषयोऽनुक्तोऽपि वामनीय एव पुरुषो ज्ञेयः । निर्वृत्तानामिति पक्कानाम् । नातिहरितपाण्डूनामित्यनेनाभिमतपाकावस्थोच्यते । क्लिन्नभिन्नानामिति यथोक्तविधिनाऽष्टरात्रस्थितत्वेन क्लिन्नानां सतां यत्नेन भिन्नानाम् । पिप्पली मदनफलमध्यबीजम् । पललं तिलचूर्णम् । अन्तर्नखमुष्टिमिति पारिभाषिकपलरूपमुष्टिनिषेधेनान्तःस्थितनखेन मुष्टिना यावद्गृह्यते तावद् ग्राह्यम्[1] । कोविदारादीन्येकादश संशोधनसंशमनीयपठितानि । रात्रिपर्युषितत्वेन शीतकषायं ग्राहयति । आशीर्भिरिति बहुवचनाद् वक्ष्यमाणमन्त्रादन्यदपि वेदोक्तमाशीर्मन्त्रं ग्राहयति । उदङ्मुखो वैद्यः, प्राङ्मुखत्वं त्वातुरस्य तथैव प्रशस्तत्वात् । ब्रह्मेत्यादिमन्त्रश्च अविवेचनीयः पाठादेव फलदः । एतच्चाशीर्भिरित्यादिविधानं सर्वसाधारणमिह प्राधान्यादुक्तम् । विशेषेणेतिवचनात् सर्ववामनीयविषयतां चास्य विधेर्दर्शयति । एषु च वमनप्रयोगेषु वक्ष्यमाणेषु च पूर्वकर्म स्नेहादि, उत्तरकर्म च पेयादि चिकित्सावक्ष्यमाणं सर्वं योजनीयम् । वमनायोगे विधानमाह—अप्रवर्तमाने वेत्यादि । प्रवर्तयेदिति यथोक्तमम्बु पीत्वा पुनः पुनर्वमेत् । आसम्यग्वान्तिलक्षणादिति "पित्ते कफस्यानु सुखं प्रवृत्ते" ( चि. अ. ३३ ) इत्यादिना वक्ष्यमाणसम्यग्वान्तिलिङ्गदर्शनं यावत् । योगान्तराण्याह—मदनफलेत्यादि । मदनफलमज्जा मदनफलपिप्पल्येव । तत्काथ इह मदनफलक्वाथः । भावना च सप्तरात्रं गुणोत्कर्षार्थं; यदुक्तं—"सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्मकृत्" ( च. क. अ. १२ ) इति । मदनफलकषायेणेति पाठो व्यक्तः । ये तु 'वमनद्रव्यकषायेण' इति पठन्ति ते मदनादिद्रव्यं ग्राहयन्ति, अतश्च मदनादीनां बहुत्वाद् बहवः प्रयोगा इति वदन्ति । सन्तानिका क्षीरसरः । उक्तप्रयोगाणां विषयमाह—अधोभागेत्यादि । दध्युत्तरकं दधिसरः । दधि वेति निःस्नेहं दधि । अनयोर्विषयः 'कफ' इत्यादिनोक्तः । मज्जचूर्णरसं स्नेहं वेति योगद्वयं; चूर्णरसं फाणितीभूतं स्नेहं वा भल्लातकस्नेहविधिगृहीतं, फाणितीभूतमिति क्वाथेन तन्तुलीभूतं, यदुक्तं—"फाणितमातन्तुलीभावात्" इति । भल्लातकस्नेहविधिगृहीतं फाणितमिति तदभिधानं च द्विव्रणीये—"भल्लातकान् भावयेत्तु क्षीरे प्राङ्मूत्रभावितान्" ( चि. अ. १ ) इत्यादिना वक्तव्यम् । तस्यैव मदनफलमज्जचूर्णरसस्य फाणितीभूतस्यातपशोषेण योगान्तरमाह—आतपेत्यादि । प्रतिवापः प्रतिक्षेपः । तच्चूर्णं वेत्यादिना क्वाथद्वयेन प्रयोगद्वयम् । एत-

१ 'तावतो ग्राहकम्' इति ह. ।

त्प्रयोगत्रयं¹विषयमाह—सन्तर्पणेत्यादि । मदनफलमज्जचूर्णं वा मधूकपुष्पेत्यादि केचित् पठन्ति । उपसंहरति—मदनेत्यादि ॥ ३ ॥

**जीमूतककुसुमचूर्णं पूर्ववदेव क्षीरेण, निर्वृत्तेषु क्षीरयवागूं, रोमशेषु सन्तानिकाम्, अरोमशेषु दध्युत्तरं, हरितपाण्डुषु दधि, तत्कषाय-संसृष्टां वा सुरां कफारोचककासश्वासपाण्डुरोगयक्ष्मसु, पर्यागतेषु मदनफलमज्जवदुपयोगः ॥ ४ ॥**

अनन्तरं जीमूतकस्य प्राधान्यात् कल्पनामाह—जीमूतकेत्यादि । पूर्ववदिति मदन-पुष्पचूर्णप्रयोगवत् जीमूतकपुष्पेऽपि प्रत्येकपुष्पादिभिस्त्रयो योगाः । क्षीरेणेत्यादिना यवागूयोगः । निर्वृत्तेष्विति निर्वृत्तमाणेषु फलेषु । सन्तानिकामिति रोमशकणसाधितां; सन्ता-निका क्षीरसन्तानिका । एवं दध्युत्तरे दध्नि च क्षीरसाधनपूर्वकता ज्ञेया । तत्कषायसंसृष्टां वा सुरामिति हरितपाण्डुदशास्थितजीमूतक्वाथसहितां सुरां; सुराक्वाथयोश्चात्र समता । अन्ये तु संसृष्टामिति कृतां सुरां वदन्ति । सुराकरणं च विरेचनाध्यायोक्तसुराकल्पनं; यदुक्तं तत्र—"स एव हि सुराकल्पो वमनेष्वपि कीर्तितः" ( सू. अ. ४४ ) इति । अयं चातिदेशः सर्ववमनद्रव्यविषयतयैवोक्तः । इह वाशब्दं स्वकारणमिति नेच्छन्ति । पर्या-गतेष्विति पक्वेषु । मदनफलमज्जविधानातिदेशेन च पक्वजीमूतफलानां 'अन्तर्नखं मुष्टि यष्टिमधुकषायेण' इत्यादिना सर्वयोगाः चतुर्विंशतिरधिका वाऽप्यनन्तरगृहीता गृह्यन्ते ॥४॥

**तद्वदेव कुटजफलविधानम् ॥ ५ ॥**

कुटजेऽपि पक्वे मदनफलमज्जवद्विधानमाह—कुटजेत्यादि । अस्य पुष्पावस्थायां मृदुत्वात् प्रयोगानभिधानम् ॥ ५ ॥

**कृतवेधनानामप्येष एव कल्पः ॥ ६ ॥**

कृतवेधनेऽपि कुटजविधानातिदेशान्मदनफलवद्योगा भवन्ति । कृतवेधनो ज्योत्स्निका । एतेषां च सर्वप्रयोगाणां मदनप्रयोगोक्त एव समानो विषयो ज्ञेयः, चरकोक्तगुणद्वारा वा कल्पनीयः ॥ ६ ॥

**इक्ष्वाकुकुसुमचूर्णं वा पूर्ववदेव क्षीरेण, कासश्वासच्छर्दिकफरोगेषू-पयोगः ॥ ७ ॥**

इक्ष्वाकुकल्पमाह—इक्ष्वाकुकुसुमचूर्णं वा पूर्ववदेव क्षीरेणेति । पूर्ववदेवेत्यनेन मदन-पुष्पचूर्णवत्त्रयो योगाः, तथा क्षीरेणैवं जीमूतकयोगे 'क्षीरेण निर्वृत्तेषु यवागूं' इत्यादिनोक्ताः सर्वे जीमूतवद्योगा गृह्यन्ते । किंवा इक्ष्वाकुकुसुमचूर्णमारभ्य सर्वे योगाः पूर्ववदिति मदनवत् कर्तव्याः; तेन सर्वमदनयोगातिदेशः । क्षीरेणेत्यनेन तु पुष्पचूर्णे तत्रोक्तप्रत्यक्-पुष्प्यादिक्वाथं बाधयित्वा क्षीरेण पुष्पचूर्णपानमत्र विधीयत इति विशेषः । यदि तु यथाश्रुत इक्ष्वाकुकुसुमचूर्णे क्षीरेण एक एव योगः स्यात् तदा इक्ष्वाकुफले वमनद्रव्येषू-

---

१ 'प्रयोगद्वय°' मु. ।

केषु मुख्य एव प्रयोगो न कथितः स्यात्, चरके चेक्ष्वाकुकुसुमादावुक्तो विस्तरेणागृहीतः स्यात् ॥ ७ ॥

**धामार्गवस्यापि मदनफलमज्जवदुपयोगः; विशेषतस्तु गरगुल्मोदरकासश्वासश्लेष्मामयेषु वायौ च कफस्थानगते ॥ ८ ॥**

धामार्गवः पीतघोषकः; तद्विधानमाह—धामार्गवेष्वपीत्यादि । अपिशब्दादत्र केचित् पुष्पादिप्रयोगमपि मदनवद्वदन्ति ॥ ८ ॥

**कृतवेधनफलपिप्पलीनां वमनद्रव्यकषायपरिपीतानां बहुशश्चूर्णमुत्पलादिषु दत्तमाघ्रातं वामयति, तत्त्वनवबद्धदोषेषु यवागूमाकण्ठात् पीतवत्सु च विदध्यात् । वमनविरेचनशिरोविरेचनद्रव्याण्येवं वा प्रधानतमानि भवन्ति ॥ ९ ॥**

विषयविशेषे सर्वैः कृतं प्रयोगमाह—कृतवेधनेत्यादि । वमनद्रव्याणि मदनादीनि षट् वमनद्रव्यप्रधानत्वात् । अनवबद्धा उत्क्लिष्टा दोषा यस्य स तथा । एतत् सुकुमारविषयं वमनम् । सजातीयभावनामुक्तामुक्तेषु वमनादिभेषजेषु दर्शयन्नाह—वमनेत्यादि । प्रधानतमानीति प्रकर्षेण कार्यकरणात् प्रधानतमानि ॥ ९ ॥

**भवतश्चात्र—**

**वमनद्रव्ययोगाणां दिगियं संप्रकीर्तिता ॥**
**तान् विभज्य यथाव्याधि कालशक्तिविनिश्चयात् ॥ १० ॥**
**कषायैः स्वरसैः कल्कैः स्नेहैरपि[1] च बुद्धिमान् ॥**
**पेयलेह्याद्यभोज्येषु वमनान्युपकल्पयेत् ॥ ११ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने वमनद्रव्यविकल्पविज्ञानीयो नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥**

अध्यायान्ते प्रयोगविस्तरकल्पनां दर्शयन्नाह—कषायैरित्यादि । अत्र कषायशब्देन शृतशीतफाण्टानां ग्रहणं, चूर्णश्च कल्कभेदः, तेन पञ्चापि कल्पनाः स्वरसकल्कशृतशीतफाण्टरूपा गृहीता भवन्ति । पेयादीनां चतुर्विधानामेव विधानान्मोदकोत्कारिकाशष्कुलीप्रभृतीनां तन्त्रान्तरोक्तानां सर्वेषामेव ग्रहणम् । यैरपि चात्र प्रयोगप्रपञ्चः कृतश्चरकादिभिस्तैरप्यस्ति प्रयोगानवस्थानं दर्शितं; यथा—"बहुद्रव्यविकल्पत्वाद् योगसंख्या न विद्यते । स्वबुद्ध्यैवं सहस्राणि कोटीर्वाऽपि प्रकल्पयेत्" ( क. अ. १२ ) इति । तेनायमनतिविस्तरोऽतिदेशश्च विस्तरार्थः कृत इति भावः ॥ १० ॥ ११ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने वमनद्रव्यविकल्पविज्ञानीयो नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥

---

१ '०श्चूर्णै०' इति ह. ।

## चतुश्चत्वारिंशत्तमोऽध्यायः ।

**अथातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

वमनमनु विरेचनस्य यौगिकत्वात् तथैव च निर्देशाद् विरेचनद्रव्यविकल्पविज्ञानीयोऽभिधीयते ॥ १ ॥ २ ॥

**अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने ॥**
**प्रधानं तिल्वकस्त्वक्षु फलेष्वपि हरीतकी ॥ ३ ॥**
**तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका ॥**
**सुधापयः पयःसूक्तमिति प्राधान्यसंग्रहः ॥**
**तेषां विधानं वक्ष्यामि यथावदनुपूर्वशः ॥ ४ ॥**

पूर्वं विरेचनद्रव्येषु फलमूलत्वक्क्षीरपत्राश्रयतया पञ्चविधं विरेचनमुक्तं, तत्र पत्रस्याल्पविषयादिह प्रपञ्चावसरेऽनभिधानं; तेन मूलादिचतुरङ्गप्रयोज्यानां प्रत्येकं त्रिवृतादीनां प्रपञ्चेनेह कल्पाभिधानं भविष्यति । अतस्तदर्थं मूलाद्यङ्गोपयोज्यानां विरेचनौषधीनां त्रिवृदादीनां विधानमाह—अरुणाभमित्यादि । श्याममूलायाश्च त्रिवृतो विद्यमानत्वादरुणाश्यामादीनां द्वादशानां कल्पातिदेशः, तिल्वककल्पेन च त्रयाणां कम्पिल्लकादीनां, हरीतकीकल्पेन सप्तछदादीनां त्रयाणामतिदेशः । केचित् 'तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका' इति पठन्ति; एतत् पाठं चान्ये नेच्छन्ति । एवं सति सार्ध(?)मसुष्ठु स्वयं भवति । तैलं च संशोधनसंशमनीये न पठितं, कारवेल्लिका च स्वरसप्रयोज्या अत्र न पठिता; तथेहापि च तैलस्वरसयोः प्रयोगो न भविष्यति । यश्चैरण्डतैलप्रयोगो भविष्यति स त्रिफलाङ्गतया; तथाऽध्यायान्तकृतसंग्रहेऽपि तैलं स्वरसो वा न पठितः; यद्वक्ष्यति 'क्षीरत्वक्फलमूलानां विधानैः' इति, अनया युक्त्या नेच्छन्ति तैलेष्वित्याद्यर्धश्लोकम् । एतत्समाधानं च बुद्धिमता चिन्त्यम् । एषामिति मूलत्वक्फलक्षीरप्रधानानां त्रिवृतादीनाम् ॥ ३ ॥ ४ ॥

**वैरेचनद्रव्यरसानुपीतं मूलं महत्त्रैवृतमस्तदोषम् ॥**
**चूर्णीकृतं सैन्धवनागराढ्यमम्लैः पिबेन्मारुतरोगजुष्टः ॥ ५ ॥**

वैरेचनद्रव्यं त्रिवृतादि; रसशब्देनात्र स्वरसोऽभिधीयते, तदभावे वैरेचनक्काथेन भावना कर्तव्या । चरके तु भाव्यद्रव्यसमचूर्णकृतशीतक्काथेन सप्ताहं यावद्भावना विहिता । सप्ताहं भावनाविधानं तावतैव कालेन भाव्यभावनासमाप्तेः; ततोऽधिकभावना निष्फला, हीना न गुणवतीत्यागमादेवावर्यते । अस्तदोषमिति क्रिम्याद्यनुपहतत्वेन । अम्लैरिति काञ्जिकादिभिः । यद्यप्यत्रानिलरोगप्रशान्तिरुक्ता, तथाऽपि विरेचनस्य पित्तविषयतया पित्तस्थानगते पित्तावृत्ते वा वाते प्रयोगोऽयं ज्ञेयः ॥ ५ ॥

**इक्षोर्विकारैर्मधुरै रसैस्तत् पैत्ते गदे क्षीरयुतं पिबेच्च ॥**
**गुडूच्यरिष्टत्रिफलारसेन सव्योषमूत्रं कफजे पिबेत्तत् ॥ ६ ॥**

इक्षोर्विकारैरित्यादौ इक्षुविकाराः खण्डादयः । पित्ते योग्यत्वान्मधुराणां काकोल्यादीनां रसाः क्वाथाः, तैर्मधुरै रसैः । गुडूचीकृतोऽरिष्टो गुडूच्यरिष्टः ॥ ६ ॥

**त्रिवर्णकत्र्यूषणयुक्तमेतद्गुडेन लिह्यादनवेन चूर्णम् ॥**
**प्रस्थे च तन्मूलरसस्य दत्त्वा तन्मूलकल्कं कुडवप्रमाणम् ॥ ७ ॥**
**कर्षोन्मिते सैन्धवनागरे च विपाच्य कल्कीकृतमेतदद्यात् ॥**
**तत्कल्कभागः समहौषधार्धः ससैन्धवो मूत्रयुतश्च पेयः ॥ ८ ॥**

त्रिवर्णकेत्यादियोगो वातश्लेष्मणि । त्रिवर्णकं त्वक्पत्रैलाः । एतदिति प्रक्रान्तं त्रिवृन्मूलं, त्रिवर्णकत्रिकटुसमुदायसमं प्राधान्यात् । गुडस्तु लेहत्वापत्तिप्रमाणः सर्वसमो वा । प्रस्थे चेत्यादिश्च वातश्लेष्मणि व्याख्यायते, तत्रैव योग्यत्वात् । ये तु पठन्ति 'क्वाथप्रस्थे कुडवं वा घृतस्य' इत्यादि, तन्मते वातपित्ते घृतमेतत् । सैन्धवनागरे च कार्षिके भवतः । तत्कल्कभाग इत्यादौ ससैन्धवस्यापि त्रिवृदर्धत्वम् । अयं वातकफे ॥ ७ ॥ ८ ॥

**समास्त्रिवृन्नागरकाभयाः स्युर्भागार्धकं पूगफलं सुपक्वम् ॥**
**विडङ्गसारो मरिचं सदारु योगः ससैन्धूद्भवमूत्रयुक्तः ॥ ९ ॥**
**( विरेचनद्रव्यभवं तु चूर्णं रसेन तेषां भिषजा विमृद्य ॥**
**तन्मूलसिद्धेन च सर्पिषाऽऽक्तं सेव्यं तदाज्ये गुटिकीकृतं च ॥ १० ॥**
**गुडे च पाकाभिमुखे निधाय चूर्णीकृतं सम्यगिदं विपाच्य ॥**
**शीतं त्रिजाताक्तमथो विमृद्य योगानुरूपा गुटिकाः प्रयोज्याः ॥ ११ ॥ )**

समास्त्रिवृदित्यादौ समाः प्रत्येकं समभागिकाः । देवदारुपूगविडङ्गमरिचसैन्धवाः प्रत्येकमर्धभागिकाः ॥ ९–११ ॥

**वैरेचनद्रव्यचूर्णस्य भागं सिद्धं सार्धं क्वाथभागैश्चतुर्भिः ॥**
**आमृद्नीयात् सर्पिषा तच्छृतेन तत्क्वाथोष्मस्वेदितं सासितं च ॥ १२ ॥**
**पाकप्राप्ते फाणिते चूर्णितं तत् क्षिप्तं पक्वं चावतार्य प्रयत्नात् ॥**
**शीतीभूता मोदका हृद्यगन्धाः कार्यास्त्वेते भक्ष्यकल्पाः समासात् ॥१३**

वैरेचनद्रव्यचूर्णस्य भागमित्यादि मोदककल्पः । अत्र विरेचनद्रव्याणि त्रिवृतादीनि सर्वाण्येव पृथगधिकारार्थमुक्तानि । तच्छृतेनेति यस्य चूर्णं गृहीतं तत्साधितेन सर्पिषा । सामितं गोधूमचूर्णम् । तदिति विरेचनद्रव्यचूर्णं समितायुक्तम् । हृद्यगन्धा इत्यनेन त्रिसुगन्धियोगं दर्शयति । अत्र च बहूनि पाठान्तराणि संभवन्ति, तान्यनया दिशा व्याख्येयानि । विषयोऽपि प्रयोगाणां पुरुषेच्छावशेन द्रव्यदोषस्वरूपालोचनया कल्प्यः ॥ १२ ॥ १३ ॥

**मुद्गानां वा तद्रसे भावितानां यूषः कृतः सघृतः सैन्धवाढ्यः ।**
**विरेचयद्भिर्दलैष्वेष कल्पः कार्यः सुधीर्वमनीयेषु चैव ॥ १४ ॥**

---

१ 'रसेन तेषां परिभाव्य मुद्गान् यूषः ससिन्धूद्भवसर्पिरिष्टः । वैरेचनेऽन्यैरपि वैदलैः स्यादेवं विदध्याद्वमनौषधैश्च' इति ढ. ।

मुद्गानां वेत्यादि। यूषे मुद्गाच्चतुर्थभागेन त्रिवृतादि। अत्र कृतत्वं हिङ्गुजीरकादिसंपाद्यम्। वामनीयैरिति मदनफलादिभिः। अयं च वमनार्थमेव ज्ञेयः॥ १४॥

**भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा॥**
**पक्वं च सम्यक् पुटपाकयुक्त्या खादेत्तु तं पित्तगदी सुशीतम्॥ १५॥**

भित्त्वेत्यादौ त्रिभण्डी त्रिवृत्। कल्कैरिति बहुवचनादन्यैरपि वैरेचनिकैरेवं योगं दर्शयति। पुटपाकयुक्त्या पत्रवेष्टनपङ्कलेपनादि सर्वं पुटपाकविधानं दर्शयति॥ १५॥

**सिताजगन्धात्वक्क्षीरीविदारीत्रिवृतः समाः॥**
**लिह्यान्मधुघृताभ्यां तु तृड्दाहज्वरशान्तये॥ १६॥**
**शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम्॥**
**रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम्॥ १७॥**
**पचेल्लेहं सिताक्षौद्रपलार्धकुडवान्वितम्॥**
**त्रिवृच्चूर्णयुतं शीतं पित्तघ्नं तद्विरेचनम्॥ १८॥**
**त्रिवृच्छ्यामाक्षारशुण्ठीपिप्पलीर्मधुनाऽऽप्नुयात्॥**
**सर्वश्लेष्मविकाराणां श्रेष्ठमेतद्विरेचनम्॥ १९॥**
**बीजाढ्यपथ्याकाश्मर्यधात्रीदाडिमकोलजान्॥**
**तैलभृष्टान् रसानम्लफलैरावाप्य साधयेत्॥ २०॥**
**घनीभूतं त्रिसौगन्ध्यत्रिवृत्क्षौद्रसमन्वितम्॥**
**लेह्यमेतत् कफप्रायैः सुकुमारैर्विरेचनम्॥ २१॥**
**नीलीतुल्यं त्वगेलं च तैस्त्रिवृत्ससितोपला॥**
**चूर्णं संतर्पणं क्षौद्रफलाम्लं सन्निपातनुत्॥ २२॥**

केचित् सिताजगन्धेत्यादिना योगान् पठन्ति। अजगन्धा यमानी। शर्करेत्यादौ सिताक्षौद्रयोर्लेहत्वापादनप्रमाणा मात्रा, त्वक्पत्रमरिचानां मिलित्वा त्रिवृच्चूर्णानां पादिकत्वम्। पचेल्लेहमित्यादौ सिता पलं, क्षौद्रमर्धकुडवं चतुःपलं, त्रिवृच्चूर्णं पादिकम्। त्रिवृदित्यादौ श्यामा श्याममूला त्रिवृत्। क्षारो यवक्षारः। बीजाढ्येत्यादौ बीजाढ्यमिति सुपक्वम्। अत्र च हरीतक्यादीनां फलानां स्वरसास्तैलभृष्टाः कर्तव्याः; ततोऽम्लफलमातुलुङ्गादिरसैर्योजयित्वा, पुनर्घनत्वं यावत् पाकः। त्रिवृच्चूर्णक्षौद्रयोर्मिलित्वा पादिकत्वं, त्रिसौगन्ध्यं सुगन्धितापादनमात्रम्। नीलीत्यादौ तैस्त्रिवृत्तुल्या, तैर्नीलीत्वगेलात्रिवृद्भिः शर्करा तुल्या। अत्र हि **चरकः**—"भृङ्गैलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा। चूर्णं फलरसक्षौद्रयुक्तं सन्तर्पणं पिबेत्" (च. क. अ. ७) इत्यादि। संनिपातनुदिति दोषत्रयनुत्॥ १६–२२॥

**त्रिवृच्छ्यामासिताकृष्णात्रिफलामाक्षिकैः समैः॥**
**मोदकाः सन्निपातोर्ध्वरक्तपित्तज्वरापहाः॥ २३॥**

---

१ १६–२७ श्लोकाः **ता.** पुस्तके न पठ्यन्ते।

त्रिवृदित्यादिमोदके त्रिफलायाः प्रत्येकं भागः ॥ २३ ॥

त्रिवृद्भागास्त्रयः प्रोक्तास्त्रिफला तत्समा तथा ॥
क्षारकृष्णाविडङ्गानि संचूर्ण्य मधुसर्पिषा ॥ २४ ॥
लिह्याद्गुडेन गुटिकाः कृत्वा वाऽप्यथ भक्षयेत् ॥
कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान् ॥ २५ ॥
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥

त्रिवृद्भागा इत्यादौ त्रिफला तत्समेति समुदितैः त्रिफला समा शाणत्रयं; तथाशब्दात् क्षारादीनां च मिलितानां त्रिवृच्छाणत्रयसमत्वं; पठ्यते हि तन्त्रान्तरे—"त्रिवृच्छाणमितास्तिस्रस्तिस्रश्च त्रिफलात्वचः। विडङ्गपिप्पलीक्षारभागास्तिस्रश्च चूर्णिताः॥ लिह्यात् सर्पिर्मधुभ्यां तु गुडिकां वा गुडेन तु" (च. क. अ. ७) इत्यादि। अत्र हि त्रिफलाया विशेष्यायास्त्वच एकरूपत्वान्मिलितैकभागो भवति; यथा—अष्टपलिके घृते "त्र्यूषणत्रिफलाकल्के बिल्वमात्रे" इत्यत्र कल्कविशेषणीभूतत्र्यूषणत्रिफलयोरपि एकत्रैव बिल्वप्रमाणो भागो भवति ॥ २४ ॥ २५ ॥—

चूर्णं श्यामा त्रिवृन्नीली कट्वी मुस्ता दुरालभा ॥ २६ ॥
चव्येन्द्रबीजं त्रिफला सर्पिर्मांसरसाम्बुभिः ॥
पीतं विरेचनं तद्धि रूक्षाणामपि शस्यते ॥ २७ ॥

चूर्णं श्यामेत्यादौ श्यामादयस्त्रिफलान्ताः, चूर्णमिति सामानाधिकरण्येन योजनीयम्। कट्वी कटुरोहिणी। रूक्षाणामपीत्यपिशब्दादम्बुना पानं चारूक्षज्ञानविषयं ज्ञेयम्। एते च प्रयोगाः सर्वैरपि च टीकाकारैर्नन्दिपूरवराहप्रभृतिभिर्व्याख्यातत्वात् प्रसिद्धा एव ॥२६॥२७॥

वैरेचनिकनिःक्वाथभागाः शीतास्त्रयो मताः ॥
द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत् ॥ २८ ॥
तत् साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत् ॥
कलसे कृतसंस्कारे विभज्यर्तू हिमाहिमौ ॥ २९ ॥
मासादूर्ध्वं जातरसं मधुगन्धं वरासवम् ॥
पिबेदेसावेव विधिः क्षारमूत्रासवेष्वपि ॥ ३० ॥

वैरेचनिकेत्याद्यासवे यद्यपि अधिकृतत्वात् त्रिवृदेव गृहीतव्या, तथाऽपि 'वैरेचनिक' इति वचनमनेनैव विधानेन श्यामादीनामपि विरेचनोक्तानां मूलप्रधानानामासवकल्पनाप्राप्त्यर्थम्। एवं सुरासौवीरतुषोदकेष्वपि व्याख्येयम्। अन्ये तु त्रिवृतादीन् मूलोपयोज्यान् सर्वानेव ग्राहयन्ति। साधुसिद्धमित्यर्धक्षयीकृतम्। कृतसंस्कारे इति क्षालनधूपादिसंस्कृते। विभज्यर्तू हिमाहिमाविति हिमे मासादूर्ध्वम्, अहिमे तु ग्रीष्मे मासार्धस्थितम्। क्षारासवमूत्रासवाश्चिकित्सावक्ष्यमाणाः ॥ २८–३० ॥

---

१ अयमर्धश्लोकः ता. पुस्तके न पठ्यते।

वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् ॥
सुधौतांस्तत्कषायेण शालीनां चापि तण्डुलान् ॥ ३१ ॥
अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् ॥
शालितण्डुलचूर्णं तु सम्यक् खिन्नं सुशीतलम् ॥ ३२ ॥
तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ॥
मण्डोदकार्थे क्वाथं च दद्यात्तत्सर्वमेकतः ॥ ३३ ॥
निदध्यात् कलसे तां तु सुरां जातरसां पिबेत् ॥
एष एव सुराकल्पो वमनेष्वपि कीर्तितः ॥ ३४ ॥

वैरेचनिकमूलानामित्यादौ सुराकल्पे माषानिति निस्तुषमाषान् । सुधौतानिति तण्डुलानित्यनेन योज्यम् । एकत इति माषं तण्डुलं च एकीकृत्य । पिण्डानिति सुराबीजसंज्ञकान् पिण्डान्, सुचूर्णितानत्र 'कुर्यात्' इति शेषः । शालितण्डुलचूर्णमित्यपरं पिष्टान्नं ज्ञेयम् । सम्यक्खिन्नमिति वैरेचनिकक्वाथेनैव खिन्नं ज्ञेयम् । किण्वभागविमिश्रितानिति सुचूर्णितानित्यनन्तरोक्तसुराबीजभागैकमिश्रितान् । मण्डोदकार्थे इति मण्डेनोदकेन वा कर्तव्यद्रवकार्ये । जातरसत्वमिहापि पूर्ववन्मासादर्धमासाद्वा । वमनेष्वपीति मदनफलादिष्वपि वमनार्थमेव ॥ ३१–३४ ॥

मूलानि त्रिवृदादीनां प्रथमस्य गणस्य च ॥
महतः पञ्चमूलस्य मूर्वाशार्ङ्गेष्टयोरपि ॥ ३५ ॥
सुधां हैमवतीं चैव त्रिफलातिविषे वचाम् ॥
संहृत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥ ३६ ॥
कुर्यान्निःक्वाथमेकस्मिन्नेकस्मिंश्चूर्णमेव तु ॥
क्षुण्णांस्तस्मिंस्तु निःक्वाथे भावयेद्बहुशो यवान् ॥ ३७ ॥
शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ॥
चतुर्थं भागमावाप्य चूर्णानामत्र कीर्तितम् ॥ ३८ ॥
प्रक्षिप्य कलसे सम्यक् ततस्तं तदनन्तरम् ॥
तेषामेव कषायेण शीतलेन[3] सुयोजितम् ॥ ३९ ॥
पूर्ववत् सन्निदध्यात्तु ज्ञेयं सौवीरकं हि तत् ॥

मूलानीत्यादौ सौवीरकविधाने त्रिवृतादीनामित्यादिशब्देन श्यामादीनामेकादशानां ग्रहणम् । प्रथमगणो विदारिगन्धादिः । शार्ङ्गेष्टयोरित्यन्तैर्मूलानीति योज्यम् । कारयेदिति भागौ द्वावित्यनेन, तथा चूर्णमेव चेत्यनेन च योज्यम् । बहुश इति सप्तधा । यवानिति निस्तुषयवान्; यतस्तुषोदके सतुषयवविधानादिह निस्तुषा एव यवा भवन्ति । चूर्णाना-

१ 'च तत्कषायोष्मसाधितम्' इति पा० । २ 'भागीं॰' इति ता. । ३ 'शीतेनाभिप्रपूरयेत्' इति ता. ।

मिति औषधचूर्णानाम् । तेषामेवेति त्रिवृदादीनां वचान्तानां पृथग्गृहीतक्वाथ्यकृतकषायेण ॥ ३५-३९ ॥—

पूर्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः ॥ ४० ॥
भागं संक्षुद्य संसृज्य यवैः स्थाल्यामधिश्रयेत् ॥
अजश्रृङ्ग्याः कषायेण तमभ्यासिच्य साधयेत् ॥ ४१ ॥
सुसिद्धांश्चावतार्यैतानौषधिभ्यो विवेचयेत् ॥
विमृद्य सतुषान् सम्यक् ततस्तान् पूर्ववन्मितान् ॥ ४२ ॥
पूर्वोक्तौषधभागस्य चूर्णं दत्त्वा तु पूर्ववत् ॥
तेनैव सह यूषेण कलसे पूर्ववत् क्षिपेत् ॥ ४३ ॥
ज्ञात्वा जातरसं चापि तत्तुषोदकमादिशेत् ॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्तितः ॥ ४४ ॥
षड्रात्रात् सप्तरात्राद्वा ते च पेये प्रकीर्तिते ॥

पूर्वोक्तमित्यादि तुषोदकविधानम् । तत्र यवाः सतुषाः समक्षुण्णौषधैकभागसहिता अजश्रृङ्गीकषायेण सुखिन्नतापर्यन्तं साध्याः । विवेचयेदिति पृथक् कुर्यात् । पूर्वसंमितानिति पूर्वेणौषधभागेन तुल्यान् । प्रथमं पूर्ववदिति पदं शीतलेन सुयोजितमित्यस्यार्थमतिदिशति, द्वितीयं तु कलससंस्कारं पूर्ववद्दर्शयति । तेनैवेत्यौषधसहितयवसाधनावशिष्टाजश्रृङ्गीकाथेन; अस्य च यवसंबन्धाद् घनत्वेन यूषेणेति कृतम् । जातरसमिति अम्लरसम् । षड्रात्रसप्तरात्रविकल्प उष्णशीतकालापेक्षः ॥ ४०-४४ ॥—

वैरेचनेषु सर्वेषु त्रिवृन्मूलविधिः स्मृतः ॥ ४५ ॥

सर्वमुक्तं त्रिवृद्विधानमपरवैरेचनेष्वतिदिशन्नाह—वैरेचनेष्वित्यादि । अनेन चातिदेशेनासवसुरासौवीरकतुषोदकेष्वपि सामान्यवैरेचनिकाभिधानेऽपि त्रिवृदेव ग्राह्येति यथाव्याख्यातं लभ्यते, अन्यथा सर्ववैरेचनिकसाध्यत्वे सत्यासवादिषु अयमतिदेशोऽनुपपन्नः स्यात् ॥ ४५ ॥

दन्तीद्रवन्त्योर्मूलानि विशेषान्मृत्कुशान्तरे ॥
पिप्पलीक्षौद्रयुक्तानि स्विन्नान्युद्धृत्य शोषयेत् ॥ ४६ ॥
ततस्त्रिवृद्विधानेन योजयेच्छ्लेष्मपित्तयोः ॥

संप्रति दन्तीद्रवन्त्योर्विशेषमाह—दन्तीत्यादि । अन्तर इति मध्ये; तेन कुशेन वेष्टयित्वा मृदा चालिप्य स्वेदनं कार्यम् । एतच्च **चरके**ऽप्युक्तं दन्तीद्रवन्तीकल्पे "शोषयेदातपेऽग्न्यर्कौ हतो ह्येषां विकाशिताम्" ( च. क. अ. १२ ) इत्यन्तेन ॥ ४६ ॥—

तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत् ॥ ४७ ॥
सर्पिश्च पक्वं वीसर्पकक्षादाहालजीर्जयेत् ॥
मेहगुल्मानिलश्लेष्मविबन्धांस्तैलमेव च ॥ ४८ ॥

चतुःस्नेहं शकृच्छुक्रवातसंरोधजा रुजः ॥

तयोरित्यादौ चक्रतैलग्रहणं यन्त्रगृहीते भृष्टतिलकृतहीनवीर्यनिषेधार्थम् । तयोः कल्ककषायाभ्यां सर्पिर्विपक्वं वैस्वर्यादीनञ्जयेत् । चक्रतैलं मेहादीन्, चतुःस्नेहो वा विपक्वः शकृच्छुक्रवातसंरोधजा रुजो जयतीति योज्यम् । घृततैलवसामज्जानः चतुःस्नेहः ॥ ४७ ॥ ४८ ॥—

दन्तीद्रवन्तीमरिचकनकाह्वयवासकैः ॥ ४९ ॥
विश्वभेषजमृद्वीकाचित्रकैर्मूत्रभावितम् ॥
सप्ताहं सर्पिषा चूर्णं योज्यमेतद्विरेचनम् ॥ ५० ॥
जीर्णे संतर्पणं क्षौद्रं पित्तश्लेष्मरुजापहम् ॥
अजीर्णपार्श्वरुक्पाण्डुप्लीहोदरनिबर्हणम् ॥ ५१ ॥

दन्तीत्यादियोगे कनकं केचित् कङ्कुष्ठं वदन्ति । सप्ताहमितिवचनमन्यत्रापि भावनीयं परिभाषारूपं ज्ञेयम् । तर्पणक्षौद्रमिति लाजसक्तुसहितं मधु । यदा 'तर्पणमुद्गन्धं' इति पाठस्तदा मधुयोगादुद्गन्धता । जीर्ण इत्यौषधे जीर्णे ॥ ४९–५१ ॥

गुडस्याष्टपले पथ्या विंशतिः स्युः पलं पलम् ॥
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५२ ॥
कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ॥
ततः खादेदुष्णतोयसेवी निर्यन्त्रणास्त्विमे ॥ ५३ ॥
दोषघ्ना ग्रहणीपाण्डुरोगार्शःकुष्ठनाशनाः ॥

गुडस्येत्यादौ पथ्या आकृतिमानेन विंशतिः ॥ ५२ ॥ ५३ ॥—

व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा ॥ ५४ ॥
नवैतानि समांशानि त्रिवृदष्टगुणानि वै ॥
श्लक्ष्णचूर्णीकृतानीह दन्तीभागद्वयं तथा ॥ ५५ ॥
( सर्वाणि चूर्णितानीह गालितानि विमिश्रयेत् ॥ )
षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिकैः ॥ ५६ ॥
पिण्डितं भक्षयित्वा तु ततः शीताम्बु पाययेत् ॥
बस्तिरुक्तृड्ज्वरच्छर्दिशोषपाण्डुभ्रमापहम् ॥ ५७ ॥
निर्यन्त्रणमिदं सर्वविषघ्नं तु विरेचनम् ॥
त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम्[1] ॥ ५८ ॥
भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः ॥
भक्ष्यरूपसधर्मत्वादाढ्येष्वेव विधीयते ॥ ५९ ॥

---

१ 'अविपत्तिरयं योगः प्रशस्तः पित्तरोगिणाम् । क्षारानुपानो भोक्तव्यो वातश्लेष्मातुरैर्नरैः ॥ अवेक्ष्य सम्यग्रोगादीन् यथावदुपयोजयेत्' इति ता. ।

व्योषेत्यादौ ईषत्सैन्धवं माक्षिकं यत्र तैः षड्भिः शर्कराभागैः पिण्डितं 'कुर्यात्' इत्याहार्य योज्यं; तेन तावदत्र मधु देयं यावता पिण्डता भवति; तथाऽपि तन्त्रान्तरे अयमेव "अभया पिप्पली" इत्यादिना अभयामोदकः प्रसिद्धः पठ्यते; ईषत्सैन्धवता परमत्र विशेषः । शीताम्बुपानं चात्र विरेचनविरुद्धमपि प्रयोगमहिम्ना भवति ॥५४–५९॥

तिल्वकस्य त्वचं बाह्यामन्तर्वल्कविवर्जिताम् ॥
चूर्णयित्वा तु द्वौ भागौ तत्कषायेण गालयेत् ॥ ६० ॥
तृतीयं भावितं तेन भागं शुष्कं तु भावितम् ॥
दशमूलीकषायेण त्रिवृद्वत् संप्रयोजयेत् ॥ ६१ ॥
विधानं त्वक्षु निर्दिष्टं

तिल्वकस्य त्रिवृद्विधानार्थं संस्कारमाह—तिल्वकस्येत्यादिना । अन्तर्वल्कम् अन्तः-स्थितकठिनत्वग्भागः । गालयेदिति स्रावणवत् षड्गुणेन क्काथेन एकविंशतिवारान् स्रावणं वैद्योपदेशात्, तेन परिस्रावणलब्धगुणतिल्वकक्काथेनानुभावितमिति यथोक्ततिल्वकक्काथ-कृतसप्तदिनभावनानन्तरं दशमूलकषायभावितम्, एतदपि सप्तदिनभावनम् ॥६०॥६१॥—

फलानामथ वक्ष्यते ॥
हरीतक्याः फलं त्वस्थिविमुक्तं दोषवर्जितम् ॥ ६२ ॥
योज्यं त्रिवृद्विधानेन सर्वव्याधिनिबर्हणम् ॥
रसायनं परं मेध्यं दुष्टान्तर्व्रणशोधनम् ॥ ६३ ॥
हरीतकी विडङ्गानि सैन्धवं नागरं त्रिवृत् ॥
मरिचानि च तत् सर्वं गोमूत्रेण विरेचनम् ॥ ६४ ॥
हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ॥
सैन्धवं शृङ्गवेरं च गोमूत्रेण विरेचनम् ॥ ६५ ॥
नीलीफलानां चूर्णं तु नागराभययोस्तथा ॥
लिह्याद्गुडेन सलिलं पश्चादुष्णं पिबेन्नरः ॥ ६६ ॥
पिप्पल्यादिकषायेण पिबेत् पिष्टां हरीतकीम् ॥
सैन्धवोपहितां सद्य एष योगो विरेचयेत् ॥ ६७ ॥
([१]हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ॥
सैन्धवोपहिता वाऽपि सातत्येनाग्निदीपनी ॥ ६८ ॥
वातानुलोमनी वृष्या चेन्द्रियाणां प्रसादनी ॥
संतर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी ॥ ६९ ॥
शीतमामलकं रूक्षं पित्तमेदःकफापहम् ॥
विभीतकमनुष्णं तु कफपित्तनिबर्हणम् ॥ ७० ॥

१ अयं पाठः ता. पुस्तके न पठ्यते ।

त्रीण्यप्यम्लकषायाणि सतिक्तमधुराणि च ॥)
लिह्यादेरण्डतैलेन कुष्ठत्रिकटुकान्विताम् ॥ ७१ ॥
सुखोदकं चानुपिबेदेष योगो विरेचयेत् ॥
एरण्डतैलं त्रिफलाक्काथेन त्रिगुणेन तु ॥ ७२ ॥
युक्तं पीतं तथा क्षीररसैर्वा तु विरेचयेत् ॥
बालवृद्धक्षतक्षीणसुकुमारेषु योजितम् ॥ ७३ ॥
त्रिफला सर्वरोगघ्नी त्रिभागघृतमूर्च्छिता ॥ ७४ ॥
वयसः स्थापनं चापि कुर्यात् संततसेविता ॥

फलानामपि विशेषमाह—विधानमित्यादि । त्रिवृद्विधानेनेति पूर्वोक्तत्रिवृद्विधानेषु त्रिवृत्स्थाने हरीतकीं दत्त्वा प्रयोगाः कर्तव्याः । अस्य योगविशेषमाह—हरीतकीत्यादि । नीलिनीफलचूर्णमित्यत्र फलं त्रिफला । पिप्पल्यादिकषायेणादौ पेषणं, पानं च पिप्पल्यादिकषायेणैव । लिह्यादित्यादौ कुष्ठत्रिकटुकान्वितां हरीतकीं लिह्यादिति अनुवृत्तां हरीतकीमवस्थाप्य योजयन्ति । तथाऽत्र एरण्डतैलमित्यादौ योगे त्रिफलागता हरीतकीप्रयोगा एते; तेन हरीतक्यधिकार एवायम्, एरण्डतैलं त्वप्रधानं; तथा क्षीररसैर्वेत्यत्र वाशब्दस्यार्थः, तेनात्रापि द्विगुणत्रिफलाक्काथोऽपि भवतीति व्याख्यानयन्ति; किंतु हरीतकीपरिकरतयाऽऽगतैरण्डतैलस्य स्वतन्त्रोऽपि प्रयोगो युक्त एव; यदेरण्डतैलं विरेचनवर्गे पठितं, तस्येह तैलेन प्रयोग एरण्डफलप्रयोग एव । त्रिफलेत्यादौ त्रिभागघृतं त्रिफलायास्तृतीयभागघृतम् । वयसः स्थापनमिति तरुणवयोऽवस्थास्थैर्यकरी । प्रकरणाद्धरीतक्याः संशमनप्रयोगानप्याह—हरीतकी भक्ष्यमाणेत्यादि ॥ ६२–७४ ॥—

हरीतकीविधानेन फलान्येवं प्रयोजयेत् ॥ ७५ ॥
विरेचनानि सर्वाणि विशेषाच्चतुरङ्गुलात् ॥
फलं काले समुद्धृत्य सिकतायां निधापयेत् ॥ ७६ ॥
सप्ताहमातपे शुष्कमतो मज्जानमुद्धरेत् ॥
तैलं ग्राह्यं जले पक्त्वा तिलवद्वा प्रपीड्य च ॥ ७७ ॥
तस्योपयोगो बालानां यावद्वर्षाणि द्वादश ॥

हरीतकीविधानेनेत्यादिना अपरविरेचनफलानामतिदेशं कृत्वा आरग्वधफले संस्कारविशेषमाह—विशेषादित्यादि । सिकतायामिति वालुकायाम् ॥ ७५–७७ ॥—

फलानां विधिरुद्दिष्टः क्षीराणां शृणु सुश्रुत ! ॥
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम् ॥ ७८ ॥
अज्ञप्रयुक्तं तद्धन्ति विषवत् कष्टविभ्रमम् ॥
विजानता प्रयुक्तं तु महान्तमपि संचयम् ॥ ७९ ॥
भिनत्त्याश्वेव दोषाणां रोगान् हन्ति च दुस्तरान् ॥
महत्याः पञ्चमूल्यास्तु बृहत्योश्चैकशः पृथक् ॥ ८० ॥

कषायैः समभागं तु तदङ्गारेषु शोषितम् ॥
अम्लादिभिः पूर्ववत्तु प्रयोज्यं कोलसंमितम् ॥ ८१ ॥
महावृक्षपयःपीतैर्यवागूस्तण्डुलैः कृता ॥
पीता विरेचयत्याशु गुडेनोत्कारिका कृता ॥ ८२ ॥
लेहो वा साधितः सम्यक् स्नुहीक्षीरपयोघृतैः ॥
भावितास्तु स्नुहीक्षीरे पिप्पल्यो लवणान्विताः ॥ ८३ ॥
चूर्णं काम्पिल्लकं वाऽपि तत्पीतं गुटिकीकृतम् ॥
सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ॥ ८४ ॥
मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे तथैव च ॥
कीर्णं तेनैव चूर्णेन माल्यं वसनमेव च ॥ ८५ ॥
आघ्रायावृत्य वा सम्यङ्मृदुकोष्ठो विरिच्यते ॥

अवशिष्टं क्षीरकल्पमाह—फलानामित्यादि । कष्टविभ्रममिति कष्टव्यापत्तिकरम् । महत्या इत्यादौ क्षुद्रमहद्भेदेन बृहतीद्वयम् । अम्लादिभिरिति काञ्जिकमस्तुसुराप्रभृतिभिः । महावृक्षेत्यादौ गुडेनोत्कारिकेति स्नुहीक्षीरेण गोधूमं भावयित्वा गुडेनोत्कारिका कर्तव्येति वदन्ति; किं तु स्नुक्क्षीरभाविततण्डुलगुडैरेवोत्कारिकाविधानेन उत्कारिका कर्तव्येति व्यक्तोऽर्थः । लेहो वेत्यादियोगे सम्यगिति वचनात् स्नुहीक्षीरं तथाऽल्पं देयं यथाऽतियोगो न स्यात् । भाविताश्च स्नुहीक्षीरे इत्यादौ पिप्पल्यो लवणान्विता विरेचयन्तीति पूर्वोक्ते बहुवचनविपरिणामाद् योज्यम् । कम्पिल्लकं वा विरेचयेदित्यादि योज्यम् । कम्पिल्लको गुण्डारोचनिका । तत्पीतमिति तत् क्षीरम् । सप्तलेत्यादौ स्नुहीक्षीरे तथैव चेति स्नुहीक्षीरेऽपि तद्भावितम् । कीर्णमिति अवचूर्णितम् ॥ ७८–८५ ॥—

मूलवल्कफलक्षीरविधानैः परिकीर्तितैः ॥
अवेक्ष्य विषयं सम्यगनुक्तानपि योजयेत् ॥ ८६ ॥
(त्रिवृच्छाणा मितास्तिस्रस्तिस्रश्च त्रिफलात्वचः ॥
विडङ्गपिप्पलीक्षारशाणास्तिस्रश्च चूर्णिताः ॥ ८७ ॥
लिह्यात् सर्पिर्मधुभ्यां च मोदकं वा गुडेन वा ॥
भक्षयेन्निष्परीहारमेतच्छ्रेष्ठं विरेचनम् ॥ ८८ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ॥
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ॥ ८९ ॥)
घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु ॥
भक्ष्यान्नलेह्येषु च तेषु तेषु विरेचनान्यग्रमतिर्विदध्यात् ॥ ९० ॥

इदानीमनुक्तविरेचनकल्पोपदर्शनार्थमाह—मूलवल्केत्यादि । विषयम् औषधरूपम् । अनुक्तानिति साक्षादनुक्तान्; अतिदेशात्तु सर्वविरेचनद्रव्यविधानमुक्तमेव । अनुक्तानित्यत्र

चकारो बोद्धव्यः; तेनोक्तानुक्तांश्च घृतादिषु विदध्यादिति योज्यम् । घृतादयोऽत्र प्रपञ्चेन नोक्ता एव, तेन घृतादिप्रयोगप्रपञ्चोपदेशत्वम् ॥ ८६-९० ॥

**क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव चूर्णम् ॥**
**कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टाः ॥ ९१ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने विरेचनद्रव्यविकल्पविज्ञानीयो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥**

इदानीं क्षीरादीनामुक्तानां गौरवलाघवावधारणार्थमाह—क्षीरमित्यादि । कषायः शृतः, तथा कषायः शीत इति योज्यं; तेन क्षीरं, स्वरसः, शृतः कषायः, शीतकषायः, तथा कल्कः, तथा चूर्णं चेति षट्कल्पा भवन्ति; फाण्टस्त्वत्रापि विहितत्वादेव नोक्तः, ये तु पठन्ति—"चूर्णः कषायः शिशिरः शृतश्च कल्को रसश्चेति तथा प्रदिष्टाः । पञ्चैव कल्पा" इति, तन्मते क्षीरं स्वरसेन गृह्यते, फाण्टः शीतकषायभेदात्, चूर्णो निर्द्रवत्वात् कल्काद्भिन्नः; चरके तु चूर्णं कल्क एवान्तर्भाव्य फाण्टेन समं पञ्च कल्पना उक्ताः; यदुक्तं—"स्वो रसः स्वरसः प्रोक्तः, कल्को दृषदि पेषितः । क्वथितस्तु शृतः, शीतः शर्वरीमुषितो मतः । क्षिप्त्वोष्णतोये मृदितः फाण्ट इत्यभिधीयते" ( च. सू. अ. ४ ) इति ॥ ९१ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने विरेचनकल्पनीयविज्ञानीयो नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशत्तमोऽध्यायः ।

**अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

द्विविधं द्रव्यम्—आतुरविषयमौषधरूपं, सुस्थविषयमन्नपानं च । तत्र मिश्रकादेरनन्तराध्यायपर्यन्ते भेषजद्रव्यमुक्तं, ततः सुस्थहितमन्नपानरूपमभिधातव्यम् । तत्रापि द्रवस्येतरार्थसाधकतया तथाऽऽह्लादजनकतया च प्राधान्याद् द्रवद्रव्यविधिरध्यायोऽभिधीयते । द्रवत्वयोगाद् द्रवं, द्रवं च तत् द्रव्यं चेति द्रवद्रव्यं, तस्य विधिर्भेदः पानीयक्षीरादिरूपः, तत्रोत्पन्नच्छप्रत्ययस्य पूर्ववल्लुक् ॥ १ ॥ २ ॥

**पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमं च ॥ ३ ॥**

तत्रापि प्राधान्येन पानीयं वक्तुमुद्यतः पानीयमान्तरीक्षमाह—पानीयमित्यादि । अन्तरीक्षादागतं भूतं वेत्यान्तरीक्षम् । अनिर्देश्यरसमिति अव्यक्तरसम् । अमृतमिवामृतमनपायित्वात् । जीवनं जीवितकारणमायुष्यमित्यर्थः । तर्पणमिति तृप्तिजननम् ।

धारणमिति अभिहतादीनां जीवितकारकत्वात् । आश्वासजननमिति कर्मभारादिक्लिष्टानां तोषजननम् । अनायासकृतः श्रमः क्लमः । मदो मद्यमदाकृतिः, स च त्रिविधः; यदुक्तं **चरके**—"यश्च मद्यमदः प्रोक्तो विषजो रौधिरश्च यः" (च. सू. अ. २४) इति । तन्द्रानिद्राप्रशमनं स्पर्शेन, भवति हि निद्रायास्तथा निद्रान्ते च तन्द्रायाः पानीयेनाक्ष्यादिक्षालनादपगमः । एकान्ततः पथ्यतममिति सर्वावस्थासु पथ्यतमम् ॥ ३ ॥

**तदेवावनिपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदीनदसरस्तडागवापीकूपचौण्डप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेष्ववस्थितमिति ॥ ४ ॥**

अन्यतममिति मधुरादिषु मध्येऽन्यतमम् । स्थानविशेषादिति वक्ष्यमाणपृथिव्यम्बुगुणभूयिष्ठत्वादिरूपात् स्थानविशेषात् । क्व पुनरन्यतरं रसमुपलभत इत्याह—नदीत्यादि । नद्यो गङ्गाद्याः, नदाः शोणनदादयः, सरो दिव्यखातं, तटादौ गोगतिर्यस्य स तडागः, वापी इष्टकादिरचिततीर्था पुष्करिणी दीर्घिकादिशब्दवाच्या, कूपः पट्टादिबद्धकूपः, चौण्ड्यो अनबद्धकूपः, प्रत्यासन्नजलं प्रस्रवणं निर्झरः, उद्भिदं निम्नप्रदेशादूर्ध्वमुत्तिष्ठज्जलस्थानं, विकिरं वालुकादीन् विकीर्य गृह्यमाणं जलस्थानं, केदारः प्रसिद्धः, पल्वलं तृणादिच्छन्नमल्पसरः, आदिग्रहणाद्ध्रदसमुद्रादिग्रहणम् ॥ ४ ॥

**तत्र, 'लोहितकपिलपाण्डुनीलपीतशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि संभवन्ति' इत्येके भाषन्ते । तत्तु न सम्यक्; पृथिव्यादीनामन्योन्यानुप्रवेशकृत उदकरसो भवत्युत्कर्षापकर्षेण । तत्र, स्वलक्षणभूयिष्ठायां भूमावम्लं लवणं च; अम्बुगुणभूयिष्ठायां मधुरं; तेजोगुणभूयिष्ठायां कटुकं तिक्तं च; वायुगुणभूयिष्ठायां कषायम्; आकाशगुणभूयिष्ठायामव्यक्तरसम्, अव्यक्तं ह्याकाशमित्यतः; तत् प्रधानमव्यक्तरसत्वात्, तत् पेयमान्तरीक्षालाभे ॥ ५ ॥**

मधुरादिकारणं स्थानविशेषमेकीयमतमुपन्यस्य दूषयति–तत्रेत्यादि । एकीयमतासम्यक्त्वे हेतुमाह—पृथिव्यादीनामित्यादि । उदकरस इति नद्यादिस्थानगतोदकगतमधुरादिरसः, स पृथिव्यादीनामुत्कर्षापकर्षकृतेन संयोगविशेषेणान्योन्यानुप्रवेशकृतो यस्माद्भवति अतो न विशेषवान् पृथिवीकारणक इत्यर्थः । अनुप्रवेशकृतो भवतीति अनुप्रवेशकारणको भवति । एनमेव कारणविशेषं मधुरादावाह—तत्रेत्यादि । एतत् सर्वं रसविशेषविज्ञानीय एव व्याहृतं तेनेह न व्याक्रियते । तत्रोक्तमपि चैतत् पुनः प्रकरणागतत्वाज्जलविशेषरसहेतुतयोच्यते इति न पुनरुक्तम् । यदुच्यते—"प्रक्रमार्थगतो वादो

---

१ 'स्वलक्षणोदकगुणभूयिष्ठायां मधुरं, तोयाग्निगुणभूयिष्ठायांमम्लं, पृथिव्यग्निगुणभूयिष्ठायां लवणं, वाय्वग्निगुणभूयिष्ठायां कटुकं, वाय्वाकाशगुणभूयिष्ठायां तिक्तं, पृथिव्यनिलगुणभूयिष्ठायां कषायं' इति ता. ।

न याति पुनरुक्तताम्” इति । केचित्तु ‘पृथिवीगुणभूयिष्ठायां अम्लं लवणं च’ इति पठन्ति; तन्नातिसंगतार्थम् । भूमिगतस्यापि जलस्योपादानार्थमव्यक्तरसतां सकारणमाह—आकाशेत्यादि । अव्यक्तमाकाशमिति केवलमाकाशमन्तरीक्षे इव तोयेऽव्यक्तरसकारणमित्यर्थः । अत इति वक्ष्यमाणाव्यक्तरसत्वादिति हेतोः । प्राधान्यमाह—तत् पेयमित्यादि ॥ ५ ॥

**अगन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम् ॥**
**अच्छं लघु च हृद्यं च तोयं गुणवदुच्यते ॥ ६ ॥**

प्रशस्ततोयगुणमाह—अगन्धमित्यादि । अगन्धमिति अविद्यमानसहजगन्धम्, अविद्यमानानिष्टगन्धं वा । तृष्णाघ्नमित्यनेन विशुद्धवीर्यतोच्यते । विरुद्धवीर्यं हि यदुपयुक्तमित्यादिना तृष्णाकारकं जलं वक्तव्यम् । प्रशस्तं शीतं यस्य तत् शीतलं, प्रशंसायां सिध्मादित्वाल्लच्; तेनाप्रशस्तमतिशैत्यं दन्तग्राहि निषिध्यते । अच्छमिति स्वच्छम् । लघ्विति लघुपाकम् । हृद्यमिति हृदयप्रियहितम् । चकारात् क्वथितशीते अहृद्यत्वमनिर्दोषं सूच्यते ॥ ६ ॥

**तस्य स्पर्शरूपरसगन्धवीर्यविपाकदोषाः षट् संभवन्ति । तत्र, खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषः, पङ्कसिकताशैवालबहुवर्णता रूपदोषः; व्यक्तरसता रसदोषः; अनिष्टगन्धता गन्धदोषः; यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्यदोषः; यदुपयुक्तं चिराद्विपच्यते विष्टम्भयति वा स विपाकदोष इति । त एते आन्तरिक्षे न सन्ति ॥ ७ ॥**

जलस्य दोषानाह—तस्येत्यादि । यत्र यथोक्ता दोषा भवन्ति तानाह—तत्र खरतेत्यादि । यदुपयुक्तं तृष्णेत्यादौ तृष्णा उष्णवीर्यतया, गौरवादयस्तु स्निग्धवीर्यतया ज्ञेयाः । एते च वीर्यदोषाः शीतवीर्यत्वादपाम् । एते दोषा इत्यादावन्तरीक्षे इति अन्तरीक्षादागते अन्तरीक्षगुणभूयिष्ठे भूमिजे च ॥ ७ ॥

**तत्र यत् पङ्कशैवलहठतृणपद्मपत्रप्रभृतिभिरवच्छन्नं रविशशिकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टं तद्व्यापन्नमिति विद्यात् ॥ ८ ॥**

**व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्तवम् ॥**
**दोषसंजननं ह्येतन्नाददीताहितं तु तत् ॥ ९ ॥**
**व्यापन्नमुदकं यस्तु पिबतीहाप्रसादितम् ॥**
**श्वयथुं पाण्डुरोगं च त्वग्दोषमविपाकताम् ॥ १० ॥**
**श्वासकासप्रतिश्यायशूलगुल्मोदराणि च ॥**
**अन्यान् वा विषमान्रोगान् प्राप्नुयादचिरेण सः ॥ ११ ॥**

**व्यापन्नस्य चाग्निक्वथनं सूर्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्वापणं प्रसादनं च कर्तव्यं, नागचम्पकोत्पलपाटलापुष्पप्रभृति-भिश्चाधिवासनमिति ॥ १२ ॥**

व्यापन्नजलप्रतीकारमाह—व्यापन्नस्येत्यादि । प्रसादनमिति दोषप्रशमनम् । एतच्च प्रसादनं स्पर्शादिदोषेषु साधारणं; विशेषस्तु 'सप्तकलुषस्य' इत्यादिना वक्तव्यम् ( अप्रसाधितमित्युक्तेन वक्ष्यमाणेन च विधानेन ) । क्वथनादिना अनिष्टगन्धस्य प्रसाधनमुक्त्वा तथाऽगन्धस्यैवाभीष्टगन्धतार्थमभिवासनमाह—नागपुष्पेत्यादि ॥ ९–१२ ॥

**तत्र सप्त कलुषस्य प्रसादनानि भवन्ति । तद्यथा–कतकगोमेदकबिसग्रन्थिपर्णीशैवालमूलवस्त्राणि मुक्तामणिश्चेति ॥ १३ ॥**

सप्तेत्यादौ कलुषस्येति सूक्ष्मद्रव्यान्तरयोगादुपहतस्वभाववर्णस्य । कतकं कतकफलं, गोमेदकः पुष्परागानुकारी मणिविशेषः, बिसग्रन्थिर्मृणालग्रन्थिः, पर्णी पाग्नीति ख्यातः, मुक्तैव मणिः ॥ १३ ॥

**पञ्च निक्षेपणानि भवन्ति । तद्यथा—फलकं, त्र्यष्टकं, मुञ्जवलय, उदकमञ्चिका, शिक्यं चेति ॥ १४ ॥**

पञ्च निक्षेपणानीति स्थापनस्थापनानि । एतानि च विरुद्धस्थानस्थापनादागतदोषनिषेधार्थम् । फलकं कलशादिस्थापनार्थं काष्ठफलकम् । त्र्यष्टकः त्रिकाष्ठिकेति प्रसिद्धः । मुञ्जवलयो मुञ्जकृतो वलयाकारः 'बिडुआ' इति ख्यातः । मञ्जिका वेत्रगृहादि । शिक्यं प्रसिद्धं, तच्चेहोन्नतं ज्ञेयम् ॥ १४ ॥

**सप्त शीतीकरणानि भवन्ति; तद्यथा—प्रवातस्थापनम्, उदकप्रक्षेपणं, यष्टिकाभ्रामणं, व्यजनं, वस्त्रोद्धरणं, वालुकाप्रक्षेपणं, शिक्यावलम्बनं चेति ॥ १५ ॥**

शीतीकरणं सूर्येणाग्निना चोष्णीकृतस्य ज्ञेयम् । उदकप्रक्षेपणं तोयपूर्णघटादेराकण्ठं शीतजले प्रक्षिप्य स्थापनम् । यष्टिकाभ्रामणं यन्त्रयष्ट्या भ्रामणम् । वस्त्रोद्धरणं वस्त्रेणोद्धृत्य शीतीभूतस्य उत्पीडयित्वा पुनर्ग्रहणम् ॥ १५ ॥

**सौवर्णे राजते ताम्रे कांस्ये मणिमयेऽपि वा ॥**
**पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत् ॥ १६ ॥**

तोयस्य प्रशस्तं पात्रमाह—सौवर्णे इत्यादि । पुष्पावतंसे इत्यभिमतपुष्पभूषिते; अन्ये नारिकेलादिपुष्पविधानं पुष्पावतंसं वदन्ति ॥ १६ ॥

**तत्रान्तरीक्षं चतुर्विधम् । तद्यथा—धारं, कारं, तौषारं, हैममिति । तेषां धारं प्रधानं, लघुत्वात्; तत् पुनर्द्विविधं—गाङ्गं, सामुद्रं चेति ।**

---

१ एतद्व्याख्यानानुयायी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः ।

**तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति । तयोर्द्वयोरपि परीक्षणं कुर्वीत—शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे बहिष्कुर्वीत, स यदि मुहूर्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं; वर्णान्यत्वे सिक्थप्रक्लेदे च सामुद्रमिति विद्यात्, तन्नोपादेयम् । सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद्भवति । गाङ्गं पुनः प्रधानं, तदुपाददीताश्वयुजे मासि । शुचिशुक्लविततपटैकदेशच्युतमथवा हर्म्यतलपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृन्मये वा पात्रे निदध्यात् । तत् सर्वकालमुपयुञ्जीत, तस्यालाभे भौमम् । तच्चाकाशगुणबहुलम् । तत् पुनः सप्तविधम् । तद्यथा—कौपं, नादेयं, सारसं, ताडागं, प्रास्रवणम्, औद्भिदं, चौण्ड्यमिति ॥ १७ ॥**

संप्रत्यान्तरीक्षं, गुणदोषेण तद्भेदानाह—तत्रान्तरीक्षमित्यादि । करा करका तद्भवं कारम् । तौषारं शिशिरभवम् । हिमसंहतिभवं तु हैमं; **चरके** तु हिमतुषारयोरभेदात्रिविधमुक्तं "ऐन्द्रं कारं हिमं च यत्" ( च. सू. अ. २७ ) इति वचनात् । धारं प्रधानं लघुत्वादिति भाषया कारादीनां गुरुत्वं वदन्ति । धारभेदमाह—गाङ्गं सामुद्रं चेति । वैवर्ण्यादयोऽन्ये भवन्तीत्यर्थः । सामुद्रस्यापि कदाचिद्ग्रहणमाह—सामुद्रमपीत्यादि । तत्रान्तरीक्षं **चरके** एकविधमेवोक्तं—"जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात् । तत् पतत् पतितं चापि देशकालावपेक्षते" ( च. सू. अ. २७ ) इत्यादिना; किं त्वान्तरीक्षस्यापि धूलिमलविषलूतादिसंबन्धात् सदोषत्वमप्युक्तं; तेनेहापि सदोषं सामुद्रं, निर्दोषं च गाङ्गमिति व्याख्येयम् । एवं गाङ्गसामुद्रपरीक्षाऽप्युपपन्ना भवति । वर्षाकाल एव यदा सविषप्राण्यादिसंबन्धो न भवति तदा निर्दोषं गाङ्गशब्दाभिधेयं, तत्तोयस्य परीक्ष्य ग्रहणमुपपन्नं; सामुद्रमप्याश्वयुजे गाङ्गवद्भवतीति वचनादश्वयुजेऽन्तरीक्षस्य निर्दोषता, परं तदा हि सतोऽपि लूतादिसंबन्धदोषस्यागस्त्यहननात् कालमहिम्ना च बाधितत्वात्; तदुक्तं **जतूकर्णे**—"वर्षासु घनैः रहोरगाः संचरन्ति वियति कीटलूताश्च । तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्" इति । यदा च गङ्गाया उद्धृतं गाङ्गं, समुद्रादुद्धृतं मेघैः सामुद्रमिति; तदा गङ्गाशब्देनापरनदीप्रभृतिग्रहणं, यथा नादेयसामुद्रमत्स्यद्वैविध्यं, नादेयेन सारसादिमत्स्यग्रहणं; किं तु चरकेण समं विरोधो भवति; न च सर्वेमुद्धत्यैव परं मेघा जलं वर्षन्ति, इत्यागमानुपपत्तिरस्ति; किं चाश्वयुजे सामुद्रस्य त्रिदोषकारिणो जलस्य तन्मतेन ग्रहणं चानुपपत्तिकं स्यात्; तस्मात् प्रथमैव व्याख्या युक्ता । आश्वयुजे आन्तरीक्षजलग्रहणादि कालदर्शनपरं, तेन कार्तिकेऽपि शरद्रूपे ग्रहणं भवत्येव; यदुक्तं **हारीतेन** 'अवृत्तायां शरद्यस्मात् पश्चाद्वाते प्रवाति च । हेमन्ते चापि गृह्णीयात्तज्जलं मृन्मयैर्घटैः" इति । आन्तरीक्षग्रहणोपायमाह—शुचीत्यादि । हर्म्यं धवलगृहम् । अन्यैर्वेति विस्तरखल्लशिलापट्टादिभिः ॥ १७ ॥

नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥
तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥ १८ ॥
तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥
ताडागं वातलं स्वादु कषायं कटुपाकि च ॥ १९ ॥
वातश्लेष्महरं वाप्यं सक्षारं कटु पित्तलम् ॥
सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥ २० ॥
चौण्ड्यमग्निकरं रूक्षं मधुरं कफकृन्न च ॥
कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥ २१ ॥
मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम् ॥
वैकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥ २२ ॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ॥
तद्वत् पाल्वलमुद्दिष्टं विशेषाद्दोषलं तु तत् ॥ २३ ॥
सामुद्रमुदकं विस्रं लवणं सर्वदोषकृत् ॥

तत्पुनर्नद्यादिष्वित्यादौ, वीर्यशब्देन प्रभावस्यापररूक्षादिधर्मस्य च ग्रहणम् । सामुद्रं सर्वदोषकृदिति त्रिदोषकृत् ॥ १८-२३ ॥—

अनेकदोषमानूपं वार्यभिष्यन्दि गर्हितम् ॥ २४ ॥
एभिर्दोषैरसंयुक्तं निरवद्यं तु जाङ्गलम् ॥
पाकेऽविदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्धनम् ॥
दीपनं स्वादु शीतं च तोयं साधारणं लघु ॥ २५ ॥

नद्याद्याधारवशेन जलधर्मानभिधाय आनूपादिदेशभवत्वेन पुनर्जलधर्मानाह—अनेकदोषमित्यादि । यद्यप्यानूपेऽपि नद्यादिस्थानस्यैव जलस्य वक्ष्यमाणा गुणास्तथाऽपि चानन्तरोक्तेनाभिष्यन्द्यादिगुणेन समं न विरोधः, यतोऽन्नद्रव्यप्रकृतिरक्तशाल्यादेस्तथा पेयादितद्विकारस्य पृथगुक्तगुणयोरिवात्रापि बलाबलनिरूपणं विरोधे सति चिन्तनीयम् । उभयानुगुणतया तु गुणस्योत्कर्ष एव भवतीति । अनेकदोषमिति अनेकजलदोषयुक्तम् । पाकेऽविदाहीत्यादौ प्रशस्तमिति निर्दोषतया । स्वाद्विति मिष्टम् ॥ २४ ॥ २५ ॥

**तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत, महागुणत्वात्; शरदि सर्वं, प्रसन्नत्वात्; हेमन्ते सारसं ताडागं वा; वसन्ते कौपं प्रास्रवणं वा; ग्रीष्मेऽप्येवं; प्रावृषि कौपं, सर्वमेव संस्कृतं चेति ॥ २६ ॥**

इदानीमान्तरीक्षं तावत्सर्वकालसेव्यमुक्तं, पुनः कालभेदेन विशेषेणान्तरीक्षं, कौपौद्भिदयोरप्यनभिदुष्टत्वादुपादानम् । महागुणत्वादिति आन्तरीक्षमित्यनेन संबध्यते । अन्ये तु 'भाद्राश्विनौ वर्षाः' इति वदन्ति; तेन वर्षाशब्देन वर्षान्ताश्विनस्य ग्रहणं, तेनाश्विने

१ एतद्व्याख्यानुसारी पाठस्त्वनुपलब्धत्वान्न मूले संनिवेशितः ।

गृहीतान्तरीक्षस्यैव उपयोग इति वदन्ति; भाद्रे तु कौपोद्भिदयोः प्रयोगमाहुः, किंतु शरच्छब्देन कार्तिकाग्रहायणग्रहणं स्यात्; न चाग्रहायणे सर्वं जलं प्रसन्नं, सर्वप्रसादस्याश्विनकार्तिकरूपशरद्येव चरकादावुक्तत्वात्। किं चाश्विने शरद्रूपे विहितसर्वजलोपयोगोऽत्र नोक्तः स्यात्; "दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम्। कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम् ॥ हंसोदकमिति ख्यातं शारदं विमलं शुचि । स्नानपानावगाहेषु हितमम्बु यथामृतम्" ( च. सू. अ. ६ ) इति। यदि च माघादिना शिशिरादिक्रमेण वर्षादि व्याख्यायते तदा हेमन्तविधानेन हेमन्ततुल्यतया शिशिरानभिधानं समाधेयं; यदुक्तं **चरके**—"हेमन्तशिशिरे तुल्ये शिशिरेऽल्पं विशेषणम्। तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥" ( च. सू. अ. ६ ) इत्यन्तेन । तथा प्रावृट्शब्देन वर्षाप्रथमकालः श्रावणः प्रथमरूपो वक्तव्यः। एवं च ग्रन्थस्य मुख्यार्थता न भवति, तद्विचारणीयोऽयं पाठक्रमस्तावत् । हेमन्ते सारसं कषायलघुत्वात्, ताडागं कषायतया कटुपाकितया च चीयमानकफहरं; वसन्ते कौपं सक्षारत्वात्, चौण्ड्यं रूक्षत्वाच्च कफहरं युज्यते; ग्रीष्मे प्रास्रवणं पथ्यत्वाच्छैत्याच्च, औद्भिदं मधुरत्वाच्च पित्तशमनं युक्तम्। प्रावृषि कौपमिति तदाकाशजलेनाभिन्नत्वात् । सर्वमेव संस्कृतमिति सर्वस्यैवातिवर्षणेन दुष्टत्वात् क्वथनसंस्कारः कर्तव्यः। क्वथनविधानमुक्तमन्यत्र यथा—"शारदं चार्धपादेन पादहीनं तु हैमनम्। शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ॥ अष्टभागावशेषं च कारयेत् प्रावृषं जलम्" इति ॥ २६ ॥

**कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम् ॥**
**तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥ २७ ॥**
**योऽवगाहेत वर्षासु पिबेद्वाऽपि नवं जलम् ॥**
**स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु ॥ २८ ॥**

कीटेत्यादौ कोथः पूतिभावः। विषसंयुतमिति तदाऽऽन्तरीक्षेण सविषेणातिवृष्टत्वात्, भूमावपि च तद्विषप्रवेशात् ॥ २७ ॥ २८ ॥

**तत्र नद्यः पश्चिमाभिमुखाः पथ्याः, लघूदकत्वात्; पूर्वाभिमुखास्तु न प्रशस्यन्ते, गुरूदकत्वात्; दक्षिणाभिमुखा नातिदोषलाः, साधारणत्वात्। तत्र सह्यप्रभवाः कुष्ठं जनयन्ति, विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगं च, मलयप्रभवाः कृमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान्, प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजनयन्ति, पारियात्रप्रभवाः पथ्या बलारोग्यकर्य इति ॥ २९ ॥**

संप्रति नदीनां प्रभवस्थानविशेषेण गुणानाह—तत्रेत्यादि। सह्यः पर्वतविशेषः, तत्र प्रभवन्तीति सह्यप्रभवाः; एवमन्यत्रापि ज्ञेयम् । अत्र मलयप्रभवा हिमवत्प्रभवाश्च दोषकरा उक्ताः, **चरके** तु तयोः पथ्यत्वमुक्तं; यदुक्तं—"मलयप्रभवा याश्च जलं तास्वमृतोपमम्" ( च. सू. अ. २७ ) इति; तथा "नद्यः पाषाणविच्छिन्नविक्षुब्धा-

भिहतोदकाः। हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः" (च. सू. अ. २७) इति; अत्रायं समाधिः—यत्–मलयप्रभवाः पाषाणसिकतावाहिन्य एव चरके यथोक्ताः, इह तु तद्विपरीता दोषला उक्ताः; तथा हिमवदुपत्यकाभवा इह हृद्रोगादिकारिण्य उक्ताः, चरके तु अधित्यकाभवाः पथ्या उक्ताः। अधित्यकाभवत्वमेव च तत्र देवर्षिसेवितत्वेन तथा पाषाणविच्छिन्नत्वादिग्रन्थेन चोक्तम्। यत् पारियात्रभवानामिह बलारोग्यकारित्वमुक्तं, तत्रापि **चरके** "पारियात्रभवा याश्च मलयप्रभवाश्च याः। शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च" (च. सू. अ. २७) इति ग्रन्थोक्तविरोधसमाधानं—पारियात्रदरीजठरनदीजलं चरके हृद्रोगादिकारणमुक्तम्, इह तु पारियात्रतडागोद्भवनदी बलादिकर्तृत्वतयोक्ता; यदुक्तं **विश्वामित्रे**—"तडागजं दरीजं च ताडागं तु सरिज्जलम्। बलारोग्यकरं तद्धि दरीजं दोषलं मतम्" इति; "प्राच्यावन्त्यपरावन्त्या अर्शांसि जनयन्ति च" इति॥ २९॥

**नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः॥**
**गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः॥ ३०॥**

संप्रति नदीनां वेगावेगाज्जलप्रसादाप्रसादाभ्यां यथाक्रमं गुरुत्वं लघुत्वं चाह—नद्य इत्यादि॥ ३०॥

**प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः॥**
**लघ्व्यः समधुराश्चैव पौरुषेया बले हिताः॥ ३१॥**

मरुनदीधर्मानाह—प्रायेणेत्यादि। पौरुषेया इति वृष्याः॥ ३१॥

**तत्र सर्वेषामेव भौमानां ग्रहणं प्रत्यूषसि, तत्र ह्यमलत्वं शैत्यं चाधिकं भवति, स एव चापां परो गुण इति॥ ३२॥**

**दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः॥**
**अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना॥ ३३॥**

भौमजलस्यापि संस्कारविशेषेण गगनाम्बुना तुल्यताकारणमाह—दिवेत्यादि। यद्यप्यर्ककिरणा दिवैव भवन्ति, तथाऽपि दिवावचनं सकलदिनव्याप्यार्ककिरणयोगार्थम्। एवं निशीति वचनं सकलनिशां व्याप्य निशाजसौम्यहिमसंबन्धार्थम्। चन्द्रशब्दोऽयं हिमाधारतया नैशहिमोपलक्षणः; अन्यथा पौर्णमास्यामेव परं सर्वनिशां व्याप्य चन्द्रांशुयोगः स्यात्॥ ३२॥ ३३॥

**गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने॥**
**बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम्॥ ३४॥**

गगनाम्बुगुणमेवानुक्तमिहातिदेष्टव्यमाह—गगनाम्ब्वित्यादि। पात्रापेक्षीति स्थापनपात्रदोषगुणापेक्षि॥ ३४॥

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ॥
भ्रमक्लमपरीतेषु तमके वमथौ तथा ॥ ३५ ॥
ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥ ३६ ॥
आध्माने स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ॥
हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥ ३७ ॥

संप्रति यद्गुणमम्बु यत्र प्रयोक्तव्यं तदाह—मूर्च्छेत्यादि । उष्णदाहः आतपजनित-दाहः । सद्यःकृतशोधने सद्यःशब्दश्चायं सप्तरात्रे वैद्यकव्यवहाराज्ज्ञेयः । शीताम्बु परिवर्जयेदिति विशेषगुणनिर्देशादुष्णमत्र देयम् ॥ ३५-३७ ॥

कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम् ॥
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥ ३८ ॥
यत् क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु ॥
चतुर्भागावशेषं तु तत्तोयं गुणवत् स्मृतम् ॥ ३९ ॥
न च पर्युषितं देयं कदाचिद्वारि जानता ॥
अम्लीभूतं कफोत्क्लेदि न हितं तत् पिपासवे ॥ ४० ॥

तस्यैवोष्णस्य विषयान्तरमाह—कफेत्यादि । उष्णोदके वचनं—"क्वाथ्यमानं तु यत्तोयं निष्फेनं निर्मलं लघु । अर्धश्टतं यद्भवति तदुष्णोदकमिष्यते" इति ॥ ३८-४० ॥

मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा ॥
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते ॥ ४१ ॥
दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्तिषु ॥
शृतशीतं जलं शस्तं तृष्णाच्छर्दिभ्रमेषु च ॥ ४२ ॥

मद्यपानादित्यादिना शृतशीतविषयः । प्रशस्तशृतशीततोयलक्षणं—"शृतं लघुतरं वारि बाष्पान्तर्भावशीतलम् । शीतीकृतं तु विष्टम्भि दुर्जरं पवनाहतम्" इति ॥ ४१-४२ ॥

अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥
मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥ ४३ ॥
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥

मन्दमाचरेदिति अतिस्तोकमाचरेत् ॥ ४३ ॥—

रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ॥ ४४ ॥
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥

पानीयप्रकाराच्चन्द्रकान्तभवजलगुणमाह—रक्षोघ्नमित्यादि ॥ ४४ ॥—

**स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् ॥ ४५ ॥**
**वृष्यं पित्तपिपासाघ्नं नालिकेरोदकं गुरु ॥**
**इति जलवर्गः ।**

नारिकेलोदकगुणमाह—स्निग्धमित्यादि । पित्तजनितपिपासाघ्नं, तेनामजादिपिपासाहरं न भवति । केचिदत्र लघ्विति पठन्ति, अत्र मधुरे स्निग्धे वृष्ये तदनुपपन्नं; प्रभावात्तु तद्वर्णनं नानुमोदितमनुमन्यते ॥ ४५ ॥—

**अथ क्षीरवर्गः ।**

**गव्यमाजं तथा चौष्ट्रमाविकं माहिषं च यत् ॥ ४६ ॥**
**अश्वायाश्चैव नार्याश्च करेणूनां च यत् पयः ॥**

पानीयानन्तरं क्षीरगुणाभिधानं, जीवनत्वसामान्यात् । अत्र गव्यं प्रधानत्वात् पूर्वमुक्तं—गव्यमाजमित्यादि । यद्यपि खड्गिमृगादीनामपि क्षीरमस्ति, तथाऽपि तस्यानुपयोगादिहानभिधानं; तन्त्रान्तरेष्वपि चाष्टावेव क्षीराण्युक्तानि ॥ ४६ ॥—

**तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु ॥ ४७ ॥**
**मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु ॥**
**सर्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते ॥ ४८ ॥**

अनेकौषधिरसमिति ओषधिशब्दोऽत्र द्रव्यवचनः; यदुक्तं—"द्रव्याणि पुनरोषधयः" (सू. अ. १) इति; तेनानेकाहाररसमित्यर्थः । आहाररस एव हि स्तनगत आहारमहिम्ना शुक्लतां गतः क्षीरमुच्यते; यदुक्तमन्यत्र—"रसप्रसादो मधुरः पक्वाहारनिमित्तजः । कृत्स्नाद्देहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते" इति । प्राणदमिति जीवितप्रदम् । सर्वप्राणभृतामिति जरायुजानां; तदितरेषां स्वेदजादीनां क्षीरायोगात् ॥ ४७ ॥ ४८ ॥

**तत्र सर्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात्, वातपित्तशोणितमानसेष्वपि विकारेष्वविरुद्धं, जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्बस्तिदोषपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्तातिसारप्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लमहरं, पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं वयःस्थापनमायुष्यं जीवनं बृंहणं संधानं वमनविरेचनास्थापनं, तुल्यगुणत्वाच्चौजसो वर्धनं, बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानां च पथ्यतमम् ॥ ४९ ॥**

हितमिति वक्तव्ये अप्रतिषिद्धमिति भाषया अवस्थायां हितं न सर्वदा हितमिति दर्शयति । जातिसात्म्यादिति क्षीरं जात्यैव सात्म्यमित्यर्थः । वातपित्तेत्यादावपि अविरुद्धमिति भाषया व्यवस्थाद्यपेक्षं हितत्वं दर्शयति । जीर्णविशेषणं ज्वरस्य । पाप्मापहत्वं पवित्रत्वात् प्रभावात् । आयुष्यम् आयुर्वृद्धिकरम् । जीवनत्वम् अपमृत्युप्रशमनेन जीवनकरम् । तुल्यगुणत्वादिति ओजसा तुल्यगुणत्वात्; तदुक्तं **चरके**ऽपि क्षीरगुणे—"तदेवंगुणमेवौजः सामान्येनाभिवर्धयेत्" ( च. सू. अ. २७ ) इति ॥ ४९ ॥

अल्पाभिष्यन्दि गोक्षीरं स्निग्धं गुरु रसायनम् ॥
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ ५० ॥
जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् ॥
गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम् ॥ ५१ ॥
दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् ॥
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥ ५२ ॥
नात्यम्बुपानाद्व्यायामात् सर्वव्याधिहरं पयः ॥
औरभ्रं मधुरं स्निग्धं गुरु पित्तकफावहम् ॥ ५३ ॥
पथ्यं शुद्धेऽनिले चैव कासे चानिलसंभवे ॥
महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् ॥ ५४ ॥
निद्राकरं शीततरं गव्यात् स्निग्धतरं गुरु ॥
रूक्षोष्णं लवणं किंचित् कारभं मधुरं लघु ॥ ५५ ॥
शोफगुल्मोदरार्शोघ्नं कृमिकुष्ठविषापहम् ॥
उष्णमैकशफं बल्यं शाखावातहरं पयः ॥ ५६ ॥
मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥
नार्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ॥ ५७ ॥
नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु ॥ ५८ ॥
स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥
(प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम् ॥ ५९ ॥
रात्र्याः सोमगुणत्वाच्च व्यायामाभावतस्तथा ॥
दिवाकराभितप्तानां व्यायामानिलसेवनात् ॥ ६० ॥
श्रमघ्नं वातनुच्चैव चक्षुष्यं चापराह्णिकम् ॥ )

सामान्यक्षीरगुणमभिधाय गव्यादिविशेषगुणमाह—अल्पाभिष्यन्दीत्यादि । रक्तपित्तहरत्वमवस्थाविशेषे ज्ञेयम् । गव्येत्यादि छागक्षीरगुणः । शोषो राजयक्ष्मा । 'अजानामल्पकायत्वात्' इत्यादि केचित् पठन्ति । अत्र सर्वव्याधिहरमिति सर्वदोषहरं, व्याधिशब्दो दोषेऽपि वर्तते; किंवा सर्वशब्दो विपुलवचनः । औरभ्रमित्यादि । उष्णमिति सामान्योक्तक्षीरशीतगुणापवादरूपम् । एवमन्यत्रापि व्याख्येयम् । शुद्धेऽनिल इति दोषान्तरेणासंयुक्ते अनावृते च, शोणितेन आवृते युक्ते वाते तद्धितम् । महाभिष्यन्दीति दोषधातुमलस्रोतसामतिशयेन क्लेदप्राप्तिजननम् । येऽत्र क्षीरसामान्यगुणा उक्ता मधुरत्वादयः पुनरुक्ते तत्प्रकर्षार्थम् । स्निग्धतरमिति गव्यादपि स्निग्धं; यदुक्तमन्यत्र—"गव्यं त्रिभागस्नेहोनं माहिषात् परिकीर्तितम्" । चरकेऽपि ( सू. अ. २७ ) स्नेहाऽन्यूनमुक्तम् । कारभमिति औष्ट्रं; तत्र मधुरमिति वचनं लवणरसत्वे मधुरत्वप्राप्त्यर्थम् ।

ऐकशफमिति वडवायाः। अत्राश्वाया इति वक्तव्ये यदैकशफमिति सामान्यशब्दप्रयोगं करोति, ततो गर्दभीप्रभृतीनामप्येकशफानां क्षीरग्रहणार्थम्। शाखावातहरमिति वचनादन्यत्र कोष्ठवातं न हन्ति, शाखाशब्देन च बाहुसक्थिग्रहणम्। रक्तादयो धातवः शाखा इत्यन्ये। आश्चोतनमक्षिपूरणम् ॥ ५०-६० ॥—

**पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम् ॥ ६१ ॥**
**तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् ॥**
**वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥ ६२ ॥**
**धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा ॥**
**तदेवातिशृतं शीतं गुरु बृंहणमुच्यते ॥ ६३ ॥**

क्षीरस्यासंस्कृतस्य गुणान् क्रमेणाह—पयोऽभिष्यन्दीत्यादि। आममिति अशृतम्। धारोष्णमिति सद्यो दोहधारासंबन्धोष्णतायुक्तम्। गुणवदिति प्रशस्तरसायनगुणयुक्तं, यदुक्तं **भोजे**—"पयोऽभिष्यन्दि गुर्वामं शृतोष्णं कफवातजित्। शृतशीतं तु पित्तघ्नं सद्यो दुग्धं रसायनम्" इति। विपरीतमिति न तथा प्रशस्तगुणवत् ॥ ६१-६३ ॥

**अनिष्टगन्धमम्लं च विवर्णं विरसं च यत् ॥**
**वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥ ६४ ॥**

**इति क्षीरवर्गः।**

व्यापन्नक्षीरासेव्यतामाह—अनिष्टगन्धमित्यादि। अम्लत्वं सलवणत्वं च विदाहात्। यदि वा गवादीनामत्यर्थंलवणमेव नाम्ललवणम् (?)। ग्रथितता चावस्थायाम् ॥ ६४ ॥

## अथ दधिवर्गः।

**दधि तु मधुरमम्लमत्यम्लं चेति; तत् कषायानुरसं स्निग्धमुष्णं पीनसविषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं मङ्गल्यं च ॥ ६५ ॥**

**महाभिष्यन्दि मधुरं कफमेदोविवर्धनम् ॥**
**कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम् ॥ ६६ ॥**
**विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत् ॥**

क्षीरकार्यतया क्षीरमनु दधिगुणानाह—दधि त्वित्यादि। एतत् सुजातमधुराम्लदधिगुणकथनं मङ्गल्यं चेत्यन्तेन। प्राणकरमिति बलकरम्। मङ्गल्यं प्रभावात्। मन्दकमिति मन्दजातम्। अत्यम्लमिति अत्यम्लतां गतदधिधर्मनिर्देशः, दीपनमित्यादि तस्य गुणः ॥ ६५ ॥ ६६ ॥—

**स्निग्धं विपाके मधुरं दीपनं बलवर्धनम् ॥ ६७ ॥**
**वातापहं पवित्रं च दधि गव्यं रुचिप्रदम् ॥**

---

१ एतद्व्याख्यानुसारी पाठस्त्वभावान्न मूले सन्निवेशितः।

दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ॥ ६८ ॥
दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥
विपाके मधुरं वृष्यं वातपित्तप्रसादनम् ॥ ६९ ॥
बलासवर्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥
विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि ॥ ७० ॥
वातमर्शांसि कुष्ठानि क्रमीन् हन्त्युदराणि च ॥
कोपनं कफवातानां दुर्नाम्नां चाविकं दधि ॥ ७१ ॥
रसे पाके च मधुरमत्यभिष्यन्दि दोषलम् ॥
दीपनीयमचक्षुष्यं वाडवं दधि वातलम् ॥ ७२ ॥
रूक्षमुष्णं कषायं च कफमूत्रापहं च तत् ॥
स्निग्धं विपाके मधुरं बल्यं संतर्पणं गुरु ॥ ७३ ॥
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्या गुणोत्तरम् ॥
लघु पाके बलासघ्नं वीर्योष्णं पक्तिनाशनम् ॥ ७४ ॥
कषायानुरसं नाग्या दधि वर्चोविवर्धनम् ॥

गव्यादिविशेषगुणानाह—स्निग्धमित्यादि । माहिषदधिगुणे स्निग्धं विशेषादित्यनेन संबध्यते, बलासवर्धनमविशेषात् । आविकदधिगुणे कफवाताभ्यां कृतदुर्नाम्नां कोपनमिति ज्ञेयम् ॥ ६७–७४ ॥—

दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ॥ ७५ ॥
विज्ञेयमेवं सर्वेषु गव्यमेव गुणोत्तरम् ॥

सर्वदधिषु गव्यस्य प्राधान्यमाह—दधीनीत्यादि ॥ ७५ ॥—

वातघ्नं कफकृत् स्निग्धं बृंहणं नातिपित्तकृत् ॥ ७६ ॥
कुर्याद्भक्ताभिलाषं च दधि यत् सुपरिस्रुतम् ॥
शृतात् क्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम् ॥ ७७ ॥
वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ॥

दध्नोऽवस्थाया भेदान्तरेण गुणानाह—वातघ्नमित्यादि । सुपरिस्रुतमिति सुष्ठुगलितद्रवभागम् ॥ ७६ ॥ ७७ ॥—

दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ॥ ७८ ॥
वह्नेर्विधमनश्चापि कफशुक्रविवर्धनः ॥

दधिसरगुणमाह—दध्न इत्यादि । वह्नेर्विधमन इति वह्निमान्द्यकरः ॥ ७८ ॥

दधि त्वसारं रूक्षं च ग्राहि विष्टम्भि वातलम् ॥ ७९ ॥
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ॥ ८० ॥

**हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥**

उद्धृते सरे शेषीभूतं निःसारं दधि त्वसारम् ॥ ७९ ॥ ८० ॥—

**तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम् ॥ ८१ ॥**
**अम्लं कषायं मधुरमवृष्यं कफवातनुत् ॥**
**प्रह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत् ॥**
**बलमावहते क्षिप्रं भक्तच्छन्दं करोति च ॥ ८२ ॥**
**स्वाद्वम्लमत्यम्लकमन्दजातं तथा शृतक्षीरभवं सरश्च ॥**
**असारमेवं दधि सप्तधाऽस्मिन् वर्गे स्मृता मस्तुगुणास्तथैव ॥८३॥**

**इति दधिवर्गः ।**

तृष्णेत्यादि मस्तुगुणः । मस्तु तु द्विविधम्—एकं दधिभवम्, अपरं कूर्चिकभवं; यदुक्तं **चरके** "द्रोणे पचेत् कूर्चिकमस्तुनस्तु ( च. चि. स्था. अ. १२ ) "त्रिभागशेषं च सुपूतशीतं द्रोणेन तत्प्राकृतमस्तुता च" इति । अपरे दधिकूर्चिकाभेदेन कूर्चिकाभवं मस्तु द्विविधमिति त्रिविधं मस्तु वदन्ति । तदयमविशेषेण मस्तुगुणः । विशेषस्तु मस्तुगुणः "तक्राल्लघुतर" इत्यादिना वक्तव्यः ॥ ८१–८३ ॥

**अथ तक्रवर्गः ।**

**तक्रं तु मधुरमम्लं कषायानुरसमुष्णवीर्यं लघु रूक्षमग्निदीपनं गरशोफातिसारग्रहणीपाण्डुरोगार्शःप्लीहगुल्मारोचकविषमज्वरतृष्णाच्छर्दिप्रसेकशूलमेदःश्लेष्मानिलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यं च ॥ ८४ ॥**

**मन्थनादिपृथग्भूतस्नेहमर्धोदकं च यत् ॥**
**नातिसान्द्रद्रवं तक्रं स्वाद्वम्लतुवरं रसे ॥**
**यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥ ८५ ॥**

तक्रमित्यादि तक्रगुणः । तक्रमिह पादजलमर्धजलं वा उद्धृतस्नेहमेवोच्यते, अत एव रूक्षमित्युक्तं; मन्दमनुद्धृतस्नेहं च तक्रं तथाऽर्धोद्धृतस्नेहं च तदपि साध्यविशेषे भवत्येव । यदुक्तं **चरके**—"रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् । तक्रं दोषाग्निबलवित् त्रिविधं तत् प्रयोजयेत्" (च. चि. अ. १४) इति । यत् पुनर्दधि मथितमात्रेण तक्रं तद्दधिगुणमेव, मन्थनसंस्कारेण परं मनाक् लाघवं जनितम् । गरः कृत्रिमविषम् ॥ ८४ ॥ ८५ ॥

**तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्बले ॥**
**न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ ८६ ॥**
**शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ॥**
**मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ८७ ॥**

तक्रस्याविषयं तक्रविषयं च श्लोकाभ्यामाह—तक्रं नैवेत्यादि ॥ ८६ ॥ ८७ ॥

**तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनं च; अम्लं वातघ्नं पित्तकरं च ॥ ८८ ॥**

**वातेऽम्लं सैन्धवोपेतं, स्वादु पित्ते सशर्करम् ॥**
**पिबेत्तक्रं, कफे चापि व्योषक्षारसमन्वितम् ॥ ८९ ॥**
**ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका ॥**
**तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥ ९० ॥**
**गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः ॥**
**मधुरौ बृंहणौ वृष्यौ तद्वत् पीयूषमोरटौ ॥ ९१ ॥**

तक्रस्यावस्थाभेदेन गुणमाह—तत्पुनरित्यादि । तक्रकूर्चिकादधिकूर्चिकाभ्यां जातस्य मस्तुनो गुणविशेषमाह—तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रज इति । मण्ड इति मस्तु, तस्य विशेषं—कूर्चिकेत्यादि । कूर्चिकारूपाद्दध्नः तक्राच्च जातः कूर्चिकादधितक्रजः । दधिकूर्चिकालक्षणं यथा—"दध्ना सह पयः पक्वं सा भवेद्दधिकूर्चिका" इति । प्राक्तदधिमस्तुगुणस्तूक्त एव । ये तु पठन्ति 'दधिकूर्चिका तक्रवत्' इति; तन्मते दधिकूर्चिका तक्रवदिति तक्रकूर्चिकासमानगुणा । मस्तु तक्रकूर्चिकामण्डः । किलाटो नष्टक्षीरपिण्डः, यमाहुर्लोकाः 'क्षीररस' इति । पीयूषमोरटयोर्लक्षणं यथा—"क्षीरं सद्यःप्रसूतायाः पीयूषमिति संज्ञितम् । सप्तरात्रात् परं क्षीरमप्रसन्नं च मोरटम्" इति । अन्ये तु मोरटस्थाने मोरणं पठन्ति, मोरणं च नष्टक्षीरद्रवं वदन्ति ॥ ८८–९१ ॥

**नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासव्रणशोषार्शोऽर्दितापहं; चिरोत्थितं गुरु कफमेदोविवर्धनं बलकरं बृंहणं शोषघ्नं विशेषेण बालानां प्रशस्यते ॥ ९२ ॥**

तक्रनिष्पत्तावुत्थितत्वात् तक्रमनु नवनीतमाह—नवनीतमित्यादि । सद्यस्कमित्यनेन लघु, चिरस्थितं तु गुरु, अत एव चिरस्थिताभिप्रायेणोक्तं—गुर्विति । बालानां प्रशस्यत इति प्रभावात् ॥ ९२ ॥

**क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहमाधुर्यमतिशीतं सौकुमार्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं वर्णप्रसादनं च ॥ ९३ ॥**

क्षीरोत्थिते नवनीतगुणे वर्णप्रसादनस्थाने ये प्रसादनमिति पठन्ति ते रक्तपित्तनेत्ररोगैरनन्तरोक्तैः प्रसादमपि योजयन्ति ॥ ९३ ॥

**संतानिका पुनर्वातघ्नी तर्पणी वृष्या बल्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्वी च ॥ ९४ ॥**

सन्तानिका क्षीरस्योपरिस्त्यानभागः ॥ ९४ ॥

विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः ॥
विकल्पानवशिष्टांस्तु क्षीरवीर्यात् समादिशेत् ॥ ९५ ॥

इति तक्रवर्गः ।

ननु क्षीरं दधि च गवादीनां प्रतिप्रतिगुणत उक्तं; मस्तुतक्रादयस्तु सामान्येनोक्ताः, तत् किं गव्यमस्त्वादय एते गुणत उक्ता न वेत्याशङ्कायामाह—विकल्प इत्यादि । दधि आदिर्यस्य स दध्यादिः, मस्तुतक्रादिरूप इत्यर्थः । श्रेष्ठ इति हेतुगर्भविशेषणं; तेन श्रेष्ठत्वाद्गव्य एवोक्त इत्यर्थः । यद्येवं छागादिमस्त्वादीनां तर्हि को गुण इत्याह—विकल्पानित्यादि । क्षीरवीर्यादिति वीर्यशब्दः शक्तिवचनः, पञ्चमी चात्र ल्यब्लोपे; तेन छागादीनां क्षीराणां शक्तिरूपान् रसवीर्यविपाकानवलोक्य तत्तद्दशानविरुद्धान् योग्यांश्च तन्मस्तुतक्रादावपि गुणान् वदेदित्यर्थः ॥ ९५ ॥

अथ घृतम् ।

घृतं तु मधुरं सौम्यं मृदु शीतवीर्यमल्पाभिष्यन्दि स्नेहनमुदावर्तोन्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्यौजस्तेजोबलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नं च ॥ ९६ ॥

नवनीतोत्थितत्वान्नवनीतमनु घृतमाह—घृतं पुनरित्यादि । सौम्यमिति सोमगुणयुक्तं; तेन स्पर्शनिपातमात्रेऽपि शीतं; शीतवीर्यमित्यनेन तु अधिवासादपि शीतम् । अल्पाभिष्यन्दिस्थाने ये 'अनभिष्यन्दि' इति पठन्ति, तन्मते ईषदर्थे नञिति स एवार्थः । त्रिदोषाकर्षणमिति पाठपक्षे संस्कारात् कफहरत्वेन समं त्रिदोषे मिलिते शमकत्वं ज्ञेयम् । तदुक्तं **चरके**—"स्नेहाद्वातं शमयति पित्तं माधुर्यशैत्यतः । घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्" ( च. नि. अ. १ ) इति । अग्निसन्दीपनत्वमस्य प्रभावात्, **चरकेऽ**पि घृतमग्निकरमित्युक्तं; यथा—"स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्धनम्" ( च. सू. अ. २७ ) इत्यादि । स्मृत्यादिकर्तृत्वं तथाऽलक्ष्मीप्रशमनत्वादिकर्तृत्वं गुणपर्यालोचनयाऽनुपपद्यमानं प्रभावाज्ज्ञेयम् । एवमन्यत्रापि गुणद्वाराऽनुपपद्यमानं प्रभावादेव व्याख्येयम् । तेजोऽत्र बलं; यदाह—वीर्यमिति तत्प्रभवं तेजः । मेध्यमिति पवित्रम् ॥ ९६ ॥

विपाके मधुरं शीतं वातपित्तविषापहम् ॥
चक्षुष्यमग्र्यं बल्यं च गव्यं सर्पिर्गुणोत्तरम् ॥ ९७ ॥
आजं घृतं दीपनीयं चक्षुष्यं बलवर्धनम् ॥
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ॥ ९८ ॥

---

१ 'शक्तित्वं' इति पा० ।

मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम् ॥
वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥ ९९ ॥
औष्ट्रं कटु घृतं पाके शोफक्रिमिविषापहम् ॥
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ १०० ॥
पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपणम् ॥
कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् ॥ १०१ ॥
पाके लघूष्णवीर्यं च कषायं कफनाशनम् ॥
दीपनं बद्धमूत्रं च विद्यादैकशफं घृतम् ॥ १०२ ॥
चक्षुष्यमग्र्यं स्त्रीणां तु सर्पिः स्यादमृतोपमम् ॥
वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम् ॥ १०३ ॥
कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु ॥
हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन् ॥ १०४ ॥

विपाक इत्यादिना गव्यादिविशिष्टघृतान्याह । सामान्यगुणाभिहितमधुरत्वादेः पुनरभिधानमुत्कर्षार्थम् । गुणोत्तरमिति सर्वघृतेषु प्रवरगुणम् । चक्षुष्यमग्र्यमिति श्रेष्ठं चक्षुष्यम् ॥ ९७–१०४ ॥

क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितं च ॥ १०५ ॥

क्षीरघृतमिति क्षीरोत्थितं घृतम् ॥ १०५ ॥

सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षिपूरणेषूपदिश्यते ॥ १०६ ॥

सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छामदोन्मादोदरज्वरगरशोषापस्मारयोनिश्रोत्राक्षिशिरःशूलघ्नं दीपनं वस्तिनस्यपूरणेषूपदिश्यते ॥ १०७ ॥

भवति चात्र—

पुराणं तिमिरश्वासपीनसज्वरकासनुत् ॥
मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥ १०८ ॥
(एकादशशतं चैव वत्सरानुषितं घृतम् ॥
रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम् ॥ १०९ ॥
पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः ॥
बल्यं पवित्रं मेध्यं च विशेषात्तिमिरापहम् ॥ ११० ॥
सर्वभूतहरं चैव घृतमेतत् प्रशस्यते ॥ १११ ॥ )

इति घृतवर्गः ।

सर्पिषः सन्तप्तस्य स्त्यानीभवदुपरितनो भागः सर्पिर्मण्डः; तस्य गुणो योनिश्रोत्राक्षिशिरसां शूलघ्नो बस्तिनस्याक्षिपूरणादिभिः ॥ १०६–१११ ॥

## अथ तैलानि ।

**तैलं त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकासि वृष्यं त्वक्प्रसादनं मेधामार्दवमांसस्थैर्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलबलासक्षयकरं क्रिमिघ्नमशितं पित्तजननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनं च; तथा छिन्नभिन्नविद्धोत्पिष्टच्युतमथितक्षतपिच्चितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारिताभिहतदुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहादिषु तिलतैलं प्रशस्यते ॥ ११२ ॥**

**तद्बस्तिषु च पानेषु नस्ये कर्णाक्षिपूरणे ॥**
**अन्नपानविधौ चापि प्रयोज्यं वातशान्तये ॥ ११३ ॥**

जङ्गमस्नेहोत्तमं घृतमभिधाय स्थावरस्नेहोत्तमं तैलमाह—तैलं त्वित्यादि । आग्नेयमपि किंचिदनुष्णं, यथा–सौम्यानां मुक्तादीनां प्रभा; तद्वदुष्णमपि किंचिन्नाग्नेयं, यथा—मत्स्यः; तेन तैले आग्नेयमुष्णमिति द्वितयमपि कृतम् । बृंहणं धातुपुष्टिकरत्वात् । लेखनत्वं मेदसो वृद्धस्याल्पकरत्वात् । व्यवायीति अपक्वमेव सकलदेहव्यापकं; विकाशित्वं पुनः प्रसरणशीलत्वं स्रोतोविकासकारित्वं वा । चक्षुष्यमिति नस्यपरिणामादिना, न तु पूरणात् । वृष्यमपि केचित् स्रोतःशुद्धिकरत्वाद् धातुपुष्टिकरत्वाच्च वदन्ति; न तु तैलं क्षीरादिवद् वृष्यमिति वदन्ति । मार्दवकरत्वं च तैलस्य तथा स्थैर्यकारित्वं च । तथा हि **चरके** दृढगात्रकारित्वं चोक्तं; यथा—'स्थिरतां दृढगात्रतां...ये वाञ्छन्ति ...तैलं पिबेयुः' ( च. सू. अ. १३ ) इति वचनात् । तेनेह तैलस्य प्रभावात् कठिने देहे मृदुताकारित्वं, श्लथे च देहे स्थिरताकारित्वं च कार्यं ज्ञेयम् । अनिलबलासक्षयकरमिति अनिलयुक्तश्लेष्मक्षयकरत्वं; केवलवातहरत्वं च 'वातशान्तय' इत्यनेनैव वक्तव्यं; तथा हि **चरके** "प्रभूतश्लेष्ममेदस्काश्चलस्थूलगलोदराः" ( च. सू. अ. १३ ) इति वातव्याधियुक्ता एव प्रभूतश्लेष्ममेदस्काः स्नेहनीया उक्ताः । केवलश्लेष्मानिले तैलं न मुख्यं भेषजं, **चरके** हि "न च श्लेष्माभिवर्धनम् ।··· ( च. सू. अ. १३ ) तैलं" इत्युक्तम् । केचित् पठन्ति—अशितं पित्तजननमिति; तत्राशितमिति 'शो' तनूकरणे इत्यस्माद्भावे क्तान्तं साधयन्ति; तेनाशितमिति तनुत्वकरमित्यर्थः । तथा **चरकेऽपि** तैलगुणे पठ्यते—"बलं तनुत्वं लघुतां ये च कांक्षन्ति" ( च. सू. अ. १३ ) इति । छिन्नं निःशेषतश्छिन्नं, भिन्नं भेद्यविषये, च्युतं स्थानाद्भ्रष्टम्, उत्पिष्टं चूर्णितं, मथितं विलोडितं, क्षतं क्षणनमात्रे, पिच्चितं यन्त्रेण, भग्नं काण्डभग्नादि, स्फुटितम् अस्थिनिर्गतं फलं, दारितं दीर्णं, निर्भुग्नं वक्रीभूतम् । बस्त्यादि स्वविषये कुपिते वाते ज्ञेयम् ॥ ११२ ॥ ११३ ॥

एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिशुक्रविशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वातकफहरमधोभागदोषहरं च ॥ ११४ ॥

तिलतैलमनु प्राधान्यादेव एरण्डतैलगुणमाह—एरण्डेत्यादि । अधोभागहरमिति विरेचनम् ॥ ११४ ॥

निम्बातसीकुसुम्भमूलकजीमूतकवृक्षककृतवेधनार्ककम्पिल्लकहस्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्याणि कटूनि कटुविपाकानि सराण्यनिलकफकृमिकुष्ठप्रमेहशिरोरोगापहराणि चेति ॥ ११५ ॥

निम्बेत्यादौ वृक्षकः कुटजः, हस्तिकर्णः पलाशः, पृथ्वीका कृष्णजीरकम् । निंबादीनां फलस्य तैलमिह । निम्बतैलं तन्त्रान्तरदर्शनात् पलितघ्नम् ॥ ११५ ॥

वातघ्नं मधुरं तेषु क्षौमं तैलं बलापहम् ॥
कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम् ॥ ११६ ॥
कृमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु ॥
कफमेदोनिलहरं लेखनं कटु दीपनम् ॥ ११७ ॥
कृमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु ॥
कुष्ठामयकृमिहरं दृष्टिशुक्रबलापहम् ॥ ११८ ॥
विपाके कटुकं तैलं कौसुम्भं सर्वदोषकृत् ॥
रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च ॥ ११९ ॥

एषां मध्ये येषां विशेषोऽस्ति तानाह—वातघ्नमित्यादि ॥ ११६–११९ ॥

किराततिक्तकातिमुक्तकबिभीतकनालिकेरकोलाक्षोडजीवन्तीप्रियालकर्बुदारसूर्यवल्लीत्रपुसैर्वारुककर्कारुकूष्माण्डप्रभृतीनां तैलानि मधुराणि मधुरविपाकानि वातपित्तप्रशमनानि शीतवीर्याण्यभिष्यन्दीनि सृष्टमूत्राण्यग्निसादनानि चेति ॥ १२० ॥

मधूककाश्मर्यपलाशतैलानि मधुरकषायाणि कफपित्तप्रशमनानि ॥ १२१ ॥

तुवरकभल्लातकतैले उष्णे मधुरकषाये तिक्तानुरसे वातकफकुष्ठमेदोमेहकृमिप्रशमने उभयतोभागदोषहरे च ॥ १२२ ॥

सरलदेवदारुशिंशपागुरुगण्डीरसारस्नेहास्तिक्तकटुकषाया दुष्टव्रणशोधनाः कृमिकफकुष्ठानिलहराश्च ॥ १२३ ॥

तुम्बीकोशाम्रदन्तीद्रवन्तीश्यामासप्तलानीलिकाकम्पिल्लकशङ्खिनीस्नेहास्तिक्तकटुकषाया अधोभागदोषहराः क्रिमिकफकुष्ठानिलहरा दुष्टव्रणशोधनाश्च ॥ १२४ ॥

यवतिक्तातैलं सर्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं च ॥ १२५ ॥

एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिवर्धनं च ॥ १२६ ॥

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं मधुरकषायं रसवन्नातिपित्तकरं च ॥ १२७ ॥

कटुतैलान्यभिधाय मधुरतैलान्याह । रसानां भिन्नानामित्यादि । भिन्नरसानामपि तैलं मधुरं भवति दृष्टत्वात् । अक्षोड औत्तरापथिकः, सूर्यवल्ली अर्कपुष्पी, प्रभृतिग्रहणात् कलिङ्गादीनां ग्रहणम् । कोषाम्रः कोषाम्वेति ख्यातः । श्यामा वृद्धकारक इत्येके । एते फलस्नेहाः । यवतिक्ता यवक्षेत्रजा भवति जीवभुक्तौ इलादुरिति प्रसिद्धा । एकेशिका पाठा । सहकारतैलं तरुणाम्रफलचूर्णभवम् । तद्रूक्षं, रूक्षकार्यकर्तृत्वाज्जात्यपेक्षया च तथाविधस्नेहनाकर्तृत्वात्; नत्वत्र कषायादिवद्रूक्षत्वं, यथा "चतुर्भागावशिष्टं तु तोयं कफहरं स्मृतम्" इत्यत्र कफं प्रति इतरपानीयवत् कफाजनकत्वात् कफहरत्वमुच्यते न तु कफहरमेव तद्भवति, तद्वद्रूक्षत्वं सहकारतैलस्य; एवमन्यत्राप्युक्तं वसामज्जोः श्लेष्महरत्वादि व्याख्येयम् ॥ १२०–१२७ ॥

फलोद्भवानि तैलानि यान्युक्तानीह कानिचित् ॥
गुणान् कर्म च विज्ञाय फलानीव विनिर्दिशेत् ॥ १२८ ॥

अनुक्ततैलगुणकर्मज्ञापनार्थमाह—फलोद्भवानीत्यादि । अन्नपानोक्तगुणकर्मभ्यामिहानुक्तफलतैलगुणाः कर्म च वक्तव्यमिति वाक्यार्थः ॥ १२८ ॥

यावन्तः स्थावराः स्नेहाः समासात् परिकीर्तिताः ॥
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥ १२९ ॥

सर्वेषामेव स्थावरस्नेहानां तिलतैलधर्ममतिदिशन्नाह—यावन्त इत्यादि । तैलगुणा इति तैलसमानधर्माः, तेन तैलगुणानां कर्मणां चातिदेशः ॥ १२९ ॥

सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं विशिष्यते ॥
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ १३० ॥

एवमपि तिलतैलस्य कर्मणि ज्यायस्त्वेन प्राधान्यमाह—सर्वेभ्यस्त्वित्यादि । तिलभवं तैलमिति मुख्यार्थः । इतरसार्षपादिस्नेहे तं लोकप्रसिद्धं तैलशब्दं व्युत्पादयन्नाह—

१ एतद्व्याख्यानानुसारी पाठस्त्वभावान्न मूले सन्निवेशितः ।

निष्पत्तेरित्यादि । निष्पत्तेरिति तिले यथा तैलं निष्पद्यते चूर्णीकरणयन्त्रपीडनादिना, तथा सर्षपादावपि स्नेहाकर्षणं भवति; यथाहि समाननिष्पत्तिकतया तद्वच्छुद्धतया च वितुषे धान्ये तण्डुलशब्दो वृत्तः, स वितुषे विडङ्गेऽपि वर्तते, यथा—'विडङ्गतण्डुला' इति तण्डुलत्वेन, यथा—अग्निर्माणवक इति ॥ १३० ॥

**ग्राम्यानूपौदकानां च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्नाः, जाङ्गलैकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः, प्रतुदविष्किराणां श्लेष्मघ्नाः । तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ॥ १३१ ॥**

## इति तैलवर्गः ।

स्नेहसामान्याद् वसादीनां गुणमाह—ग्राम्येत्यादि । ग्राम्यादयोऽनूपा वक्तव्याः । **चरके**ऽप्युक्तं—"यथासत्त्वं तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत्" ( च. सू. अ. २७ ) इति । श्लेष्मघ्ना इति अनुगतश्लेष्मघ्ना इति बोद्धव्यम् । तत्रेत्यादौ य उत्तरो घृतादिषु स पूर्वापेक्षया गुरुत्वादिप्रकर्षवान् भवतीत्यर्थः ॥ १३१ ॥

## अथ मधुवर्गः ।

**मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं स्वर्यं लघु सुकुमारं लेखनं हृद्यं वाजीकरणं सन्धानं शोधनं रोपणं संग्राहि चक्षुष्यं प्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाक्रिमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनं च; तत्तु लघुत्वात् कफघ्नं, पैच्छिल्यान्माधुर्यात् कषायभावाच्च वातपित्तघ्नम् ॥ १३२ ॥**

द्रवेषु क्रमात् पित्तवातहरप्रधाने घृततैले अभिधाय श्लेष्महरप्रधानं मधु निर्दिशति—मध्वित्यादि । उक्तं हि **चरके**ऽपि—"तैलं सर्पिर्मध्विति वातपित्तश्लेष्मप्रशमनप्रधानानि भवन्ति" ( च. वि. अ. १ ) इति । सुकुमारमिति सौकुमार्यजनकत्वात् । सन्धानं भग्नादिसन्धानकरम् । अत्र लघ्विति पठ्यते तथा त्रिदोषप्रशमनमिति च, तच्चरके विरुध्यते; तत्र हि "वातलं गुरु शीतं च रक्तपित्तापहं मधु" ( च. सू. अ. २७ ) इति पठितं; तेनेह लघ्विति लघुपाकं, त्रिदोषघ्नत्वं च प्रभावान्मिलितत्रिदोषारब्धज्वरादिहरतया ज्ञेयं, पृथग्वातजननं **चरके** प्रोक्तम् । तत्र लघुपाकादित्यादिना मिलितत्रिदोषहरण एवोपपत्तिर्वर्ण्यते । अन्ये त्वत्र लघुत्वं मधुनः पुराणतया वदन्ति, नवं तु मधु गुर्वेव ॥ १३२ ॥

**पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च ॥**
**आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ १३३ ॥**

अत्र केचिद् विशिष्टमधुनिर्देशे माक्षिकं पौत्तिकं भ्रामरमिति त्रिविधं मधु पठन्ति, अन्ये तु क्षौद्रेण समं चतुर्विधं पठन्ति; । अष्टविधमधुपाठस्तु सर्वसंमतः । पौत्तिकमित्यादि । तत्र पिङ्गलमक्षिका महत्यः पुत्तिकाः, तद्भवं पौत्तिकम् । भ्रमराः प्रसिद्धाः । माक्षिका एव पिङ्गलाः स्वल्पाः क्षुद्राः, तद्भवं क्षौद्रम् । तद्विधा एव नातिस्वल्पा मक्षिकाः, तद्भवं माक्षिकम् । वरट्याकारकच्छत्रभवं छात्रम् । शुनकाश्रमलये तरवो मधु स्रवन्ति, तदार्घ्यमुच्यते । उद्दालकाः स्वल्पकीटाः, ते वल्मीकान्तर्मधु चिन्वन्ति, तदौद्दालकम् । कपिला एवात्यल्पा वृक्षकोटरचारिण्यो ह(द)लाः, तद्भवं हा(दा)लम् ॥ १३३ ॥

विशेषात् पौत्तिकं तेषु रूक्षोष्णं सविषान्वयात् ॥
वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥ १३४ ॥
पैच्छिल्यात् स्वादुभूयस्त्वाद्भ्रामरं गुरुसंज्ञितम् ॥
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥ १३५ ॥
तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् ॥
श्वासादिषु च रोगेषु प्रशस्तं तद्विशेषतः ॥ १३६ ॥
स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित् ॥
श्वित्रमेहकृमिघ्नं च विद्याच्छात्रं गुणोत्तरम् ॥ १३७ ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम् ॥
कषायं कटु पाके च बल्यं तिक्तमवातकृत् ॥ १३८ ॥
औद्दालकं रुचिकरं स्वर्यं कुष्ठविषापहम् ॥
कषायमम्लमुष्णं च पित्तकृत् कटुपाकि च ॥ १३९ ॥
छर्दिमेहप्रशमनं मधु रूक्षं दलोद्भवम् ॥

क्रमेणैषां गुणविशेषानाह—विशेषादित्यादि । सविषान्वयादिति विशेषेण पुत्तिकानां सविषपुष्पेष्वेव मध्वाहरणादित्यर्थः । आर्घ्ये मधुगुणे अवातकृदिति ईषद्वातकृदित्यर्थः । एतच्चाविषान्वयतया उष्णाविरुद्धं; तदुक्तं **भोजे**—"मधून्युष्णैर्विरुध्यन्तेऽन्यत्रार्घ्यात्" इति । इह तु तदल्पत्वान्नोक्तं; तथा तत्रापि सौकुमार्यशैत्याभ्यां वक्ष्यमाणोष्णविरोधस्याविद्यमानत्वान्नोक्तम् ॥ १३४-१३९ ॥—

बृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ॥ १४० ॥
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥ १४१ ॥

मधुनोऽवस्थाविशेषेण गुणभेदमाह—बृंहणीयमित्यादि । मेद इत्यादि पुराणमधुगुणः । पक्वमित्यग्निसंयोगसंपर्कादेव मधु गृह्णन्ति । अन्ये तु मधुनः पाको नास्तीति कृत्वा मध्वाधारस्यैव भूरिकालेन पक्वत्वं स्वल्पकालाच्चापक्वत्वं वदन्ति ॥ १४० ॥ १४१ ॥

तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् ॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ १४२ ॥

मधुनो योगवाहितामाह—तद्युक्तमित्यादि । तत्र केचित् "नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु" इति पठन्ति, तन्मतेऽपीयमुपपत्तिः प्रभावसहिता मधुनो योगवाहित्वे हेतुः । प्रभावात्तु नानाद्रव्यात्मकत्वेऽपि मद्यादीनां न योगवाहित्वम् । योगवाहितया च येन येन वाजीकरणरसायनदोषहरणादिना युज्यते तस्यैव कर्म करोतीति भावः ॥१४२॥

तत्तु नानाद्रव्यरसवीर्यविरुद्धपुष्परससंभवत्वाद्विषमक्षिकासंभवत्वाच्चानुष्णोपचारम् ॥ १४३ ॥

उष्णैर्विरुध्यते सर्वं विषान्वयतया मधु ॥
उष्णार्तमुष्णैरुष्णे वा तन्निहन्ति यथा विषम् ॥ १४४ ॥

मधुन उष्णविरोधं सोपपत्तिकमाह—तत्तु नानेत्यादि । द्रव्येण रसेन वीर्येण विरुद्धानां पुष्पाणां रससंभवतया तथा विषलक्षितमक्षिकासंभवतया उष्णैर्विरुध्यते मधु । तत्र रसानां पुष्पगतमधुवलयादीनां तथा शीतोष्णयोर्विरोधः, द्रव्यस्य च वल्लीभवपुष्पस्य सविषतयैव प्रभावाच्च विरोधः ॥ १४३ ॥ १४४ ॥

तत् सौकुमार्याच्च तथैव शैत्यान्नानौषधीनां रससंभवाच्च ॥
उष्णैर्विरुध्येत विशेषतश्च तथाऽन्तरीक्षेण जलेन चापि ॥ १४५ ॥

एनमेवोष्णविरोधहेतुं हेत्वन्तरयुक्तं श्लोकेनाह—तत् सौकुमार्यादित्यादि । रससंभवादित्यत्र रसशब्दो द्रवे वर्तते । तुशब्दश्चार्थे, भिन्नक्रमः; तेन सविषक्रिमिसंभवत्वाच्चेति लभ्यते । उष्णविरोधश्चोष्णस्पर्शैरेव, नोष्णवीर्यैः; तेनोष्णवीर्यत्रिकटुकादिना मधु न विरुध्यते । सौकुमार्येणोष्णं विरुध्यते, यथा—नवनीतमग्निना, शैत्यस्योष्णस्पर्शे विरोध एव । विरोधप्रस्तावान्मधुनो विरोधान्तरं शीतेनाह—तथाऽन्तरीक्षेणेत्यादि ॥ १४५ ॥

उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ॥
अपाकादनवस्थानान्न विरुध्येत पूर्ववत् ॥ १४६ ॥
मध्वामात् परतस्त्वन्यदामं कष्टं न विद्यते ॥
विरुद्धोपक्रमत्वात्तत् सर्वं हन्ति यथा विषम् ॥ १४७ ॥

इति मधुवर्गः ।

उष्णयुक्तस्यापि मधुनो यत्र न विरोधस्तत् सोपपत्तिकमाह—उष्णेनेत्यादि । पक्वमुष्णविरुद्धं मधु रसक्रमेण धातून् दूषयद्विरोधमावहति । ननु यद्येवं तदा विरेचनेऽपि रसोत्पादरूपः पाको नास्ति, यतः पच्यमानं विरेचनं दोषैः समं निरेति, तत् किं विरेचनेऽपि मधु न विरुध्यत इत्याह—अनवस्थानादिति; वमनं पीतं मुहूर्तस्थितमेव निर्याति, विरेचनं तु चिरं तिष्ठति, तेन तत्रोष्णं मधु शरीराधिवासाद्विरुद्धत्वान्न प्रयुज्यते । वमनेष्विति

अचिरावस्थायिभेषजोपलक्षणं, तेन बस्तावप्यविरोधोऽनेनैव ज्ञेयः । पूर्ववदिति सौकुमार्यादिहेतोर्न विरुध्यते ॥ १४६ ॥ १४७ ॥

अथेक्षुवर्गः ।

**इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्तपित्तप्रशमनाः कृमिकफकराश्चेति । ते चानेकविधाः ॥ १४८ ॥**

माधुर्यादिक्षुरसादौ द्रव्ये निर्देष्टव्ये तत्प्रभवतया इक्षुमेवाह—इक्षव इत्यादि ॥ १४८ ॥

**तद्यथा—**

**पौण्ड्रको भीरुकश्चैव वंशकः श्वेतपोरकः ॥**
**कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः ॥ १४९ ॥**
**नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत् ॥**
**इत्येता जातयः स्थौल्याद् ,**

अत्र पौण्ड्रकादयो ये इक्षुभेदा उक्तास्ते देशान्तरे तत्तन्नामप्रसिद्धा एव ज्ञातव्याः, तेन नामेन देशान्तरप्रसिद्धमेवैषां लक्षणमिति । एता जातयः स्थौल्यादिति यथास्थूलमेता जातयः । तेनान्या अपि क्षारपत्रशतपर्वादीक्षुजातयो ज्ञेयाः । ये तु 'इत्येता जातयस्तेषां' इति पठन्ति, ते चकारेण कोशकारादीक्षुग्रहणं वदन्ति ॥ १४९ ॥—

**गुणान् वक्ष्याम्यतः परम् ॥ १५० ॥**
**सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः ॥**
**अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा ॥ १५१ ॥**
**आभ्यां तुल्यगुणः किंचित् सक्षारो वंशको मतः ॥**
**वंशवच्छ्वेतपोरस्तु किंचिदुष्णः स वातहा ॥ १५२ ॥**
**कान्तारतापसाविक्षू वंशकानुगतौ मतौ ॥**
**एवंगुणस्तु काष्ठेक्षुः स तु वातप्रकोपणः ॥ १५३ ॥**
**सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः ॥**
**वातलाः कफपित्तघ्नाः सकषाया विदाहिनः १५४ ॥**
**कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ॥**

इक्षुविशेषगुणश्लोका उक्ताः ॥ १५०–१५४ ॥—

**अतीव मधुरो मूले मध्ये मधुर एव तु ॥ १५५ ॥**
**अग्रेष्वक्षिषु च ज्ञेय इक्षूणां लवणो रसः ॥**
**अविदाही कफकरो वातपित्तनिवारणः ॥ १५६ ॥**

अग्रेष्वक्षिषु चेत्यत्र अक्षिष्विति ग्रन्थिषु; किंवा 'लक्षु च' इति पाठः ॥१५५॥१५६॥

**वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः ॥ १५७ ॥**

**गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्तितः ॥**
**पक्को गुरुः सरः स्निग्धः सतीक्ष्णः कफवातनुत् ॥ १५८ ॥**

दन्तनिष्पीडित इति दन्तैर्निष्पीड्य तत्क्षणसेवितः । अत्र "शर्करासमवीर्यस्तु दन्तनिष्पीडितो रसः" इति केचित् पठन्ति । तत्र वीर्यशब्दः शक्तिवचनः, तेन शर्करायास्तुल्यप्रभावः; यथा—"क्षीरं धारोष्णममृतं यथा" इत्युक्तम् । उक्तं च **चरके**—"वृष्यः शीतः सरः स्निग्धो बृंहणो मधुरो रसः । श्लेष्मलो भक्षितस्येक्षोर्यान्त्रिकस्तु विदह्यते" (च. सू. अ. २७) इति । तन्त्रान्तरे यान्त्रिकरसे विदाहकारणमुक्तं; यथा—"लग्नग्रन्थिपीडनाच्चैव यान्त्रिकस्तु विदह्यते" इति । तथा **हारीते**ऽप्युक्तं—"व्याधिकृत् सुकुमारोऽपि रसो यन्त्रनिपीडितः । सौक्ष्म्यात् स्पृष्टोऽनिलार्काभ्यां भृशं काये विदह्यते" इति । एवं च यान्त्रिकस्य विदाहित्वम् । यत्तूक्तं **चरके**—"मधूदकस्येक्षुरसस्य चैव पानात् शमं गच्छति रक्तपित्तम्" (च. चि. अ. ४) इति; तद्दन्तनिष्पीडितेक्षुरसविषयमेव । सतीक्ष्णः ईषत्तीक्ष्णः ॥ १५७ ॥ १५८ ॥

**फाणितं गुरु मधुरमभिष्यन्दि बृंहणमवृष्यं दोषकृच्च ॥ १५९ ॥**

फाणितस्तन्तुलीभूतो रसः; यदुक्तं—फाणितमातन्तुलीभावादिति । अत्र दोषकृदिति त्रिदोषकृत्; उक्तं हि तन्त्रान्तरे—"फाणितं तु त्रिदोषकृत्" इति ॥ १५९ ॥

**गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद्वातघ्नो मेदःकृमिकफकरो बल्यो वृष्यश्च ॥ १६० ॥**

**पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ॥**
**स पुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः ॥ १६१ ॥**

गुडे सक्षारशब्देन क्षारसहितलवणरसयुक्तत्वं वदन्ति, क्षारस्य तु द्रव्यत्वादत्र योगोऽनुपपन्न इति कृत्वा; किंतु क्षारद्रव्यस्यैव यदि गुडेऽपामार्गादिक्षारप्रधानद्रव्यमिव योगो भवति तदाऽपि न विरोधं पश्यामः । पित्तघ्न इत्यादि अपकृतमलत्वे सति शुद्धगुडगुणः । स पुराण इत्यादावधिकगुण इति गुडोक्ता गुणा इहाधिका विशेषकार्यकरणाच्च भवन्ति । पथ्यतम इति गुडान्तरापेक्षया हिततमः ॥ १६० ॥ १६१ ॥

**मत्स्यण्डिकाखण्डशर्करा उत्तरोत्तरं विमलाः शीताः स्निग्धा गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रशमनास्तृष्णाप्रशमनाश्च ॥ १६२ ॥**

मत्स्यण्डिकेत्यादौ मत्स्यण्डिका खण्डः 'शाल्वकी' इति यस्य प्रसिद्धिः । विमला उत्तरोत्तरमिति मत्स्यण्डिकाया मलापगमात् खण्डो भवति, खण्डाच्च मलापगमे शर्करा भवति; शीतस्निग्धादिगुणोऽपि यथोत्तरमिह प्रकर्षवान् भवतीति योजनीयम् ॥ १६२ ॥

**यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ॥**
**स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥ १६३ ॥**

एतदेव श्लोकेनाह—यथेत्यादि । अत्र गौरवस्थाने केचिल्लाघवं पठन्ति, वदन्ति

च—लाघवं हि गुणः प्रशस्तो न गौरवम्, उत्तरोत्तरं च प्राशस्त्यमेषामुक्तं; किंतु यथा यथा सरत्वं भवति तथा तथा गौरवमपि शैत्यस्य स्नेहवदुपपन्नं, मुक्तके च गुरुत्वमेव पठितम् ॥ १६३ ॥

**यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः ॥**
**तेन तेनैव निर्देश्यस्तेषां विस्रावणो गुणः ॥ १६४ ॥**

मत्स्यण्डिकादीनामपनीयमानमलगुणमाह—यो यो मत्स्यण्डिकेत्यादि । विस्रावयति विमलीकरोतीति विस्रावणः समलः क्षारो भागः; अत्र मत्स्यण्डिकोत्पत्तौ यो मलभागः स विस्रावणः, एवं खण्डशर्करयोर्विज्ञेयम् । किंतु मलांशस्य प्रसादेन समं तुल्यगुणता न युक्ता, तेन विस्रावणशब्देन मत्स्यण्डिकादिविस्रावणकृतद्रव्यस्यायं गुणः ॥ १६४ ॥

**सारस्थिता सुविमला निःक्षारा च यथा यथा ॥**
**तथा गुणवती सर्वा विज्ञेया गुडशर्करा ॥ १६५ ॥**

सारस्थितेत्यादिना गुडपाकात् कृतशर्करागुणमाह । गुडशर्करेति गुडपाककृता शर्करा; खण्डपाककृताऽत्र शर्करा पूर्वमेवोक्तगुणा ॥ १६५ ॥

**मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा छेदनी प्रसादनी कषायमधुरा मधुरविपाका च ॥ १६६ ॥**

शर्कराप्रकरणान्मधुशर्करागुणमाह—मधुशर्करेत्यादि । मधुनः कालान्तरावस्थानादतिघनीभूतमवयवं मधुशर्करेति वदन्ति ॥ १६६ ॥

**यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति ॥१६७॥**

यासशर्करां केचित् पठन्ति; साऽपि दुरालभाक्वाथघनीभावाद्भवति ॥ १६७ ॥

**यावत्यः शर्कराः प्रोक्ताः सर्वा दाहप्रणाशनाः ॥**
**रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृषापहाः ॥ १६८ ॥**

केचिदनुक्तशर्करागुणं श्लोकं पठन्ति—यावत्य इत्यादि ॥ १६८ ॥

**रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् ॥**
**कफघ्नं मधुरं पाके कषायं बस्तिदूषणम् ॥ १६९ ॥**

**इतीक्षुवर्गः ।**

इक्षुविकृतिफाणितसाधर्म्येण मधूकपुष्पक्वाथकृतफाणितगुणमाह—रूक्षमित्यादि १६९

**अथ मद्यवर्गः ।**

**सर्वं पित्तकरं मद्यमम्लं रोचनदीपनम् ॥**
**भेदनं कफवातघ्नं हृद्यं बस्तिविशोधनम् ॥ १७० ॥**
**पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ॥**
**विकासि सृष्टविण्मूत्रं**

इदानीमुक्तमधुगुडाभ्यामपि मद्यकरणान्मद्यगुणानाह—सर्वमित्यादि । अम्लमिति अम्लकार्यकारित्वात् साक्षादप्रतीयमानाम्लरसमपि मार्द्वीकमाध्वीकादि अम्लमेव । **चरके**ऽप्युक्तं—"प्रकृत्या मद्यमम्लोष्णं" ( च. सू. अ. २७ ) इति । तेनेहापि प्रभावादम्लकार्यकारित्वादेव सर्वं मद्यमम्लम् । येऽपि च पञ्चरसं मद्यमिच्छन्ति तन्मतेऽपि अम्लादिरसता इतररसानां ज्ञेया । उक्तं हि **चरके** "सर्वेषां मद्यमम्लानामुपर्युपरि वर्तते" ( च. चि. अ. २४ ) इति ॥ १७० ॥—

**शृणु तस्य विशेषणम् ॥ १७१ ॥**
**मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा ॥**
**रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते ॥ १७२ ॥**
**मधुरं तद्धि रूक्षं च कषायानुरसं लघु ॥**
**मृदुपाकि सरं शोषविषमज्वरनाशनम् ॥ १७३ ॥**
**मार्द्वीकाल्पान्तरं किंचित् खार्जूरं वातकोपनम् ॥**
**तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु ॥ १७४ ॥**
**कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ॥**
**कार्श्यार्शोग्रहणीदोषमूत्राघातानिलापहा ॥ १७५ ॥**
**स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ॥**
**कासार्शोग्रहणीश्वासप्रतिश्यायविनाशनी ॥ १७६ ॥**
**श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ॥**
**छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दनी ॥ १७७ ॥**
**प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ॥**
**पित्तलाऽल्पकफा रूक्षा यवैर्वातप्रकोपणी ॥ १७८ ॥**
**विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका ॥**
**रूक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता ॥ १७९ ॥**
**त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः ॥**
**ग्राह्युष्णो जगलः पक्ता रूक्षस्तृट्कफशोफकृत् ॥ १८० ॥**
**हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत् ॥**
**बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः ॥ १८१ ॥**

मृद्वीकाकृतमद्यस्य गुणमाह—मार्द्विकमित्यादि । अन्ये तु मधुकृतं माध्वीकमत्रोपदेशे पठित्वा मार्द्वीकादिफलसुराः पठन्ति । मृदुपाकमिति विदाहरहितत्वात् सुखपाकम् । फलमद्येषु च मध्वनुक्तमपि ददति मद्यकाराः । खर्जूरफलकृतं मद्यं खार्जूरम् । मद्यविशेषगुणे केचिद्गुणवत्तया माध्वीकगुणं प्रथमं पठन्ति; अन्ये तु पिष्टयोनिमद्यविशेषगुणं पठन्ति—कार्श्येत्यादि । सुराऽत्र लोहितवर्णा सुरा । कासार्शोग्रहणीदोषप्रतिश्यायेत्यादिना तु श्वेतसुरायाः कातोलीति प्रसिद्धाया गुणाः । पित्तलाऽल्पेत्यादि । यवादुत्पन्नाया

अपि सुरायाः पित्तकरत्वं विष्टम्भित्वं च प्रभावात् । किंच व्याख्यातमेव तद् द्रव्यगुणे यत् कार्यं गुणद्वारा अनुपपन्नं तत् सर्वत्र प्रभावकृतं व्याख्येयं, यच्च गुणद्वारा उपपन्नमपि पुनरुच्यते तदुत्कर्षप्रतिपादनार्थं ज्ञेयम्; एवंविधं व्याख्यानं सर्वत्र न दर्शयामः । श्लेष्मलेत्यादि मधूलिकागुणाः; मधूलकः खल्पगोधूमः मर्कटहस्ततृणं वा, तत्कृतकिण्वभागा सुरा मधूलिका; कुधान्यकृतत्वात् कुधान्यमद्यप्रकरण एव मधूलिका पठिता । यथा "सुरा समण्डा रूक्षोष्णा यवानां वातकोपनी । गुर्वी जीर्यति विष्टभ्य श्लेष्मला तु मधूलिका" ( च. सू. अ. २७ ) इति; तेन मधूलकान्तरकल्पनमिहान्याय्यम् । रूक्षेत्यादि बन्धनीति प्रसिद्धसुरागुणाः । तथाऽपि अक्षवल्कलसुरैवाक्षकृता ज्ञेया । त्रिदोष इत्यादिना मेदशब्दव्यवह्रियमाणबक्कसगुणाः; अन्ये पौण्ड्रप्रसिद्धां सुरां काञ्चिमालिकामाहुः । जगलो भक्तकिण्वकृतसुरा । बक्कस इत्यादिना मेदशब्दव्यवह्रियमाणबक्कसगुणाः (?) ॥१७१–१८१॥

दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः ॥
कषायो मधुरः शीधुर्गौडः पाचनदीपनः ॥ १८२ ॥
शार्करो मधुरो रुच्यो दीपनो बस्तिशोधनः ॥
वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः ॥ १८३ ॥
तद्वत् पक्वरसः शीधुर्बलवर्णकरः सरः ॥
शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः ॥ १८४ ॥
कर्शनः शीतरसिकः श्वयथूदरनाशनः ॥
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः ॥ १८५ ॥
आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः ॥
कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः ॥ १८६ ॥
जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः ॥

दीपन इत्यादिना गुडकृतसीधुगुणाः । सीधुस्तु इक्षुविकारप्रकृतिकः, संप्रदायाद्धातकीपुष्पलोध्रादिकृतसंस्कारं मद्यमुच्यते । अल्पमदः अल्पमदविकारः । गौड इति गुडकृतः । शर्कराकृतः सीधुः शार्करः । तद्वदित्यादिना पक्वेक्षुरसकृतसीधुगुणाः । फलरसगुडकृतसीधुविशेषगुणानाह—आक्षिक इत्यादि । आक्षिको बिभीतकरसगुडादिकृतः सीधुः । अस्य सांग्राहिकत्वानुपपत्तेः केचित् सांग्राहिक इत्यादि जाम्बवसीधुगुणं वदन्ति । जाम्बवो जम्बूफलकृतः सीधुः । बद्धनिष्यन्द इति बद्धमूत्रः । तुवर इति कषायरसः । ये तु 'तौवर' इति पठन्ति ते जाम्बवविशेषणं 'तौवर' इति वदन्ति; तथा च जम्बूफलरसतौवरक्वाथगुडादिकृतमेनं सीधुं वदन्ति ॥ १८२–१८६ ॥—

तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥ १८७ ॥
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥

इदानीं पृथङ्मधुगुडपिष्टयोनीनि मद्यान्यभिधाय मध्वादियोनिमेलकनिष्पन्नं किंचिदौषधयुक्तं मद्यमासवसंज्ञकं निर्दिशन्नाह—तीक्ष्ण इत्यादि । सुरा पैष्टी, सैव यत्र तोय-

कार्यं करोति स सुरासवः । अत्रासुता या पिष्टसुरा सा पुनर्गुडाधिकाराद् द्वितीयसन्धाने गुडेन सन्धीयत इति गुडपिष्टयोनिवद्द्वियोनिरासवः ॥ १८७ ॥—

**लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः ॥ १८८ ॥**
**तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत् ॥**

लघुरित्यादिना मध्वासवगुणः । मध्वासवे मधु गुडो द्वे योनी भवत इत्ययमपि द्वियोनिरासवः ॥ १८८ ॥—

**तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् ॥ १८९ ॥**
**कृमिमेदोनिलहरो मैरेयो मधुरो गुरुः ॥**

तीक्ष्ण इत्यादिना मैरेयगुणाः । मैरेयलक्षणं यथा—"आसवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तं विजानीयान्मैरेयमुभयाश्रयम्" इति । एवं च सुरा पैष्टी, आसवस्तु द्वियोनित्वाद् गुडमधुकृतोऽपि भवति; तेन सुरामधुगुडरूपयोनित्रयकृतत्वात् त्रियोनिर्मैरेय इत्याहुः ॥ १८९ ॥—

**बल्यः पित्तहरो वर्ण्यो हृद्यश्चेक्षुरसासवः ॥ १९० ॥**

बल्य इत्यादिनेक्षुरसासवगुणाः। केचिदत्र मृद्वीकेक्षुरसासव इत्यासवद्वयं पठन्ति ॥१९०॥

**शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः ॥**
**रूक्षः कषायः कफहृद्वातपित्तप्रकोपणः ॥ १९१ ॥**

सीधुरित्यादिना मधूकपुष्पकृतसीधुगुणाः । अस्य च सीधुगुणत्वेऽपि न गुडयोनित्वं वदन्ति ॥ १९१ ॥

**निर्दिशेद्द्रव्यसंयोगात् कन्दमूलफलासवान् ॥**[1]

कार्यवशादासवबहुत्वेन साक्षादनिर्दिष्टासवगुणज्ञानार्थमाह—निर्दिशेदित्यादि । द्रव्यसंयोगादिति तत्तत्कार्यव्याधिहरणापेक्षाक्षिप्यमाणद्रव्यसंयोगं गुणतो वीक्ष्य ततोऽनुक्तासवेष्वपि संयुज्यमानकन्दमूलफलादियुक्तानादिशेदित्यर्थः । अत्र चादिशब्दो लुप्तनिर्दिष्टः; तेन चरकोक्तकाण्डत्वगादीनामासवयोनीनां ग्रहणम् । उक्तं हि **चरके**—"धान्यफलमूलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयः शर्करा नवमीकाः" ( च. सू. अ. २५ ) इत्यादि ॥—

**नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् ॥ १९२ ॥**
**अनिष्टगन्धि विरसमहृद्यं च विदाहि च ॥**

मद्यस्याल्पकालत्वादिना अपरिणतस्य दोषमाह—नवं मद्यमित्यादि ॥ १९२ ॥—

**सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम् ॥ १९३ ॥**
**स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ॥**

---

१ 'निर्दिशेद्रसतश्चान्यान्' इति ड. ।

पुराणमद्यगुणमाह—सुगन्धीत्यादि । जीर्णमिति कालेन पक्कम् ॥ १९३ ॥—

अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ॥ १९४ ॥
बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥
दीपनः कफवातघ्नः सरः पित्ताविरोधनः ॥ १९५ ॥
शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥
पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः ॥ १९६ ॥
चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् ॥

अरिष्टगुणानाह—अरिष्ट इत्यादि । इक्षुविकारसहिताभयाचित्रकदन्तीपिप्पल्यादिभूरिभेषजक्काथादिसंस्कारवानरिष्टोऽभिधीयते । द्रव्यसंयोगोऽभयाचित्रकादिश्चिकित्सितवक्ष्यमाणद्रव्यसंयोगः; संस्कारोऽपि भेषजक्कथन-भाजनसंस्कार-यवराशिस्थापनादिस्तत्र तत्राभयारिष्टादौ वक्तव्यः; ततो द्रव्यसंयोगसंस्कारात् सुरासीध्वासवेषु गुणैः प्रशस्तरोगशमनादिधर्मैरधिक इत्यर्थः । अधिकगुणत्वमेवाह—बहुदोषहर इत्यादि । दोषाणामिति रोगाणां चिकित्सितेषु वक्ष्यमाणारिष्टविषयार्शःप्रभृतीनाम् । पित्ताविरोधनः इतीषदर्थे नञ् । सामान्यविषयरोगानाह—शूलेत्यादि ॥ १९४–१९६ ॥—

अरिष्टासवशीधूनां गुणान् कर्माणि चादिशेत् ॥ १९७ ॥
बुद्ध्वा यथास्वं संस्कारमवेक्ष्य कुशलो भिषक् ॥

अरिष्टप्रसङ्गेनासवसीधूनामपि बहुप्रपञ्चेनेहानुक्तानां गुणज्ञानार्थमाह—अरिष्टासवेत्यादि । संस्कारमवेक्ष्येति संस्कारद्रव्यगुणं बुद्ध्वा अरिष्टसीध्वादीनां गुणकर्माणि च वक्तव्यानीत्यर्थः । एतेन च **भोजे** बहुदोषभेदेन सीधुभेदा उक्तास्तेऽपि निर्दिष्टा भवन्ति ॥१९७॥—

सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु ॥ १९८ ॥
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥
अल्पौषधं पर्युषितमत्यच्छं पिच्छिलं च यत् ॥ १९९ ॥
तद्वर्ज्यं सर्वथा मद्यं किंचिच्छेषं च यद्भवेत् ॥
तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु ॥ २०० ॥
कफप्रकोपि तन्मद्यं दुर्जरं च विशेषतः ॥
पित्तप्रकोपि बहलं तीक्ष्णमुष्णं विदाहि च ॥ २०१ ॥
अहृद्यं पेलवं पूति कृमिलं विरसं च यत् ॥
तथा पर्युषितं चापि विद्यादनिलकोपनम् ॥ २०२ ॥
सर्वदोषैरुपेतं तु सर्वदोषप्रकोपणम् ॥

मद्यदोषानेकीकृत्य वर्ज्यमाह—सान्द्रमित्यादि । तरुणमिति अभिनवं मन्दजातम्; एतच्चोक्तमपि समुदितदोषाभिधानप्रस्तावात् पुनरुच्यते । यत्तूक्तं—"तरुणश्च सुरामण्डस्तरुणी च सुरा हिता" इत्यादि; तत्तरुणत्वं मन्दजातमद्यस्य नवतावाचकम् । केचित्तु

व्याधिसात्म्यत्वान्नवस्यापि मद्यस्य हितत्वं तत्र वदन्ति । पर्युषितमिति उद्धृतं पर्युषितम् । सान्द्रादिदोषेष्वेव ये मद्यदोषाः कफादिदोषं कुर्वन्ति तानाह—तत्र यदित्यादि ॥ १९८-२०२ ॥—

**चिरस्थितं जातरसं दीपनं कफवातजित् ॥ २०३ ॥**
**रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥**

सेव्यं मद्यमाह—चिरस्थितमित्यादि ॥ २०३ ॥—

**तस्यानेकप्रकारस्य मद्यस्य रसवीर्यतः ॥ २०४ ॥**
**सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना ॥**
**समेत्य हृदयं प्राप्य धमनीरूर्ध्वमागतम् ॥**
**विचाल्येन्द्रियचेतांसि वीर्यं मदयतेऽचिरात् ॥ २०५ ॥**

संप्रति मद्यं यथा मदयति तदाह—तस्येत्यादि । तस्य मद्यस्य, वीर्यं प्रभावः शक्तिर्वा नानाविधरसवीर्यरूपा, मदयते इति मदं करोति । मदजननसंप्राप्तिमाह—सौक्ष्म्यादित्यादि । धर्मचतुष्टयस्य वह्निना समानत्वाद् वह्निसमागमे हेतुः, तथा ऊर्ध्वगस्वभाववह्निसंगतत्वात् स्वरूपाच्चोर्ध्वधमनीहृदयगमने च हेतुः, तथा हृदयेन्द्रियचेतोविचालने च हेतुः । विकासित्वमपक्वस्यैव सन्धिमोक्षणप्रयुक्तप्रसरणशीलत्वम् । तच्चेति वीर्यं; ऊर्ध्वं हृदयं तथा ऊर्ध्वा धमनीरागतं वीर्यमिति योजना । विचाल्येति हृदयमित्यनेन तथा इन्द्रियचेतांसीत्यनेन च संबध्यते । विचाल्येति विकृतिं नीत्वा । एतेन हृदयक्षोभलक्षणविकृत्या तदाश्रितस्यौजसोऽपि तथा मनसस्तथेन्द्रियाणां च हृदयान्वयव्यतिरेकानुविधायित्वेन तदाश्रितानां विकृतिर्भवति । तदुक्तं **चरके**—"सौक्ष्म्यान्मद्यं विहत्यैवमोजसः स्वगुणैर्गुणान् । सत्त्वं तदाश्रयं चाशु संक्षोभ्य कुरुते मदम् ॥ अतिपीतेन मद्येन विहतेनौजसा तथा । हृदयं विकृतिं याति तत्रस्था ये च धातवः" ( च. चि. अ. २४ ) इति । हृदयस्थाश्चरक एवोक्ताः । यथा—"षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् । आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संस्थितम्" ( च. सू. अ. ३० ) इति ॥ २०४ ॥ २०५ ॥

**चिरेण श्लैष्मिके पुंसि पानतो जायते मदः ॥**
**अचिराद्वातिके दृष्टः, पैत्तिके शीघ्रमेव च ॥ २०६ ॥**
**सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः ॥**
**गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥ २०७ ॥**
**राजसे दुःखशीलत्वमात्मत्यागंससाहसम् ॥**
**कलहं सानुबन्धं तु करोति पुरुषे मदः ॥ २०८ ॥**
**अशौचनिद्रामात्सर्यागम्यागमनलोलताः ॥**
**असत्यभाषणं चापि कुर्याद्धि तामसे मदः ॥ २०९ ॥**

**दोषविशेषेण मदकालविशेषमाह—चिरेणेत्यादि ॥ २०६-२०९ ॥**

रक्तपित्तकरं शुक्तं छेदनं भुक्तपाचनम् ॥
वैस्वर्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु ॥ २१० ॥
तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च ॥
तद्वत्तदासुतं सर्वं रोचनं च विशेषतः ॥ २११ ॥

आसुतत्वसामान्याच्छुक्तादिधर्मकथनं—रक्तपित्तेत्यादि । शुक्तलक्षणं यथा—"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" इति । अत्रापि गुडादिमाने श्लोकः—"गुडमाक्षिकधान्याम्लमस्तु च द्विगुणं क्रमात् । शुक्तसिद्ध्यर्थमावाप्यं प्रायशः कटुकं च यत्" इति । तदासुतमिति आर्द्रककरीरादि शुक्तसन्धानप्रक्षिप्तम् । तद्वदिति शुक्तसमानलक्षणम् ॥ २१० ॥ २११ ॥

गौडानि रसशुक्तानि मधुशुक्तानि यानि च ॥
यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च ॥ २१२ ॥

गौडानीत्यादि । रसशुक्तानीति इक्षुरसशुक्तानि । गुडादिप्रकृतिकशुक्तत्रये परिभाषा यथा—"गुडाम्बुना सतैलेन सन्धानं संस्कृतं तु यत् । कन्दशाकफलैर्युक्तं गुडशुक्तं तदुच्यते" इति । गुडशुक्तवदिक्षुरसशुक्तं ज्ञेयम् । "जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् । मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ॥ त्र्यहेण तज्जातरसं मधुशुक्तमुदाहृतम्" इति । यानि चेति चकाराद् धान्ययोनि च शुक्तं समुच्चीयते । तल्लक्षणग्रन्थः—"चतुःषष्टिपलं माषाज्जलद्रोणे विपाचयेत् । तेन पादावशेषेण पृथक् प्रस्थसमं रसम् ॥ विभज्य देयं फलपूरकस्य इक्षोस्तथा बालकमूलकस्य । चूर्णीकृतं त्र्यूषणजीरकं च पलप्रमाणं त्रिसुगन्धियुक्तम् ॥ एतच्च सम्यङ्निहितं तु कुम्भे घर्मस्थितं पक्षदिनेन चुक्रम्" इति ॥ २१२ ॥

तुषाम्बु दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत् ॥
ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा ॥ २१३ ॥
धान्याम्लं धान्ययोनित्वाज्जीवनं दाहनाशनम् ॥
स्पर्शात्, पानात्तु पवनकफतृष्णाहरं लघु ॥ २१४ ॥
तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात् ॥
मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहम् ॥ २१५ ॥
दीपनं जरणं भेदि हितमास्थापनेषु च ॥
समुद्रमाश्रितानां च जनानां सात्म्यमुच्यते ॥ २१६ ॥

इति मद्यवर्गः ।

तुषाम्बुसौवीरके विरेचनाध्यायोक्तक्रमेण ज्ञेये । धान्याम्लं काञ्जिकम् । धान्ययोनित्वाज्जीवनं रक्तशाल्यादिधान्यकृतत्वात् । दाहशमकत्वं स्पर्शात्तदल्पशीतलत्वात्, किंवा प्रभावात्; यथा—तक्रं कण्ठे कफं करोति, उदरे हन्ति । समुद्रवासिनां सात्म्यमिति तेषां लवणप्रधानानुपानानां काञ्जिकेन लवणरसविहननात्, अभ्यासाच्च ॥२१३–२१६॥

अथ मूत्राणि ।

मूत्राणि गोमहिष्यजाविगजहयखरोष्ट्राणां तीक्ष्णान्युष्णानि कटूनि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातकृमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः ॥ २१७ ॥

भवतश्चात्र—

तत् सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु ॥
शोधनं कफवातघ्नं कृमिमेदोविषापहम् ॥ २१८ ॥
अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् ॥
पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम् ॥ २१९ ॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ॥
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातनुत् ॥ २२० ॥
शूलगुल्मोदरानाहविरेकास्थापनादिषु ॥
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ २२१ ॥
दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ॥
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ २२२ ॥
कासश्वासापहं शोफकामलापाण्डुरोगनुत् ॥
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ २२३ ॥
कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम् ॥
सक्षारं तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ २२४ ॥
दीपनं कटु तीक्ष्णोष्णं वातचेतोविकारनुत् ॥
आश्वं कफहरं मूत्रं कृमिदद्रुषु शस्यते ॥ २२५ ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ॥
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥ २२६ ॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् ॥
दीपनं गार्दभं मूत्रं कृमिवातकफापहम् ॥ २२७ ॥
शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम् ॥
अर्शोघ्नं कारभं मूत्रं मानुषं च विषापहम् ॥ २२८ ॥

द्रवपारिशेष्यान्मूत्राण्याह—मूत्राणीत्यादि । विशेषणमिति[1] गोमूत्रादीनां विशेषकं भेदकधर्मम्[2] । मूत्रप्रयोगसाध्येष्वित्यनेनाविशेषितमूत्रप्रयोगे गोमूत्रमेव ग्राह्यम् । चेतोविकारः उन्मादापस्मारौ । क्षारपाके ये गार्दभं मूत्रं न पठन्ति तेऽत्रग्रहणेनैकशफलात्तत्र ग्रहणं वदन्ति । मानुषमबहुविषयतया उद्देशानुक्तमपि विषहन्तृतयाऽन्यूनतार्थं पठ्यते ।

---

१ 'शृणु तस्य विशेषणम्' इति ता. । २ एतद्व्याख्यानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः ।

अत्र मूत्रग्रहणे व्यवहारसिद्धत्वाल्लोके वेदे च स्त्रीगवीमूत्रमेव गृह्यते । यत्तु पुंलिङ्गानां शुक्रसंबन्धतया गौरवान्न ग्राह्यं मूत्रमुच्यते, तन्न, शुक्रसंबन्धस्य स्त्रीष्वपि विद्यमानत्वात्; यदाऽपि स्त्रीत्वेन लघुत्वं स्त्रीगवां, ततश्च तन्मूत्रं लघुत्वाद् ग्राह्यं तदपि न, येन सेकादौ वाते च मूत्रस्य गौरवमप्युपयुक्तं, तस्माद्यथोक्तमेव साधु ॥ २१७-२२८ ॥

**द्रवद्रव्याणि सर्वाणि समासात् कीर्तितानि तु ॥**
**देशकालविभागज्ञो नृपतेर्दातुमर्हति ॥ २२९ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने द्रवद्रव्यविज्ञानीयो नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥**

अध्यायमुपसंहरति—द्रवेत्यादि । समासादित्यनेन विस्तरस्याशक्यत्वाद् ग्रन्थविस्तरभयाच्चानभिधानं गमयति । उक्तानां द्रवद्रव्याणां कालादिविभागेन योग्यतया योजनं विशेषतो राज्ञि सकलप्रजापालके कर्तव्यमित्याह—देशेत्यादि । दातुं द्रवद्रव्याणि अर्हतीति योज्यम् ॥ २२९ ॥

इति श्रीचक्रपाणिदत्तविरचितायां सुश्रुततात्पर्यदीपिकायां भानुमत्यां सूत्रस्थाने द्रवद्रव्यविधिर्नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशत्तमोऽध्यायः ।

**अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ॥ १ ॥**
**यथोवाच भगवान् धन्वन्तरिः ॥ २ ॥**

अन्नपानसाधनद्रवमभिधाय तत्साध्यान्नपानद्रव्याणि विशिष्टत्वाच्च रसादिना भक्तपेयादिकल्पनया चाभिधातुमन्नपानविधिरध्यायोऽभिधीयते । अद्यते खाद्यत इत्यन्नम् । तत्रान्ने भक्ष्यं पाने च लेह्यमवरुद्धं, तद्वक्ष्यति तन्त्रयुक्तौ—"अन्ने भक्ष्यमवरुद्धं, घनत्वसाधर्म्यात्; पाने लेह्यं, द्रवत्वसाधर्म्यात्" ( उ. तं. अ. ६६ ) इति । तेन चतुर्विधमप्यशितलीढखादितपेयरूपमन्नपानशब्देन गृहीतं; तस्य विधिर्भेदः, प्रकृतिः शूकधान्यादिः, तया तथा करणेन भक्तपेयादिना ज्ञेयः, तमधिकृत्य कृत इत्यादि पूर्ववद्व्याख्येयम् ॥ १ ॥ २ ॥

**धन्वन्तरिमभिवाद्य सुश्रुत उवाच-भगवन् ! प्रागभिहितं—'प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च, स षट्सु रसेष्वायत्तः, रसाः पुनर्द्रव्याश्रयिणः' (सू. अ. १), द्रव्यरसगुणवीर्यविपाकनिमित्ते च क्षयवृद्धी दोषाणां साम्यं च, ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुः, आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च, तथा ह्याहारवैषम्यादस्वास्थ्यं; तस्याशितपीतलीढखादितस्य नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेकविधप्रभावस्य पृथक् पृथग्द्रव्यरसगुणवीर्यविपाककर्माणीच्छामि ज्ञातुं, न ह्यनवबुद्धस्वभावा भिषजः स्वस्थानुवृत्तिं रोग-**

**निग्रहणं च कर्तुं समर्थाः; आहारायत्ताश्च सर्वप्राणिनो यस्मात्तस्मादन्नपानविधिमुपदिशतु मे इत्युक्तः प्रोवाच भगवान् धन्वन्तरिः—अथ खलु वत्स सुश्रुत ! यथाप्रश्नमुच्यमानमुपधारयस्व ॥ ३ ॥**

अध्यायार्थं गुरुप्रश्नक्रमेणावतारयन्नाह—धन्वन्तरिमित्यादि । प्रागिति प्रथमाध्याये; एतदर्थश्च तत्रैव व्याकृतः । अत्र जिज्ञासिताहारप्राधान्यव्यापके ग्रन्थेऽभिधातव्ये द्रव्यप्राधान्यं 'रसाः पुनर्द्रव्याश्रयिण' इत्यनेन तथा द्रव्यरसेत्यादिना च द्रव्यरसादिख्यापनमाहारस्य द्रव्यरसादिभेदेनेह जिज्ञासिततोपदर्शनार्थम् । द्रव्यरसेत्यादौ दोषाणामित्यादिशब्दलोपाल्लक्षणया दोषधातुमलानामित्येवंरूपं ज्ञेयम् । साम्यं चेत्यनेन दोषादिसाम्येन स्वास्थ्यमुच्यते । तेन व्याधिपरिमोक्षः सुस्थस्वास्थ्यरक्षणं च द्वितयं तत्पदप्रयोजनं गृहीतं भवति । निमित्ते चेति चकारेण कालः, कायादिचेष्टा, शब्दादयश्च अप्रधानत्वेन सूच्यन्ते । आहारप्राधान्यमुपदर्शयति—ब्रह्मादेरित्यादि । ब्रह्मादयोऽपि हि अमृताहाराः, तथा यज्ञकृतहविराहाराः । आहारस्य कण्ठरवेण कायादिवृद्ध्यादिहेतुतामाह—आहारादेवेत्यादि । अभिवृद्धिः शरीराद्यभिवृद्धिः । वर्णः प्रशस्तवर्णः, इन्द्रियप्रसादः इन्द्रियशक्त्युत्कर्षः । आहारवैगुण्येनास्वास्थ्यरूपदुःखोत्पादादाहारप्राधान्यमाह—तथेत्यादि । वैषम्यमत्रैव वक्तव्यत्वादशनप्रविचारवैषम्यम् । व्युत्पादितप्राधान्याहारविषयां जिज्ञासां दर्शयन्नाह—तस्येत्यादि । नानाद्रव्याणि रक्तशाल्यादीनि । अनेकविधप्रभावस्येति नानाशक्तिकस्य; शक्तिश्चेह रसवीर्यविपाकप्रभावरूपा । विकल्पो भक्तपेयादिरूपः । पृथगिति रक्तशाल्यादीनां प्रत्येकम् । एतदज्ञाने दोषमाह—नहीत्यादि । अनेन व्याधिमोक्षकारणमुक्तम्, आहारायत्ताश्चेत्यनेन भक्तपेयादिरूपत्वमाहारस्योपसंह्रियते ॥ ३ ॥

**तत्र, लोहितशालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृतपुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुकरोध्रपुष्पकदीर्घशूककाञ्चनकमहिषमहाशूकहायनकदूषकमहादूषकप्रभृतयः शालयः ॥ ४ ॥**

**मधुरा वीर्यतः शीता लघुपाका बलावहाः ॥**
**पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्चसः ॥ ५ ॥**
**तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः ॥**
**चक्षुष्यो वर्णबलकृत् स्वर्यो हृद्यस्तृषापहः ॥ ६ ॥**
**व्रण्यो ज्वरहरश्चैव सर्वदोषविषापहः ॥**
**तस्मादल्पान्तरगुणाः क्रमशः शालयोऽवराः ॥ ७ ॥**

तत्रेत्यादिना प्राधान्येनोपयुज्यमानं शूकधान्यवर्गमुपदिशन् यथाप्रधानं रक्तशाल्यादीनाह । अत्र तु प्रायेण नाम देशान्तरप्रसिद्धत्वान्न ज्ञायते, तेन देशान्तरेभ्यस्तज्ज्ञेभ्यो नामाभिधेयं च ज्ञातव्यं, यत्तु प्रायः प्रसिद्धं तदुच्यते । लोहितशालिः रक्तशालिरिति ख्यातः, कलमः प्रसिद्धः । शालय इति हैमनधान्यानि, षष्टिकादयस्तु ग्रैष्मिकाः । यत्तु कण्डितशुक्लत्वेन शालित्वमुच्यते तत् षष्टिकेषु व्रीहिषु चाभिन्नत्वात् सकलशाल्यव्यापकत्वाच्च

न युक्तम्। लघुपाका इति स्वाभाविकलघुगुणयोगाच्छीघ्रपाकाः, न तु लघुपाकत्वेन कटुपाकत्वं; येन **चरके** तस्याशीतीये ( च. सू. अ. ६ ) "शालिषष्टिकादीनि" इत्यादिना "प्रकृतिलघूनि" इत्यन्तेन शालीनां नैसर्गिकाष्टवीर्यमध्यपठितलघुगुणता शीघ्रपाककारणता, अन्नपाने "विपाके मधुराः शालय" ( च. सू. अ. २७ ) इत्युक्तम्। इहापि च द्रव्याणां गुरुत्वं लघुत्वं च नैसर्गिको गुणो गुरुलघुविपाकादन्य एवाभिमतः, यतः 'तिलो विपाके मधुर' इत्यभिधाय गुरुरुक्तः, तथा लावो लघुरित्युक्त्वाऽपि कटुपाक उक्तः, तथा एणो मधुरपाक इत्युक्त्वाऽपि लघुरित्युक्तः, तेनैवं विधानाद् गुरुलघुपाकादन्यदेव सहजं गुरुलघुत्वमुक्तं भवति। अल्पान्तरगुणा इत्यल्पगुणाः। अवरा इत्यपकृष्टाः। तेन क्रमशोऽल्पान्तरगुणाः सन्तोऽपकृष्टा इति वाक्यार्थो भवति, ततश्च रक्तशालेरल्पहीनगुणः कलमः, कलमाच्चाल्पान्तरगुणः कर्दम इत्यादि वाक्यार्थो भवति। ननु शाल्यादीनामुपयोगस्तण्डुलभक्तपेयादिना परं भवति, ते च तण्डुलादयः पृथगेव गुणतो निर्दिष्टाः, तत्कृतगुणाभिधानं व्यर्थं, तत्कृतगुणाभिधानैरेव कार्यकरत्वात्। नैवं, द्रव्याणामेव प्रकृतिगुणसहिता विकृतिगुणाः कार्यकराः। यतो हि तण्डुलभक्तपेयादयो रक्तशाल्यादिप्रकृतिगुणानुगता एव; न हि रक्तशालिभक्तपेयालाजादयो यथा लघ्वादिगुणास्तथा व्रीहिकृतभक्तलाजपेयादयः; किंतु प्रकृतिगुणान्वयाद् रक्तशालिकृतभक्ताद्यपेक्षया गुरव एव। तेन यत्र प्रकृतिसमाना विकृतिस्तत्र गुणोत्कर्षः, यत्र प्रकृतिगुणविपरीतो विकृतिगुणो यथा गुरुव्रीहेर्लाजानां, तत्रान्यत्वं गौरवस्य लाजारूपकरणेन क्रियते। यत्र तु प्रकृतिगुणाभिभावकत्वं यथा शुक्तासुतार्द्रककरीरादिषु तत् "तदासुतं तद्वत्" ( सू. अ. ४५ ) इति विशेषागमादेव प्रतीयते। तेन तत्र प्रकृतिगुणानां दुर्बलत्वम्। यद्यपि प्रकृतिगुणोपमर्देन तद्विरुद्धकार्यकर्तृत्वं विकृतेः, यथा— कांस्यभाजने दशरात्रस्थितसर्पिषो मारकत्वं, मयूरस्य चैरण्डकाष्ठसिद्धस्य एरण्डतैलभृष्टस्य मारकत्वं, तदपि अपवादरूपतयाऽऽगमवेद्यमेव। तेन यत्रोत्सर्गभूतशास्त्रार्थापवादः, तत्र करोत्येव तत्रोपदेशं शास्त्रकारः॥ ४-७॥

**षष्टिककाङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिकचूर्णककुरवककेदारप्रभृतयः षष्टिकाः॥ ८॥**

**रसे पाके च मधुराः शमना वातपित्तयोः॥**
**शालीनां च गुणैस्तुल्या बृंहणाः कफशुक्रलाः॥ ९॥**
**षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः॥**
**मृदुः स्निग्धस्त्रिदोषघ्नः स्थैर्यकृद्बलवर्धनः॥ १०॥**
**विपाके मधुरो ग्राही तुल्यो लोहितशालिभिः॥**
**शेषास्त्वल्पान्तरास्तस्मात् षष्टिकाः क्रमशो गुणैः॥ ११॥**

षष्टिकेत्यादौ प्रथमः षष्टिकशब्दः प्रसिद्धषष्टिकाभिधायी; अन्त्यस्तु षष्टिकवदभिधायितां कङ्ग्वादीनां दर्शयति। शालीनां च गुणैरित्यत्र गुणशब्दः प्रशस्तधर्मवचनः;

तेन यथा शालयः सुस्थातुरहिताः पथ्याः, तथा षष्टिकादयोऽपि । ततश्चाभावे तत्स्थाने षष्टिकादयो योज्या इत्यर्थः । शालीनां च पथ्यत्वं प्रथमपाठादेव, रक्तशालिगुणपाठे 'श्रेष्ठ' इति पदेन सर्वधान्येषु मध्ये तथायुक्तत्वं तथा कलमादिषु रक्तशाल्यन्तरगुणतोपदेशेन कलमादीनामपि पथ्यत्वं सिद्धं भवति । अन्ये तक्रोक्तशीतत्वबद्धाल्पवर्चस्त्वस्निग्धत्वानामिहानुक्तानां दर्शनार्थं शालीसमानगुणाभिधानमिति व्याख्यानयन्ति । विशेषषष्टिकगुणे लघुरिति वचनं विकारविरुद्धमेव । येन **चरके**ऽपि 'ऽगुरुः' ( च. सू. अ. २७ ) इत्यकारप्रश्लेषः क्रियते, तस्याशितीयोक्तषष्टिकलघुतया सममविरोधार्थम् । अत्रापि 'तुल्यो लोहितशालिभिः" इति वचनं पथ्यप्रधानरक्तशालिवत् पथ्यतोपदर्शनार्थम् । शेषा इत्यादि पूर्ववद् व्याख्येयम् ॥ ८–११ ॥

**कृष्णव्रीहिशालामुखजतुमुखनन्दीमुखलावाक्षकत्वरितककुक्कुटाण्डकपारावतकपाटलप्रभृतयो व्रीहयः ॥ १२ ॥**

**कषायमधुराः पाकेऽमधुरा वीर्यतोऽहिमाः ॥**
**(अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बद्धवर्चसः ॥ १३ ॥)**
**कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः ॥**
**तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे ॥ १४ ॥**

कृष्णव्रीहिरित्यादिना आशुशब्दवाच्यवार्षिकधान्योपदेशः । अत्रान्ते व्रीहय इति पदं सर्वेषां व्रीहित्वोपदर्शनार्थम् । पाकेऽमधुरा ईषदम्लमधुराः । अहिमा इत्युष्णाः । एतेषां चरकेऽम्लपाकत्वोपदेशेऽपि यथा न प्रमेयविरोधः, तद्वर्णितमेव विपाकनियमपक्षे । कृष्णव्रीहिर्वर इति स्वजातिव्रीह्यपेक्षया पथ्यत्वमुच्यते । 'अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बलवर्धनाः' इति तु पाठोऽनार्षः, येन पाटलः सर्वतन्त्रेषु त्रिदोषकरः पठितः । तदुक्तं **चरके**—"त्रिदोषस्त्वेव पाटलः" ( च. सू. अ. २७ ) इति । **हारीते**ऽपि "पाटलः स्वेदविण्मूत्रबहुलः स्यात्त्रिदोषकृत्" इत्युक्तं, तेन पाटलस्य तथा व्रीहीणां च लोकसिद्धापथ्यभावानां पथ्यैः षष्टिकैः समं तुल्यता न युक्ता ॥ १२–१४ ॥

**दग्धायामवनौ जाताः शालयो लघुपाकिनः ॥**
**कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥ १५ ॥**
**स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः ॥**
**किंचित्सतिक्तमधुराः पवनानलवर्धनाः ॥ १६ ॥**
**कैदारा मधुरा वृष्या बल्याः पित्तनिबर्हणाः ॥**
**ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥ १७ ॥**
**रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ॥**
**अदाहिनो दोषहरा बल्या मूत्रविवर्धनाः ॥ १८ ॥**
**शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः ॥**

तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफापहाः ॥ १९ ॥
विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः ॥

इति शालिवर्गः।

भूमिविशेषेण क्रियाविशेषेण च गुणमाह—दग्धायामित्यादि । स्थलजा इति जाङ्गलगुणप्रधानभूमिजाताः । कैदारा इत्यानूपकेदारशब्दप्रधानभूमिभवाः । रोप्यातिरोप्या उप्ता सन्तः रोपयित्वाऽपि पुनरुत्पाट्य रोपिताः, तेन द्विधारोपिता इत्यर्थः । तेन यत्रोप्ताः तत्रैव ये पच्यन्ते तदपेक्षया उत्खातरोपिता लघवः, ततोऽपि च रोप्यातिरोप्या लघुतरा इत्यपि दर्शितं भवति । शीघ्रपाका इत्युपयुक्ताः शीघ्रं जठराग्निना पच्यन्ते । लघव इत्यनेन च लघुविपाकत्वमुच्यते । छिन्नरूढा इति प्रथमं छिन्नाः पश्चाद्रूढाश्च ये । अयमपि च संस्कारेण विशेषो धान्यानां पूर्वोक्तप्रकृतिविकृतिगुणन्यायेन व्यवस्थापनीयः ॥ १५–१९ ॥

अथ कुधान्यादिवर्गः ।

तद्वत् कुधान्यमुद्गादिमाषादिनां च वक्ष्यते ॥ २० ॥

शालीनामानन्त्येन व्यवहारार्थमियं संक्षेपोक्तिरिति दर्शयन्नाह—तद्वदित्यादि । मुद्गादीनामित्यादिशब्दान्मसूरादयोऽपि मुद्गादौ वैदलशब्दवाच्या गृहीता भवन्ति ॥ २० ॥

कोरदूपकश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानन्दीमुखीकुरुविन्दगवेधुकसरबरुकतोद(य)पर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः ॥ २१ ॥

उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः ॥
श्लेष्मघ्ना बद्धनिस्यन्दा वातपित्तप्रकोपणाः ॥ २२ ॥
कषायमधुरस्तेषां शीतः पित्तापहः स्मृतः ॥
कोद्रवश्च सनीवारः श्यामाकश्च सशान्तनुः ॥ २३ ॥
कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः ॥
यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः ॥ २४ ॥
मधूली मधुरा शीता स्निग्धा नन्दीमुखी तथा ॥
विशोषी तत्र भूयिष्ठं वरुकः समुकुन्दकः ॥ २५ ॥
रूक्षा वेणुयवा ज्ञेया वीर्योष्णाः कटुपाकिनः ॥
बद्धमूत्राः कफहराः कषाया वातकोपनाः ॥ २६ ॥

कुधान्यमाह—कोरदूषेत्यादि । कोरदूषः कोद्रवः; श्यामाको द्विविधोऽपि श्यामाकः अल्पश्यामाको जलश्यामाकश्चेति; नीवार उडिकेति ख्यातः; तद्भेदश्च रक्तशूको 'बड' इति प्रसिद्धः, अयमेव च तन्त्रान्तरे प्रशातिकेत्युच्यते; उद्दालको वनकोद्रवः;

प्रियङ्गुः काङ्गुणिकेति प्रसिद्धा, तद्भेदो वर्णतो वक्ष्यमाणः; मधूलिका मर्कटहस्ततृणं; तद्भेदो नन्दीमुखी; गवेधुको 'घुणञ्च' इति ख्यातः, स ग्राम्यारण्यभेदाद् द्विविधः; वेणुयवो वेणुफलं; शेषाण्यप्रसिद्धानि । प्रभृतिग्रहणेन झिण्टीगर्मूटिकादीनां तन्त्रान्तरोक्तानां ग्रहणम् । पित्तसहा इति पित्ताविरुद्धाः । कृष्णा इत्यादौ यथोत्तरं प्रधाना इति कफहरत्वरूक्षत्वेषु प्रकर्षवन्तः । नन्दीमुखी तथेति मधुरशीतस्निग्धेत्यर्थः । विशोषीति द्रवमूत्रादिशोषणः ॥ २१–२६ ॥

**मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेण्वाढकीप्रभृतयो वैदलाः ॥ २७ ॥**

**कषायमधुराः शीताः कटुपाका मरुत्कराः ॥**
**बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ २८ ॥**
**नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः ॥**
**प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥ २९ ॥**
**विपाके मधुराः प्रोक्ता मसूरा बद्धवर्चसः ॥**
**मकुष्ठकाः कृमिकराः कलायाः प्रचुरानिलाः ॥ ३० ॥**
**आढकी कफपित्तघ्नी नातिवातप्रकोपणी ॥**
**वातलाः शीतमधुराः सकषाया विरूक्षणाः ॥ ३१ ॥**
**कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥**
**त एव घृतसंयुक्तास्त्रिदोषशमनाः परम् ॥ ३२ ॥**
**हरेणवः सतीनाश्च विज्ञेया बद्धवर्चसः ॥**
**ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥ ३३ ॥**

शमीधान्यादि निर्दिशन्नाह—मुद्गेत्यादि । वनमुद्गो 'धान्यमुद्ग' इति यस्य प्रसिद्धिः, मुकुष्ठको 'मौठ' इति ख्यातः, हरेणुः स्वल्पवर्तुलकलायो 'अङ्कटा' इति प्रसिद्धः, सतीनो वर्तुलकलायः, आढकी तुवरी । अत्र द्रव्यव्यवहारार्थं वैदलसंज्ञां दर्शयन्नाह–वैदल इति । एतेन योग्यतामात्रेण विदलयोग्येषु कुलत्थमाषादिषु न वैदलसंज्ञेयं व्यवहर्तव्या; किं तु यथोक्तेष्वेव मुद्गादिषु । तेन "बल्लूरं मूलकं मत्स्यान् शुष्कशाकं च वैदलम् । न खादेच्चालुकं गुल्मी" ( उ. त. अ. ४२ ) इत्यत्र कुलत्थनिषेधो न भवति; कुलत्थो हि गुल्मे विधीयत इति व्याख्यानयन्ति । विपाके मधुरस्यापि मसूरस्य बद्धवर्चस्त्वं प्रभावात्; सर्वत्रैव च गुणद्वाराऽनुपपद्यमानं प्रभावादेव ज्ञेयमित्यत्र वर्णितमेव, पुनस्तत्स्मरणार्थमभिधीयते ॥ २७–३३ ॥

**माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः ॥**
**संतर्पणः स्तन्यकरो विशेषाद्बलप्रदः शुक्रकफावहश्च ॥ ३४ ॥**
**कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्ता ॥**
**स्वादुर्विपाके मधुरोऽलसान्द्रः संतर्पणः स्तन्यरुचिप्रदश्च ॥ ३५ ॥**

माषैः समानं फलमात्मगुप्तमुक्तं च काकाण्डफलं तथैव ॥
आरण्यमाषा गुणतः प्रदिष्टा रूक्षाः कषाया अविदाहिनश्च ॥ ३६ ॥
उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः ॥
शुक्राश्मरीगुल्मनिषूदनश्च सांग्राहिकः पीनसकासहन्ता ॥ ३७ ॥
आनाहमेदोगुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ॥
कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥ ३८ ॥
ईषत्कषायो मधुरः सतिक्तः सांग्राहिकः पित्तकरस्तथोष्णः ॥
तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणे लेपन एव पथ्यः ॥ ३९ ॥
दन्त्योऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽथ केश्योऽनिलहा गुरुश्च ॥
तिलेषु सर्वेष्वसितः प्रधानो, मध्यः सितो, हीनतरास्तथाऽन्ये ॥ ४० ॥

शमीधान्यानामेवापराणि समानगुणान्याह—माष इत्यादि । अत्र वृष्यत्वमभिधायापि शुक्रावहत्वं शुक्रस्रुतिवृद्धिकरवृष्यत्वोपदर्शनार्थम् । यदुक्तं **चरके**—"शुक्रस्रुतिकरं किंचित् किंचिच्छुक्रविवर्धनम् । स्रुतिवृद्धिकरं किंचित् त्रिविधं वृष्यमुच्यते" ( च. चि. अ. २ ) इति । केचित् 'पित्तकफावहाश्च' इति पठन्ति । कषायभावादित्यादिना अलसान्द्रगुणः । आत्मगुप्ताफलमिति शूकशिम्बीफलम् । काकाण्डफलमिति शूकशिम्बी-सदृशशिम्बफलम् । अरण्यमाषः स्वयमेव वनभूतो माषः । आनाहेत्यादिना वन्य-कुलत्थगुणः । गुदकीलमर्शः । ईषदित्यादिना तिलगुणः । व्रणालेपने पथ्य इति व्रणेषु लेपने पथ्यः, तेनाभ्यवहारेष्वपथ्य एव । तथा हि व्रणविरुद्धवर्गोद्देशे नवधान्यादौ तिलः पठितः । येऽपि 'स्निग्धो व्रणे सर्वत एव पथ्यः' इत्यादि पठन्ति, तन्मतेऽपि बहिरालेपनेनैव सर्वत्र वातकृते पित्तकृते कफकृते च पथ्य इति ज्ञेयम् । यद्वक्ष्यति—"माधुर्याच्च तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः । कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तनुत् ॥ औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः" ( चि. अ. १ ) इति । अत्र च मधुरपाकत्वमभिधायापि गुरुश्चेति वचनं सहजगुरुगुणदर्शकम् । असित इति कृष्णः । सित इति श्वेतः ॥ ३४–४० ॥

यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी ॥
व्रणेषु पथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवातवर्चाः ॥ ४१ ॥
स्थैर्याग्निमेधास्वरवर्णकृच्च सपिच्छिलः स्थूलविलेखनश्च ॥
मेदोमरुत्तृड्हरणोऽतिरूक्षः प्रसादनः शोणितपित्तयोश्च ॥ ४२ ॥
एभिर्गुणैर्हीनतरैस्तु किंचिद्विद्याद्यवेभ्योऽतियवानशेषैः ॥

व्रणपथ्यत्वसामान्यात् तिलानन्तरं यवानाह—यव इत्यादि । हिमश्चेति चकारो भिन्नक्रमः कषायश्चेत्यत्र ज्ञेयः । तेनाल्पकषायरसता च **चरके** सकषायभाषयोक्ता गृहीता भवति । कटुविपाकत्वं चरकोक्तगुरुगुणस्यापि द्रव्यस्य प्रभावकृतम् । उक्तं हि

**चरके** "रूक्षः शीतो गुरुश्च" (च. सू. अ. २७) इति। अन्ये न्यायभीरवश्चरके 'ऽगुरुः' इत्यकारप्रश्लेषं वर्णयन्ति। व्रणेषु पथ्यस्तिलवदिति यथा तिलो व्रणालेपे तथाऽयमप्यालेपे पथ्य इत्यर्थः। किंवा हिताहितीये व्रणहितवर्गे यवस्य पाठात् सर्वथा व्रणहितत्वमस्य, तिलवदित्यनेन माधुर्यादित्यादिना यत् त्रिदोषविषयत्वं तिलस्य तदिह तु हेतुं विनाऽतिदिश्यते। बहुवातवर्चा इति कुक्षौ वातकर्तृत्वेन ज्ञेयं; तेन मेदोमरुत्तृड्हरण इत्यनेनोक्तवातहन्तृत्वं न विरुध्यते। किंवा मेदोवृतो मरुत्, तेन मेदोवृत एव वायौ यवो हितः; निरावरणे तु रूक्षकषायशीतकटुपाकतया कारणभूत एव। एभिर्गुणैरित्यादिना अतियवगुणानाह। अतियवाः निःशूककृष्णारुणयवाः। ये तु पठन्ति 'यवेभ्योऽपि यवानशेषान्' इति, तन्मते अतियवयवकादयः शेषशब्दवाच्याः। यवका निःशूकाः स्वल्पाः॥ ४१॥ ४२॥—

**गोधूम उक्तो मधुरो गुरुश्च बल्यः स्थिरः शुक्ररुचिप्रदश्च॥ ४३॥**
**स्निग्धोऽतिशीतोऽनिलपित्तहन्ता सन्धानकृच्छ्लेष्मकरः सरश्च॥**

गोधूमगुणानाह—गोधूम इत्यादि। श्लेष्मकरस्थाने 'शोषकरः' इति पठन्ति; तन्न, गोधूमगुणालोचनया कफकर्तृत्वस्य युक्तत्वात्। यत्तु **चरके** वसन्ते यवगोधूमभोजनमुक्तं तद्वसन्तेन प्राप्तकफविपरीतयवस्य, तथा आदानमध्यतया जन्यमानवातपित्तविपरीतगोधूमस्य च मिलित्वा प्रयोगदर्शनार्थम्। तथाहि अन्यदपि तत्रैवंभूतसाधारणत्वेनैवोक्तं—"चन्दनागुरुदिग्धाङ्ग" (च. सू. अ. ६) इति। तन्त्रान्तरे नन्दीमुखी यवभेदतया, मधूली च गोधूमभेदतया शूकधान्यमध्ये पठिता, अत्र तु कुधान्यमध्ये पठिते; तेन कुधान्यभेदादर्थान्तरभेदेन नन्दीमुखी मधूलिके अपि यथाक्रमं यवगोधूमगुणेन च ते निर्दिश्येते॥ ४३॥—

**रूक्षः कषायो विषशोषशुक्रबलासदृष्टिक्षयकृद्विदाही॥ ४४॥**
**कटुर्विपाके मधुरस्तु शिम्बः प्रभिन्नविण्मारुतपित्तलश्च॥**
**सितासिताः पीतकरक्तवर्णा भवन्ति येऽनेकविधास्तु शिम्बाः॥४५॥**
**यथादितस्ते गुणतः प्रधाना ज्ञेयास्तथोक्ता रसपाकयोश्च॥**
**सहाद्वयं मूलकजाश्च शिम्बाः कुशिम्बिवल्लीप्रभवास्तु शिम्बाः॥ ४६॥**
**ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिबर्हणाश्च॥**
**विदाहवन्तश्च भृशं विरूक्षा विष्टभ्य जीर्यन्त्यनिलप्रदाश्च॥ ४७॥**
**रुचिप्रदाश्चैव सुदुर्जराश्च सर्वे स्मृता वैदलिकास्तु शिम्बाः॥**

शमीधान्यसामान्याच्छिम्बानां गुणमाह—रूक्ष इत्यादि। यथादितास्ते गुणतः प्रधाना इति असितात् सितः श्रेष्ठः, पीतात् कृष्णः श्रेष्ठः, रक्तात् पीतः श्रेष्ठ इत्यर्थः। ज्ञेयास्तथोक्ता रसपाकयोश्चेति वीर्ये उष्णे रसपाकयोश्च यथोक्तक्रमेण प्रधानाः। ये तु 'तथाऽऽर्द्रा' इति पठन्ति, तेषामार्द्रा एव शिम्बा यथोक्तरसपाका न तु शुष्का इत्यर्थः।

सहाद्वयमिति माषपर्णी मुद्गपर्णी च। तयोः प्रकरणाच्छिम्ब एव। मूलकं प्रसिद्धम्। सूदपर्णी पाठे सोभाञ्जनकः। कुशिम्बः मुस्तकशिम्बिः। वल्लीप्रभवा इत्यनेन च अल्पवल्लीभवाश्च शिम्बा गृहीताः। रुचिप्रदा इत्यादिना मुद्गादीनामामावस्थायां शिम्बा उच्यन्ते। वैदलिका इत्यत्र विदलयोग्यतामात्रेण ग्रहणं, तेन माषादीनामपि शिम्बगुण उक्तो भवति। ये तु मुद्गादीनेव परिभाषितान् वैदलिकान् ग्राहयन्ति ते माषादीनां शिम्बान् शिम्बधान्यवल्ल्युद्भवत्वेन ग्राहयन्ति। अयं तु शिम्बगुणग्रन्थः कुलत्थोत्तरं कैश्चित् पठ्यते, संगतं तच्च तत्रैव भवति शिम्बिप्रकरणसंगततया ॥ ४४–४७ ॥—

**कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः ॥ ४८ ॥**
**उष्णाऽतसी स्वादुरसाऽनिलघ्नी पित्तोल्बणा स्यात् कटुका विपाके ॥**
**पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी ॥ ४९ ॥**
**तीक्ष्णोष्णरूक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि ॥**

कटुरित्यादिना कुसुम्भबीजगुणः। अतसी उमा। सिद्धार्थकः श्वेतसर्षपः। असितसर्षपो रक्तसर्षपः, तेन पर्युदासोऽत्र ॥ ४८ ॥ ४९ ॥

**अनार्तवं व्याधिहतमपर्यागतमेव च ॥**
**अभूमिजं नवं चापि न धान्यं गुणवत् स्मृतम् ॥ ५० ॥**
**नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥**
**विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥ ५१ ॥**
**शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः ॥**
**कालप्रमाणसंस्कारमात्राश्चास्मिन् परीक्ष्यते ॥ ५२ ॥**

## इति कुधान्यादिवर्गः।

धान्यानां हानार्थं दोषमाह—अनार्तवमित्यादि। अपर्यागतम् अपक्वम्। अभूमिजमिति अनुचितदेशजातम्। नवं चेति चकारेणातिदोषता नवस्य सूच्यते। अभिष्यन्दि गौरवस्नेहप्रकर्षाभ्याम्। पुराणं लघ्विति वक्तव्ये संवत्सरोषितमिति यत् करोति तेन संवत्सरोषितस्यैव लघुता प्रशस्ता, ततः परं तु लघुता अतिरूक्षतया न प्रशस्तेति भावः। विरूढमिति अङ्कुरितम्; अन्ये उपहताङ्कुरजननशक्तिकं विरूढं वदन्ति ॥ ५०–५२ ॥

## अथ मांसवर्गः।

**अत ऊर्ध्वं मांसवर्गानुपदेक्ष्यामः; तद्यथा—जलेशया, आनूपा, ग्राम्याः, क्रव्यभुज, एकशफा, जाङ्गलाश्चेति षण्मांसवर्गा भवन्ति। एतेषां वर्गाणामुत्तरोत्तरा प्रधानतमाः। ते पुनर्द्विविधा—जाङ्गला, आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः; तद्यथा—जङ्घाला, विष्किराः,**

**प्रतुदा, गुहाशयाः, प्रसहाः, पर्णमृगा, बिलेशया, ग्राम्याश्चेति । तेषां जङ्गालविष्किरौ प्रधानतमौ ॥ ५३ ॥**

अन्वर्थं धान्यवर्गमभिधाय तदुपकरणव्यञ्जनार्थं मांसवर्गं निर्दिशन्नाह—अत ऊर्ध्वमित्यादि । मांसोपयोज्यान् साम्येन गुणनिर्देशार्थं वर्गीकृत्याह—तत्रेत्यादि । अनुगता अप इति समासेन कूलचरा अनूपा उक्ताः, जलेशयानां पृथगभिधानात् । क्रव्यभुजः प्रसहाः । अत्र जाङ्गलशब्देन जाङ्गलदेशभवजङ्घालविष्किरयोरेव ग्रहणं, नाष्टावयववक्ष्यमाणजाङ्गलग्रहणं, तत्रोक्तग्राम्यादीनां पृथगेवाभिधानात् । तेनात्र "भुञ्जानो जाङ्गलैर्मांसैः" (सू. अ. १९) इत्यत्र जाङ्गलशब्देन जङ्घालविष्किरयोरेव ग्रहणम् । अन्यत्र वसामज्जादिग्रहणेऽष्टविधजाङ्गलग्रहणं ज्ञेयम् । संख्येयनिर्देशादेव संख्यायां लब्धायां षडितिसंख्यावचनमत्रैव वक्ष्यमाणप्रसहाद्यवरोधार्थम् ॥ ५३ ॥

**तत्रैणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्गाला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या बस्तिशोधनाश्च ॥ ५४ ॥**

अत्र जङ्घालवर्गे कुरङ्गः चतुरगतिः, ऋष्यो नीलाण्डनिभः, करालोऽधोनिष्क्रान्तदंष्ट्रः प्रायो हिमालये भवति, शरभ उष्ट्रप्रमाणो महाश्रृङ्गः काश्मीरे प्रसिद्धः, श्वदंष्ट्रा चतुर्दंष्ट्रोऽतिदुष्टः 'कर्कट' इति ख्यातः, पृषतो बिन्दुचित्रितः, चारुष्कश्चाल्पतनुः, मृगमातृका स्वल्पपृथूदरा, प्रभृतिग्रहणात् कोष्टकारवामादीनां ग्रहणम् ॥ ५४ ॥

**कषायमधुरो हृद्यः पित्तासृक्कफरोगहा ॥**
**संग्राही रोचनो बल्यस्तेषामेणो ज्वरापहः ॥ ५५ ॥**
**मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः ॥**
**शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥ ५६ ॥**
**एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते ॥**
**यो न कृष्णो न ताम्रश्च कुरङ्गः सोऽभिधीयते ॥ ५७ ॥**
**शीताऽसृक्पित्तशमनी विज्ञेया मृगमातृका ॥**
**सन्निपातक्षयश्वासकासहिक्कारुचिप्रणुत् ॥ ५८ ॥**

हरिणगुणे मधुरपाकत्वेऽपि बद्धाल्पवर्चस्त्वं प्रभावात् । एणहरिणयोर्वर्गभेदेन कथनं जङ्घालेष्वपि प्राधान्यख्यापनार्थम् । शीतेत्यादिना मृगमातृकागुणं केचित् पठन्ति ॥ ५५–५८ ॥

**लावतित्तिरिकपिञ्जलवर्तीरवर्तिका वर्तकनप्तृकावार्तीकचकोरकलविङ्ककुरामयूरोपचक्रकुक्कुटसारङ्गशतपत्रकुतित्तिरिकुरुवाहकयवालकप्रभृतयस्त्वाहला विष्किराः ॥ ५९ ॥**

**लघवः शीतमधुराः कषाया दोषनाशनाः ॥**

संग्राही दीपनश्चैव कषायमधुरो लघुः ॥
लावः कटुविपाकश्च सन्निपाते तु पूजितः ॥ ६० ॥
ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्धनः ॥
तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः ॥ ६१ ॥
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः ॥
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ॥ ६२ ॥
हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः ॥
वातपित्तहरा वृष्या मेधाग्निबलवर्धनाः ॥ ६३ ॥
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ॥
कषायः स्वादुलवणस्त्वच्यः केश्योऽरुचौ हितः ॥ ६४ ॥
मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ॥
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः ॥ ६५ ॥
बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः ॥
वातरोगक्षयवमीविषमज्वरनाशनः ॥ ६६ ॥

क्रमागतान् विष्किरानाह—लाव इत्यादि । लावः प्रसिद्धः; कपिञ्जलो गौरतित्तिरिः; वर्तीरः कपिञ्जलानूको वर्तकभेदः, वर्तिको वटुहीति ख्यातः; एषां बहुवचनान्तपाठविच्छेदो विष्किरेषु गुणप्राधान्यं गमयति, तथा हि **चरके**ऽपि—"लावाद्या विष्किराः प्रोक्ता वक्ष्यन्ते वर्तकादयः" ( च. सू. अ. २७ ) इत्यनेन विष्किराणां गुणभेदार्थं भेद उक्तः; वर्तको वटुहीति भेदः, 'नप्तृका' इत्यन्ये पठन्ति, अत्र नप्तृका स्वल्पा पाण्डुरा; वार्ताकाः संघातचारिणः; चकोरः प्रसिद्धः; कलविङ्कं भृङ्गराजं वदन्ति; कुररः प्रसिद्धः मयूरश्च; उपचक्रः कुक्कुटश्च प्रसिद्धः; सारङ्गश्चातकः; शतपत्रकोऽन्धकुडकः; कुतित्तिरिस्तित्तिरिभेदः; कुरुवाहकः कुरुकुल्यकः; यवालको यवककुरकः; प्रभृतिग्रहणेन चरकोक्तचारडादिग्रहणम् । विकीर्य भक्षयन्तीव विष्किराः । त्रिभिः चरणयुगलचञ्चुभिरपहन्ति विलिखन्ति भक्षणान्वेषणार्थमिति त्र्याहलाः । 'हल' विलेखने, इत्यस्मात् कर्तर्यच्प्रत्ययः । केचिच्च लावादिवर्तकादिवर्गयोः "वर्गौ स्वादुरसावेतौ" इत्यादिना श्लोकेन गुणं पठन्ति । संग्राहीत्यादिना लावगुणमाह । लघुरिति प्रकृतिलघुः, कटुविपाक इत्यनेन विपाकलघुत्वं च लभ्यते । तित्तिरिगुणे सामान्येन सर्वदोषहरत्वेऽपि अभिहिते गुरूष्णमधुरत्वाद्विशेषेण वातहरत्वं ज्ञेयम् । यदुक्तं **चरके**—"तित्तिरिः सञ्जयेच्छीघ्रं त्रीन् दोषाननिलोल्बणान्" ( च. सू. अ. २७ ) इति ॥ ५९–६६ ॥

**कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्ष्वेडकडिण्डिमाणवकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्टालट्टूषकसुगृहाखञ्जरीटहारीतदात्यूहप्रभृतयः प्रतुदाः ॥ ६७ ॥**

१ 'क्रकर' इति ड. ।

कषायमधुरा रूक्षाः फलाहारा मरुत्कराः ॥
पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः ॥ ६८ ॥
सर्वदोषकरस्तेषां मेदाशी मलदूषकः ॥
कषायस्वादुलवणो गुरुः काणकपोतकः ॥ ६९ ॥
रक्तपित्तप्रशमनः कषायविशदोऽपि च ॥
विपाके मधुरश्चापि गुरुः पारावतः स्मृतः ॥ ७० ॥
कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्धनः ॥
रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥ ७१ ॥

प्रतुदानाह—कपोतेत्यादि । कपोतपारावतौ प्रसिद्धौ; परभृतः कोकिलः; भृङ्गराजो राजभृङ्गिरिति ख्यातः; कोयष्टिकः 'कोण्ट' इति ख्यातः; कुलिङ्गः काणनचटकः; गृहकुलिङ्गः ग्रामचटकः; मेकाशी पुत्रशुकः; शुकसारिकाखञ्जरीटाः स्वनामप्रख्याताः; खगृहः पीतमस्तकः; हारीतो 'हरिआल' इति ख्यातः; दात्यूहो 'दाहक' इति ख्यातः । अन्ये तु गोक्ष्वेडादयोऽव्याख्याताश्च व्याख्यातृभिरविदितार्थत्वान्न व्याकृता इति । प्रभृतिग्रहणादन्यत्रोक्ता गोपामुद्रादयो[1] गृह्यन्ते । प्रतुद्य भक्षयन्तीति प्रतुदाः । अत्र च रूक्षत्वं स्वजातीयवर्गापेक्षया ज्ञेयं, न पुनर्मसूरादेरिव रूक्षत्वम् । एषामेवानिलावहत्वाद्यपि सजातीयापेक्षया ज्ञेयम् । फलाहारा मरुत्करा इति ये तु फलाहारास्ते मरुत्करा इति । अत्र विशेषगुणे काणकपोतं पाण्डुकपोतं वदन्ति; काणशब्दस्याल्पवचनतया स्वल्पकपोत इत्यन्ये । अयं चापथ्यतमश्चरके "काणकपोतः पक्षिणाम्" ( च. सू. अ. २५ ) इत्यनेनोक्तः ॥ ६७–७१ ॥

सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जारश्रृगालमृगेर्वारुकप्रभृतयो गुहाशयाः ॥ ७२ ॥

मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः ॥
उष्णवीर्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ ७३ ॥

क्रमागतान् गुहाशयानाह—सिंहेत्यादि । सिंहव्याघ्रमार्जारश्रृगालाः प्रसिद्धाः; वृकः कुक्कुरसदृशः पशुः क्षुद्रः; तरक्षुर्मृगशत्रुरिति ख्यातः, 'गण्डार' इत्यन्ये; ऋक्षो भल्लूकः; द्वीपी चित्रव्याघ्रः; मृगेर्वारुकः 'कोञ्चव्याघ्र' इति प्रसिद्धः; प्रभृतिग्रहणात् कुक्कुरादीनां ग्रहणम् ॥ ७२ ॥ ७३ ॥

काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः ॥ ७४ ॥

एते सिंहादिभिः सर्वे समाना वायसादयः ॥
रसवीर्यविपाकेषु विशेषाच्छोषिणे हिताः ॥ ७५ ॥

---

१ 'गोपापुत्र' इति ड. ।

क्रमागतान् प्रसहानाह—काक इत्यादि । चाष इन्द्रनीलाभपक्षः; भासो गोष्ठकुक्कुट इति ख्यातः; शशघाती पाडीरिति ख्यातः; उलूकः 'पेचक' इति ख्यातः, अन्ये तु स्वनामख्यातः; प्रभृतिग्रहणात् धूम्रिकादयो गृह्यन्ते । प्रसह्य भक्षयन्तीति प्रसहाः । एतद्गुणे विशेषेण हिता इति विशेषेण क्षीणमांसस्य शोषिणो मांसजनकत्वात् । तदुक्तं **चरके**—"मांसेनोपचिताङ्गानां मांसं मांसकरं परम्" ( च. चि. अ. ८ ) इति ॥ ७४ ॥ ७५ ॥

**मद्गुमूषिकवृक्षशायिकावकुशपूतिघासवानरप्रभृतयः पर्णमृगाः ॥७६**

**मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः ॥**
**सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः ॥ ७७ ॥**

पर्णमृगानाह—मद्गुरित्यादि । मद्गुः मालुयासर्पः; मूषिका वृक्षमूषिका; अन्ये मद्गु-मूषिकशब्देन मालुयासर्पं वदन्ति; वृक्षशायिका 'कवटवी' इति ख्यातः; अवकुशो वानर-भेदः; पूतिवीर्यो वृक्षचूडामणिकः, अन्ये खट्टासं वदन्ति । पर्णवती वृक्षे चरन्तीति पर्णमृगाः ॥ ७६–७७ ॥

**श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रिय-काजगरसर्पमूषिकनकुलमहाबभ्रुप्रभृतयो बिलेशयाः ॥ ७८ ॥**
**वर्चोमूत्रं संहतं कुर्युरेते वीर्ये चोष्णाः पूर्ववत् स्वादुपाकाः ॥**
**वातं हन्युः श्लेष्मपित्ते च कुर्युः स्निग्धाः कासश्वासकार्श्यापहाश्च ॥७९॥**

**कषायमधुरस्तेषां शशः पित्तकफापहः ॥**
**नातिशीलवीर्यत्वाद्वातसाधारणो मतः ॥ ८० ॥**
**गोधा विपाके मधुरा कषायकटुका स्मृता ॥**
**वातपित्तप्रशमनी बृंहणी बलवर्धनी ॥ ८१ ॥**
**शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ॥**
**प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः ॥ ८२ ॥**
**दुर्नामानिलदोषघ्नाः कृमिदूषीविषापहाः ॥**
**चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्धनाः ॥ ८३ ॥**

बिलेशयानाह—श्वाविदित्यादि । श्वावित् 'सेज्जका' इति ख्यातः; शल्यको हरितः सेज्जकभेदो वज्रसल्लकी; गोधाशशौ प्रसिद्धौ; वृषदंशो मार्जारः; लोपाकः शिआदीति ख्यातः; लोमशकर्णो नलिककरः; मृगप्रियो गोनः; अजगरो महासर्पः प्रसिद्धः; मूषिकानकुलौ प्रसिद्धौ; प्रभृतिग्रहणात् गण्डकादयो गृह्यन्ते । अत्र शशगुणे वात-साधारण इति न वातस्य चयं शमं वा करोति ॥ ७८–८३ ॥

दर्वीकरा दीपकाश्च तेषूक्ताः कटुपाकिनः ॥
मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥ ८४ ॥

अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः ॥ ८५ ॥

ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः ॥
मधुरा रसपाकाभ्यां दीपना बलवर्धनाः ॥ ८६ ॥
नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः ॥
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ ८७ ॥
बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ॥
मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ८८ ॥
श्वासकासप्रतिश्यायविषमज्वरनाशनम् ॥
श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥ ८९ ॥
औरभ्रवत्सलवणं मांसमेकशफोद्भवम् ॥
अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः ॥ ९० ॥
दूरे जनान्तनिलया दूरे पानीयगोचराः ॥
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः ॥ ९१ ॥
अतीवासन्ननिलयाः समीपोदकगोचराः ॥
ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते ॥ ९२ ॥

दर्वीकराः फणावन्तः ॥ ८४–९२ ॥

आनूपवर्गस्तु पञ्चविधिः । तद्यथा—कूलचराः, प्लवाः, कोषस्थाः, पादिनो, मत्स्याश्चेति ॥ ९३ ॥

तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोद्रन्यङ्कुकरण्यगवयप्रभृतयः कूलचरा पशवः ॥ ९४ ॥

वातपित्तहरा वृष्या मधुरा रसपाकयोः ॥
शीताश्च बलिनः स्निग्धा मूत्रलाः कफवर्धनाः ॥ ९५ ॥
विरूक्षणो लेखनश्च वीर्योष्णः पित्तदूषणः ॥
स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः ॥ ९६ ॥
गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् ॥
विपाके मधुरं चापि व्यवायस्य तु वर्धनम् ॥ ९७ ॥
स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः ॥
निद्रापुंस्त्वबलस्तन्यवर्धनो मांसदार्ढ्यकृत् ॥ ९८ ॥
रुरोर्मांसं समधुरं कषायानुरसं स्मृतम् ॥
वातपित्तोपशमनं गुरु शुक्रविवर्धनम् ॥ ९९ ॥

तथा चमरमांसं तु स्निग्धं मधुरकासजित् ॥
विपाके मधुरं चापि वातपित्तप्रणाशनम् ॥ १०० ॥
सृमरस्य तु मांसं च कषायानुरसं स्मृतम् ॥
वातपित्तोपशमनं गुरु शुक्रविवर्धनम् ॥ १०१ ॥
स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु ॥
श्रमानिलहरं स्निग्धं वाराहं बलवर्धनम् ॥ १०२ ॥
कफघ्नं खड्गिपिशितं कषायमनिलापहम् ॥
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥ १०३ ॥
गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम् ॥
विपाके मधुरं चापि रक्तपित्तविनाशनम् ॥ १०४ ॥

कूलचरवर्गे गवयो गोसदृशः; रुरुर्महाशृङ्गो हरिणः, चमरः केशमृत्युः, शूकरो महाशूकरः, खड्गी खड्गकः, गोकर्णो 'गोलहरिण' इति ख्यातः, कालपुच्छः कृष्णपुच्छो हरिण उक्तः, न्यङ्कुः 'नाकुलहरिण' इति प्रसिद्धः। प्रभृतिग्रहणाद् गवयादिभेदग्रहणम्। (शूकरसामान्यगुणे **चरके** विरुद्धमुक्तं; तत्र हि—"प्रसहाः प्रतुदानूपवारिजा वारिचारिणः। गुरूष्णस्निग्धमधुराः" (च. सू. अ. २७) इति)। शीताश्चेति चकारेण अशीताश्च केचिदिति ज्ञेयम्। तेन वराहादयः केचिच्छीताः, गजमहिषादय उष्णा इति विवक्षया उभयथा सामान्यगुणाभिधानम् ॥ ९३–१०४ ॥

**हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुक्कुटिकामेघरवश्वेतवारलप्रभृतयः प्लवाः संघातचारिणः ॥ १०५ ॥**

रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः ॥
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥ १०६ ॥
गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ॥
बृंहणः शुक्रलस्तेषां हंसो वातविकारनुत् ॥ १०७ ॥

प्लववर्गे हंसादौ क्रौञ्चः कोञ्चिरिति ख्यातः; कुररः प्रसहे पठितः, तेन उभयगणोऽयं; कारण्डवः शुक्लहंसभेदः; कादम्बः स्वनामख्यातः, जीवञ्जीवको विषदर्शनमृत्युः 'कालाकारक' इति ख्यातः; पुण्डरीकः 'पुण्डर' इति ख्यातः; प्लवः प्रसेवकगलः 'पिलव' इति ख्यातः; मद्गुः काकान्धः, कुरुविन्दः करन्तिपाकः; मल्लिकाक्षो मलिनचञ्चुहंसः, पुष्करशायिका पद्मपत्रशायिनी; कुलालिकी पानीयवर्तिका; अम्बुकुक्कुटिका जलकुक्कुटिका; मेघरवं चातकभेदं केचिद्वदन्ति, स तु विष्किरे पठितः; श्वेतवारलः श्वेतपल्लवः; अन्ये स्वनामख्याताः। प्रभृतिग्रहणात्तद्भेदा बहवो गृह्यन्ते ॥ १०५–१०७ ॥

शङ्खशङ्खनकशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः ॥ १०८ ॥
कूर्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ॥ १०९ ॥

शङ्खकूर्मादयः स्वादुरसपाका मरुन्नुदः ॥
शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्धनाः ॥ ११० ॥
कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ॥
शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥ १११ ॥

कोषस्थपादिनोः समानगुणतया सममेव गुणमाह—शङ्खेत्यादि । अनयोः स्वगुणसामान्येऽपि वर्गभेदकरणं लोकशास्त्रप्रसिद्ध्यनुसारार्थम् ॥ १०८–१११ ॥

मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च ॥ ११२ ॥

तत्र नादेयाः—रोहितपाठीनपाटलराजीववर्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयः ॥ ११३ ॥

नादेया मधुरा मत्स्या गुरवो मारुतापहाः ॥
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः ॥ ११४ ॥
कषायानुरसस्तेषां शष्पशैवालभोजनः ॥
रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥ ११५ ॥
पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ॥
दूषयेद्रक्तपित्तं तु कुष्ठरोगं करोत्यसौ ॥
मुरलो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ ११६ ॥
सरस्तडागसंभूताः स्निग्धाः स्वादुरसाः स्मृताः ॥
महाह्रदेषु बलिनः, स्वल्पेऽम्भस्यबलाः स्मृताः ॥ ११७ ॥

अवशिष्टान्मत्स्यान् द्वैविध्येनाह—मत्स्यास्त्वित्यादि । पाठीनो वआलिरिति ख्यातः; कृष्णमत्स्यः 'कालिआ' इति ख्यातः; वागुञ्जारो 'वाहंस' इति प्रसिद्धः; सहस्रदन्तः 'चित्रफलक' इति ख्यातः । प्रभृतिग्रहणाच्छफरीभेदकर्कटप्रभृतिग्रहणम् । रोहितविशेषगुणे शष्पशैवालादिभोजनादिति हेतुः कषायानुरसत्वे ज्ञेयः । केचिदत्र स्थाने नदीशब्दस्य समुद्रव्यतिरिक्तजलस्थानोपलक्षणत्वात् "सरस्तडागसंभूता" इत्यादिना सरस्तडागजगुणं पठन्ति । अत्र सरस्तडागशब्दौ अकृत्रिमाकृत्रिमजलस्थानोपलक्षणौ ॥ ११२–११७ ॥

तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरुलनन्दिवार(रु)लकमकरगर्गरचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः ॥ ११८ ॥

सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ॥
उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्धनाः ॥ ११९ ॥
बलावहा विशेषेण मांसाशित्वात् समुद्रजाः ॥

समुद्रान्यसकलस्थानमत्स्यानभिधाय सामुद्रानाह—तिमीत्यादि । तिमितिमिङ्गिलादयः समुद्रसंनिहितजनस्य प्रसिद्धाः । कुलिशः गर्गरश्च प्रसिद्धः । एते च नादेया अपि भवन्ति; तेन सामुद्रा एते महाप्रमाणा ज्ञेयाः ॥ ११८–११९ ॥—

**समुद्रजेभ्यो नादेया बृंहणत्वाद्गुणोत्तराः ॥ १२० ॥**
**तेषामप्यनिलघ्नत्वाच्चौण्ड्यकौप्यौ गुणोत्तरौ ॥**
**स्निग्धत्वात् स्वादुपाकत्वात्तयोर्वाप्या गुणाधिकाः ॥ १२१ ॥**
**नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः ॥**
**सरस्तडागजानां तु विशेषेण शिरो लघु ॥ १२२ ॥**
**अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः ॥**
**किंचिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते ॥ १२३ ॥**
**अधस्ताद्गुरवो ज्ञेया मत्स्याः सागरसंभवाः ॥**
**उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम् ॥ १२४ ॥**
**इत्यानूपो महाष्यन्दी मांसवर्ग उदीरितः ॥ १२५ ॥**

सामुद्रादीनामुत्तरोत्तरं गुणाधिक्यमाह—समुद्रजेभ्य इत्यादि ॥ १२०–१२५ ॥

**तत्र शुष्कपूतिव्याधिविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां च मांसान्यभक्ष्याणि, यस्माद्विगतव्यापन्नापहतापरिणताल्पासंपूर्णवीर्यत्वाद्दोषकराणि भवन्ति; एभ्योऽन्येषामुपादेयं मांसमिति ॥ १२६ ॥**

**अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्तितम् ॥**
**विषव्याधिहतं मृत्युं बालं छर्दिं च कोपयेत् ॥ १२७ ॥**
**कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् ॥**
**क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् ॥ १२८ ॥**

यादृशं मांसं न ग्राह्यं तद्दर्शयति—तत्र शुष्कमित्यादि । विषं स्थावरविषम् । दिग्धविद्धं विषदिग्धशस्त्रहतम् । असात्म्यचारिणामिति यस्य यत् सात्म्यं तद्व्यतिरिक्तचारिणाम् । एतन्मांसानुपादाने हेतुमाह—विगतेत्यादि । अत्र शुष्के विगतवीर्यत्वं, पूतिव्याधिहतयोर्व्यापन्नवीर्यत्वं, बालेऽपरिगतवीर्यत्वं, कृशे जीर्णे असंपूर्णवीर्यत्वं ज्ञेयम् । उपादेयमांसमाह—एभ्य इत्यादि ॥ १२६–१२८ ॥

**स्त्रियश्चतुष्पात्सु, पुमांसो विहङ्गेषु, महाशरीरेष्वल्पशरीराः, अल्पशरीरेषु महाशरीराः प्रधानतमाः; एवमेकजातीयानां महाशरीरेभ्यः कृशशरीराः प्रधानतमाः ॥ १२९ ॥**

अत्र वर्गान्ते "चरः शरीरावयवा" इत्यादिवक्तव्यपरीक्षणीयसंग्रहश्लोकस्य प्रपञ्चेन प्रथमं पृथक् पृथग्विषयमाह—स्त्रिय इत्यादि । प्रधानतमा इति प्रत्येकं संबध्यते । प्रधानतमत्वं

चात्र लघुत्वेन विवक्षितम् । 'स्त्रियश्चतुष्पत्सु, पुमान् विहगेषु' इत्यनेन 'लिङ्गं परीक्ष्यते' इत्यस्योदाहरणं; 'महाशरीरेषु' इत्यादिना द्वितीय'प्रधानतमा' इत्यन्तेन 'प्रमाणं परीक्ष्यते' इत्यस्य विषय उक्तः । एकजातीयानामिति पूर्वेण परेण च योज्यम् । प्रथमं महाशरीरेष्विति पदं सर्वथा बृहच्छरीरानाह, द्वितीयं तु स्थूलानाह । कृशशरीरा इति स्वभावकृशशरीरा न तु रोगादिना, तेषां निन्दितत्वात् ॥ १२९ ॥

**स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः । तद्यथा–रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरा गुरुतराः, तथा सक्थिस्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्मकालेयकयकृदन्त्राणि ॥ १३० ॥**

**शिरःस्कन्धं कटीपृष्ठं सक्थिनी चात्मपक्षयोः ॥**
**गुरवस्तु यथापूर्वं धातवस्तु यथोत्तरम् ॥ १३१ ॥**
**सर्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः ॥**
**पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम् ॥ १३२ ॥**
**उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् ॥**
**पक्षोत्क्षेपात् समो दृष्टो मध्यभागस्तु पक्षिणाम् ॥ १३३ ॥**
**अतीव रूक्षं मांसं तु विहङ्गानां फलाशिनाम् ॥**
**बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥ १३४ ॥**
**मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम् ॥**
**जलजानूपजा ग्राम्या क्रव्यादैकशफास्तथा ॥ १३५ ॥**
**प्रसहा बिलवासाश्च ये च जङ्गालसंज्ञिताः ॥**
**प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् ॥**
**अल्पाभिष्यन्दिनश्चैव यथापूर्वमतोऽन्यथा ॥ १३६ ॥**

**प्रमाणाधिकास्तु स्वजातावल्पसारा गुरवश्च । सर्वप्राणिनां सर्वशरीरेभ्यः प्रधानतमा भवन्ति यकृत्प्रदेशवर्तयस्तानाददीत; प्रधानालाभे मध्यमवयस्कं सद्यस्कमक्लिष्टमुपादेयं मांसमिति ॥ १३७ ॥**

स्थानादिकृतमित्यादौ स्थानं धातवोऽवयवाश्च । रक्तादिष्वित्यादिना 'धातवः परीक्ष्यन्ते' इत्यस्य विषयः । तथात्रेत्यादिना अधोभागस्तु योषितामित्यन्तेन 'शरीरावयवाः परीक्ष्यन्ते' इत्यस्य विषयः । 'कालेयकयकृच्छिरांसि' इत्यन्तेन गुरवस्तु यथापूर्वमिति संबध्यते(?) । शिरःस्कन्धमित्यादौ युग्मत्रयेऽपि स्कन्धापेक्षया गुरवस्तु यथापूर्वमिति योज्यम् । आत्मपक्षयोरिति स्वकीयपक्षाभ्यां सक्थिनी गुरुणी । ये तु 'आमपक्षयोः' इति पठन्ति, सक्थ्यन्तानां पञ्चानां गुरुपूर्वं वदन्ति, अपक्वं च रुधिरं पेयं वदन्ति, तन्मते 'संस्कारः परीक्ष्यते' इत्यस्योदाहरणं ज्ञेयम् । पक्षोत्क्षेपात् क्रियायोगान्मध्यभागमेषामेव साधारणं वदन्ति; एतेन च 'क्रिया परीक्ष्यते' इत्यस्योदाहरणमेतत् । अतीव रूक्ष-

१ 'अन्त्रयकृत्कालेयसक्थिकटिपृष्ठचरणशिरांसि' इति ता. । २ 'गुरु पूर्वं विजानीयात्' इति ड. ।

मित्यादिना तु भक्ष्यरूपचरोदाहरणम् । जलजेत्यादिना गतिलक्षितदेशरूपचरस्याप्युदाहरणम् । चरशब्देन हि 'चर' गतिभक्षणयोः, इत्यतो निष्पन्नेन भक्षणं तथा प्रचारदेशश्चोच्यते । सर्वप्राणिनामित्यादिना तु शरीरावयवपरीक्षैव मांसविशेषोपादेयतार्थमुदाहृता । वर्तिर्मांसवर्तिः ॥ १३०-१३७ ॥

**भवति चात्र—**

**चरः शरीरावयवाः स्वभावो धातवः क्रिया ॥**
**लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥ १३८ ॥**

**इति मांसवर्गः ।**

एतदुक्तार्थसंग्रहश्लोकमाह—चर इत्यादि । अस्यार्थो व्याख्यात एव तावत् । स्वभावः तत्तद्द्रव्यजातिप्रतिबद्धः स्वाभाविको धर्मः । सर्वमांसवर्ग एव स्वाभाविकद्रव्येण गुरुलघुपथ्यादिनोक्तः; संस्कारकृतानुगुणप्रस्तावे तदेवेत्यादिना प्रपञ्चो वक्तव्यः । मात्रा तु "गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते" इत्यादिना वक्तव्या । मात्रा चेति चकारो कालोचितमात्राया व्यवहारार्थं; तेन शरदि तित्तिरिर्बलवत्तया उपादेय इत्यपि सूचितं भवति । अयं च श्लोकः **चरके** पठित्वा व्याकृतः, तस्य व्याकरणमेतदर्थप्रतिपत्तये लिखामः । यथा—"चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः । जलजानूपजाश्चैव जलानूपचराश्च ये ॥ गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः । लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥ शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा । सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः ॥ वृषणौ बस्तिमेढ्रं च श्रोणी वृक्कौ यकृद्गुदम् । मांसाद्गुरुतरं विद्याद्यथास्वं मध्यमस्थि च ॥ स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः । स्वभावाद्गुरवो माषा वराहमहिषादयः ॥ धातूनां शोणिताद्यानां गुरुं विद्याद्यथोत्तरम् । अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः ॥ गौरवं लिङ्गसामान्ये पुंसां स्त्रीणां च लाघवम् । महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥ गुरूणां लाघवं विद्यात् संस्कारात् सविपर्ययम् । व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डिका ॥ अल्पादाने गुरूणां च लघूनां चातिसेवने । मात्रा कारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥" ( च. सू. अ. २७ ) इति ॥ १३८ ॥

**अथ फलवर्गः ।**

**अत ऊर्ध्वं फलान्युपदेक्ष्यामः । तद्यथा—दाडिमामलकबदरकोलकर्कन्धुसौवीरसिञ्चितिकाफलकपित्थमातुलुङ्गाम्राम्रातककरमर्दप्रियालनारङ्गजम्बीरलकुचभव्यपारावतवेत्रफलप्राचीनामलकतिन्तिडीकनीपकोशाम्राम्लीकाप्रभृतीनि ॥ १३९ ॥**

**अम्लानि रसतः पाके गुरूण्युष्णानि वीर्यतः ॥**
**पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च ॥ १४० ॥**

दाडिमादीनां मांससंस्कारकतया दाडिमादिफलान्येव प्रथमं फलवर्गे प्राह—तद्यथेत्यादि । बदरं महत्; कोलं मध्यमप्रमाणं बदरं; कर्कन्धूः शृगालकोलिका; सौवीरमतिमहद्बदरम्;

आम्रातकं 'आम्बाडा' इति ख्यातं; लकुचो डहुः; करमर्दं द्विविधं ग्राम्यारण्यभेदात्, अत्र 'वन्या मधुराऽल्पफला पित्तला' मगधे ख्याताः; भव्यं लकुसंहतिमात्रफलम्, आडुकं केचिद्वदन्ति, अन्ये कर्मरङ्गकं; पारावतः कामरूपप्रसिद्धः; वेत्रफलं प्रसिद्धं प्राचीनामलकं च; तिन्तिडीकं वृक्षाम्लं; नीपः कदम्बफलं; कोषाम्रः 'कोलोम्बु' इति ख्यातवृक्षस्य फलम्; अम्लिका तिन्तिडीका। प्रभृतिग्रहणाज्जम्बीरभेदादिग्रहणम्। अत्र सामान्यगुणे वक्ष्यमाणविशेषलक्षणेन दाडिमादौ अम्लरसत्वपित्तलत्वादीनि बाध्यन्ते, तद्व्यतिरिक्ताः सामान्यगुणा ज्ञेयाः। एवमन्यत्रापि गुणसामान्यगुणविशेषयोर्बाध्यबाधकभावो ज्ञेयः ॥ १३९ ॥ १४० ॥

कषायानुरसं तेषां दाडिमं नातिपित्तलम् ॥
दीपनीयं रुचिकरं हृद्यं वर्चोविबन्धनम् ॥ १४१ ॥
द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ॥
त्रिदोषघ्नं तु मधुरमम्लं वातकफापहम् ॥ १४२ ॥
अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ॥
चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् ॥ १४३ ॥
हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः ॥
कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकं च तत् ॥ १४४ ॥
कर्कन्धुकोलबदरमामं पित्तकफावहम् ॥
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥ १४५ ॥
पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ॥
सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥ १४६ ॥
कषायं स्वादु संग्राहि शीतं सिञ्चितिकाफलम् ॥
आमं कपित्थमस्वर्यं कफघ्नं ग्राहि वातलम् ॥ १४७ ॥
कफानिलहरं पक्वं मधुराम्लरसं गुरु ॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥ १४८ ॥
लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ॥
त्वक् तिक्ता दुर्जरा तस्य वातक्रिमिकफापहा ॥ १४९ ॥
स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ॥
मेध्यं[1] शूलानिलच्छर्दिकफारोचकनाशनम् ॥ १५० ॥
दीपनं लघु संग्राहि गुल्मार्शोघ्नं तु केसरम् ॥
शूलाजीर्णविबन्धेषु मन्देऽग्नौ कफमारुते ॥ १५१ ॥
अरुचौ च विशेषेण रसस्तस्योपदिश्यते ॥
पित्तानिलकरं बालं पित्तलं बद्धकेसरम् ॥ १५२ ॥
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥
कषायानुरसं स्वादु वातघ्नं बृंहणं गुरु ॥ १५३ ॥

---

१ 'भेध्यं' इति ङ.।

पित्ताविरोधि संपक्कमाम्रं शुक्रविवर्धनम् ॥
बृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्यति ॥ १५४ ॥
आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्धनम् ॥
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ॥ १५५ ॥
अम्लं तृषापहं रुच्यं पित्तकृत् करमर्दकम् ॥
वातपित्तहरं वृष्यं प्रियालं गुरु शीतलम् ॥ १५६ ॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम् ॥
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥ १५७ ॥
पारावतं समधुरं रुच्यमत्यग्निवातनुत् ॥
गरदोषहरं नीपं प्राचीनामलकं तथा ॥ १५८ ॥
वातापहं तिन्तिडीकमामं पित्तबलासकृत् ॥
ग्राह्युष्णं दीपनं रुच्यं संपक्कं कफवातनुत् ॥ १५९ ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ॥
अम्लीकायाः फलं पक्कं तद्वद्भेदि तु केवलम् ॥ १६० ॥
अम्लं समधुरं हृद्यं विशदं भक्तरोचनम् ॥
वातघ्नं दुर्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥ १६१ ॥
तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ॥
वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १६२ ॥

नातिपित्तलमम्लमेवैवंगुणं दाडिमम् । मधुरदाडिमस्यानन्तरं त्रिदोषघ्नलघुत्वपाठादामलकगुणानाह—अम्लमित्यादि । आमलकगुणे 'हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः' इत्यादि दोषोपशमने यत् कारणं वर्णितं तद्यद्यपि पित्तादिसमानतया पित्तादिवर्धनमपि युज्यते, तथाऽप्यामलकद्रव्यस्य शिवत्वप्रभावाद्दोषप्रशमनमेव परं करोति न प्रकोपमिति व्याख्यातमेव पूर्वम् । तथा ह्येतदेव शिवत्वमाह—फलेभ्योऽभ्यधिकं च तदित्यादि । पुरातनमिति पक्षे बदरवृन्तं तदीयस्तम्बकं वा । सिञ्चितिका उत्तरापथे बदरभेद एव । तेनोद्देशेऽनुद्दिष्टाऽपि बदरतया विशेषगुणे पठिता । कपित्थस्यावस्थाभेदेनोपयोगात्तथैव गुणमाह—आमं कपित्थमित्यादि । लघ्वम्लमित्यादि मातुलुङ्गस्य बीजपूरकस्य गुणः । अयं चाम्लभागस्यैव गुणोऽम्लमिति गुणश्रुतेः । तदीयत्वङ्मध्ययोर्हीनबलत्वं, तेन मध्यमित्यादिनाऽपि मध्यादिभागस्यैव परो गुणोऽभिधीयते इति न पौनरुक्त्यम् । तस्यैव त्वगादिभेदेन गुणमाह—त्वक् तिक्तेत्यादि । मांसमिति त्वक्केसरातिरिक्तो भागः । आम्रस्यावस्थाभेदगुणे पित्तमारुतकृद्बालमिति **चरकेणा**पि समं पाठान्तरं विरुद्धं, तत्र हि "रक्तपित्तकृतद्बालं' ( च. सू. अ. २७ ) इति नेष्यत एष पाठः । गरं तथा त्रिदोषं च हरतीति गरदोषहरं; तथा हि **चरके** नीपादौ "प्राचीनामलकं चैव दोषघ्नं गरहारि च"

(च. सू. अ. २७) इत्युक्तम् । तृष्णेत्यादि जम्बीरगुणपाठं नेच्छन्ति, अम्लफलवर्गे गुणेन तु तद्गुणग्रहणादिति कृत्वा; तत्तु न, सम्यगेकीयमतेनैते गुणास्तत्र नोक्ता एव जम्बीरस्य । अत्र च दाडिमादीनां सर्वेषामेव विशेषाभिधानात् सामान्योक्तगुणा ये विशेषगुणेन न बाधितास्ते यथासंभवं ज्ञेयाः ॥ १४१-१६२ ॥

क्षीरवृक्षफलजाम्बवराजादनतोदनशीतफलतिन्दुकबकुलधन्वनाश्मन्तकाश्वकर्णफल्गुपरूषकगाङ्गेरुकीपुष्करवर्तिबिल्वबिम्बीप्रभृतीनि १६३

फलान्येतानि शीतानि कफपित्तहराणि च ॥
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥ १६४ ॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ॥
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥ १६५ ॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ॥
स्निग्धं स्वादु कषायं च राजादनफलं गुरु ॥ १६६ ॥
कषायं मधुरं रूक्षं तोदनं कफवातजित् ॥
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्धनम् ॥ १६७ ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ॥
विपाके गुरु संपक्वं मधुरं कफपित्तजित् ॥ १६८ ॥
मधुरं च कषायं च स्निग्धं संग्राहि बाकुलम् ॥
स्थिरीकरं च दन्तानां विशदं फलमुच्यते ॥ १६९ ॥
सकषायं हिमं स्वादु धान्वनं कफवातजित् ॥
तद्वद्गाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥ १७० ॥
विष्टम्भि मधुरं स्निग्धं फल्गुजं तर्पणं गुरु ॥
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ॥ १७१ ॥
वातघ्नं पित्तजननमामं विद्यात् परुषकम् ॥
तदेव पक्वं मधुरं वातपित्तनिबर्हणम् ॥ १७२ ॥
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥
पौष्करं स्वादु विष्टम्भि बल्यं कफकरं फलम् ॥ १७३ ॥
कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ॥
कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम् ॥ १७४ ॥
विद्यात्तदेव संपक्वं मधुरानुरसं गुरु ॥
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥ १७५ ॥
बिम्बीफलं साश्वकर्णं स्तन्यकृत् कफपित्तजित् ॥
तृड्दाहज्वरपित्तासृक्कासश्वासक्षयापहम् ॥ १७६ ॥

क्षीरवृक्षफलेत्यादौ क्षीरवृक्षा वटपिप्पलादयः; राजादनं क्षीरिवृक्षफलं; तिन्दुकं तेन्दुरिति ख्यातं; बकुलं केसरफलं; धन्वनं धन्ववृक्षफलं; तोदनमिहाप्रसिद्धं वामनामिकेति व्याकुर्वन्ति; अश्मन्तकमश्मन्तकफलं; पुष्करवर्तिः पद्मबीजम्, अन्नाशिकेत्यन्ये; बिम्बी तु ओष्ठोपमफलं; प्रभृतिग्रहणाट्टङ्कादिकषायमधुरफलग्रहणम् । विशेषगुणे जाम्बवमिति अविशेषात् सर्वजम्बूफलम् । पित्ताग्निवर्धनमिति परमार्थसिद्धान्ते पित्ताग्न्योर्भिन्नत्वादुपपन्नमेव । आममिति अपक्वम् । कफानिलहरमित्यादिना बालबिल्वगुणः । पूतिमारुतमित्यत्र पूतिशब्दः सुगन्धिवचनः, यथा पूतिः खट्टासः, पूतिपुष्पा मधुकुक्कुटी; अन्ये पूतिमारुतमिति दुर्गन्धिकुक्षिवातहरम् । केचिद्बिल्वस्य तदेवेत्यादिनाऽर्धश्लोकेन मध्यबिल्वगुणं वदन्ति । किं तु **चरके**ऽपि "बिल्वं तु दुर्जरं पक्वं" ( च. सू. अ. २७ ) इत्यादिना द्विविधमेव बिल्वं पठितम् । बिम्बीफलं साश्मन्तकमित्यादि केचित् पठन्ति ॥१६३–१७६॥

**तालनालिकेरपनसमोचप्रभृतीनि ॥ १७७ ॥**
**स्वादुपाकरसान्याहुर्वातपित्तहराणि च ॥**
**बलप्रदानि स्निग्धानि बृंहणानि हिमानि च ॥ १७८ ॥**
**फलं स्वादुरसं तेषां तालजं गुरु पित्तजित् ॥**
**तद्बीजं स्वादुपाकं तु मूत्रलं वातपित्तजित् ॥ १७९ ॥**
**नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादुशीतलम् ॥**
**बलमांसप्रदं हृद्यं बृंहणं बस्तिशोधनम् ॥ १८० ॥**
**पनसं सकषायं तु स्निग्धं स्वादुरसं गुरु ॥**
**मौचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् ॥**
**रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ १८१ ॥**

तालेत्यादौ पनसः कण्टकिफलं, मोचकं कदलीफलानि नानाविधानि । फलं स्वादुरसमित्यादिना पक्वतालगुणः । तद्बीजमिति तालस्याभ्यन्तरम् ॥ १७७–१८१ ॥

**द्राक्षाकाश्मर्यमधूकपुष्पखर्जूरप्रभृतीनि ॥ १८२ ॥**
**रक्तपित्तहराण्याहुर्गुरूणि मधुराणि च ॥**
**तेषां द्राक्षा सरा स्वर्या मधुरा स्निग्धशीतला ॥ १८३ ॥**
**रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥**
**हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम् ॥ १८४ ॥**
**केश्यं रसायनं मेध्यं काश्मर्यं फलमुच्यते ॥**
**क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥ १८५ ॥**
**रसे पाके च मधुरं खार्जूरं रक्तपित्तनुत् ॥**
**बृंहणीयमहृद्यं च मधूककुसुमं गुरु ॥**
**वातपित्तोपशमनं फलं तस्योपदिश्यते ॥ १८६ ॥**

द्राक्षेत्यादिना मधुरफलानां समानगुणान्याह । अत्र प्रभृतिग्रहणाद् द्राक्षाखर्जूरभेदा गृह्यन्ते । तद्यथा—द्राक्षा गोस्तनी कारवी च; खर्जूरं पिण्डखर्जूरं, तथा वृक्षखर्जूरं, विटपखर्जूरं च । काश्मर्यं गाम्भारीफलं; मधूकं मधूकफलं; पुष्पमिति मधूकपुष्पमेव, पुष्पमपि फलवदुपयोगात् तत्समानगुणत्वाचात्रोच्यते ॥ १८२-१८६ ॥

वातामाक्षोडाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि ॥ १८७ ॥
पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च ॥
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥ १८८ ॥

वातामादय औत्तरापथिकाः प्रसिद्धाः ॥ १८७ ॥ १८८ ॥

कषायं कफपित्तघ्नं किंचित्तिक्तं रुचिप्रदम् ॥
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥ १८९ ॥
वस्तिरं शीतपाक्यं च सारुष्करनिबन्धनम् ॥
विष्टम्भि दुर्जरं रूक्षं शीतलं वातकोपनम् ॥ १९० ॥
विपाके मधुरं चापि रक्तपित्तप्रसादनम् ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १९१ ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ॥
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥ १९२ ॥
शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ॥
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ १९३ ॥
करीराक्षिकपीलूनि तृणशून्यफलानि च ॥
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥ १९४ ॥
तिक्तं पित्तकरं तेषां सरं कटुविपाकि च ॥
तीक्ष्णोष्णं कटुकं पीलु सस्नेहं कफवातजित् ॥ १९५ ॥
आरुष्करं तौवरकं कषायं कटुपाकि च ॥
उष्णं कृमिज्वरानाहमेहोदावर्तनाशनम् ॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च ॥ १९६ ॥
करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥
अङ्कोलस्य फलं विस्रं गुरु श्लेष्महरं हिमम् ॥ १९७ ॥
रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ॥
तिक्तमीषद्विषहितं विडङ्गं कृमिनाशनम् ॥ १९८ ॥
व्रण्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत् ॥
कषायं दीपनं चाम्लं चक्षुष्यं चाभयाफलम् ॥ १९९ ॥
भेदनं लघु रूक्षोष्णं वैस्वर्यक्रिमिनाशनम् ॥
चक्षुष्यं स्वादुपाक्याक्षं कषायं कफपित्तजित् ॥ २०० ॥

**कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम् ॥**
**कषायमीषन्मधुरं किंचित् पूगफलं सरम् ॥ २०१ ॥**
**जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ॥**
**कक्को(क्को)लकं लवङ्गं च तिक्तं कटु कफापहम् ॥ २०२ ॥**
**लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम् ॥**
**सतिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः ॥ २०३ ॥**
**तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः ॥**
**लताकस्तूरिका तद्वच्छीता बस्तिविशोधनी ॥ २०४ ॥**

लवली प्रसिद्धा । अरुष्करनिबन्धनं भल्लातकवृन्तम् । वसिरः सूर्यावर्तभेदः, तस्येह फलम् । ऐरावतं पुष्पफलमेलवालुकेति ख्यातम् । दन्तशठो जम्बीरस्तद्भेदो वा । टङ्कमौत्तरापथिकम् । टङ्कादीनां तुल्यगुणताया अभावात् प्रत्येकमेव गुणनिर्देशः । ऐङ्गुदं पुत्रजीवकफलम् । शमीफलं शङ्करमिति शास्त्रप्रसिद्धम् । श्लेष्मातकं बहुवारफलम् । करीरो मरुजो द्रुमः, तत्फलं करीरम्; आक्षिकमक्षकीफलम्; पीलु औत्तरापथिकम् । अरुष्करमित्यादि केचित् पठन्ति । तत्र तौवरकं तैलेषु व्याकृतम् । करञ्जो वृक्षकरञ्जः । किंशुकः पलाशफलम् । अरिष्टो निम्बः । व्रण्यमित्यादिना हरीतकीगुणाः । कषायमिति प्रधानकषायरसं; तेन लवणरहितापररसाश्चोद्रिक्ता भवन्ति । उक्तं हि **चरके**—"शिवा पञ्चरसाऽऽयुष्याऽलवणा" ( चि. अ. १ ) इति । आक्षमिति बिभीतकफलम् । कफेत्यादिगुवाकगुणः । अत्र जातीकोषोऽथ कर्पूरमिति केचिन्मुखवैशद्यकारकतया पूगानन्तरं पठन्ति । तत्र फलानामित्यत्र प्रक्रमागततया निदर्शनीयगुणानामभिधानं युक्तमेव । कटुफलं लताकस्तूरीफलम् । लवङ्गशब्देन लवङ्गफलवृन्तं गृह्यते ॥ १८९-२०४ ॥

**प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥**
**बैभीतको मदकरः कफमारुतनाशनः ॥ २०५ ॥**
**कषायमधुरो मज्जा कोलानां पित्तनाशनः ॥**
**तृष्णाच्छर्द्यनिलघ्नश्च तद्वदामलकस्य च ॥ २०६ ॥**
**बीजपूरकशम्याकमज्जा कोशाम्रसंभवः ॥**
**स्वादुपाकोऽग्निबलदः स्निग्धः पित्तानिलापहः ॥ २०७ ॥**
**यस्य यस्य फलस्येह वीर्यं भवति यादृशम् ॥**
**तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥ २०८ ॥**

येषां फलादीनां मज्जोपयुज्यते तेषां मज्जगुणमाह—प्रियालमज्जेत्यादि । शम्पाकः सुवर्णहलिः । अनुक्तमज्जगुणातिदेशार्थमाह—यस्येत्यादि । वीर्यशब्देनात्र शक्तिवचनतया रसवीर्यविपाकप्रभावरूपं वीर्यं ज्ञेयम् । शक्तिश्च शक्तिविषये कार्ये निरूप्यते । तेन कार्यमपि दोषहरणादि प्रोच्यते ॥ २०५-२०८ ॥

फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ॥
बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ॥
ग्राह्युष्णं दीपनं तद्धि कषायकटुतिक्तकम् ॥ २०९ ॥

संप्रति यादृशं फलमुपादेयं तदाह—फलेष्वित्यादि । बिल्वादन्यत्रेत्यनेन बिल्वमेव परमपक्वं श्रेष्ठं; ये त्वत्र तिन्दुककपित्थादयो बालावस्थायामपि गुणतो निर्देश्यास्ते पक्वावस्थापेक्षया हीनगुणा एवेति भावः ॥ २०९ ॥

व्याधितं कृमिजुष्टं च पाकातीतमकालजम् ॥
वर्जनीयं फलं सर्वमपर्यागतमेव च ॥ २१० ॥

इति फलवर्गः ।

व्याधितमित्यादौ वर्जनीयफलोपदेशे पाकातीतमिति अतिपाकक्लिन्नम् ॥ २१० ॥

अथ शाकवर्गः ।

शाकान्यत ऊर्ध्वं वक्ष्यामः—तत्र पुष्पफलालाबुकालिन्दकप्रभृतीनि ॥ २११ ॥

पित्तघ्नान्यनिलं कुर्युस्तथा मन्दकफानि च ॥
सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च ॥ २१२ ॥
पित्तघ्नं तेषु कूष्माण्डं बालं मध्यं कफावहम् ॥
शुक्लं लघूष्णं सक्षारं दीपनं बस्तिशोधनम् ॥ २१३ ॥
सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ॥
दृष्टिशुक्रक्षयकरं कालिन्दं कफवातकृत् ॥ २१४ ॥
अलाबुर्भिन्नविट्का तु रूक्षा गुर्व्यतिशीतला ॥
तिक्तालाबुरहृद्या तु वामिनी वातपित्तजित् ॥ २१५ ॥

फलप्रसङ्गेन शाकभूतफलानामपि निर्देशे कर्तव्ये शाकवर्गमेव फलशाकपूर्वकमाह—अत ऊर्ध्वमित्यादि । पुष्पफलं कूष्माण्डः; कलिङ्गो योन्वानः । कूष्माण्डस्य बालाद्यवस्थात्रये गुणभेदमाह—पित्तघ्नमित्यादि । अत्र चेतोविकारिणामिति अपस्मारोन्मादादिमनोविकारयुक्तानाम् ॥ २११-२१५ ॥

त्रपुसैर्वारुकर्कारुकशीर्णवृन्तप्रभृतीनि ॥ २१६ ॥

स्वादुतिक्तरसान्याहुः कफवातकराणि च ॥
सृष्टमूत्रपुरीषाणि रक्तपित्तहराणि च ॥ २१७ ॥
बालं सुनीलं त्रपुसं तेषां पित्तहरं स्मृतम् ॥
तत् पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ॥ २१८ ॥
एर्वारुकं सकर्कारु संपक्वं कफवातकृत् ॥
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ॥ २१९ ॥

सक्षारं मधुरं चैव शीर्णवृन्तं कफापहम् ॥
भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥ २२० ॥

त्रपुषेत्यादौ एर्वारुकं कर्कटीभेदः; शीर्णवृन्तं सुखसेकम् । बालं सुनीलमिति नीलावस्थं बालम् । जीर्णमिति पक्कम् । एर्वारुकस्य पक्कावस्थाद्वयेन गुणमाह—एर्वारुकमित्यादि । शीर्णवृन्तगुणे आनाहाष्ठीलनुदित्यत्र मूत्राष्ठीला ज्ञेया न वाताष्ठीला, अस्य वाताप्रशमकत्वात् ॥ २१६–२२० ॥

**पिप्पलीमरिचशृङ्गवेरार्द्रकहिङ्गुजीरककुस्तुम्बुरुजम्बीरसुमुखसुरसार्जकभूस्तृणसुगन्धककासमर्दककालमालकुठेरकक्षवकखरपुष्पशिग्रुमधुशिग्रुफणिज्झकसर्षपराजिकाकुलाहलावगुत्थगण्डीरतिलपर्णिकावर्षाभूचित्रकमूलकलशुनकलायपलाण्डुप्रभृतीनि ॥ २२१ ॥**

कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च ॥
कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥ २२२ ॥
तेषां गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा ॥
शुष्का कफानिलघ्नी सा वृष्या पित्तप्रसादनी ॥ २२३ ॥
स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ॥
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥ २२४ ॥
नात्युष्णं नातिशीतं च वीर्यतो मरिचं सितम् ॥
गुणवन्मरिचेभ्यश्च चक्षुष्यं च विशेषतः ॥ २२५ ॥
नागरं कफवातघ्नं विपाके मधुरं कटु ॥
वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥ २२६ ॥
कफानिलहरं स्वर्यं विबन्धानाहशूलनुत् ॥
कटूष्णं रोचनं हृद्यं वृष्यं चैवार्द्रकं स्मृतम् ॥ २२७ ॥
लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित् ॥
कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत् ॥ २२८ ॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्धनम् ॥
कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥ २२९ ॥
कारवी करवी तद्वद्विज्ञेया सोपकुञ्चिका ॥
भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥ २३० ॥
आर्द्रा कुस्तुम्बरी कुर्यात् स्वादुसौगन्ध्यहृद्यताम् ॥
सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी ॥ २३१ ॥
दोषघ्नी कटुका किंचित् तिक्ता स्रोतोविशोधनी ॥
जम्बीरः पाचनस्तीक्ष्णः कृमिवातकफापहः ॥ २३२ ॥
सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः ॥

कफानिलविषश्वासकासदौर्गन्ध्यनाशनः ॥ २३३ ॥
पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः ॥
तद्वत्तु सुमुखो ज्ञेयो विशेषाद्गरनाशनः ॥ २३४ ॥
कफघ्ना लघवो रूक्षास्तीक्ष्णोष्णाः पित्तवर्धनाः ॥
कटुपाकरसाश्चैव सुरसार्जकभूस्तृणाः ॥ २३५ ॥
मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ॥
विशेषतः पित्तहरः सतिक्तः कासमर्दकः ॥ २३६ ॥
कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽथ पिच्छिलः ॥
मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ॥ २३७ ॥
विदाहि बद्धविण्मूत्रं रूक्षं तीक्ष्णोष्णमेव च ॥
त्रिदोषं सार्षपं शाकं गाण्डीरं वेगनाम च ॥ २३८ ॥
चित्रकस्तिलपर्णी च कफशोफहरे लघू ॥
वर्षाभूः कफवातघ्नी हिता शोफोदरार्शसाम् ॥ २३९ ॥
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ॥
सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ॥ २४० ॥
महत्तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ॥
तदेव स्नेहसिद्धं तु पित्तनुत् कफवातजित् ॥ २४१ ॥
त्रिदोषशमनं शुष्कं विषदोषहरं लघु ॥
विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात् ॥ २४२ ॥

पुष्पं च पत्रं च फलं तथैव यथोत्तरं ते गुरवः प्रदिष्टाः ॥
तेषां तु पुष्पं कफपित्तहन्तृ फलं निहन्यात् कफमारुतौ तु ॥ २४३ ॥
स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः सरः स्वादुरसश्च बल्यः ॥
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः ॥ २४४ ॥
हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान् ॥
दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति ॥ २४५ ॥
नात्युष्णवीर्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च ॥
बलावहः पित्तकरोऽथ किंचित् पलाण्डुरग्निं च विवर्धयेत्तु ॥ २४६ ॥
स्निग्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च ॥
स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः क्षीरपलाण्डुरुक्तः ॥ २४७ ॥

कलायशाकं पितघ्नं कफघ्नं वातलं गुरु ॥
कषायानुरसं चैव विपाके मधुरं च तत् ॥ २४८ ॥

अत्र केचित् पिप्पल्यादीन्यपि सामान्येनान्नसंस्कारकतया केषांचिच्छाकत्वेनाप्युपयोगात् पठन्ति । तत्र जीरकं बहुविधं; जम्बीरः पर्णासभेदः; सुरसः सुरभिपर्णासः;

अर्जकः श्वेतपर्णासः; भूस्तृणं सुगन्धितृणं, सुगन्धको गन्धतृणमल्पं; कालमालः कृष्णपर्णासः; कुठेरकस्तद्भेदः; क्षवकच्छिक्काकारकः; खरपुष्पो मरुबकः; शिग्रुः शोभाञ्जनकः; मधुशिग्रू रक्तपुष्पोऽल्पविटपः शोभाञ्जनकः; गण्डीरः शमठः, स जलस्थलजभेदाद् द्विविधः; तिलपर्णी श्रीहस्तिनी; वर्षाभूः पुनर्नवाद्वयम् । पिप्पलीगुणे पित्तप्रसादनीति मधुरपाकतया पित्तं प्रसादयति; अन्ये 'पित्ताविरोधिनी' इति पठन्ति । आर्द्रमरिचगुणे श्लेष्मप्रसेकीति श्लेष्मणोऽन्यत्र पित्तस्य प्रकोपणं कटुतीक्ष्णत्वात् करोतीति युक्तम् । ये तु चयमपि श्लेष्मणो वदन्ति तदनुभवविरुद्धम् । मरिचं सितमिति शोभाञ्जनकबीजम् । जीरकद्वयमत्र शुक्लपीतभेदेन । कारवी कृष्णजीरकं; करवी कणजीरकं, यमानिकेत्यन्ये । उपकुञ्चिका स्थूलजीरकम् । सार्षपं कफवातघ्नमिति चरकविरुद्धं; उक्तं हि **चरके**—"त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमिष्यते" ( च. सू. अ. २७ ) इति । राजसर्षपः श्वेतसर्षपः । गण्डीरं वेगनाम चेत्यत्र वेगनाम जलगण्डीरम् । मूलकस्य बालस्य तथा वृद्धस्य तथा मध्यस्य तथा सिद्धस्य तथा शुष्कस्य पृथग्गुणानाह—कटुतीक्ष्णेत्यादि । मूलकपोतिका अतिबालमूलकम् । विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकादिति क्रिमिवातातपहतं शुष्कमित्यादिना निषिद्धमपि शुष्कमत्र मूलकस्य तद्विपर्ययोपदर्शनार्थमुच्यते । पुष्पं चेत्याद्यनन्तरत्वान्मूलकस्यैव ज्ञेयम् । स्निग्ध इत्यादिना रसोनगुणः । स्निग्धोऽरुचिघ्न इत्यादि क्षीरपलाण्डोस्तद्भेदस्य गुणः । किंतु स पश्चात् कलायेन समं पठनीयः ॥ २२१–२४८ ॥

**चुच्चुयूथिकातरुणीजीवन्तीबिम्बीतिकानदी(न्दी)भल्लातकच्छगलाग्त्रीवृक्षादनीफञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणकर्बुदारकोविदारप्रभृतीनि ॥ २४९ ॥**

**कषायस्वादुतिक्तानि रक्तपित्तहराणि च ॥**
**कफघ्नान्यनिलं कुर्युः संग्राहीणि लघूनि च ॥ २५० ॥**
**लघुः पाके च जन्तुघ्नः पिच्छिलो व्रणिनां हितः ॥**
**कषायमधुरो ग्राही चुच्चूस्तेषां त्रिदोषहा ॥ २५१ ॥**
**चक्षुष्या सर्वदोषघ्नी जीवन्ती समुदाहृता ॥**
**वृक्षादनी वातहरा, फञ्जी त्वल्पबला मता ॥ २५२ ॥**
**क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः ॥**
**शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम् ॥ २५३ ॥**

**पुनर्नवावरुणतर्कार्युरुबूकवत्सादनीबिल्वशाकप्रभृतीनि ॥ २५४ ॥**

**उष्णानि स्वादुतिक्तानि वातप्रशमनानि च ॥**
**तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम् ॥ २५५ ॥**

**तण्डुलीयकोपोदकाश्वबलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि ॥ २५६ ॥**

**सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च ॥**
**मन्दवातकफान्याहू रक्तपित्तहराणि च ॥ २५७ ॥**

मधुरो रसपाकाभ्यां रक्तपित्तमदापहः ॥
तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥ २५८ ॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा ॥
उपोदका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ २५९ ॥
कटुर्विपाके कृमिहा मेधाग्निबलवर्धनः ॥
सक्षारः सर्वदोषघ्नो वास्तूको रोचनः सरः ॥ २६० ॥
चिल्ली वास्तूकवज्ज्ञेया पालक्या तण्डुलीयवत् ॥
वातकृद्बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ॥
शाकमाश्वबलं रूक्षं बद्धविण्मूत्रमारुतम् ॥ २६१ ॥

चुचुप्रभृतिसमानगुणवर्गेषु चुचुर्नाडीचो वर्तुलपत्रः; पृथुका वरुणोत्पादका; पालक्या स्वनामप्रसिद्धा; जीवन्ती स्वर्णनाडी; नदीभल्लातको भोजनकः; छगलान्त्री बुक्का; वृक्षादनी बन्दाकः; फञ्जी ब्राह्मणयष्टिका; तण्डुलीयकः क्षुद्रमारीषः; अश्वबला बृहत्पत्रा मेथिका; चिल्ली गौडवास्तूकः । अन्ये तु चुचुकादिभ्यो विच्छेद्य तण्डुलीयकादीन् पठन्ति; चुचुवर्गे च बिम्बीशेलुप्रभृतीन् पठन्ति । अत्र 'कफपित्तमदापहः' इति केचित् पठन्ति; **चरके** "रूक्षो विषमदघ्नश्च" ( च. सू. अ. २७ ) इति पठ्यते, तेन कफहरत्वं मधुररसपाकस्य शीतस्य चान्याय्यम् ॥ २४९–२६१ ॥

**मण्डूकपर्णीसप्तलासुनिषण्णकसुवर्चलापिप्पलीगुडूचीगोजिह्वाकाकमाचीप्रपुन्नाडावल्गुजसतीनबृहतीकण्टकारिकाफलपटोलवार्ताककारवेल्लककटुकीकेबु(म्बु)कोरुबूकपर्पटककिराततिक्तकर्कोटकारिष्टकोशातकीवेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि ॥ २६२ ॥**

रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च ॥[1]
कुष्ठमेहज्वरश्वासकासारुचिहराणि च ॥ २६३ ॥
कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ॥
लघ्वी मण्डूकपर्णी तु तद्वद्गोजिह्विका मता ॥ २६४ ॥
अविदाही त्रिदोषघ्नः संग्राही सुनिषण्णकः ॥
अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥ २६५ ॥
ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम् ॥
नात्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु तद्विधम् ॥ २६६ ॥
कण्डूकुष्ठकृमिघ्नानि कफवातहराणि च ॥
फलानि बृहतीनां तु कटुतिक्तलघूनि च ॥ २६७ ॥
कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् ॥

---

१ 'कफपित्तहराणि' इति ता. ।

पटोलं कटुकं पाके वृष्यं रोचनदीपनम् ॥ २६८ ॥
कफवातहरं तिक्तं रोचनं कटुकं लघु ॥
वार्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ॥
तद्वत् कर्कोटकं विद्यात् कारवेल्लकमेव च ॥ २६९ ॥
आटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः ॥
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ॥ २७० ॥
कफापहं शाकमुक्तं वरुणप्रपुनाडयोः ॥
रूक्षं लघु च शीतं च वातपित्तप्रकोपणम् ॥ २७१ ॥
दीपनं कालशाकं तु गरदोषहरं कटु[१] ॥
कौसुम्भं मधुरं रूक्षमुष्णं श्लेष्महरं लघु ॥ २७२ ॥
वातलं नालिकाशाकं पित्तघ्नं मधुरं च तत् ॥
ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता ॥
उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपनी ॥ २७३ ॥

मण्डूकपर्ण्यादौ तिक्तरसप्रायवर्गे मण्डूकपर्ण्यादयः स्वनामख्याताः, न व्याकर्तव्याः। सप्तला चर्मकषा; सुवर्चला सूर्यावर्तभेदः, अन्ये नाटफलमाहुः; पिप्पल्यत्र पुनरुत्पन्न एवोपयोज्यतया उक्ता; गोजिह्वा दार्वीपत्रिका; प्रपुन्नाड एडगजः; सतीनो वर्तुलकलायः; बृहतीफलं तेन कण्टकारीफलं च गृह्यते, केचित्तु कण्टकारीफलं पृथगेव पठन्ति; पटोलमिह पत्रं, कटुशब्दस्य तिक्तवचनात्; उरुबूक एरण्डः; कोषातकी घोषा; अरिष्टो निम्बः, तस्य पत्रं; वेत्रं वेत्रकरीरः; अटरूषो वासा; अर्कपुष्पी अर्कपर्णीसदृशी लता; प्रभृतिग्रहणादन्यान्यपि कालशाकादीनि गृह्यन्ते। एषां विशेषगुणे वार्ताकस्यापक्वपक्वभेदेन गुणकथनं—वार्ताकमित्यादि। जीर्णमिति पक्वम्। अत्र गुडूचीगुणे वातापहत्वमल्पतया नोक्तं ज्ञेयं, चरकवचनं हि—"वायुं वत्सादनी हन्यात्" ( च. सू. २७ ) इति। किंवा पत्रप्रधाने गुडूचीशाके पित्तकफहरत्वमेव तिक्तत्वप्राधान्याज्ज्ञेयम्। वरुणप्रपुन्नाडयोरित्यत्र पूर्वपठितोऽप्ययं वरुणः पुनः प्रपुन्नाडेन समं समानगुणतया निर्दिष्टः। प्रभृतिग्रहणोक्तशाकानां विशेषगुणमाह—दीपनमित्यादि। कालशाकं 'कालिआ' इति ख्यातम्। नालिका नाडीचः। अन्ये कलायमप्यत्र पठन्ति; तत्र कलायं त्रिपुटकलायम्। [२]कलम्बुकादि प्रसिद्धम् ॥ २६२–२७३ ॥

लोणिकाजातुकत्रिपर्णिकापत्तूरजीवकसुवर्चलाडुडुरककुतुम्बककुठिञ्जरकुन्तलिकाकुरण्टिकाप्रभृतयः ॥ २७४ ॥

स्वादुपाकरसाः शीताः कफघ्ना नातिपित्तलाः ॥
लवणानुरसा रूक्षाः सक्षारा वातलाः सराः ॥ २७५ ॥

---

१ 'लघु' इति ता.। २ एतद्व्याख्यानानुसारी पाठस्स्वभावान्न मूले सन्निवेशितः।

स्वादुतिक्ता कुन्तलिका कषाया सकुरण्टिका ॥
संग्राहि शीतलं चापि लघु दोषापहं तथा ॥
राजक्षवकशाकं तु शटीशाकं च तद्विधम् ॥ २७६ ॥
स्वादुपाकरसं शाकं दुर्जरं हरिमन्थजम् ॥
भेदनं मधुरं रूक्षं कालायमतिवातलम् ॥ २७७ ॥
स्रंसनं कटुकं पाके लघु वातकफापहम् ॥
शोफघ्नमुष्णवीर्यं च पत्रं पूतिकरञ्जजम् ॥ २७८ ॥

त्रिवर्गे लोणिका स्वनामख्याता; जातुकं शुक्लशोणितपर्णी; त्रिपर्णी लम्रिका; पत्तूरः शालिञ्चः; सुवर्चला सूर्यावर्तभेदः; कुतुम्बको द्रोणपुष्पी; जीवको जीवशाकं; कुलालिका गोनाडीचः; कुरुण्टिका अम्लानसदृशपत्रा हरितपुष्पा; प्रभृतिग्रहणाद्राजक्षवकादि विशेषगुणं वक्ष्यमाणं गृह्यते । राजक्षवको बृहत्पत्रश्चिप्पा(ल्या)कारः । शटी स्वनामख्याता । हरिमन्थश्चणकः । पूतिकरञ्जः कण्टकिकरञ्जः ॥ २७४–२७८ ॥

ताम्बूलपत्रं तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ॥
सुगन्धि विशदं तिक्तं स्वर्यं वातकफापहम् ॥ २७९ ॥
स्रंसनं कटुकं पाके कषायं वह्निदीपनम् ॥
वक्त्रकण्डूमलक्लेददौर्गन्ध्यादिविशोधनम् ॥ २८० ॥

ताम्बूलपत्रमित्यादि केचित् पठन्ति । गुवाकं चात्र ये पठन्ति पुनस्ते पर्कटगुणं वदन्त्येतत्, पूर्वं तु फलेषु पक्वगुवाकं पठितं, किंचात्र बहु पाठान्तरसंकुलतया पाठावधारणं न पार्यते, तेन यत् पूर्वैर्व्याख्यातं तत् परं व्याख्यायते । कुमुदोत्पलादिगुणं केचित् पठन्ति ॥ २७९ ॥ २८० ॥

## अथ पुष्पवर्गः ।

कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च; वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि च ॥ २८१ ॥

आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते ॥ २८२ ॥

करीरकुसुमानि कटुविपाकानि वातहराणि सृष्टमूत्रपुरीषाणि च ॥ २८३ ॥

रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ॥
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥ २८४ ॥
सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥
मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ॥
तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले ॥ २८५ ॥

सिन्धुवारं विजानीयाद्धिमं पित्तविनाशनम् ॥
मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने ॥ २८६ ॥
सुगन्धि विशदं हृद्यं वाकुलं पाटलानि च ॥
श्लेष्मपित्तविषघ्नं तु नागं तद्वच्च कुङ्कुमम् ॥ २८७ ॥
चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ॥
किंशुकं कफपित्तघ्नं तद्वदेव कुरण्टकम् ॥ २८८ ॥
यथावृक्षं विजानीयात् पुष्पं वृक्षोचितं तथा ॥ २८९ ॥

शणेत्यादौ पुष्पशाकवर्गे अगस्त्यो वङ्गसेनः ॥ २८१–२८९ ॥

मधुशिग्रुकरीराणि कटूनि श्लेष्महराणि च; क्षवककुलेवरवंशकरीरप्रभृतीनि कफकराणि सृष्टमूत्रपुरीषाणि च ॥ २९० ॥

क्षवकं कृमिलं तेषु स्वादुपाकं सपिच्छलम् ॥
विस्यन्दि वातलं नातिपित्तश्लेष्मकरं च तत् ॥ २९१ ॥
वेणोः करीराः कफला मधुरा रसपाकतः ॥
विदाहिनो वातकराः सकषाया विरूक्षणाः ॥ २९२ ॥

क्षवककुलेवरेत्यादौ क्षवकः छत्रकः; कुलेवरः खुकुरण्टकः । अत्र वंशकरीरगुणे तन्त्रान्तरे कटुरसाधिष्ठातृत्वमुक्तं; तेनेहोक्तं विदाहित्वं प्राभाविकमवस्थापाके ज्ञेयम् । अन्ये तु तद्भयादत्रापि कटुकरसपाकत्वं पठन्ति ॥ २८९–२९२ ॥

उद्भिदानि पलालेक्षुकरीषवेणुक्षितिजानि । तत्र पलालजातं मधुरं मधुरविपाकं रूक्षं दोषप्रशमनं च, इक्षुजं मधुरं कषायानुरसं कटुपाकं शीतलं च, तद्वदेवोष्णं कारीषं कषायं वातकोपनं च, वेणुजातं कषायं वातकोपनं च, भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥ २९३ ॥

औद्भिदानीत्यादिना क्षवकस्याप्याधानविशेषेण गुणविशेषं केचित् पठन्ति । चरके "सर्पच्छत्रकवर्जास्तु बह्वयोऽन्याश्छत्रजातयः । गुर्व्यः पीनसकर्त्र्यश्च सर्वदोषप्रकोपनाः" (च. सू. अ. २७) इत्युक्तं, तेनेह सर्पच्छत्रकाकारस्यैव आधारविशेषगुणोऽयमिति न विरोधः ॥ २९३ ॥

पिण्याकतिलकल्कस्थूणिकाशुष्कशाकानि सर्वदोषप्रकोपणानि २९४
विष्टम्भिनः स्मृताः सर्वे वटका वातकोपनाः ॥
सिण्डाकी वातला साद्रा रुचिष्याऽनलदीपनी ॥ २९५ ॥

---

१ 'शीताः पीनसकर्त्र्यश्च मधुरा गुर्व्य एव च' इति मु. चरकपाठः ।

शुष्कशाकविशेषाणां केषांचिद्गुणविशेषमाह—पिण्याकेत्यादि । पिण्याकः सर्षपाणां गृहीतस्नेहानां कल्कः; तिलकल्कः पिष्टतिलरूपः खुलिकारूपः; शुष्कशाकं तच्च कल्की- ( शुष्की )कृततिलकूष्माण्डकासमर्दपत्रादिभिर्यथारुचि विधीयते । वटका इति तिलवटक- कासमर्दवटकादिरूपाः । शिण्डाकी वातलेत्यादौ शाकमेव किंचित् क्षुण्णस्निग्धं सुगन्धि- कटुद्रव्याश्रितं वटकं सूदेषु शिण्डाकीत्यभिधीयते । सा द्विविधा—आर्द्रा शुष्का च; अत्रार्द्रा गृह्यते, शुष्का तु वटकग्रहणगृहीता ॥ २९४ ॥ २९५ ॥

विड्भेदि गुरु रूक्षं च प्रायो विष्टम्भि दुर्जरम्[१] ॥
सकषायं च सर्वं हि स्वादु शाकमुदाहृतम् ॥
पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात् ॥ २९६ ॥

शाकविषयां परिभाषामाह—विड्भेदीत्यादि । पत्रं पुष्पमित्यादि केचित् पठन्ति ॥२९६॥

कर्कशं परिजीर्णं च कृमिजुष्टमदेशजम् ॥
वर्जयेत् पत्रशाकं तद्यदकालविरोहि च ॥ २९७ ॥

वर्जनीयं शाकमाह—[२]वातातपेत्यादि । अनिर्दिष्टशाकगुणातिदेशार्थमाह—शेषं त्वित्यादि ॥ २९७ ॥

अथ कन्दवर्गः ।

कन्दानत ऊर्ध्वं वक्ष्यामः—विदारीकन्दशतावरीबिसमृणालश्रृङ्गाट- ककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुके- न्दीवरोत्पलकन्दप्रभृतीनि ॥ २९८ ॥

रक्तपित्तहराण्याहुः शीतानि मधुराणि च ॥
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च ॥ २९९ ॥
मधुरो बृंहणो वृष्यः शीतः स्वर्योऽतिमूत्रलः ॥
विदारीकन्दो बल्यश्च पित्तवातहरश्च सः ॥ ३०० ॥
वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी ॥
महती सैव हृद्या तु मेधाग्निबलवर्धिनी ॥ ३०१ ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ॥
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ ३०२ ॥
अविदाहि बिसं प्रोक्तं रक्तपित्तप्रसादनम् ॥
विष्टम्भि [३]दुर्जरं रूक्षं विरसं मारुतावहम् ॥ ३०३ ॥
गुरू विष्टम्भिशीतौ च श्रृङ्गाटककशेरुकौ ॥
पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥ ३०४ ॥

---

१ शीतलम्' इति ता. । २ 'एतद्व्याख्यानानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्नि- वेशितः । ३ 'मधुरं रूक्षं दुर्जरं वातकोपनम्' इति ता. ।

**सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटु पित्तकृत् ॥**
**वेणोः करीरा गुरवः कफमारुतकोपनाः ॥ ३०५ ॥**

कन्दानामपि शाकविशेषत्वादनन्तरं कन्दगुणमाह—विदारिकन्देत्यादि । अन्ये तु पूर्वमेव कन्दान् पठन्ति, पठनीयस्तावदयं तत्र वाऽत्र वा न कश्चिद्विशेषः । बिसं स्थूल-मृणालं; कशेरु चिञ्चेतिकेन समं द्विविधं; पिण्डालुकं रक्तालुकं मध्वालुकं च स्वनामख्यातं; हस्त्यालुकं हस्तिपादमिति ख्यातं; प्रभृतिग्रहणाद्बहव आलुककन्दास्तथा क्रौञ्चादनादयो गृह्यन्ते । अत्र विशेषगुणे महतीत्यादिना स्थूलमूला शतावरी कीर्तिता । प्रस्तावात्तदङ्कुरा-नाह—कफपित्तेत्यादि ॥ २९८–३०५ ॥

**शलसूरणमाणकप्रभृतयः कन्दा ईषत्कषायाः कटुका रूक्षा विष्ट-म्भिनो गुरवः कफवातलाः पित्तहराश्च ॥ ३०६ ॥**

**मान(ण)कं स्वादु शीतं च गुरु चापि प्रकीर्तितम् ॥**
**शलकन्दस्तु नात्युष्णः सूरणो गुदकीलहा ॥ ३०७ ॥**
**कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः ॥**
**कषायाः पित्तशमना विपाके मधुरा हिमाः ॥ ३०८ ॥**
**वराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः ॥**
**मेहकुष्ठकृमिहरो बल्यो वृष्यो रसायनः ॥ ३०९ ॥**

समानगुणानि कन्दान्तराण्याह—शलेत्यादि । शलो ग्रामकन्दः; सूरणो वनकन्दः; मानकं प्रसिद्धं; सुरेन्द्रकन्दः 'कन्दचाष' इति प्रसिद्धः । मधुर इत्यादि मुञ्जातकन्दगुणः । मुञ्जातकन्द औत्तरापथिकः । नदीमाषकः 'डङ्गामान' इति ख्यातः । वराहकन्दो 'वन-तुल्लक' इति ख्यातः ॥ ३०६–३०९ ॥

**तालनारिकेलखर्जूरप्रभृतीनां मस्तकमज्जानः ॥ ३१० ॥**
**स्वादुपाकरसानाहू रक्तपित्तहरांस्तथा ॥**
**शुक्रलाननिलघ्नांश्च कफवृद्धिकरानपि ॥ ३११ ॥**

कन्दप्रसङ्गेन कन्दसमानगुणतालादिमस्तकमज्जगुणमाह—तालेत्यादि ॥३१०॥३११॥

**बालं ह्यनार्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ॥**
**कन्दं विवर्जयेत् सर्वं यो वा सम्यङ्न रोहति ॥ ३१२ ॥**

यादृशं कन्दं त्याज्यं तद्दर्शयति—बालमित्यादि ॥ ३१२ ॥

## अथ लवणवर्गः ।

**अथ लवणानि–सैन्धवसामुद्रविडसौवर्चलरोमकौद्भिदप्रभृतीनि य-थोत्तरमुष्णानि वातहराणि कफपित्तकराणि कटुपाकीनि यथापूर्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति ॥ ३१३ ॥**

---

१ एतद्व्याख्यानानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः ।

अन्नपानमांसादिसंस्कारकतया लवणान्याह—सैन्धवेत्यादि । सामुद्रं कडकचलवणं; सौवर्चलं स्वनामख्यातं; रौमकं रुमानदीभवं, शाकम्भरीदेवीस्थलोपलक्षितदेशसंभवं साम्भरीलवणमित्यन्ये; औद्भिदं उक्कारिलवणमूषरदेशभवं वदन्ति; अन्ये तु पाक्यलवणमौद्भिदं वदन्ति । प्रभृतिग्रहणात् काललवणादिग्रहणम् । एषु यथोत्तरमुष्णादयः ॥३१३॥

चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम् ॥
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम् ॥ ३१४ ॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ॥
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥ ३१५ ॥
सक्षारं दीपनं सूक्ष्मं शूलहृद्रोगनाशनम् ॥
रोचनं तीक्ष्णमुष्णं च विडं वातानुलोमनम् ॥ ३१६ ॥
लघु सौवर्चलं पाके वीर्योष्णं विशदं कटु ॥
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥ ३१७ ॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च ॥
वातघ्नं लघु विस्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥ ३१८ ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् ॥
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥ ३१९ ॥
कफवातक्रिमिघ्नं च लेखनं पित्तकोपनम् ॥
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥ ३२० ॥
ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम्[1] ॥
लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ ३२१ ॥

तेषां यथाक्रमं विशिष्टगुणानाह—चक्षुष्यमित्यादि । औद्भिदलवणे सतिक्तकटुकद्रव्योत्पन्नस्य लवणशब्दवाच्यता लवणरसतया ज्ञेया । प्रभृतिशब्दसूचितपाक्यलवणविशेषगुडिकालवणगुणमाह—कफवातेत्यादि । गुडिकालवणं पाकादतिकठिनीभूतगुडिकाकारलवणम् । केचिदूषरादिलवणवर्गगुणं पठन्ति—ऊषेत्यादि । एतानि च नातिप्रसिद्धानि ॥ ३१४–३२१ ॥

यवक्षारस्वर्जिकाक्षारोषक्षारपाकिमटङ्कणक्षारप्रभृतयः ॥ ३२२ ॥

गुल्मार्शोग्रहणीदोषशर्कराश्मरिनाशनाः ॥
क्षारास्तु पाचनाः सर्वे रक्तपित्तकराः[2] सराः ॥ ३२३ ॥
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥
शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥ ३२४ ॥
उष्णोऽनिलघ्नः प्रक्लेदी चोषक्षारो बलापहः ॥

१ 'मलमूत्राकरोद्भवम्' इति ता. । २ 'अग्निदीप्तिकराः' इति ता. ।

मेदोघ्नः पाकिमः क्षारस्तेषां बस्तिविशोधनः ॥ ३२५ ॥
विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ॥
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥ ३२६ ॥
सुवर्णं स्वादु हृद्यं च बृंहणीयं रसायनम् ॥
दोषत्रयापहं शीतं चक्षुष्यं विषसूदनम् ॥ ३२७ ॥
रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ॥
ताम्रं कषायं मधुरं लेखनं शीतलं सरम् ॥ ३२८ ॥
सतिक्तं लेखनं कांस्यं चक्षुष्यं कफवातजित् ॥
वातकृच्छीतलं लोहं तृष्णापित्तकफापहम् ॥ ३२९ ॥
कटु क्रिमिघ्नं लवणं त्रपु सीसं च लेखनम् ॥
मुक्ताविद्रुमवज्रेन्द्रवैदूर्यस्फटिकादयः ॥ ३३० ॥
चक्षुष्या मणयः शीता लेखना विषसूदनाः ॥
पवित्रा धारणीयाश्च पाप्मालक्ष्मीमलापहाः ॥ ३३१ ॥

इति लवणादिवर्गः ।

लवणवदन्नसंस्कारकतया क्षारानाह—यवक्षारेत्यादि । पाकिमक्षारमूषरपांशुप्रपाकाभिर्निर्वृत्तं वदन्ति; अन्ये त्वपामार्गादिभस्मपरिस्राव्यपाकाद् घनीकृतं क्षारं पाकिमं वदन्ति । प्रभृतिग्रहणेन पाकिमभेदानां ग्रहणम् ॥ ३२२–३३१ ॥

धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात् ॥
आस्वादतो भूतगुणैश्च मत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ ३३२ ॥

अत ऊर्ध्वमनुक्तद्रव्यगुणातिदेशार्थमनुमानविधिमाह—धान्येष्वित्यादि । शाकेषु चानुक्तमिति चकारात् लवणद्रवद्रव्यकृतान्नादीनामन्येषां चानुक्तानां समुच्चयः । अप्रमेयादित्यानन्त्येन, आवापप्रतिवापद्रव्याणामप्रमेयविषयत्वाभावात् । अत्रैवार्थे **चरकः**—"अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः । द्रव्याणि न हि निर्देष्टुं शक्यं कार्त्स्न्येन नामभिः" ( च. सू. अ. २७ ) इति । आस्वादत इति रसतः, भूतगुणैरिति पृथिव्याद्यधिकभूतगुणैर्द्रव्यविशेषविज्ञानीये "तत्र स्थूलसान्द्र°"इत्यादिनोक्तैः । तद्भूतगुणग्रहणं च किंचित् प्रत्यक्षतः, किंचित्तु उपयोक्तृवचनतः, किंचित्तदुपयोगतश्च ग्रहीतुं शक्यमेव । आदिशेदिति रसेन प्रतिपन्नेन तथा भूतभूतगुणेन च प्रतिपन्नेन यद्यत्कार्यमुक्तं यद्वा गुणान्तरं रसादिद्वारा ज्ञेयं तदुपदिशेदित्यर्थः । अत्रैवार्थे **चरकः**—"यथा नानौषधं किंचिद्देशजानां वचो यथा । द्रव्यं तु तत्तथा वाच्यमनुक्तमिह पण्डितैः" ( च. सू. अ. २७ ) इति । अन्ये तु प्रायोपयोगिकमिह त्वित्यादिना पाठेनैव पठन्ति, स च पाठो व्यक्तार्थः ॥ ३३२ ॥

षष्टिका यवगोधूमा लोहिता ये च शालयः ॥
मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ३३३ ॥

**लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः ॥**
**मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह ॥ ३३४ ॥**
**दाडिमामलकं द्राक्षा खर्जूरं सपरूषकम् ॥**
**राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥ ३३५ ॥**
**सतीनो वास्तुकश्चुच्चूचिल्लीमूलकपोतिकाः ॥**
**मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ ३३६ ॥**
**गव्यं क्षीरं घृतं श्रेष्ठं, सैन्धवं लवणेषु च ॥**
**धात्रीदाडिममम्लेषु, पिप्पली नागरं कटौ ॥ ३३७ ॥**
**तिक्ते पटोलवार्ताकं, मधुरे घृतमुच्यते ॥**
**क्षौद्रं, पूगफलं श्रेष्ठं कषाये सपरूषकम् ॥ ३३८ ॥**
**शर्करेक्षुविकारेषु, पाने मध्वासवौ तथा ॥**
**परिसंवत्सरं धान्यं, मांसं वयसि मध्यमे ॥ ३३९ ॥**
**अपर्युषितमन्नं तु संस्कृतं मात्रया शुभम् ॥**
**फलं पर्यागतं, शाकमशुष्कं तरुणं नवम् ॥ ३४० ॥**

इदानीं धान्यादिवर्गे स्ववर्गे ये प्रधानभूतास्तान्निर्दिशन्नाह—षष्टिका इत्यादि । एषां च प्राधान्यवर्णनं सर्वत्र विशेषानुक्तौ प्रधानकल्पनया एषामेव ग्रहणार्थम् । वर्म शकलं तदस्यास्तीति वर्मी रोहित उच्यते । यदुक्तं **चरके**—"रोहितो मत्स्यानाम्" ( च. सू. अ. २५ ) इति । शालिजाताविल्यत्र "शालिजाते" इति पाठः; तत्र जात इति समूहे । यत्र तु स्ववर्गे प्राधान्यं तत्रैवोक्तं तन्न निदर्शितं; यथा—तोयेष्वान्तरीक्षं, "तत् प्रधानमव्यक्तरसत्वात्" ( सू. अ. ४५ ) इत्यनेन, तथा "विकल्प एष दध्यादिः श्रेष्ठो गव्य उदीरितः" ( सू. अ. ४५ ), तथा "तैलेषु तिलतैलं विशिष्यते," तथा "मधुषु माक्षिकं प्रवरं," तथा "मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रकीर्तितम्" ( सू. अ. ४५ ) इति । परिसंवत्सरमित्यादि केचित् पठन्ति; तच्च व्यक्तम् ॥ ३३३–३४० ॥

## अथ कृतान्नवर्गः ।

**अतः परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥**
**लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः ॥ ३४१ ॥**
**वातानुलोमनो हृद्यः पिप्पलीनागरायुतः ॥**

संप्रति धान्यादीनां संस्कारविशेषाहितं गुणविशेषमाह—अतः परमित्यादि । कृतान्नं करणनिष्पादितं पेयादि । लाजमण्ड इत्यादि । अत्र मण्डो दोषपाचनो भवति, तेनाकारप्रश्लेषादविशुद्धानामिति व्याख्यानयन्ति । **चरके** त्वेतन्नेष्यते, येन मण्डोऽप्यतिद्रवपेयैव, सा चाविशुद्धानां निषिद्धा । यथा—"कफपित्ते विशुद्धेऽल्पे मद्यपे वातपैत्तिके । तर्पणादिक्रमः कार्यः पेयाऽभिष्यन्दयेद्धि तान्" ( च. सि. अ. ६ ) इति; तेनेहापि

विशुद्धानामित्यर्थः । पाचनत्वं च तस्यान्यत्र भविष्यति । विशुद्धे चाप्यग्निदीपनीयत्वेनैव प्रयोगः ॥ ३४१ ॥—

**स्वेदाग्निजननी लघ्वी दीपनी बस्तिशोधनी ॥ ३४२ ॥**
**क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥**

स्वेदेत्यादिना पेयागुणः । अत्र पेयाशब्देन पेयत्वेन यवागूश्च गृहीता ॥ ३४२ ॥—

**विलेपी तर्पणी हृद्या ग्राहिणी बलवर्धनी ॥ ३४३ ॥**
**पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥**
**हृद्या संतर्पणी वृष्या बृंहणी बलवर्धनी ॥ ३४४ ॥**
**शाकमांसफलैर्युक्ता विलेप्यम्ला च दुर्जरा ॥**

विलेपीत्यादिना विलेपीगुणः । शाकेत्यादिना शाकादियुक्तविलेपीगुणः ॥ ३४३ ॥ ॥ ३४४ ॥—

**सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ॥ ३४५ ॥**
**विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा ॥**

एतेषां लक्षणं यथा—"सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता । यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा" इति ॥ ३४५ ॥—

**विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः ॥ ३४६ ॥**
**कफपित्तकरी बल्या कृशराऽनिलनाशनी ॥**

विलेपीभेदं पायसमाह—विष्टम्भीत्यादि । पयःकृता हि विलेपी पायसः । आशुवृष्यान्तरापेक्षया शुक्रोद्रेकं करोतीति आशुवृष्यतमा । कृशरालक्षणं "तिलतण्डुलमाषैस्तु कृशरा त्रिसरेति च" ॥ ३४६ ॥—

**धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः ॥ ३४७ ॥**
**स्विन्नः सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघुः ॥**
**अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ॥ ३४८ ॥**
**लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः ॥**
**स्नेहैर्मांसैः फलैः कन्दैर्विदलाम्लैश्च संयुताः ॥ ३४९ ॥**
**गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः ॥**

धौत इत्यादौ शुद्ध इति स्वभावधौतस्तण्डुलः, ततो जलेन पुनर्विमलः, ततो धौतत्वेन गतमलः, ततो जलानलसंयोगात् समः सन् स्विन्नः, ततः प्रस्रुतत्वेनापगतमलभागः, विशदत्वेनापगतपिच्छाभागोऽतिक्लेदरहितः, उष्ण इत्यनपगतसहजौष्ण्यः, एतैर्गुणैर्लघुर्भवति । मनोज्ञत्वसुरभित्वे च उपयोक्तुरानुकूल्यात् सम्यक्पाककारणतया लाघवहेतुतयोक्ते । एतद्विपर्यये अधौत इत्यादि । शीतश्चेति चकाराच्छुद्धादिविपर्ययोऽपि कारणं

१ तत्व्याख्यानुसारी पाठस्त्वनुपलब्धत्वान्न मूले सन्निवेशितः ।

समुच्चीयते । भृष्टतण्डुल इति भृष्टतण्डुलकृतौदनः । स्नेहैरित्यादौ स्नेहैरिति घृतादिभिः । अत्र च यद्यपि सामान्येन गुरुत्वाद्युक्तं तथाऽपि स्नेहादिगौरवादिविशेषाद्गौरवादिविशेषो ज्ञेयः ॥ ३४७-३४९ ॥—

**सुस्विन्नो निस्तुषो भृष्ट ईषत् सूपो लघुर्हितः ॥ ३५० ॥**

अन्नानन्तरं व्यञ्जनप्रधानं सूपमाह—सुखिन्न इत्यादि । भृष्ट ईषत् अनतिभृष्टः । अत्रापि खिन्नादिविपर्ययपाठे गौरवं ज्ञेयम् । ये तु माषसूप इति पठन्ति ते मुद्गादिसूपानां प्रकृतिलाघवेनैव लघुत्वं लब्धं, तेन गुरोरपि माषस्य सुखिन्नत्वादिना लघुत्वमुच्यत इत्याहुः ॥ ३५० ॥

**स्विन्नं निष्पीडितं शाकं हितं स्यात् स्नेहसंस्कृतम् ॥**
**अस्विन्नं स्नेहरहितमपीडितमतोऽन्यथा ॥ ३५१ ॥**

शाकस्याल्पवक्तव्यतया व्यञ्जनप्रधानमांसात् पूर्वमभिधानं—खिन्नमित्यादि ॥ ३५१ ॥

**मांसं स्वभावतो वृष्यं स्नेहनं बलवर्धनम् ॥**
**स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह ॥ ३५२ ॥**
**सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु ॥**
**तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ॥ ३५३ ॥**
**विद्यात् पित्तकफोद्रेकी बलमांसाग्निवर्धनम् ॥**
**परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ॥ ३५४ ॥**
**रोचनं बलमेधाग्निमांसौजःशुक्रवर्धनम् ॥**
**तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः ॥ ३५५ ॥**
**परिशुष्कगुणैर्युक्तं वह्नौ पक्कमतो लघु ॥**
**तदेव शूलिकाप्रोतमङ्गारपरिपाचितम् ॥ ३५६ ॥**
**ज्ञेयं गुरुतरं किंचित् प्रदिग्धं गुरुपाकतः ॥**
**उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम् ॥ ३५७ ॥**
**परिशुष्कं प्रदिग्धं च शूल्यं यच्चान्यदीदृशम् ॥**
**मांसं यत्तैलसिद्धं तद्वीर्योष्णं पित्तकृद्गुरु ॥ ३५८ ॥**
**लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम् ॥**
**अनुष्णवीर्यं पित्तघ्नं मनोज्ञं घृतसाधितम् ॥ ३५९ ॥**

स्नेहेत्यादिना मांसव्यञ्जनविस्तरः । मांसस्य प्रदिग्धत्वेन सिद्धस्य गुणमाह—तदेवेत्यादि । गोरसादानप्रमिति आदानं घनद्रवावापः । तस्यैव परिशुष्कत्वेन सिद्धस्य गुणमाह—परिशुष्कमित्यादि । अनयोर्लक्षणं—"सिक्तं बहुघृते भृष्टं मुहुरुष्णाम्बुसेचितम् । जीरकाद्यैर्घनं मांसं परिशुष्कं तदुच्यते ॥ तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्" इति । अतिविप्लुतपरिशुष्कस्य शूल्यस्य प्रसङ्गेनाशेषगुणमाह—तदेवेत्यादि । तदेवेति परिशुष्कमेव ।

'लुपू' छेदने, इत्यस्मात् उत्पूर्वाद् भावार्थे क्तान्तादुल्लुप्तशब्दो बहुच्छेदनमाह; तेन प्रत्यवयवच्छेदनेन पिष्टमेवोल्लुप्तपिष्टं; ततः सूदैरुल्लुप्तमिति भाषितम् । 'परिशुष्कगुणैर्युक्तं ज्ञेयं पथ्यतमं गुरु' इत्यस्य स्थाने 'वह्निपक्वमतो लघु' इति पठन्ति; तत्रात इति परिशुष्कात् । एतच्चोल्लुप्तमग्नौ भर्ज्यते, तस्यैवाङ्गारपाचनादिविशेषेण गुणमाह—तदेवेत्यादि । शूलिकाप्रोतमिति लोहादिशलाकारोपितपरिशुष्काद् गुरोर्गुरुतरं किंचिद् स्नेहादिप्रदिग्धत्वादेव । अपरमपि च कन्दुपाचितं शूल्यं भवति, तद्विशेषगुणाभावान्न विशेषगुणेनोक्तं; संग्रहे तु सर्वेषां तैलयोगात्तथा घृतयोगाद् गुणयोगाच्च गुणविशेषप्रतिपादके कन्दुपाचितं पृथक् पठितमेव । उल्लुप्तमित्यादि । तत्रोल्लुप्तमिति वह्निपक्वं तदेवोल्लुप्तेत्यादिनोक्तम्, उल्लुप्तपिण्डकमेव कन्दुपाचितं; कन्दुर्वह्निस्थानविशेषः । तत्र स्थालीपाचितमनुल्लुप्तपरिशुष्कं तथा प्रदिग्धं च पूर्वमेव निर्दिष्टम् । शूल्यं यच्चान्यदीदृशमित्यनेनापरेऽपि सूदप्रसिद्धाः प्रकारा गृह्यन्ते । तथैषां सर्वेषां तैलयोगकृतं गुणमाह—मांसं यत्तैलेत्यादि । लघ्वग्नीत्यादिना घृतयोगकृतो गुण उच्यते ॥ ३५२–३५९ ॥

**प्रीणनः प्राणजननः श्वासकासक्षयापहः ॥**
**वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः ॥ ३६० ॥**
**स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम् ॥**
**भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम् ॥ ३६१ ॥**
**आप्यायनः संहननः शुक्रदो बलवर्धनः ॥**
**स दाडिमयुतो वृष्यः संस्कृतो दोषनाशनः ॥ ३६२ ॥**
**प्रीणनः सर्वभूतानां विशेषान्मुखशोषिणाम् ॥**
**क्षुत्तृष्णापहरः श्रेष्ठः सोरावः स्वादुशीतलः ॥ ३६३ ॥**
**यन्मांसमुद्धृतरसं न तत् पुष्टिबलावहम् ॥**
**विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम् ॥ ३६४ ॥**

तदेवमत्र मांसं प्रदिग्धपरिशुष्काख्यं द्विविधमेवाभिधाय मांसकृतरसगुणमाह—प्रीणन इत्यादि । अत्राप्यायनः ज्वरक्षीणादीनां मनःक्षतोरस्कादीनां च । शुक्रदोऽल्परेतसाम् । बलवर्धनः स्मृत्यादिहीनकृशानाम् । संस्कृत इति कटुकस्नेहादिना । अत्र प्रीणन इत्यादिना सोरावगुणं केचित् पठन्ति ॥ ३६०–३६४ ॥

**दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः ॥**
**मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम् ॥ ३६५ ॥**
**पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम् ॥**
**ऐकध्यं पाचयेत् सम्यग्वेसवार इति स्मृतः ॥ ३६६ ॥**
**वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः ॥**

तत्र खानिष्कः प्रसिद्ध एव । वेशवारस्तु "निरास्थिपिशितं पिष्टं स्विन्नं गुडघृतान्वितम् । कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः" । इति ॥ ३६५ ॥ ३६६ ॥—

कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ॥ ३६७ ॥
ज्ञेयः पथ्यतमश्चैव मुद्गयूषः कृताकृतः ॥
स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ॥ ३६८ ॥
रुच्चिष्यो लघुपाकश्च दोषाणां चाविरोधकृत् ॥
मसूरमुद्गगोधूमकुलत्थलवणैः कृतः ॥ ३६९ ॥
कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते ॥
मृद्वीकादाडिमैर्युक्तः स चाप्युक्तोऽनिलार्दिते ॥ ३७० ॥
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ॥ ३७१ ॥
पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ ॥
श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥ ३७२ ॥
हन्ति मूलकयूषस्तु कफमेदोगलग्रहान् ॥
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः ॥ ३७३ ॥
तूणीप्रतूणीकासाश्मगुल्ममेदःकफापहः ॥
दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः ॥ ३७४ ॥
प्राणाग्निजननो मूर्च्छामेदोघ्नो वातपित्तजित् ॥
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥ ३७५ ॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥
सर्वधान्यकृतस्तद्वद्बृंहणः प्राणवर्धनः ॥ ३७६ ॥

कफघ्न इत्यादिना मुद्गयूषगुणः । अस्य कृताकृतलक्षणमनन्तरं करिष्यति । अस्यैव संयोगान्तरेण नामान्तरमाह—स तु दाडिमेत्यादि । मसूरेत्यादिना पञ्चकयूषः । अस्यैव मृद्वीकादियोगेन गुणमाह—मृद्वीकेत्यादि । पटोलनिम्बयूषौ पृथगेव द्वौ । कासेत्यादिना मूलकशुण्ठकयूषगुणः । सर्वधान्यकृत इत्यत्र सर्वशमीधान्यानि यूषप्रकृतितया गृह्यन्ते, न शूकधान्यकुधान्ये ॥ ३६७–३७६ ॥

खडकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ॥
बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः ॥ ३७७ ॥
दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः ॥
तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः ॥ ३७८ ॥
( खडाः खडयवागवश्च षा(खा)डवाः पानकानि च ॥
एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥ ३७९ ॥ )

खडकाम्बलिकयूषविशेषयोर्गुणमाह—खडकाम्बलिकावित्यादि । अत्र खडो द्विविधः– सतक्राम्लशमीधान्य एकः, सतक्रशाकश्चापरः । तत्र सतक्रादिशमीधान्यः "सशूक-

धान्यान् सस्नेहान् विद्यात् सांग्राहिकान् खडान्" इत्येनोक्तलक्षणः। सतक्रशाकस्तु "तक्रं कपित्थचाङ्गेरीमरीचाजाजिचित्रकैः। सुपक्वः खडयूषोऽयं यूषः काम्बलिकोऽपरः॥ दध्यम्ललवणस्नेहतिलमाषसमन्वितः" इत्यत्रोक्तः। तत्र काम्बलिको यथोक्तलक्षणः। ततश्चाम्लबहुत्वादम्लदाडिमधान्याम्लदधितक्रभेदेन खडकाम्बलिकयोर्गुणविशेषमाह—बल्य इत्यादि॥ ३७७–३७९॥

**अस्नेहलवणं सर्वमकृतं कटुकैर्विना॥**
**विज्ञेयं लवणस्नेहकटुकैः संयुतं कृतम्॥ ३८०॥**
**अथ गोरसधान्याम्लफलाम्लैरम्लितं च यत्॥**
**यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम्॥ ३८१॥**
**दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः॥**

कृताकृतयूषपरिभाषामाह—अस्नेहलवणमित्यादि। तयोरेव यूषयोरम्लविशेषयोगेन तथा कृताकृतयोश्च गुरुलाघवमाह—अथ गोरसेत्यादि। अत्र रसमिति नपुंसकनिर्देशाद् यूषरसयोरुभयोरपि ग्रहणम्॥ ३८०॥ ३८१॥—

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम्॥ ३८२॥**
**सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च॥**
**तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च॥ ३८३॥**

शुष्कशाकविशेषाणां कृतान्नानां गुणमाह—तिलपिण्याकेत्यादि। अत्र तिलपिण्याकविकृत्यादयो व्यञ्जनविशेषा देशान्तरप्रसिद्धाः। शिण्डाकी तु अनन्ना शिण्डाकी तीरभुक्त्यादिप्रसिद्धा॥ ३८२॥ ३८३॥

**लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः॥**
**तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः॥ ३८४॥**

रागषाडवाः पुनर्मधुराम्लरसकृता नानाविधाः॥ ३८४॥

**रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी॥**
**स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम्॥ ३८५॥**

रसालालक्षणं—"सचातुर्जातकाजाजिसगुडार्द्रकनागरा। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि" इति॥ ३८५॥

**सक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः॥**
**नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते॥ ३८६॥**
**मन्थः सद्योबलकरः पिपासाश्रमनाशनः॥**
**साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्तनाशनः॥ ३८७॥**
**शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत्॥**

द्राक्षामधूदकयुतः कफरोगनिबर्हणः ॥ ३८८ ॥
वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥

मन्थस्य लक्षणोपदर्शनपूर्वकं गुणमाह—सक्तव इत्यादि । सक्तव इति यवसक्तवः लाजसक्तवश्च । सद्यो बलकर इत्युपयोगे बलकारकः, नोत्तरकालं; रौक्ष्यलाघवात् । अस्यैव द्रव्यान्तरयोगाद्गुणान्तरमाह—साम्ल इत्यादि । अत्र मूत्रकृच्छ्रोदावर्तहरत्वमप्युक्तम् । वर्गत्रयेणेति अनन्तरोक्तेनाम्लादिना तथा शर्करादिना तथा द्राक्षादिना च ॥ ३८६–३८८ ॥—

गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥ ३८९ ॥
तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥
साम्लं सतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् ॥ ३९० ॥
मार्द्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम् ॥
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥ ३९१ ॥
द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्रां च सर्वतः ॥
पानकानां यथायोगं गुरुलाघवमादिशेत् ॥ ३९२ ॥

इति कृतान्नवर्गः ।

गौडमित्यादिना पानकविशेषाणां गुणविशेषाः । गौडमिति गुडकृतम् । मार्द्वीकमिति द्राक्षाकृतं पानकम् । उक्तानुक्तपानकगुणावधारणोपायमाह—द्रव्येत्यादि । पुरुषेण तद्वारा पानकेषु संयुज्यमानद्रव्याणां स्वरूपं तथा संस्कारस्यावासा(पा)देः तथा मात्रायाश्च तत्रोपयुज्यमानद्रव्याश्रयायाः स्वरूपं ज्ञात्वा पानके गुणविशेषा वक्तव्या इति वाक्यार्थः ॥ ३८९–३९२ ॥

अथ भक्ष्यवर्गः ।

वक्ष्याम्यतः परं भक्ष्यान् रसवीर्यविपाकतः ॥
भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ॥ ३९३ ॥
अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥
तेषां प्राणकरा हृद्या घृतपूराः कफावहाः ॥ ३९४ ॥
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥
बृंहणा गौडिका भक्ष्या गुरवोऽनिलनाशनाः ॥ ३९५ ॥
अदाहिनः पित्तहराः शुक्रलाः कफवर्धनाः ॥
मधुशीर्षकसंयावाः पूपा ये ते विशेषतः ॥ ३९६ ॥
गुरवो बृंहणाश्चैव मोदकास्तु सुदुर्जराः ॥
रोचनो दीपनः स्वर्यः पित्तघ्नः पवनापहः ॥ ३९७ ॥
गुरुर्मृष्टतरश्चैव सट्टकः प्राणवर्धनः ॥

हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः ॥ ३९८ ॥
वातापहस्तृप्तिकरो बल्यो विष्यन्द उच्यते ॥
बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः ॥ ३९९ ॥
हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥
मुद्गादिवेसवाराणां पूर्णा विष्टम्भिनो मताः ॥ ४०० ॥
वेसवारैः सपिशितैः संपूर्णा गुरुबृंहणाः ॥
पाललाः श्लेष्मजननाः, शष्कुल्यः कफपित्तलाः ॥ ४०१ ॥
वीर्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः ॥
विदाहिनो नातिबला गुरवश्च विशेषतः ॥ ४०२ ॥
वैदला लघवो भक्ष्याः कषायाः सृष्टमारुताः ॥
विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्चसः ॥ ४०३ ॥
बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥
कूर्चिकाविकृता भक्ष्या गुरवो नातिपित्तलाः ॥ ४०४ ॥
विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः ॥
विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणाः ॥ ४०५ ॥

भक्ष्याणां क्षीरगोधूमादिकृतानां गुणमाह—वक्ष्यामीत्यादि । भक्ष्याः क्षीरकृता इति गोधूमपिष्टं क्षीरेणालोड्य ये क्रियन्ते ते क्षीरभक्ष्याः । घृतपूरलक्षणं—"मर्दिता समिता क्षीरनारिकेलसितादिभिः । अवगाह्य घृते पक्वो घृतपूरोऽयमुच्यते" इति । समिता गोधूमचूर्णम् । बृंहणा गौडिका इत्यत्र गोधूमवेष्टना एव गुडप्रधानोदरा गौडिका भण्यते। अदाहिन ईषद्विदाहिनः । मधुशीर्षकाः समितावेष्टनाः पाकघनीभवन्मधुना कृतोदरा मधुशीर्षका उच्यन्ते । संयावाः पुनः "समितां समदुग्धेन मर्दयित्वा सुशोभनाम् । पचेद्घृतोत्तरे खण्डे क्षिपेद्भाण्डेन[1] रेचयेत् ॥ संयावोऽसौ युतश्चूर्णैस्त्वगेलामरिचार्द्रकैः" इति । मोदकाः प्रसिद्धाः । सट्टकानां बहुत्वेऽपि उदाहरणार्थमेकं लिख्यते—"लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम् । दाडिमीबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् ॥ सट्टकं तु प्रमोदार्थं नलादिभिरुदाहृतम्" । विष्यन्दस्तु "आमगोधूमचूर्णं तु सर्पिःक्षीरसितान्वितम् । नातिसान्द्रो नातितनुर्विष्यन्दो नाम पाकतः" इति । अन्ये च बहवः प्रकाराः समिताक्षीराज्यसितशर्करासहिता विस्तरभयान्न व्याहृताः । फेनकादय इत्यत्रापि समिता इत्यनुवर्तते । फेनकलक्षणं—"विमृद्य विमलां शुक्लां समितां नातिशर्कराम् । वेष्टनं चैव[2] गर्भार्थं खरपाकं घृते पचेत् ॥ फेनकं फेनसंकाशं संपूर्णशशिसंनिभम्" इति । अत्र गर्भार्थमपि समितैव घृते पक्तव्या । पिशितैरिति मांसवेशवारैः । पाललास्तिलचूर्णनिर्वृत्ताः । शष्कुल्यः प्रसिद्धाः । वीर्योष्णा इत्यादौ पैष्टिका शालितण्डुलपिष्टकृताः । वैदला इति मुद्गमाषादिविदलकृताः । विरूढकृता इत्यङ्कुरितमुद्गादिकृताः ॥ ३९३–४०५ ॥

१ 'भाण्डे नवे ततः' इति पा० । २ 'संवेष्टनाय' इति पा० ।

हृद्याः सुगन्धिनो भक्ष्या लघवो घृतपाचिताः ॥
वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥ ४०६ ॥
विदाहिनस्तैलकृता गुरवः कटुपाकिनः ॥
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ॥ ४०७ ॥

उक्तानुक्तभक्ष्याणां घृते तथा तैले च पाचनाद्गुणविशेषमाह—हृद्या इत्यादि ॥ ४०६ ॥ ४०७ ॥

फलमांसेक्षुविकृतितिलमाषोपसंस्कृताः ॥
भक्ष्या बल्याश्च गुरवो बृंहणा हृदयप्रियाः ॥ ४०८ ॥

संयोगविशेषेण भक्ष्याणां गुणविशेषमाह—फलेत्यादि ॥ ४०८ ॥

कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥
सुपक्वास्तनवश्चैव भूयिष्ठं लघवो मताः ॥ ४०९ ॥

कपालेत्यादिना कपालाङ्गारपक्वयोर्घृततैलपक्वाल्लघुत्वमुच्यते ॥ ४०९ ॥

सकिलाटादयो भक्ष्या गुरवः कफवर्धनाः ॥
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ॥ ४१० ॥
उदावर्तहरो वाट्यः कासपीनसमेहनुत् ॥
धानोलुम्बास्तु लघवः कफमेदोविशोषणाः ॥ ४११ ॥
शक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ॥
पीताः सद्योबलकरा भेदिनः पवनापहाः ॥ ४१२ ॥
गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्ययात् ॥
शक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ ४१३ ॥
लाजाश्छर्द्यतिसारघ्ना दीपनाः कफनाशनाः ॥
बल्याः कषायमधुरा लघवस्तृण्मलापहाः ॥ ४१४ ॥
तृट्छर्दिदाहघर्मार्तिनुदस्तत्सक्तवो मताः ॥
रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥ ४१५ ॥
पृथुका गुरवः स्निग्धा बृंहणाः कफवर्धनाः ॥
बल्याः सक्षीरभावात्तु वातघ्ना भिन्नवर्चसः ॥ ४१६ ॥
संधानकृत् पिष्टमामं ताण्डुलं कृमिमेहनुत् ॥
सुदुर्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ॥ ४१७ ॥
सन्धानकृन्मेहहरः पुराणस्तण्डुलः स्मृतः ॥

किलाटः क्षीरकूर्चिकापिण्डः । आदिशब्दात्तक्रकूर्चिकादीनां ग्रहणम् । कुल्माषा इत्यत्र यवपिष्टमुष्णोदकमृदितमपूपीकृतं कुल्माषमाहुः । वाट्यो यवकृतो भक्ष्यः । धानोलुम्बा इत्यत्र धाना भृष्टयवाः, उलुम्बा 'हालोका' इति प्रसिद्धाः । सक्तव इति प्रसिद्धाः

१ 'शक्तवस्तर्पणा हृद्याः' इति ता. ।

सक्तवः । गुर्वीत्यादि केचित् पठन्ति । अत्र सक्तूनां पिण्डी गुर्वी, विपर्ययादिति पिण्डत्व-खरत्वविपर्ययादवलेहिका लघ्वी भवति । पृथुकाः 'चिप्पिटा' इति ख्याताः । सक्षीर-भावादिति सक्षीरधान्यकृतत्वात् ॥ ४१०-४१७ ॥—

**द्रव्यसंयोगसंस्कारविकारान् समवेक्ष्य च ॥ ४१८ ॥**
**भिषग्यथास्वं द्रव्याणामादिशेद्गुरुलाघवम् ॥**

उक्तानुक्तभक्ष्यगुणावधारणार्थमाह—द्रव्यसंयोगेत्यादि । अत्र द्रव्यसंयोगो गोधूम-क्षीरादियोगः, संस्कारः संस्कारकजीरकादियोगः, विकारा अत्र सूपादयः । अत्रार्थे **चरके**—"द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक् तथा । भक्ष्याणामादिशेद्बुद्ध्वा यथास्वं गुरुलाघवम्" ( च. सू. अ. २७ ) इति ॥ ४१८ ॥—

**खडाः खडयवाग्वश्च रागषाडवसट्टकाः ॥ ४१९ ॥**
**पानकानि च चित्राणि यूषाश्चानेकयोनयः ॥**
**कट्वम्लस्वादुलवणा लेहा ये च फलोद्भवाः ॥ ४२० ॥**
**एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥**
**यदा कारणमासाद्य भोक्तृणां छन्दतोऽपि वा ॥**
**अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत् ॥ ४२१ ॥**

**इति भक्ष्यवर्गः ।**

इदानीं कृतान्नतयोक्तानां व्यवस्थितसंयोगत्वेनोक्तगुणानां कारणतोऽव्यवस्थितसंयोग-तया गुणान्तरं सूक्ष्ममाह—खला इत्यादि । खडकृता यवागूः खडयवागूः । खडादयो व्याहृताः । लेहा ये च फलोद्भवा इति आम्रलेहादयः । कारणमासाद्येति व्याधिदोषभेदादि-हेतुं प्राप्य । छन्दत इति इच्छातः । शास्त्रत इति तर्कसहिताच्छास्त्रात् । ततः शास्त्रात् खडादिषु संयुज्यमानद्रव्यबलं ज्ञात्वा तर्कतश्च तत्संयोगसंस्कारादिगुणमूह्य खलादिगुण-मादिशेदित्यर्थः ॥ ४१९-४२१ ॥

**अत ऊर्ध्वं सर्वानुपानान्युपदेक्ष्यामः ॥ ४२२ ॥**
**अम्लेन केचिद्विहता मनुष्या माधुर्ययोगे प्रणयीभवन्ति ॥**
**तथाऽम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥ ४२३ ॥**

संप्रति भक्ष्यादीनामनुपानेन सुखपाको भवतीति तदनुपानमाह—अत ऊर्ध्व-मित्यादि । अम्लेनेत्यादि । विहता इत्युद्वेजिताः । तथाऽम्लयोगे प्रणयीभवन्ति मधुरेण विहताः । एतच्च रसाभ्यासे विहितेऽपि तद्विरुद्धरसप्रयोगोपलक्षणं ज्ञेयं; किंवा मधुराम्ल-योरेव तृप्तिपर्यन्तमुपयोगोऽनेनोच्यते ॥ ४२२ ॥ ४२३ ॥

**शीतोष्णतोयासवमद्ययूषफलाम्लधान्याम्लपयोरसानाम् ॥**
**यस्यानुपानं तु हितं भवेद्यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥ ४२४ ॥**

व्याधिं च कालं च विभाव्य धीरैर्द्रव्याणि भोज्यानि च तानि तानि ॥
सर्वानुपानेषु वरं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम् ॥ ४२५ ॥
लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्वरसाश्च दृष्टाः ॥
सङ्क्षेप एषोऽभिहितोऽनुपानेष्वतः परं विस्तरतोऽभिधास्ये ॥ ४२६ ॥

तत्रानुपानद्रव्याणि चोत्तरत्र प्रपञ्चयितुं सूचयन्नाह—शीतोष्णेत्यादि । अन्यान्यपि मूत्रस्नेहमधूनि भवन्ति, तानि प्रायोनुपयोगान्नोक्तानि; इक्षुरसस्तु रसशब्दगृहीतः, पयःशब्दस्तद्विकारमस्तुतक्रयोरपि वक्ष्यमाणयोर्ग्राहकः । यथा तु देयं तदाह—व्याधिमित्यादि । व्याधिं व्रणादिं वातादिकं च । कालमृतुमवस्थां च । द्रव्याणि च भोज्यानीति स्नेहादीनि वक्ष्यमाणानि । अत्र सर्वानुपानेषु वरं वदन्तीत्यादि पठित्वा केचित् संक्षेप इत्यादि पठन्ति । विस्तरत इति वक्ष्यमाणोष्णोदकानुपानमित्यादिना ॥ ४२४–४२६ ॥

उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
ऋते भल्लातकस्नेहात्तत्र[2] तोयं सुशीतलम् ॥ ४२७ ॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिकम् ॥
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥ ४२८ ॥
दधिपायसमद्यार्तिविषजुष्टे तथैव च ॥
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ४२९ ॥
पयो मांसरसो वाऽपि शालिमुद्गादिभोजिनाम् ॥
युद्धाध्वातपसंतापविषमद्यरुजासु च ॥ ४३० ॥
माषादेरनुपानं तु धान्याम्लं दधिमस्तु वा ॥
मद्यं मद्योचितानां तु सर्वमांसेषु पूजितम् ॥ ४३१ ॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥
क्षीरं घर्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम् ॥ ४३२ ॥
सुरा कृशानां स्थूलानामनुपानं मधूदकम् ॥
निरामयानां चित्रं तु भुक्तमध्ये प्रकीर्तितम् ॥ ४३३ ॥
स्निग्धोष्णं मारुते पथ्यं, कफे रूक्षोष्णमिष्यते ॥
अनुपानं हितं चापि पित्ते मधुरशीतलम् ॥ ४३४ ॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥
अर्कशेलुशिरीषाणामासवास्तु विषार्तिषु ॥ ४३५ ॥

विस्तरमाह—उष्णोदकेत्यादि । तत्र तोयं सुशीतलमित्यत्र पाठे सुशीतलजलानुपानं विपर्ययलब्धमेव; एके इत्यत्राप्रतिषेधादनुमतिरेव । पिष्टान्ने विदाहरक्षार्थं पायसेऽपि गुरुत्वाद् विदाहरक्षार्थं शीतलजलानुपानम् । पय इत्यादौ शालिषु समानतया पयोऽनुपानमयुक्तमिति कृत्वा पयःस्थाने मस्तु पठन्ति; पयोऽप्यनुपानं शालिप्रभावादेवेति

१ 'योज्यानि' इति ता. । २ 'स्नेहात्तौवरकात्तथा' इति ड. ।

वचनादुन्नीयते; न हि सर्वत्रानुपाने कारणवर्णनं सुशकम् । निरामयानामित्यादौ चित्रमिति नानाप्रकारम् । शोणितपित्तिन इति रक्तपित्तविकारिणः ॥ ४२७-४३५ ॥

**अतः परं तु वर्गाणामनुपानं पृथक् पृथक् ॥**
**प्रवक्ष्याम्यनुपूर्वेण सर्वेषामेव मे शृणु ॥ ४३६ ॥**

**तत्र पूर्वेशस्यजातानां बदराम्लं, वैदलानां धान्याम्लं, जाङ्गलानां मृगपक्षिणां धन्वजानां पिप्पल्यासवः, विष्किराणां कोलबदरासवः, प्रतुदानां क्षीरवृक्षासवः, गुहाशयानां खर्जूरनालिकेरासवः, प्रसहानामश्वगन्धासवः, पर्णमृगाणां कृष्णगन्धासवः, बिलेशयानां फलासवः, एकशफानां त्रिफलासवः, अनेकशफानां खदिरासवः, कूलचराणां शृङ्गाटककशेरुकासवः, कोशवासिनां पादिनां च स एव, प्लवानामिक्षुरसासवः, नादेयानां मत्स्यानां मृणालासवः, सामुद्राणां मातुलुङ्गासवः, अम्लानां फलानां पद्मोत्पलकन्दासवः, कषायाणां दाडिमवेत्रासवः, मधुराणां त्रिकटुकयुक्तः खण्डासवः, तालफलादीनां धान्याम्लं, कटुकानां दूर्वानलवेत्रासवः, पिप्पल्यादीनां श्वदंष्ट्रावसुकासवः, कूष्माण्डादीनां दार्वीकरीरासवः, चुच्चुप्रभृतीनां लोध्रासवः, जीवन्त्यादीनां त्रिफलासवः, कुसुम्भशाकस्य स एव, मण्डूकपर्ण्यादीनां महापञ्चमूलासवः, तालमस्तकादीनामम्लफलासवः, सैन्धवादीनां सुरासव आरनालं च, तोयं च सर्वेत्रेति ॥ ४३७ ॥**

अथ वर्गाणां शूकधान्यादीनामनुपानमाह—अतः परमित्यादि । पूर्वेशस्यजातानामिति शूकधान्यानां कुधान्यानां च । जाङ्गलानां मृगपक्षिणामित्यत्र धन्वजानामिति विशेषणेनाष्टविधजाङ्गलगतजङ्घालविष्किरयोर्ग्रहणं; तेन जङ्घालानां हरिणादीनां पिप्पल्यासवस्तेषां विष्किराणां च पिप्पल्यासवः; पुनर्विष्किराणां कोलबदरासवविधानाद् विष्किराणां पिप्पल्यासवकोलबदरासवौ भवतः । अनेकशफानामित्यनेन ग्राम्याश्छागादयो गृह्यन्ते । एतदन्तेनाष्टविधजाङ्गलानुपानमुक्तम् । कूलचराणामित्यादिना पञ्चविधानूपवर्गानुपानमाह । अम्लानामिति दाडिमादीनाम् । कषायाणामिति क्षीरवृक्षफलादीनाम् । मधुराणामिति द्राक्षादीनाम् । एवं वर्गादयश्च शाकादिवर्गे अनुसर्तव्या इति मांसादारभ्य (?) ॥४३६॥४३७॥

**भवन्ति चात्र—**

**सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ॥**
**सात्म्यं वा यस्य यत्तोयं तत्तस्मै हितमुच्यते ॥ ४३८ ॥**
**उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥**

सर्वानुपानेषु प्रधानान्तरीक्षमाह—सर्वेषामित्यादि । सात्म्यमिति अभ्याससात्म्यम् ॥ ४३८ ॥—

---

१ 'जाङ्गलानां मृगाणां धन्वजानां पक्षिणां च' इति ता. ।

दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥ ४३९ ॥
यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति ॥

यथोक्तानुपानगुणमाह—दोषवदित्यादि । दोषवदिति वातादिदोषकरम् ॥ ४३९ ॥—

रोचनं बृंहणं वृष्यं दोषसंघातभेदनम् ॥ ४४० ॥
तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥
दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥ ४४१ ॥
बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥

पुनः प्रशस्तं गुणमाह—रोचनमित्यादि ॥ ४४० ॥ ४४१ ॥—

स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ॥ ४४२ ॥
भवत्याबाधजननमनुपानमतः पिबेत् ॥

अनुपानाभावे दोषमाह—स्थिरतामित्यादि ॥ ४४२ ॥—

तदादौ कर्शयेत् पीतं स्थापयेन्मध्यसेवितम् ॥ ४४३ ॥
पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥
न पिबेच्छ्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥ ४४४ ॥
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥
पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत् ॥ ४४५ ॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥
स्यन्दाग्निसादच्छर्द्यादीनामयाञ्जनयेद्बहून् ॥ ४४६ ॥
गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते ॥
तथा संस्कारमात्रान्नकालांश्चाप्युत्तरोत्तरम् ॥ ४४७ ॥
मन्दकर्मानलारोग्याः सुकुमाराः सुखोचिताः ॥
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्यते ॥ ४४८ ॥
बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ॥
कर्मनित्याश्च ये तेषां नावश्यं परिकीर्त्यते ॥ ४४९ ॥

इत्यनुपानवर्गः ।

अनुपानस्य भोजनादिमध्यान्ते विशेषमाह—तदादावित्यादि । आदौ पीतं वायुनाऽधोगतेन रूक्षीकृतमाहाराकाङ्क्षाविरोधकतया च देहं कर्शयति । एतच्च यद्यपि कस्यचित् पश्चान्न भवति, तथा चानुपानाद्बुभुक्षा अत्रैव स्वल्पं यदेत्यादिना वक्तव्या सा निरस्ता भवति ॥ ४४३ ॥ ४४९ ॥

अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु ॥
आप्तास्थितमसंकीर्णं शुचि कार्यं महानसम् ॥ ४५० ॥

तत्राप्तैर्गुणसंपन्नं भक्ष्यमन्नं सुसंस्कृतम् ॥
शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ ४५१ ॥
विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ॥
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ४५२ ॥
वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम् ॥
घृतं कार्ष्णायसे देयं, पेया देया तु राजते ॥ ४५३ ॥
फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु तु ॥
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् ॥ ४५४ ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥
कट्वराणि खडांश्चैव सर्वाञ्छैलेषु दापयेत् ॥ ४५५ ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुश्रुतं पयः ॥
पानीयं, पानकं मद्यं मृन्मयेषु प्रदापयेत् ॥ ४५६ ॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च ॥
दद्याद्वैदूर्यचित्रेषु रागषाडवसट्टकान् ॥ ४५७ ॥
पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे ॥
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् ॥ ४५८ ॥
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥ ४५९ ॥
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ॥
खडान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥ ४६० ॥
सर्वान् गुडविकारांश्च रागषाडवसट्टकान् ॥
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥ ४६१ ॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ॥
भोक्तारं विजने रम्ये निःसंपाते शुभे शुचौ ॥ ४६२ ॥
सुगन्धिपुष्परचिते समे देशे च भोजयेत् ॥
विशिष्टसिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ॥ ४६३ ॥
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥

सुगन्धिपुष्परचितेति सुगन्धिपुष्पै रचिते । एतत्सर्वं दृष्टत उपकारिकं ज्ञेयम् । प्रत्यग्रमिति अभिनवम् । इष्टसंभारैरिति इष्टैर्भोजनोपकरणैः ॥ ४५०-४६३ ॥—

पूर्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ॥ ४६४ ॥
पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥
आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् ॥ ४६५ ॥

ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् ॥
घनं पूर्वं समश्नीयात्, केचिदाहुर्विपर्ययम् ॥ ४६६ ॥

पूर्वं मधुरमिति वातजयार्थम् । मध्येऽम्ललवणाविति मध्यस्थिताग्न्युत्तेजनार्थम् । शेषानिति कटुतिक्तकषायान्; एते च पश्चादूर्ध्वस्थश्लेष्मजयार्थं देयाः । आदौ फलानीति एतदप्यम्लमधुरफलानां वातहरत्वाद्भोजनम् । ततः पेयानिति कठिनफलपाकार्थं द्रवत्वात् पेयान्, तथा द्रवस्याहारमध्यसेवितस्य शरीरस्थापकत्वाच्च । भोज्यानिति अश्यान्; भक्ष्यान् खाद्यान् । शेषे च कठिनतरोपयोगः श्लेष्महरणार्थमेव । घनं पूर्वमित्यस्य विपर्ययमिति प्रथमं लेह्यपेयमेव । एतच्च प्रथमं बलवति वह्नौ गुरु घनं देयं, ततो लघु पेयं लघु लेह्यमित्यभिप्रायः । विपर्यये तु प्रथमं लघु वह्निसंधुक्षणार्थं दीयते, ततः संधुक्षिते वह्नौ घनमित्यर्थः ॥ ४६४-४६६ ॥

आदावन्ते च मध्ये च भोजनस्य तु शस्यते ॥
निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ४६७ ॥

आमलकस्य सर्वथा पथ्यत्वात् सर्वथोपयोगमाह—आदावित्यादि ॥ ४६७ ॥

मृणालबिसशालूककन्देक्षुप्रभृतीनि च ॥
पूर्वं योज्यानि भिषजा न तु भुक्ते कदाचन ॥ ४६८ ॥

मृणालादीनां गुरुत्वेन पूर्वमेव सेवां नियमयन्नाह—मृणालेत्यादि ॥ ४६८ ॥

सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः ॥
काले सात्म्यं लघु स्निग्धमुष्णं क्षिप्रं द्रवोत्तरम् ॥ ४६९ ॥
बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः ॥

उच्चैः समासीनत्वं प्रशस्तत्वान्मनोनुकूलत्वाच्च । अन्नतत्परतया कामादिव्यग्रतां निरस्यति । विदितागम इति विदितभोजनेतिकर्तव्यताप्रतिपादकागमः । काल इत्यादेश्च फलं स्वयमेव व्याकरिष्यति—काले भुक्तमित्यादिना । काल इत्युचितभोजनकाले; तं च स्वास्थ्यवृत्तिके "विसृष्टे विण्मूत्रे" (उ. त. अ. ६४) इत्यादिना वक्ष्यति । यस्त्वत्र मध्याह्ने भोजनकालोऽतीतावयवतयामा इत्यादिना वक्तव्यः, सोऽपि तल्लक्षणोदये सति भवतीति स एव भोजनकालो बुभुक्षितस्येति बोध्यम् ॥ ४६९ ॥—

काले प्रीणयते भुक्तं सात्म्यमन्नं न बाधते ॥ ४७० ॥
लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥
क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तर(म)म् ॥ ४७१ ॥
सुखं जीर्यति मात्रावद्धातुसाम्यं करोति च ॥

उक्तकालक्रियाफलमाह—काल इत्यादि । प्रीणयतीति धातून् प्रीणयति; प्रीणनं च निर्विकारधातुजननेन । सात्म्यं न बाधत इत्यत्र निखिलसात्म्यग्रहणम् । लघ्विति लघु-

गुणयुक्तम् । स्निग्धोष्णं बलवह्निदमिति स्निग्धं बलप्रदमुष्णं च वह्निदम् । द्रवोत्तममिति द्रवश्रेष्ठमुचितद्रवमित्यर्थः । अदोषमिति स्थिरतां गतमित्यनेनात्रैवोक्तदोषहरम् । सुखं जीर्यतीत्यतिमात्रविरहेण ज्ञेयम् । धातुसाम्यं करोतीति हीनमात्रत्यागेन ज्ञेयम् ॥ ४७० ॥ ४७१ ॥—

**अतीवायतयामास्तु क्षपा येष्वृतुषु स्मृताः ॥ ४७२ ॥**
**तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ॥**
**येषु चापि भवेयुश्च दिवसा भृशमायताः ॥ ४७३ ॥**
**तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥**
**रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ॥ ४७४ ॥**
**कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥**

इदानीमृतुविभागेन प्रायो भोजनकालविशेषं दर्शयन्नाह—अतीवेत्यादि । ऋतुष्विति रात्रौ येष्वातीवायतयामत्वं हेमन्ते शिशिरे च; एवं वर्षाग्रीष्मयोरायतदिवसयोः, तथा शरद्वसन्तयोस्तुल्याहोरात्रयोर्बहुवचनं व्याख्येयम् । तत्प्रत्यनीकाढ्यमिति तदृतुविपरीतगुणप्रायम् । प्रातरिति पूर्वाह्णे । अत्र रात्रीणां दीर्घत्वेन पूर्वदिनकृताहारे भूरिकालाग्निसंयोगाद्रात्रावेव पक्वे पूर्वाह्ण एव यथोक्तलक्षणा बुभुक्षा भवति । अल्पा इत्यल्पमानाः क्षपाः । तत्कालविहितमिति ग्रीष्मवर्षाकाले सुस्थवृत्ताध्याये विहितम् । अपराह्ण इति सार्धप्रहरद्वयोपरिष्टात् कालः । सममहोरात्रमिति अहोरात्रं समं विभज्य मध्याह्ने भुञ्जीतेत्यर्थः । मध्याह्ने हि निषिद्धभोजनरात्रिं व्युदस्य दिवसपूर्वापरभागौ समौ भवतः । अत्र भोजनशब्देनाधिकेन विहितं भोज्यं गृह्यते ॥ ४७२-४७४ ॥—

**नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥ ४७५ ॥**
**अप्राप्तकालं भुञ्जानः शरीरे ह्यलघौ नरः ॥**
**तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥ ४७६ ॥**
**अतीतकालं भुञ्जानो वायुनोपहतेऽनले ॥**
**कृच्छ्राद्विपच्यते भुक्तं द्वितीयं च न काङ्क्षति ॥ ४७७ ॥**
**हीनमात्रमसंतोषं करोति च बलक्षयम् ॥**
**आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥ ४७८ ॥**
**तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ॥**
**यथोक्तगुणसंपन्नमुपसेवेत भोजनम् ॥ ४७९ ॥**
**विभज्य दोषकालादीन् कालयोरुभयोरपि ॥**

अकालभोजनामात्रभोजनयोर्बहुवक्तव्यतया पुनर्विशेषमाह—नाप्राप्तेत्यादि । अत्र पूर्वोक्तं भोजनमनुवृत्तिर्भवतीति शेषः । एतद्व्याकरोति—अप्राप्तकालमित्यादि । तांस्तानिति आमविकारान् । द्वितीयमिति सायं भोजनम् । अत्यर्थमिति अतिमात्रम् ।

तस्मादित्यादौ एभिरिति काले सात्म्यमित्याद्युक्तविपर्ययभूतैः। कालयोरिति सायं प्रातः। सायं भोजनं च प्रातर्भोजनादर्धं त्रिभागं वा दिनान्ते वदन्ति ॥ ४७५-४७९ ॥—

अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् ॥ ४८० ॥
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् ॥
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः ॥ ४८१ ॥
अशान्तमुपदग्धं च तथा स्वादु न लक्ष्यते ॥

वर्जनीयान्नमाह—अचोक्षमित्यादि। अचोक्षं गुणहीनम्। दुष्टं विषादिभिः। उषितं सिद्धं पर्युषितम्। अस्वादु द्विष्टम्। अन्नस्य मिष्टतादयो गुणाः, तेन तद्विरोधहेतूनाह—चिरेत्यादि। स्थिरमिति कठिनम्। अशान्तमिति उष्णम् ॥ ४८०-४८१ ॥—

यद्यत् स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम् ॥ ४८२ ॥
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः ॥
विशुद्धे रसने तस्य रोचतेऽन्नमपूर्ववत् ॥ ४८३ ॥
स्वादुना तस्य रसनं प्रथमेनातितर्पितम् ॥
न तथा स्वादयेदन्यत्तस्मात् प्रक्षाल्यमन्तरा ॥ ४८४ ॥
सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ॥
स्वादु संजनयत्यन्नमस्वादु च विपर्ययम् ॥ ४८५ ॥
भुक्त्वाऽपि यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥
अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥ ४८६ ॥

यद्यदित्यादावुत्तरोत्तरमधिकस्वादुत्वेन उत्तरोत्तरं स्वयं भोक्तुं पार्यत इति भावः ॥ ४८२-४८६ ॥

दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः ॥
कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ४८७ ॥

दन्तान्तरगतमित्यत्रान्नमिति शेषः ॥ ४८७ ॥

जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेव तु ॥
भुक्तमात्रे कफश्चापि, तस्माद्भुक्तेरितं कफम् ॥ ४८८ ॥
धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः ॥
पूगकङ्कोलकर्पूरलवङ्गसुमनःफलैः ॥ ४८९ ॥
फलैः कटुकषायैर्वा मुखवैशद्यकारकैः ॥
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ४९० ॥

भोजनान्ते कर्तव्यधूमपूगादिसेवाविषयां कफवृद्धिं दर्शयन् तत्प्रसङ्गाज्जीर्णजरणकालयोरपि दोषमाह—जीर्ण इत्यादि। एते च दोषा अन्नस्य स्थानमहिम्ना कृतमधुराम्लकटुत्वेभ्यः कफपित्तरोगा जायन्ते। यदुक्तं **चरके**—"अन्नस्य भुक्तमात्रस्य" इत्यारभ्य

यावत् "वायुः स्यात् कटुभावतः" ( च. चि. अ. १५ ) इत्यन्तेन । सुमनःफलं जाती-फलम् । अत्र सुगन्धैरित्यन्तैः कफमपोह्येति योजना ॥ ४८८–४९० ॥

भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ॥
ततः पादशतं गत्वा वामपार्श्वेन संविशेत् ॥ ४९१ ॥
शब्दान्रूपान्रसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥ ४९२ ॥

वामपार्श्वेन संविशेदिति वामपार्श्वशयनं कुर्यादित्यर्थः ॥ ४९१ ॥ ४९२ ॥

शब्दरूपरसा गन्धाः स्पर्शाश्चापि जुगुप्सिताः ॥
अशुच्यन्नं तथा भुक्तमतिहास्यं च वामयेत् ॥ ४९३ ॥
शयनं चासनं वाऽपि नेच्छेद्वाऽपि द्रवोत्तरम् ॥
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥ ४९४ ॥
न चैकरससेवायां प्रसज्येत कदाचन ॥
शाकावरान्नभूयिष्ठमम्लं च न समाचरेत् ॥ ४९५ ॥

भोजनान्ते स्नानादिसेवने (?) दोषमाह—शब्देत्यादि । प्लवनमिति स्नानं, किंवा जल-प्रतरणम् । यानमिति अभिगमनं; वाहनयानयोरत्रावान्तरभेदः ॥ ४९३–४९५ ॥

एकैकशः समस्तान् वा नात्यश्नीयाद्रसान् सदा ॥

एकैकश इति दोषरोगापेक्षया; समस्तानिति सुस्थापेक्षया । नात्यश्नीयादिति नाधि-कमश्नीयात् न भुञ्जीत ॥—

प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् ॥ ४९६ ॥
पूर्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥

अव्यक्तवह्निसात्म्यवतो द्विरन्नसेवां निषेधयन्नाह—प्राग्भुक्त इत्यादि । अविविक्त इति मन्दे इति यावत् । भुञ्जान इति पुनः सायं भुञ्जानः । अत्रैव तन्त्रान्तरं "मन्दानले श्रमः कार्यः प्रातर्भोजनमेव च" इति ॥ ४९६ ॥—

मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः ॥ ४९७ ॥
पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः ॥
द्विगुणं च पिबेत्तोयं सुखं सम्यक् प्रजीर्यति ॥

अमात्राहारस्य महानर्थकारितया प्रवराश्यनिषेधार्थमाह—मात्रेत्यादि । मात्रागुरुरिति मात्रया लघुद्रव्याणां गुरुत्वं यथा न भवति । द्रव्यतश्च यो गुरुरिति अत्र द्रव्यतो गुरु-मात्रं वराहमांसाद्याहारः । संस्कारगुरुनिषेधमाह—पिष्टान्नमिति; पिष्टान्नं हि संस्काराद् गुरु भवति । अस्यैव पुरुषेच्छया सेवाविधानमाह—मात्रयेत्यादि । मात्राशब्दोऽयमल्प-वचनः ॥ ४९७ ॥—

पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् ॥ ४९८ ॥

गुरुप्रसङ्गेन पेयादिचतुर्विधान्नस्य यथाक्रमं गौरवमाह—पेयेत्यादि ॥ ४९८ ॥

गुरूणामर्धसौहित्यं लघूनां तृप्तिरिष्यते ॥
द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ॥ ४९९ ॥
द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते ॥
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥ ५०० ॥
पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ॥ ५०१ ॥
विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥ ५०२ ॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५०३ ॥

अत्यम्बुपानाद्विषमाशनाद्वा संधारणात् स्वप्नविपर्ययाच्च ॥
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ ५०४ ॥
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन शु(रु)ग्दैन्यनिपीडितेन ॥
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥ ५०५ ॥
माधुर्यमन्नं गतमामसंज्ञं, विदग्धसंज्ञं गतमम्लभावम् ॥
किंचिद्विपक्वं, भृशतोदशूलं विष्टब्धमानद्धविरुद्धवातम् ॥ ५०६ ॥
उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य ॥
रसावशेषेण तु सप्रसेकं चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥ ५०७ ॥

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥
उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः ॥ ५०८ ॥
तत्रामे लङ्घनं कार्यं, विदग्धे वमनं हितम् ॥
विष्टब्धे स्वेदनं पथ्यं, रसशेषे शयीत च ॥ ५०९ ॥
वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना ॥
कार्यं वाऽनशनं तावद्यावन्न प्रकृतिं भजेत् ॥ ५१० ॥
लघुकायमतश्चैनं लङ्घनैः समुचरेत् ॥
यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा ॥ ५११ ॥
हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् ॥
बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम् ॥ ५१२ ॥
अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ॥
त्रयमेतन्निहन्त्याशु बहून् व्याधीन् करोति वा ॥ ५१३ ॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ॥
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥ ५१४ ॥
विदह्यते यस्य तु भुक्तमात्रे दह्येत हृत्कोष्ठगलं च यस्य ॥
द्राक्षाभयां माक्षिकसंप्रयुक्तां लीढ्वाऽभयां वा स सुखं लभेत ॥ ५१५ ॥
भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ॥
प्रातः सशुण्ठीमभयामशङ्को भुञ्जीत संप्राश्य हितं हितार्थी ॥ ५१६ ॥
स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति ॥
भवत्यजीर्णेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति ॥ ५१७ ॥

अत ऊर्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम् ॥
कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥ ५१८ ॥
ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् ॥
उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः ॥ ५१९ ॥
स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा ॥
रूक्षस्तद्विपरीतः स्याद्विशेषात् स्तम्भनः खरः ॥ ५२० ॥
पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः ॥
विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः ॥ ५२१ ॥
दाहपाककरस्तीक्ष्णः स्रावणो, मृदुरन्यथा ॥
सादोपलेपबलकृद्गुरुस्तर्पणबृंहणः ॥ ५२२ ॥
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥
दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥ ५२३ ॥
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे ॥
द्रवः प्रक्लेदनः, सान्द्रः स्थूलः स्याद्बन्धकारकः ॥ ५२४ ॥
श्लक्ष्णः पिच्छिलवज्ज्ञेयः, कर्कशो विशदो यथा ॥
सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ॥ ५२५ ॥
दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः ॥
सरोऽनुलोमनः प्रोक्तो, मन्दो यात्राकरः स्मृतः ॥ ५२६ ॥
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥
विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ॥ ५२७ ॥
आशुकारी तथाऽऽशुत्वाद्धावत्यम्भसि तैलवत् ॥
सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः ॥ ५२८ ॥
गुणा विंशतिरित्येवं यथावत् परिकीर्तिताः ॥

गुरूणां लघूनां च उपयोगमात्राह—गुरूणामित्यादि । अर्धशब्दो भागवचनः; तेनार्धमिह गुरुद्रव्यापेक्षया समभागार्धे वर्तते, अतिगुरुद्रव्यापेक्षया त्रिभागे वर्तते; यदुक्तं

**चरके**—"द्रव्यापेक्षया तु त्रिभागसौहित्यमर्धसौहित्यं वा गुरूणामुपदिश्यते" (सू. अ. ५) इति। एवं लघूनां तृप्तिरिष्यत इत्यत्रापि प्रकर्षाप्रकर्षाभ्यामिह तृप्तिः स्तोकतृप्तिः कल्पनीया। इतो वा भूयांसः प्रकारा गुरुलघुद्रव्यप्रकारबहुतया कल्पनीयाः। यच्च मात्रागौरवागौरवे अग्निशुद्धे न विवेचनीये इति वदन्ति तच्च युक्तिशून्यमिति नाद्रियन्ते ॥ ४९९-५२८ ॥—

**संप्रवक्ष्याम्यतश्चोर्ध्वमाहारगतिनिश्चयम् ॥ ५२९ ॥**
**पञ्चभूतात्मके देहे ह्याहारः पाञ्चभौतिकः ॥**
**विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्धयेत् ॥ ५३० ॥**
**अविदग्धः कफं, पित्तं विदग्धः, पवनं पुनः ॥**
**सम्यग्विपक्वो निःसार आहारः परिबृंहयेत् ॥ ५३१ ॥**
**विण्मूत्रमाहारमलः सारः प्रागीरितो रसः ॥**
**स तु व्यानेन विक्षिप्तः सर्वान् धातून् प्रतर्पयेत् ॥ ५३२ ॥**
**कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च ॥**
**नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥ ५३३ ॥**

अत्र कफो रसे पच्यमाने मलः, पित्तं रक्ते। खेषु स्रोतःसु ॥ ५२९-५३३ ॥

**दिवा विबुद्धे हृदये जाग्रतः पुण्डरीकवत् ॥**
**अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि ॥ ५३४ ॥**
**हृदि संमीलिते रात्रौ प्रसुप्तस्य विशेषतः ॥**
**क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥ ५३५ ॥**

भोजनोपरि सायं भोजनस्याप्यध्यशनभावप्रसक्तिं निराकुर्वन्नाह—दिवेत्यादि। दिवा विबुद्ध इति रसप्रभावात् पुण्डरीकवद्विबुद्धे हृदये। जाग्रत इत्यनेन जाग्रतोऽपि हृदयं विबुद्धं विकसितं स्फुटस्रोतस्कं भवति; अतश्चाक्लिन्नधातुशरीरं भवति। क्लेदो हि स्रोतोऽवरोधादनिर्गच्छदुष्मणा तापाद्भवति। ततः अक्लिन्नधातुत्वात्। निशीति सायम्। अजीर्ण इत्यपक्वेऽपि प्रातराशे हितं भवति। अत्र **चरकः** "प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति।" (च. चि. अ. १५) इत्यादि। एतद्विपर्ययेण दोषोत्पत्तिमाह—हृदीत्यादि। रात्राविति रात्रिस्वभावात्। संमीलित इति संकुचिते हृदि। पुनस्तस्य विशेषतः संमीलनं सुप्ते हृदीति योज्यं; तेनात्र स्वापोऽपि स्रोतोऽवरोधकारणमिति दर्शितम्। क्लिन्नाः क्लेदवन्तः विस्रस्ता इति निखिला धातवो यस्मिन् तत् तथा। तत्रेति दिनान्तरकृताहारेऽजीर्णे। दिवेति दिनान्तरे न हितमन्नम्। अत्र **चरकः**—"रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च। कोष्ठे यान्ति परिक्लेदं संवृते देहधातवः॥ क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति। विदग्धेषु पयःस्वन्यत् पयस्तूष्णेष्विवार्पितम्" (च. चि. अ. १५) इति ॥ ५३४ ॥ ५३५ ॥

**इमं विधिं योऽनुमतं महामुनेर्नृपर्षिमुख्यस्य पठेद्धि यत्नतः ॥**
**स भूमिपालाय विधातुमौषधं महात्मनां चार्हति सूरिसत्तमः ॥ ५३६ ॥**

**इति सौश्रुते शल्यतन्त्रे सूत्रस्थाने षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥**

एतद्ग्रन्थस्यार्थावगतिपूर्वके लाभातिशयमाह—इममित्यादि । प्रयत्नत इत्यनेनार्थावगतिपूर्वकं पाठं दर्शयति । महात्मनामिति नान्येषां, प्राक्तनादृष्टविरहात् ॥ ३६ ॥

इति महामहोपाध्यायश्रीचक्रपाणिदत्तकृतसुश्रुततात्पर्यटीकायां भानुमत्यां
सूत्रस्थाने षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥

**सूत्रस्थानं समाप्तम् ।**



---

# आचार्योपाह्वेन वैद्य जादवजी त्रिकमजी शर्मणा संपादितायां आयुर्वेदीयग्रन्थमालायां प्रसिद्धीभूता ग्रन्थाः ।

**रसप्रकाशसुधाकरः**—श्रीयशोधरविरचितः, तथा **रससंकेतकलिका** कायस्थचामुण्डवैद्यविरचिता, एतद्ग्रन्थद्वयमेकत्रबद्धमेवोपलभ्यते । द्वितीयं संस्करणं, मूल्यं २ रूप्यकौ ।

**गदनिग्रहः**—श्रीशोढलवैद्यविरचितः । अस्य प्रयोगखण्डात्मकः प्रथमो भागः । अस्मिन् खण्डे घृततैलचूर्णगुटिकासवावलेहाख्याः षडधिकाराः सन्ति । द्वितीयं संस्करणम् । मूल्यं २ रूप्यकौ ।

**आयुर्वेदप्रकाशः**—उपाध्यायश्रीमाधवविरचितः । द्वितीयं संस्करणं, मूल्यं २ रूप्यकौ ।

**क्षेमकुतूहलः**—श्रीक्षेमशर्मविरचितः पाकशास्त्रग्रन्थः । मूल्यं १२ आणकाः ।

**राजमार्तण्डः**—श्रीभोजमहाराजविरचितः, **नाडीपरीक्षा** श्रीरावणकृता, **वैद्यमनोरमा**—श्रीकालिदासवैद्यविरचिता, तथा **धाराकल्पः**, एतद्ग्रन्थचतुष्टयमेकत्रबद्धमेवोपलभ्यते । द्वितीयं संस्करणम् । मूल्यं १॥ रूप्यकः ।

**रसपद्धतिः**—श्रीबिन्दुविरचिता, श्रीमहादेवविरचितटीकया सहिता, तथा **लोहसर्वस्वं**—श्रीसुरेश्वरविरचितम् । एतद्ग्रन्थद्वयमेकत्रबद्धमेवोपलभ्यते । मूल्यं १॥ रूप्यकः ।

**रसकामधेनुः**—वैद्यवरश्रीचूडामणिसंगृहीता ( उपकरणपाद–धातुसंग्रहपाद–सूतक्रियापादेति पादत्रयात्मकः प्रथमो भागः ) मूल्यं ५ रूप्यकाः ।

## नेपालग्रन्थमालायाः प्रथमः स्तबकः ।

## काश्यपसंहिता (वृद्धजीवकीयं तन्त्रम्) ।

महर्षिणा कश्यपेनोपदिष्टा, तच्छिष्येण वृद्धजीवकेन विरचिता कौमारभृत्यविषयका आर्षसंहिता; नेपालराजगुरुभिः पण्डितवर्यैः श्रीहेमराजशर्मभिर्लिखितेन २४० पृष्ठात्मकेन विस्तृतेनोपोद्घातेन सहिता ।

## कामशास्त्रग्रन्थाः ।

**अनङ्गरङ्गः**—महाकविश्रीकल्याणमल्लविरचितः । मू. १ रू. ।

**पञ्चसायकः**—कविशेखरश्रीज्योतीश्वरविरचितः । मू. १ रू. ।

**कन्दर्पचूडामणिः**—वघेलवंशावतंसमहाराजश्रीवीरभद्रदेवविरचितः ।
( आर्याछन्दोपनिबद्धो वात्स्यायनीयकामसूत्रस्य व्याख्यानरूपः ) मू. ३ रू. ।

प्रापणभृतिस्तु सर्वेषां ग्राहकैरेव देया भवेत् ।

**पुस्तकप्राप्तिस्थानम्**—

वैद्य जादवजी त्रिकमजी आचार्य,
कालबादेवीरोड, मुंबई, पोस्ट नं. २.

'नि... सुप्रसिद्ध
एवास्ति ... -उपशय-
संप्राप्ति-... तमस्ति ।
... आ. ॥

ग्रन्थो... रोगाणां
निदानपू... रसायन-
कषायाऽऽ... पानादि-
प्रपञ्चोऽपि... ग्राह्यः ।
... आ. ॥

भिषग्व... र्थदीपि-
काभ्यां टी... ... । मूल्यम् रू. ९ प्र. व्य. आ. ।॥

# शार्ङ्गधरसंहिता (मूलमात्रा)

अञ्जननिदानसहिता । मूल्यम् रू. १ प्रे. व्य. आ. ।

# द्रव्यगुणसंग्रहः।

अत्र नानाविधौषधीनां गुणागुणविवेचनं सम्यक्कृतमस्ति ।

मूल्यम् १२ आणकाः । प्रे. व्य. आ. ।

प्राप्तिस्थानम्—**पाण्डुरङ्ग जावजी,**
निर्णयसागरमुद्रणालयाध्यक्षः,
मुंबई नं. २

श्रीमन्माधवकरविरचितम्

# माधवनिदानम् ।

'निदाने माधवः प्रोक्तः' इति लोकेऽयं सर्वसंमतो ग्रन्थः सुप्रसिद्ध एवास्ति । अस्मिन् प्रायः सर्वेषां रोगाणां निदान-पूर्वरूप-रूप-उपशय-संप्राप्ति-उपद्रवसाध्यासाध्यविचारादिविषयजातं यथावत् प्रतिपादितमस्ति ।

मूल्यम् रू. २। प्रे. व्य. आ. ॥·

---

# योगरत्नाकरः ।

ग्रन्थोऽयं नात्यर्वाचीनोऽखिलभिषग्गणमान्योऽप्यस्ति । अत्र सर्वेषां रोगाणां निदानपूर्विका चिकित्सा सप्रमाणा प्रतिपादितास्ति । तथा विविध-रसायन-कषायाऽऽसवा-ऽरिष्टा-ऽवलेह-गुटिका-पाकादीनां प्रक्रिया-प्रमाणा-ऽनुपानादि-प्रपञ्चोऽपि कृतोऽस्तीत्ययं ग्रन्थ आयुर्वेदीयानामतीवोपयोगीत्यवश्यं संग्राह्यः ।

मूल्यम्. रू. २॥ प्रे. व्य. आ. ॥·

---

श्रीमत्पण्डितदामोदरसूनु-शार्ङ्गधराचार्यविरचिता

# शार्ङ्गधरसंहिता ।

भिषग्वर-आढमल्लविरचितदीपिकापण्डितकाशिरामवैद्यविरचितगूढार्थदीपिकाभ्यां टीकाभ्यां संवलिता । मूल्यम् रू. ५ प्रे. व्य. आ. ॥।·

# शार्ङ्गधरसंहिता (मूलमात्रा)

**अञ्जननिदानसहिता** । मूल्यम् रू. १ प्रे. व्य. आ. ।·

---

# द्रव्यगुणसंग्रहः ।

**अत्र नानाविधौषधीनां गुणागुणविवेचनं सम्यक्कृतमस्ति ।**

मूल्यम् १२ आणकाः । प्रे. व्य. आ. ।·

प्राप्तिस्थानम्—**पाण्डुरङ्ग जावजी,**
निर्णयसागरमुद्रणालयाध्यक्षः,
मुंबई नं. २

